# सूर्योदयः ।

पञ्चदशवर्षे १५ } आषाढ़-पूर्णिमायाः १८६६ { १-संख्या

## सम्पादकीया अभिप्रायाः ।

### अस्माकं पञ्चदशवर्षम् ।

अशेषकार्य्यनियामकस्य भगवतः श्रीविश्वनाथस्य परमानुग्रहेण सूर्य्योदयोऽयं सम्प्रति स्वीयं चतुर्दशवर्षात्मकं कालमतीत्य पञ्चदशे वर्षे पदमादधातीति तदीयपाठकानां संरक्षकाणां सहायकानां पृष्ठपोषकाणां शुभचिन्तकानां सर्वेषामेव संस्कृतानुरागिणां हर्षास्पदमेतत् ।

सम्प्रति सर्वत्रैव संस्कृतभाषाया उपरि वर्तमानशासकानां शनिदृष्टिरेव दृश्यते । विहारप्रान्ते इंग्लिशस्कूलप्रभृतिभ्यः संस्कृतभाषाया निष्काशनस्यैव प्रयत्नो भवतीति नास्ति अविदितं तन्मर्मज्ञानाम् । हस्तोपरि हस्तं धृत्वा भाग्यमात्रमाक्रोशद्भिः केवलं गेहेनर्दिभि र्न किमपि कर्तुं पार्य्यते किन्तु,—हिन्दीग्लिशभाषा प्रभृतिसमाचारपत्रादिषु लेखादिनोद्घुष्यमाणगुणायास्तस्याः कृतेः पृथक् महान्दोलनस्य प्रयोजनं विद्यते । अद्यत्वे तु यस्य हस्ते वलं विद्यते स एव जीवितुमर्हति । यो हि दैवमेव स्वसहायकं मन्यते तस्य साहाय्यं कोऽपि न करोति । विहारप्रान्तस्येयं दशा विद्यते । अधुना कांग्रेसगवर्न्मेंटशासनेऽपि न विद्यते संस्कृतभाषासम्मानस्तदा किमन्येषु प्रान्तेषु ।

इत्येवं संस्कृतभाषायाः सर्वतः सर्वथा निरादरपरेऽस्मिन् काले यानि कानि संस्कृतभाषाया मासिकानि पाक्षिकाणि साप्ताहिकानि वा समाचारपत्राणि धार्मि-

काणि साहित्यिकानि सामाजिकानि वा समयतोऽसमयतो नियमतोऽनियमतो वायन्निःसरन्ति तदेव बहु विद्यते ।

तत्र सूर्य्योदयोऽयं सर्वापेक्षया प्राचीनो विद्यते प्रातःस्मरणीयचरितैः सुरभाषासमेधनपरायणैः स्वामिदयानन्दमहोदयैः संस्कृतभाषायाः समुन्नत्यै प्रतिष्ठापितोऽभूत् । यस्याद्य चतुर्दशवर्षाणि व्यत्यगुः । यद्यपि "श्रेयांसि बहुविघ्नानि" इति शाश्वतिकनियमादस्य सूर्य्योदयस्य प्रकाशनकालादारभ्याद्यावधि बहवोऽन्तरायाः समापतिताः । मध्ये मध्येऽतिविलम्बोऽपि जायते स्म सोऽपि च ग्राहकमहोदयैः स्वोदारतया सह्य एव कृतोऽभूत् । परन्तु अस्मिन् हायनेऽस्माभिः स दोषो दूरीकृतो विद्यते । प्रतिमासं यथासमयं मुद्रापयित्वा ततश्च पञ्चषै र्दिनैः कार्य्यालयतः सर्वत्र ग्राहकानुग्राहकाणां पार्श्वे सूर्योदयः प्रेषितो भविष्यति । इत्येवंरीत्या मासस्य पूर्णिमातः कृष्णपञ्चमीं यावत् क्रमेण सर्वेषामेव ग्राहकाणां पार्श्वे सूर्य्योदयः समुपस्थितो भविष्यतीति । इत्थमधुना नास्ति कोऽपि विलम्बहेतुः । केवलं लेखकमहोदयानां कृपा ग्राहकानुग्राहकमहाशयानाञ्चानुकम्पाऽभ्यर्थनीया विद्यते । लेखकमहोदया नियमेन सरलान् भावमयान्, जागर्तिजनकान्, संस्कृतच्छात्रसमुन्नतिकरान् स्पष्टाक्षरलिखितान् लेखान् संस्कृतगद्यमयैः सन्दर्भैं र्लिखित्वा प्रहेतुमनुगृह्णन्तु । ग्राहकमहाशयाश्च स्वीयं वार्षिकं सूर्य्योदयमूल्यं नियमतः प्रेषयितुमनुकम्पन्ताम् नियमेनान्यांश्च पञ्चषान् ग्राहकान् स्वानुग्रहेण कर्तुं दयन्तांचेद्वयं सधन्यावादं तेषां नामानि प्रशंसयिष्यन्तस्तेषां संविधे निवेदयामो यदवश्यं वयं सूर्य्योदयं समयतो निःसारयितुं समर्था भविष्याम इति ।

ग्राहकेषु च बहवो महोदयाः स्वीयं मूल्यं नियमेनैव प्रहिण्वन्ति । बहूनां पार्श्वे पत्रोपरि पत्रं गच्छति तथापि ते न कर्णं ददति । तेषु बहवस्तु ( मनिआर्डर ) धनादेशपत्रेण मूल्यं प्रहिण्वन्त्यपि कियन्तस्तु वी० पी० द्वारा सूर्य्योदयप्रेषणेऽपि परावर्तयन्ति । येन व्यर्थमेव कार्य्यालयस्याणकचतुष्टयं नष्टं भवति । न तस्योपयोगस्तेषांकृते नाप्यस्माकं कृते भवति । ईदृशा हि संस्कृतभारतीसमुपासकाः केचन महात्मानः सन्ति । सर्वेऽप्यस्माकं सहायकाः स्वकर्तव्यपालनं कुर्वन्तः केवलं सूर्योदयस्य ग्राहकवर्द्धने तदीयवार्षिकमूल्यस्य अग्रिमस्य नियमेनैव प्रेषणे बद्धपरिकरा भवेयुश्चेद्वयं सर्वमपि विघ्नं विलङ्घयन्तः सर्वथा सर्वतः सूर्य्योदयं प्रेषयितुं समर्था भविष्याम

इति उद्घोषयामः। अवसाने श्रीमन्तं भगवन्तं सर्वान्तर्य्यामिणञ्चाभ्यर्थयामहे यत्सोऽस्मभ्यं तादृशीं शक्तिवितरतु यया वयं स्वप्रतिज्ञां पूरयितुं शक्ताः स्याम विविधै-र्दार्शनिकै र्धार्मिकैः साहित्यिकैः सामाजिकै राजनैतिकैः पौराणिकाख्यानमयैर्विज्ञानबहु-लैर्लेखैः सर्वानेव सूर्य्योदयपाठकान् संस्कृतानुरागिणः सज्जनान् आनन्दयिष्यामः। तेषां कृतेऽपि सुरभारतीसेवावसरं प्रदातुम समर्था भविष्याम इति।



## प्राप्तग्रन्थसमालोचनम्।

अद्य सूर्य्योदयपाठकानां पुरतो निवेदयतो ऽस्माकमन्तरात्मातीव प्रसादमावहति। पूर्वमस्माभि र्व्यतीते हायने सूर्य्योदयस्य १०मे अङ्के शक्तिभाष्यस्य प्रथमाध्यायमात्रं मुद्रित-मिति संक्षेपतः तदीयं समालोचन विदधद्भिः किञ्चिन्निवेदितमासीत्। अद्य तेषां पुरतः सोल्लासमावेदयामो यत्–शक्तिभाष्यं हि सम्पूर्णं चतुर्थाध्यायपर्य्यन्तं सर्वथा शुद्धं स्वच्छं च मुद्रितं विद्यते। मसृणमञ्जुलकर्गजोपन्यस्तानि मुद्रायन्त्राक्षराणि च दिव्यमणिवद्विराजन्ते। प्राप्तिस्थानम् कालीघाट नं० ४७ भवनं कलिकातानगरम् मूल्यं १।) योग्येभ्यो विना मूल्यमेव वितीर्यते। पुस्तकरत्नमिदम् द्रष्टुश्चेतांसि अना-यासत एवाकृषति पठितुम्। पठितुरन्तरङ्गाणि नवीनशक्तिभाष्यविषयावगाहनपुण्यप्र-चयपरिपूतानि जायन्ते।

अद्यावधि ईदृशया पद्धत्या भाष्यप्रणयनं संस्कृतसाहित्ये नैवोपलभ्यते। वेदान्तसूत्रेषु पूर्वाचार्य्याणामीदृशी परिपाटी दृश्यते यद् अर्वाचीन आचार्यः स्वप्राक्तनानामाचार्य्याणां मतं विगर्हयन्नेव स्वभाष्यं वितनोति। परन्तु शक्तिभाष्य-कृदयं तर्करत्नपञ्चाननः पञ्चाननाचार्य्यः प्राक्तनानाचार्य्यान् प्रशंसन्नेव स्वीयाम-लौकिकीं शक्तिमस्मिन् शक्तिभाष्ये प्रकाशयति—शक्तिभाष्यमिदमवलोक्य सहसैव मन्मुखाद् "या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता।

नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः।

इति पद्यं निरगमत्। अस्तु सम्पूर्णमिदं शक्तिभाष्यं सम्प्रति संस्कृतवाङ्मय-महार्णवस्य महार्घं रत्नं विद्यते। वञ्चितास्ते महात्मानो ये हि शक्तिभाष्यमिदमदृष्ट्वैव

परलोकं प्रस्थिताः। ते हि महात्मानो धन्या येऽस्मिन् जगति अग्रे जनिं लब्ध्वा भाष्यमिदं पठिष्यन्ति परिशीलयिष्यन्ति च। साधूक्तमश्वघोषकविना—

सारस्वतश्चाथ जगाद वेदं तथा समर्था ददृशुर्न पूर्वे।
व्यासस्तथैनं बहुधा चकार न यं वशिष्ठः कृतवानशक्तिः।
वाल्मीकिना तत् ससृजे च पद्यं जग्रन्थ यन्न च्यवनो महर्षिः।
चिकित्सितं यच्चि चकार नात्रिः पश्चात्तयात्रेय ऋषिर्जगाद॥
आचार्य्यकं योगविधौ द्विजानामप्राप्तमन्यै र्जनको जगाम।
यच्च द्विजत्वं कुशिको न लेभे तत्साधनं सूनुरवाप राजन्॥
वेलां समुद्रे सगरो बबन्ध नेक्ष्वाकवो यां प्रथमं बबन्धुः।
तच्चाद्भुतं कर्म चकार शौरिः शूरादयो येष्ववला बभूवुः॥
तस्मात् प्रमाणं न वयो न कालः कश्चित् क्वचिच्छ्रैष्ठ्यमुपैति लोके।
राज्ञामृषीणां च हितानि तानि कृतानि पुत्रैरकृतानि पूर्वैः॥

इति नियमानुसारमेवाद्यावधि पूर्वैर्महर्षिभिरकृतं चिदचिद्रूपायाः सर्वस्याद्याया ब्रह्मविष्णुमहेश्वराणामपि जनन्या निराकारसाकारात्मिकाया भगवत्या महाशक्त्याः—

"सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी॥
लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता"
"महालक्ष्मीर्महाराज सर्वसत्त्वमयीश्वरी।
निराकारा च साकारा सैव नानाभिधानभृत्"॥ इति

स्वरूपसमर्थकं शक्तिभाष्यं 'यथोत्तरम् मुनीनां प्रामाण्यम्' इति पश्चात्तेन महामुनिना अर्वाचीनेनापि सता अधुना लोकोत्तरपद्धत्या श्रीमदम्बिकाया महादेव्याः प्रसादादेव विरचितम्। यच्च स्वयमेव महात्मना तेन ग्रन्थान्ते लोकोत्तरभावमयैः पद्यपुष्पाञ्जलिभिरादिशक्तिमम्बिकां भगवतीं स्तुवता व्यक्तीकृतम्। तानि च पद्यानि अग्रिमे एवाङ्के मुद्रितानि द्रष्टव्यानि।

अस्तु, अस्य महाभाष्यस्य समालोचनम् इह स्वल्पकायेऽस्मिन् 'सूर्य्योदय' पत्रेऽसम्भवि। सति सम्भवे समयानुसारं क्रमेणैव अस्माभिः कदाचिद् विस्तरेण संक्षेपतो वा समालोचिष्यते। सम्प्रति तु शक्तिभाष्यं परिशीलनाभिलाषुकाणां वेदान्तरहस्यज्ञानां राजहंसवन्नीरक्षीरसनुकारिगुणदोषविमर्शकानामेव शिरसि भारमिमं समर्प्य

प्रसङ्गतोऽस्माभिः सूर्य्योदयस्य चतुर्दश-वार्षिक-चैत्राङ्के समालोचितस्य शक्ति भाष्यतिमिरभास्करस्य विसम्वादिनाम्नो वस्तुतस्तु शक्तिभाष्यसूर्य्यालोककौशिकस्य पुस्तकस्यावशिष्टं संक्षिप्तं समालोचनं विधीयते । यद्यपि अस्माभिः सूर्य्योदयस्य गताङ्के समालोचनाया अन्ते तुरीयाश्रमस्थानामपि स्वामिवर्य्याणां समीपे निवेदितमासीद्-यत् पूज्यपादाः तर्करत्नमहोदया हि सम्प्रति काश्यामद्वितीया विद्वांसः सन्ति । श्रीकाशिपण्डितसभायाः प्रधानसभापतिपदञ्च तैरेव सुशोभितं विद्यते । संशय्य तेषु तिष्ठमानानां परिव्राजकाचार्य्याणां गौरवमेव स्यान्न लाघवमिति । परन्तु ते हि महात्मानो नियोगपर्य्यनुयोगकोटिमतीता अद्यावधि तद्विषये दत्तावधाना नाभूवन्निति अवशिष्टं किञ्चित् पुनः सूर्य्योदयपत्र एव प्रकाश्यते, तैः कृततूष्णीम्भिर्न हि भाव्यम् । प्रथमतः शक्तिभाष्यस्थपदार्थपरिष्कृतिस्तु सर्वाभ्यर्हिता । अग्रतो विद्यमानेषु एव शक्तिभाष्यप्रणेतृषु काशीक्षेत्रनिवासितया च संन्यासिनामपि सुलभसङ्गमतया न त्याज्यः शङ्कासमाधानात्मकः सुलभः सङ्गतसुयोग इति भूयो भूयो विनिवेद्य प्रकृतं प्रस्तूयते ।

"ननु चिदचिदुभयात्मकं चेद्‌ब्रह्म चिन्मात्रस्य ब्रह्मस्वरूपत्वेन भगवदाचार्य्यचरणानां सन्यासिहितायोपदेश इत्युक्तं शक्तिभाष्ये तन्नोपपद्यते भगवद चार्य्यचरणानां तथोपदेशे विप्रलम्भकत्वप्रसङ्गात् इति चेन्न । पाटलिपुत्रमुपदर्शयतस्तदेकदेशं पाटलिपुत्रनगरमिदमिति समुपदिशत इव तस्य विप्रलम्भकत्वाभात् । न चेतरव्यवच्छेदेन विप्रलम्भकत्वम् । ब्रह्मवृत्तिषु तिसृषु सत्तास्वेकामपरिणामिसत्तामादाय सन्यासिनां हिताय तथोपदेशात् । अन्यथा शून्यत्वक्षणिकविज्ञानलक्षण वौद्धवादविभ्रान्तचित्तेषु प्रपञ्चसत्यत्वादिवादविगतश्रद्धेषु तेषु तदुपदेशो व्यर्थः स्यात् । सत्याञ्च व्यर्थतायां वौद्धनयप्रवेशादहितं प्रसज्येत । तन्निवृत्तये कुपथ्यभोजनाग्रहवतः पुत्रस्य तदाग्रहनिवृत्यर्थं पितुः कुपथ्यारुचिसमुत्पादकवाक्यकदम्बकस्येवेतरव्यवच्छेदस्य विप्रलम्भरूपत्वाभावात् ।

ननु विषमोऽयं दृष्टान्तः चित इवाचितोऽपि ब्रह्मस्वरूपान्तर्गततया हेयत्वाभावादिति चेन्न पूर्वापरचित्सम्बन्धवर्जितत्वेन ज्ञाताया हेयत्वात् । चितस्तु प्रकाशस्वरूपतया तज्ज्ञानादचितोऽपि गृह्यमाणप्रकाशस्थितस्य स्वयमप्रकाशरूपस्यापि घटादेरिवोपलब्ध्या चिदचिदुभयात्मकब्रह्मसाक्षात्कारेण मुक्तेराविर्भावस्य तत्राप्यनपायात् । बौद्धग्राहग्रासविमोचनेन संन्यासिहितकृत्त्वं भगवदाचार्य्यपादानामनपल-

पनीयम । तस्मात् सुष्ठूक्तं शक्तिभाष्ये बौद्धवादविचलितप्रज्ञानां श्रमणत्वं प्रतिपित्सूनां विद्वत्त्वेन प्रसिद्धानां ब्राह्मणानां सर्वशून्यत्वक्षणिकविज्ञानभ्रान्तिनिरसनाय चिदद्वैतवादपरत्वेन शारीरकभाष्यमारचितमित्याशयेन 'तेषां हिताय' इत्यादि पंक्तिषट्कं तृतीयचतुर्थपृष्ठसन्धौ ।

अन्यच्च तिमिरवादिना दण्डिस्वामिना श्रीचरणाश्रयेण शक्तिभाष्यवर्णितमवच्छेदवादस्याबोधं स्वीकुर्वतोक्तम् यद् "नाधीता मया अवच्छेदकत्वनिरुक्तिः" इत्यादि ( पृष्ठ० ३५। प० १९ ) तच्चेह परीक्ष्यते । शक्तिभाष्येऽचिदवच्छेदेन परिणामश्चिदवच्छेदेनापरिणाम इति यत् सिद्धान्तितं तद्घटकावच्छेदेन सहावच्छेदकत्वनिरुक्तिनिरुक्तावच्छेदकत्वस्य कोऽपि सम्बन्धो नास्तीति तदभिज्ञा जानन्ति । अस्ति तु तत्सम्बन्धो व्याकरणकाव्यादिभिश्च । तथाहि—प्रकृत्यादिभ्य उपसंख्यानम् इति वार्तिकेन प्रकृत्या चारुरित्यादौ व्याकरणे, मुखेन पूर्णेन्दुनिभ इत्यादिकाव्ये च तत्प्रसिद्धिः । एतदविज्ञानं कण्ठरवेणैव स्वयमुद्घोषयता दण्डिस्वामिना यदतिगम्भीरे शक्तिभाष्ये तिमिरदर्शनं कृतं तत्र नास्ति विस्मयावकाशः प्रौढप्रज्ञानाम् ।

यच्च ३५ पृष्ठे ७ सप्तम्यां पङ्क्तौ तिमिराच्छन्नेन दण्डिना देवदत्तः पण्डितोमूर्खश्चेत्यादिना चिदचिदुभयत्वस्यैकत्रासङ्गतिं दर्शयितुम् अतिसंरम्भेण जल्पितं तदपि तु नैवेहासङ्गतं भवितुमर्हति । वेदे पण्डितो मूर्खश्च रविशास्त्रे इत्येवम्परतया तस्योपपत्तेरुपपत्तेः । देवदत्तश्चक्षुषा पश्यति, न पादेन । शरीरेण दुर्बलो न मनसेत्येवं रूपन्तु भगवदाचार्य्यपादानामपि पाण्डित्यं मौर्ख्यञ्च मण्डनमिश्रतत्पत्नीभ्यां सह विचाराख्यायिकायां प्रसिद्धम् । अवच्छेदकभेदेन विरुद्धधर्मासमावेशमपलपन् कथन्नोपेक्षणीयो भवति प्रेक्षावताम् । एतेन निरासप्रकारेणैतत्तु सर्वैरपि सूर्य्योदयपाठकैर्निर्णीतमेव स्याद् यदयम् परिव्राजकाचार्य्यो न केवलमवच्छेदकत्वनिरुक्तिज्ञानविरहितः अपि तु स्वावश्यकाध्येतव्यवेदान्ततत्प्रमाणकप्रकरणग्रन्थादिज्ञानगन्धशून्यश्चास्तीति "कणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्" इति कणादीयपाणिनीयपदार्थज्ञानविरहितो व्यर्थमेवेहाशेपशास्त्रज्ञानसम्भृतशक्तिभाष्यावगाहने कृतप्रयत्नोऽभूदिति । पश्यन्तु पाठकाः, अवच्छेदकत्वज्ञानस्य कुत्र नास्ति प्रयोजनम् ? माण्डूक्योपनिषदि प्रणवध्यानमकारादिपादानुसारेण यदुक्तं तत्रावच्छेदवादोऽवश्यमभ्युपेयः अन्यथा

अकारं पुरुषं विश्वमुकारे प्रविलापयेत् ।

उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत् ।
मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत् ।

इति पृथक् पृथक् प्रविलापनं नोपपद्येत। अवच्छेदवादे तु प्रणवस्यावयवभूताकाराद्यवच्छेदेन ध्यानादिना प्रविलापनं सुस्पष्टमेवेति संक्षेपः । अन्यादृशोऽप्यवच्छेद्यावच्छेदकभावोऽस्ति यश्च खल्वद्वैतिनामधिकतरः सम्मतोऽस्ति। तथाहि—घटावच्छिन्नाकाशो घटाकाश इति सिद्धान्तलेशसंग्रहादौ दृश्यत एव। तस्मादवच्छेदकनाम्नो भीतिर्वोपहासो वा तस्यैव शोभते यो हि वेदान्तरहस्यमपरिज्ञाय वैदान्तिकत्वयशोलब्धये पूर्वतनग्रन्थवाक्यमात्राणि कथञ्चिदुद्धृत्य दुरवगाहं श्रौतस्मार्तसिद्धान्तप्रतिपादकमतिगम्भीरं शक्तिभाष्यमाक्षेप्तुं धार्ष्ट्यमालम्बते । तस्मान्मन्ये तिमिररोगग्रस्तस्य भास्कर इव यस्य द्वितीयोऽयं शक्तिभाष्यभास्करो बोधगम्यो न भवति, तस्यैव तिमिरार्तस्य वदनात्सत्यस्वरूपा सरस्वती शक्तिभाष्यतिमिरभास्करइत्यन्वर्थनाम्नैव प्रादुरभूत्।

अपरश्च शक्तिभाष्यनयस्य श्रुतिस्मृतिविरुद्धत्वमप्युद्घोषितं दण्डधरेण स्वामिना तत्रापराधः शक्तिभाष्यकृतामेवेति मन्यामहे । यतो हि श्रीमद्भगवद्रामानुजाचार्य्यप्रभृतिभिर्विविधवादसंस्थापकैर्यस्याद्वैतवादस्य यथा श्रुतिस्मृतिविरुद्धत्वन्तेष्वेव कैश्चिच्च श्रीमद्भगवच्छङ्कराचार्य्यानुज्ञातसंन्यासस्यावैधत्वमप्युद्घोषितम् । शक्तिभाष्यकृद्भिस्तुनैवानुसृतस्तन्मार्गः। प्रत्युत 'तदभिमतः प्रपञ्चसारादिषु स्फुटं प्रतिपादितो गृहिसाधारणः श्रौतस्मार्तः सर्वोपयोगिमार्गो मया परिष्क्रियते' इति स्वकण्ठरवेणैव यत्र तत्र समुद्घोषित इति। शक्तिभाष्यस्यैव यथा सर्वशास्त्रसम्मतत्वम् तथा तु भाष्योद्धृतश्रुतिस्मृतिवचनजातान्येव प्रमाणतामावहन्ति । तस्य कृते तु—

"नहि कस्तूरिकामोदः शपथेन विभाव्यते"

इति लोकोक्तिरेव बहु विद्यते। तत्र नास्ति अस्माकं किञ्चित्कथनस्य प्रयोजनम्। पूष्णो दीपदर्शनवदेवास्माकम् प्रयासो भविष्यतीति पूर्वमेवाभिहितम्; विज्ञैः शक्तिभाष्यं परिशील्य तद्रसास्वादोऽवश्यमास्वादनीय इति।

इदानीं चातुराश्रम्यकथाऽवशिष्यते। तत्र चातुराश्रम्यस्यैव वैधत्वम् न त्वैकाश्रम्यस्येति दण्डिनः स्वामिनो दुराग्रहः। तत्स्थापनाय च ब्रह्मसूत्रतृतीयाध्यायचतुर्थपादस्य जैमिनिवादरायणविचारसूत्रोत्थापनम् "वनी भूत्वा प्रव्रजेत्" "यदहरेव-

व्रिरजेत् तदहरेव प्रव्रजेत्" इति जावालश्रुत्याश्रयणञ्च दृश्यते। परन्त्वन्योन्य-विरुद्धमेतद्भवतीति दण्डपाणिना स्वामिना नालोचितम्। यतो हि भगवद्भिराचार्य्य-पादैः शारीरकभाष्ये स्वयमभ्युपगतम् यत् "अनपेक्ष्यैव जावालश्रुतिमयमाचार्येण विचारः प्रवर्त्तितः।" इति (३।४।२० सूत्रभाष्ये) जैमिनिमते गार्हस्थ्यस्येव प्रव्र-ज्यायाः प्रत्यक्षविधाने जागरूके जैमिनिमतस्य तथा वौधायनस्मृतावैकाश्रम्यपक्ष-प्रतिपादकविचारस्य चाप्रसक्ते वांदरायणकृतप्रव्रज्याश्रमस्थापनसूत्रस्य जावाल-श्रुतिनैरपेक्ष्ये तच्छ्रुतेर्ऋषिपरिगृहीतत्वाभावादर्वाचीनत्वेन श्रुतिष्वन्तर्भावनस्या-युक्तत्वात्। दण्डपाणिस्वाम्युद्धृतवचसश्च श्रुतित्वाभावे सिद्धे तत्प्रमाणकश्चतुर्था-श्रमो दत्तजलाञ्जलिरेव स्यात्। शक्तिभाष्यन्तु जैमिनिवादरायणविचारस्य जावाल-श्रुतिसापेक्षत्वं प्रतिपादयद् यदि तिमिरभूतमालोक्यते तर्हि भास्करनामोच्चारण-मात्रेणैव तस्मात् तिमिरात्कथं मोक्षः स्याद्दण्डपाणेः स्वामिनः। चातुराश्रम्यवा-दिनीषु स्मृतिष्वपि क्रमसंन्यासविधानात् गार्हस्थ्यस्यैव श्रौतत्वमिति गौतमवौधायन स्मृत्युक्तत्वात् स्मृत्युक्तक्रमसंन्यासस्यापि—

'अश्वालम्भं गवालम्भं सन्यासं पलपैतृकम्
देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेद्

इत्यादिस्मृतिभिः कलौ प्रतिषेधाच्च। अस्तु, इत्येवं बहुत्र स्थलेषु विषयाज्ञानेन बहुत्र च तद्विपरीतज्ञानेन दण्डपाणिनापि सता स्वामिना विमार्गे स्खलता स्वीयास्मदीयशक्तिसमयोभयदुरुपयोगो विधीयत इति स महात्मास्माभिः सादरं सानुनयं सानुरोधं साग्रहं समभ्यर्थ्यते यत् श्रीविश्वनाथपुर्य्यां तीर्थराज्यामस्यां विराजमानान् शक्तिभाष्याचार्य्यान् साक्षात्कृत्वैव स्वोयाशेषविचारं प्रस्तौतु। किमिति व्यर्थं शक्तिसमयद्रव्यदुरुपयोगं करोतीति पुनरग्रे कदाचित्—

समालोचकः श्रीगोपालशास्त्री (महामहाध्यापकः)

[दर्शनकेशरी]



# प्रशस्तिपत्रम्।

श्रीमते रामानुजाय नमः।

१।४५ दक्षिणमाडवीथी सीकैरविणीतः

इदं मंगलमाशास्यते तत्रभवद्भ्यः सनातनधर्मजीवातुभ्यः विद्वन्मणिभ्यः धर्मविद्वेषिहास्तिकपञ्चाननेभ्यः पञ्चाननभट्टाचार्येभ्यः—

ननुभोः प्राणसमाः भट्टाचार्याः!

अद्यैवायुष्मतो भवत्कुमाररत्नस्य भवत्प्रतिनिधित्वेनागतस्य मुखात् भवदीयं कुशलमुपश्रुत्य साक्षादिव भवत्समागममनुभवन्निर्वृतमना अस्मि। प्रत्युत भवद्विदृक्षासमुत्सुकं चेतः अन्यत्र कर्तव्येषु किमपि न चेतयति। दैवं प्रसन्नं भवत्समागमं घटयिष्यतीति विश्वसिमि।

मातङ्गा! सहसा विमुञ्चत मदं रे नीरवाः फेरवाः!
प्राणत्राणपरायणा! स्त हरिणा वन्यास्तथाऽन्ये मृगाः!
निद्राशेषनिरूढ गद्गदगलद्वेलादलत्कन्दरो
जृम्भारम्भविशङ्कटास्यकुहरो जागर्ति पञ्चाननः॥
उत्पुच्छा अपि विस्मृतस्वगतयः क्रामन्तु कामं गिरेः
शृङ्गं रङ्गमितो हरेर्वनमृगाः कस्मै किमाशास्यताम्।
संप्रत्येष समुद्धताम्बुदघटाबन्धावलोकोद्धुर-
क्रोधास्फालनदीर्णशैलशिखरः सिंहस्समुत्क्रामति॥
सानुर्वा पदमस्तु तस्य सुचिरं यद्वा शिखा भूभृतः
शृङ्गग्राहिकया स्थितैकचरता सिंहस्य सिद्धैव सा।
दूराभ्यर्णकथा तु का निरुपधिस्फारप्रतापोष्मणा
ध्यातेनापि निरीति येन निखिलं जातं सनाथं वनम्॥

श्री यदुगिरि यतिराज संपत्कुमार रामानुज जीयस्वामी

१।४५ सरस्तटम्

सीकैरविणी

[ इदम् अखिलभारतीयसनातनधर्म विद्वत्परिषत्स्थानात् ईश्वरे वर्षे धनुषि कृष्णदशम्यां सोमवासरे (२७-१२-३७) विलिखितम् ]

## आर्यविदनाष्टकम् ।

भैरवरौरवभीरोर्नाथ ! नमेऽस्तीह कर्मगौरवं किञ्चित् ।
पापिनि यदि मयि करुणा करुणामयता तदान्वर्था ॥ १ ॥
ईश्वर ! नश्वरवित्ते न सरतु चित्तं स्वभावविक्षिप्तम् ।
तामसमानसवासं विश्वम्भिवासं सदा याचे ॥ २ ॥
अन्तर्यमयसि नित्यं गमयसि भक्तं च शाश्वतं धाम ।
कान्त ! कदा हृदि वीक्ष्ये नवजलदाभं जपे नाम ॥ ३ ॥
प्राप्य सुदुर्लभजननं मानवयोनौ कृतं न सत्कर्म ।
यामं भयमतिनिकटे किं वा कुर्मः क्व वा यामः ॥ ४ ॥
आर्जोवनमतिदीनकुटुम्बपुष्ट्या दिनानि नीतानि ।
दातुं न च मम विभवो भव सदय स्त्वं भवोद्धरणे ॥ ५ ॥
शरणं यदि हरिचरणं मरणभयं च स्वयं लयं याति ।
इदमतिचित्रं चित्ते तत्पदद्दत्ते कुतश्च भीर्याति ॥ ६ ॥
चिन्मय ! चेन्मयि दोषो रोषो नोचित इहास्तु सन्तोषः ।
क्रीडायोजकजनके बालस्खलनं न कोपाय ॥ ७ ॥
अखिलनियन्तरि भवति न किञ्चिद्विनिवेदनं नाम ।
सम्प्रति केवलमगतिर्विलपति पतितो घनश्यामः ॥ ८ ॥

—पण्डित श्रीघनश्यामवेदान्ततीर्थस्य,
शिवपुर—मेदिनीपुरम् ।



## विहारप्रान्तीयसंस्कृतच्छात्रसम्मेलनम् ।

गतजनवरीमासस्यप्रथमदिवसे व्याख्यानवाचस्पतीनां बम्बई जे० बी० एम्० सं० महाविद्यालय प्रधानाध्यापकानां पं० श्री श्यामानन्दझामहोदयानां सभापतित्वे महता समारोहेणेदं संमेलनं संजातम् । तत्र काशीस्थानेकच्छात्रविद्वदतिरिक्ता माननीयाः पं० श्रीमदीश्वरीदत्त दौर्गादत्ति-शास्त्रि-महोदयाः पं० श्रीहरिशंकरपाण्डेयमहोदयप्रभृतयोऽनेकशो विद्वांसः प्रतिनिधयश्चोपस्थिता आसन् ।

तत्र स्वागताध्यक्षाणां महामहाध्यापक पं० श्रीगोपालशास्त्रि दर्शनकेशरि-महोदयानां समयोपयोगिसुरुचिकरभाषणानन्तरं सभापतिमहोदयानां सार-

गर्भितं विद्वत्तापूर्णं भाषणमभूत्। एवं पं० श्रीमदीश्वरीदत्तदौर्गादत्ति महोदयानां पंडित हरिशंकरपाण्डेयमहोदयप्रभृत्यनेकप्रधानविदुषां प्रभावोत्पादकं व्याख्यानञ्चाभूत् ।

एतदनन्तरं निम्नलिखितोदारचेतसां महानुभावानां सन्देशः श्रावितः । जीरादेई सारनतः देशरत्नभूतपूर्वराष्ट्रपति डा० श्रीराजेन्द्रप्रसादस्य । प्रयाग विश्वविद्यालयतः डा० श्री उमेशमिश्र एम्० ए० डी० लिट् कयतीर्थमहोदयस्य । कलकत्तातः म० म० पं० सकलनारायणपाण्डेयमहोदयस्य । जयपुरतः विद्या वाचस्पति म० म० पं० मधुसूदनझामहोदयस्य ।



## स्वर्गगतानां महानुभावानां कृते शोकप्रस्तावः ।

इदं विहारप्रान्तीयसंस्कृतच्छात्रसम्मेलनं दिवङ्गतानां प्रख्यातविदुषां स्वर्गीय महामहोपाध्याय पंडित मुकुन्दझाबक्शीमहोदयानाम्, महामहाध्यापकानां स्वर्गीय पंडित रामयत्नओझामहोदयानाम् , पंडित रघुवीरमिश्र महाशय । नाम् आरामण्डलस्थानाम्, गुरुकुल हरपुरयानसंस्थापकानां कृष्णबहादुरसिंह महोदयानां च निधने स्वीयां शोकसन्तप्तां समवेदनां तेषां कुटुम्बैः सह प्रकाशयति । तेषां निधनमुपगतानाञ्च श्रीकाशीविश्वेश्वरात् चिरमात्मशान्तिं च प्रार्थयते ।

इदं विहारप्रान्तीयसंस्कृतच्छात्रसम्मेलनं विहारप्रान्तीय-संस्कृत परीक्षापाठ्यपद्धतिपरिवर्तनार्थमेकामुपसमितिं स्थापयति । या हि विहारप्रान्तीयशिक्षामन्त्रिणमनुरुध्यात् यत् शीघ्रातिशीघ्रं विहार-संस्कृत शिक्षापद्धतेरुपयोगित्वं विधातुं विशिष्टानां विदुषामेकां समितिं निर्मापयतु ।

प्रस्तावकः—श्री गोपालशास्त्री दर्शनकेशरी,

अनुमोदकः—श्री महादेवशास्त्री,

समर्थकः—श्री वीरमणि उपाध्याय एम० ए० सा० आ०

व्याख्याता—पं० श्री यज्ञनारायण उपाध्यायः एम्० एल्० ए०

अन्ते निम्नलिखितान् प्रस्तावान् समितौ निर्वाचितान् सदस्यान् च स्वीकृत्य सम्मेलनेन युक्तप्रान्तीयशिक्षासचिवश्रीसम्पूर्णानन्दजीमहोदयेभ्य उतापि विहारसंस्कृतसमितिकार्यसम्पादकश्रीमदीश्वरीदत्तदौर्गादत्तिमहोदयेभ्यश्च मानपत्रञ्चार्पितम् ।

पश्चात् सभापतिभ्य उतागन्तुकसज्जनेभ्यः प्रतिनिधिभ्यश्च शतशः धन्यवादान् दत्त्वा सभा विसर्जिता ।

प्रेषकः—दिनेशझा, प्रधान मन्त्री ।

## प्रस्तावानां स्वरूपाणि—

इदं विहार-प्रान्तीयसंस्कृतच्छात्रसम्मेलनं विहार-प्रान्तीयशासकवर्गमनुरुन्धे यत् स विहार-प्रान्तीयप्रधाननगर्य्यां पाटलिपुर्य्यां संस्कृत-महाविद्यालयस्यैकस्य प्रतिष्ठापनमवश्यं कुर्य्यादिति। संस्कृतविद्यायाः प्रसिद्ध-विद्यापीठस्य विहार-प्रान्तस्य प्रधानराजधान्यां सम्प्रति संस्कृतमहाविद्या-लयाभावः समुद्वेजयति संस्कृतकर्मज्ञान्।

प्रस्तावकः—गौतमजी ( पटना )

अनुमोदकः—शिवदयालुमिश्रः ( छपरा )

इदं विहार-प्रान्तीयसंस्कृतच्छात्रसम्मेलनं प्रस्तौति यत् विहार-प्रान्तस्य विभिन्नेषु मण्डलोपमण्डलेषु हिन्दूजातीनामैश्वर्यसंस्कृतेः, सनातन-धर्मस्य, देशस्य च रक्षणार्थं प्रतिपाठशालं महावीरदलस्य स्थापना स्यात् यस्मिन् दले संस्कृतच्छात्रा मिलित्वा शारीरिकशक्तिवर्धनपुरःसरं स्वीयं संघटनं विधाय पारस्परिकसाहाय्यभावेन तीर्थादिषु धार्मिकपर्वाद्यवसरे, गोमठमन्दिरानाथादीनामापत्तिकाले हिन्दूजातेः देशस्य च सेवांकुर्य्युः।

प्रस्तावकः—विश्वनाथोपाध्यायः

समर्थकः—सीताराम शास्त्री ट्रेनिंग का० काशी,

अनुमोदकः—शत्रुघ्न प्रसाद शर्मा,

इदं विहारप्रान्तीयसंस्कृतच्छात्रसम्मेलनं विहारप्रान्तीयशिक्षामन्त्रिण-मनुरुणद्धि यत् आंग्लविद्यालयेषु ऐच्छिकविषयतयोपात्तस्य संस्कृतविषयस्य यथा पूर्वमनिवार्य्यतामेव विदध्यात्। तथा हिन्दीमध्यमपाठशालासु ( मिडिल स्कूल ) षष्ठसप्तमकक्षयोः संस्कृतमपि अन्यभाषावत् पाठ्यतया निर्धारितं कुर्य्यात्।

प्रस्तावकः—श्री शत्रुघ्नशर्मा मुजफरपुर

समर्थकः—कामदया प्रसाद द्विवेदी।

उपसमिति—सदस्याः

१—पं० श्री डा० उमेशमिश्र एम० ए० डी० लिट् का० ती० प्रो० प्रयाग विश्वविद्यालय।

२ ,, ,, धर्मराज ओझा एम०ए० का० ती० प्रिंसिपल सं०का० मुजफ्फरपुर

३ ,, ,, हरिशंकर पाण्डेय, प्रो० पटना विश्वविद्यालय।

४ ,, ,, गोपालशास्त्री दर्शनकेशरी, प्रो० विद्यापीठ। [ संयोजकः ]

५ ,, ,, महादेवशास्त्री, प्रो० हि० वि० वि० काशी।

६ पण्डित श्री श्यामानन्द झा प्रिंसिपल सं० का० बम्बई ।
७ " " बलदेवमिश्र, राजपण्डित दरभंगा ।
८ " " त्रिलोकनाथमिश्र, प्रिं० सं० का० लोहना पो० दरभङ्गा ।
९ " " वीरमणि उपाध्याय एम० ए० का० ती० प्रो० हिन्दू वि० वि० काशी
१० " " आनन्द झा, न्यायाचार्य्य ( श्यामामन्दिर ) कचौरी गली काशी ।
११ " काञ्चीनाथ झा, एम० एल० ए० आयुर्वेदाचार्य ( श्यामा मंन्दिर )
१२ " " कपिलदेवशर्म्मा, ( सभापति लोकमोन्य समिति छपरा ) ।
१३ " " दिनेशझा, ( प्र० मन्त्री ) वि० प्र० सं० छात्रसम्मेलनम् ।

—— —

## ब्राह्मणानां श्रेष्ठत्वं जन्मना वर्णव्यवस्था च

निबन्धा—पण्डित दीनानाथशर्मा शास्त्री सारस्वतः
सनातनधर्म संस्कृतकालेजोपाध्यक्षः मुलतान

( क्रमागत )

परं नैवमस्ति । एवमेव पठनसमाप्त्युत्तरमेव वर्णविनिर्णये, तस्मिन्नेव समये उपनयनाऽवस्थाऽव्यवस्थानमपि आपतिष्यति । अथ चोपनयनसंस्कारस्य क्रमस्समावर्त्तनसंस्कारान्ते भवेत् । एवञ्चेन्मन्वादि प्रोक्ता २।३६ गर्भादष्टमाऽब्दाद्यावस्था कुतः समेष्यति ? । अथवा कश्चिदेतदादिविचारमकृत्वैवाऽष्टमवर्षे पितृवर्णानुसारं बालकस्योपनयनं कुर्य्यात् । परं यदि अध्ययनसमाप्त्यनन्तरं तत्परीक्षातोऽनुत्तीर्ण एव स बालश्शूद्रतामियात्; तस्योपनयनं वैयर्थ्यमेष्यति यतश्शूद्रस्य नोपनयनाऽधिकारः । अथवा स वर्णान्तरं वेयात्; तद्युपनयनसंस्काराऽवस्था परिवर्त्तनीया भविष्यति; परं सा गर्भादेकादशाब्दादिकाऽवस्थाऽधुना कुतः समियात् ? अत एव पारस्करगृह्यसूत्रे 'अष्टवर्षं ब्राह्मणमुपनयेद् गर्भाष्टमे वा, एकादशवर्षं राजन्यम्, द्वादशवर्षं वैश्यम्, २।२।१–२–३ 'गर्भाष्टमेषु ब्राह्मणमुपनयीत, गर्भैकादशेषु वैश्यम्' आपस्तम्बगृह्यसू० ४।१०।१–२–३, स्वा० दयानन्दप्रणीत 'संस्कार विधौ' यज्ञोपवीतसंस्कारे ७८ पृष्ठे—'अष्टमे

वर्षे ब्राह्मणमुपनयेत्, गर्भाष्टमे वा' १।१६।१-२ एकादशे क्षत्रियं द्वादशे वैश्यम् १।१६।३-४ आषोडशाद् ब्राह्मणस्याऽनतीतः कालः' १।१६।५ इत्याश्वलायनगृह्यसूत्रप्रमाणेन, 'गर्भाष्टमेषु ब्राह्मणमुपनयेत्, गर्भैकादशेषु क्षत्रियम्, गर्भद्वादशेषु वैश्यम्' २।१०।१-२-३ इति गोभिलगृह्यसूत्रप्रमाणेन गर्भत एँ कालभेदो निर्दिष्टः। अत्र 'ब्राह्मणक्षत्रियवैश्यानाम्' 'ब्राह्मणक्षत्रियवैश्यानां बालकाः' इत्यर्थस्तु स्वा० दयानन्दस्याऽयुक्त एव, यतो मूले नास्ति पुत्रवाचक एँ कोऽपि शब्दः। यद्ययमर्थो मन्येताऽपि; तर्ह्यपि जन्मना वर्ण-व्यवस्था। अधुना यत्र वेदादिके स्मृत्यादौ च 'ब्राह्मण' शब्दः समेयात्; तत्र स्वामिना तदनुयायिभिश्च 'ब्राह्मणस्य पुत्रः' इत्यर्थ एव ग्रहीतव्यः। एवं कृते स्वयमेव जन्मसिद्धवर्णव्यवस्था सेत्स्यति, उत्पत्तिमूलकशब्दत्वात्।

अस्तु। एवं परीक्षासमये यदि कश्चिच्छूद्रो ब्राह्मणतामियात्; तर्हि तस्मिन् कियताञ्चित् संस्काराणां न्यूनता भविष्यति। यतो जन्मना कतिचिदुपनयनवेदारम्भप्रभृतयः संस्कारास्तत्कृते न विहिताः; किं स परीक्षोत्तीर्णतानन्तरं पुनः स्वसंस्कारान् कारयेत्? तत्र का स्मृतिः सहायिका भविष्यति?। वस्तुतस्त्वेवम्भवने शास्त्राऽनभिमतं वर्णसाङ्कर्यं स्यात्। परन्तु स्वामिना जन्मशूद्रस्योपनयनं वेदारम्भश्च न निर्दिष्टः संस्कारविधौ। तर्हि स तु तस्यामेवावस्थायां स्थातुं बाध्यो भविष्यति। यद्येवं तर्हि शास्त्रीयगुणकर्माऽभावात् स कथं ब्राह्मणादिर्भवेत्।

एवं स्वामिना ७६ पृष्ठे—'वसन्ते ब्राह्मणमुपनयेत्, ग्रीष्मे राजन्यं, शरदि वैश्यम्' इति शतपथप्रमाणेन यज्ञोपवीते प्रत्येकवर्णस्य ऋतुभेदोऽपि निर्दिष्टः, यो जन्मत एव त्रयाणां वर्णानां भेदसाधकः। अन्यथा—गुणकर्म्म तस्यां लघ्ववस्थायां भिन्नभिन्नवर्णवतां किं भिन्नं स्यात्?। एवं तत्रैव 'पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्यः, आमिक्षाव्रतो वैश्यः' इति शतपथमुपस्थाप्य स्वामिना प्रत्येकवर्णस्य औपनायनिकव्रतेऽपि भेदो निर्दिष्टः, यो जन्मना वर्णव्यवस्थापकः, जन्मनैव च वर्णानां पार्थक्यप्रतिपादकश्च। अन्यथा सर्वेषां कृते समानैवोपनयनाऽवस्था, समान एव ऋतुः, समानमेव च भोजनं प्रतिपादितमभविष्यत्। परं ब्राह्मणस्य अष्टमवर्षे, क्षत्रियस्यैकादशे, वैश्यस्य च द्वादशे वर्षे यज्ञोपवीतविधानं, शूद्रस्य तु कृते सर्व्वथैव तस्याऽविधानं सूचयति, यन्मातापितृजन्मद्वारा प्राप्ताः संस्कारा एव बलवन्तो भवितुं शक्ताः; वर्णाऽपि च पितुरेव तिष्ठति, न परिवर्त्तते। पितृद्वारा प्राप्ता व्याधयोऽप्यमारणं तिष्ठन्ति, आकार-

प्रकारोऽपि तथा, स्वभावोऽपि तथा। पिताऽपि तस्य आमरणं स एव भवति, पितृसम्पत्तिरपि तस्यैव भवति। शरीरमपि पितृप्राप्तमामरणं तिष्ठति, तथैव पितृद्वाराऽऽगतो वर्णो वा जातिर्वाऽऽमरणमेव स्थास्यतीति निर्विवादम्। किञ्च—द्विजत्वकारकमुपनयनं विद्याऽध्ययनात् प्राग् भवति, तत एव एकजाद् 'द्विबद्ध' सुबद्ध' भवतीति न्यायेन द्विजो भवति जनः। तेन अध्ययनादिना द्विजत्वप्राप्तिः केषाञ्चनाऽभिमता सर्व्वथा निर्मूला सिद्धा।

किञ्च—यदि जन्मनेयं व्यवस्था न बध्येत, किन्तु सर्वेषामुन्नतिमभिलक्ष्य कर्म्मणा बध्येतेयं व्यवस्था; तर्हि तु सर्व्वे एव स्वस्वोन्नतिमेव चिकीर्षवः सर्व्वे ब्राह्मणा एव बुभूषिष्यन्तिः तर्हि क्षत्रियवैश्यशूद्रकर्म्माणि कश्चिच्चिकीर्षिष्यति ?। शूद्रतातु गुणकर्म्मवादिनां मतानुसारेण अज्ञताया दुर्गुणतायाश्च पराकाष्ठा; न सा मुक्तिमार्गो न वा धनप्राप्तिमार्गो न चापि प्रतिष्ठाप्राप्तिद्वारम्; तत कथं लोकाः शूद्रवर्णग्रहणे समाकृष्टाः स्युस्तदा च शूद्रैकसाध्यमानानि कर्म्माणि कथं च सांसारिक व्यवहारपूर्त्तिः स्यात् ?।

पठिष्यन्ति तु क्षत्रियवैश्यादयोऽपि; यक्ष्यन्ति तु तेऽपि; दानमपि दास्यन्ति; तर्हि सर्वे एव पाठयितुं याजयितुं ग्रहीतुञ्चाऽध्येषिष्यन्ति; तर्हि को युद्ध प्रबन्धसम्बन्धिकष्टं, धनसङ्ग्रहकष्टं, सर्व्ववर्ण शुश्रूषाकष्टञ्च आसिषादयिषेत् ?। अथ चैको वर्णो वर्णान्तरकर्म्मणामभ्यसने निरतः संस्कारविरुद्धः सन् 'इतो भ्रष्टस्ततो नष्टः, इत्यवस्थाञ्चापि प्राप्तुं शक्तः। ततश्च तादृशः स्वल्पाऽधिकारत्वात् स्वाऽपेक्षयाऽधिकेन साम्येऽशक्तो भूत्वा तस्मै क्रोधयति। प्रेमस्थानमीर्ष्या ग्रहीष्यति। ततश्च गुणिनां सम्मानं त्यक्ष्यन्ति तादृशाः। जातौ दोषदृक्त्वं वर्त्स्यति। गुणिपुरुषपातनाय च विविधा प्रकारा आरप्स्यन्ते। ततश्च गुणिष्वत्याचारात् तेषां न्यूनता भविष्यति। फलत कर्म्मणा वर्णव्यवस्था तु 'हिन्दूनां नाशः, भेदा नैश्याऽशान्तिः, सतीधर्म्मनाशः, मातापितृभक्तिनाशः, इत्यादीनामेव पर्य्यायवाचिका सेत्स्यति, न खलु कदापि कामप्युन्नतिं कारयिष्यति। जन्मना वर्णव्यवस्थाने तु जाते सर्व्वं सुस्थं भवतीति सूक्ष्मं निरीक्ष्यम्। तत्र च राजदण्डभयात् ते 'भयाद् भोगाय कल्पन्ते स्वधर्म्मान्न चलन्ति च, मनु० ७।१५।

तस्मादैहिककर्म्मभिरग्रिमजन्मन्येव तत्तत्पितृगृहे जन्मना तत्तद्वर्णप्राप्तिः। तथा च—"यथा हि रमणीयचरणा अभ्याशोहयत् ते रमणीयां योनिमापद्येरन्

× ब्राह्मणयोनिं वा, क्षत्रिययोनिं वा, वैश्ययोनिं वा। अथ य इह कपूयाचरणा अभ्याशोह यत् ते कपूयां योनिमापद्येरन्, श्वयोनिं वा, सूकरयोनिं वा चाण्डालयोनिं वा, ' छान्दोग्य० ५।१०।७ योनौ जन्म, सूकरादिकत्व जन्म चाऽग्रिमजन्मनि भवति नैहिकजन्मनि; अस्मिंस्तु यत् पूर्वं जातं तज्जातम्; तत ॢ परिवर्त्तनं सूकरादिकत्वञ्च कथं भवेत्? । एव 'धर्म्मचर्य्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ । अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ, इत्यापस्तम्बः '। जातिपरिवृत्तौ—जन्मपरिवर्त्तने मरणे इत्यर्थः। अयमेव सनातनधर्म्मराद्धान्तः । स्वा० दयानन्देन सत्यार्थप्रकाशे ५३ पृष्ठे 'जातिपरिवृत्तौ' इति शब्दस्याऽर्थं त्यक्त्वा स्वकीयमतस्य निर्म्मूलता निराधारता वा स्वयं पिशुनिता।

किञ्च—गुणकर्म्मकृतवर्णव्यवस्थायां मतायां तपस्यन्तं शूद्रं श्रीरामचन्द्रो नाऽहनिष्यत । तपस्यतस्तस्य ब्राह्मणत्वाद् उच्चकर्म्मसु सर्व्वस्य वा स्वतन्त्रत्वाद् गुणकर्म्मवादिनां मतेन। अथच 'धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः। तप्तमासेचयेत् तैलं वक्त्रे श्रोत्रे च पार्थिवः, मनु० ८।२७२ 'अथ हाऽस्य (शूद्रस्य) वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्र परिपूरणम्; उदाहरणे जिह्वाच्छेदो, धारणे शरीरभेदः, गौतम० १२।१ इति शूद्रस्य दुरवस्था नादिष्टाऽभविष्यन्मनुना गौतमेन च; धर्म्मोपदेशकतायां तस्य ब्राह्मणत्वाद् गुणकर्म्मवादिनां मतेन। तथापि श्रीरामचन्द्रेण तपस्यञ्छूद्रो हतः, मनुना गौतमेन च धर्म्मं वेदं वा उपदिशन् शृण्वन् वा शूद्रो दुरवस्थया घातितः। अनेन प्रतीयते यज्जन्मनैव वर्णव्यवस्था, न तु गुणकर्म्मतः; न च कस्यचिद् वर्णान्तरकर्म्म स्वीकारे स्वातन्त्र्यम्। अत एव जातिमात्रोपजीवी स्यात् कामं स्याद् ब्राह्मणब्रुवः (कुत्सितब्राह्मणः)। धर्म प्रवक्ता नृपते र्न तु शूद्रः कथञ्चन' मनु० ८।२० 'सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । प्राऽधीते शतसाहस्रमनन्तं वेदपारगे' मनु० ७।८५ अत्र जन्मनैव वर्णव्यवस्था निर्दिष्टा न कर्म्मणा, अन्यथा प्राधीते' वेदपारगे, इति विशेषणं 'ब्राह्मण ब्रुवे' इत्यादि च व्यर्थं स्यात्।

पुरुषो जन्माऽऽसाद्य मरणपर्यन्तं तज्जातीयस्तिष्ठति; यावत्तस्य शरीरं विद्यते । आविष्टलिङ्गा जातिर्यल्लिङ्गमुपादाय प्रवर्त्तते, उत्पत्तिप्रभृति

× अत्र जन्मसिद्धनैव वर्णस्य, अतो वेदान्तदर्शनस्य ३।१।२७ सूत्रस्य शाङ्करभाष्ये उक्तम् ' अथ रेतः सिग्भावस्याऽनन्तरं योनौ निषिक्ते रेतसि योनेरधिशरीरमनुशयिनामनुशयफलोपभोगाय जायते इत्याह शास्त्रम्—'तद्य इह रमणीयचरणाः' इति (छा० ५।१०।७)।

आ विनाशाद् न तल्लिङ्गं जहाति, महाभाष्ये १।२।५२ सूत्रेऽस्मत्पक्षः सिद्धः ।

कश्चिन्मृगो म्रियेत, मरणेऽप्येतत् कथयिष्यते यदयं मृगो वर्त्तते । तस्य शरीर-परमाणुपारस्परपार्थक्यं यावन्न भवेत्; तावत्तस्य मृगत्वाऽभावं न कोऽपि वदिष्यति । एवञ्च जीवने गौर्गर्दभो न भवति, न च गर्दभो गौः । तथैव ब्राह्मणो न शूद्रादिः, शूद्रादिश्च न ब्राह्मणो भवेत् । केचित् 'समानप्रसवात्मिका जातिः, २।२।७० इति न्यायदर्शनसूत्रमनुसृत्य गोगर्दभयोर्भिन्नजातिमत्त्वं संसाध्य ब्राह्मणशूद्रयोः ( समानमनुष्यजात्योः ) इमं दृष्टान्तं विषममामनन्ति । परन्तु तैरिदं ध्येयम्—यदिदं जातेः सामान्यलक्षणम् । तत्सूत्रस्य तात्पर्य्यटीकाया-मार्य्यसामाजिकपण्डिताऽऽर्य्यमुनिकृतटीकायाञ्चाऽस्मिन्नेव सूत्रे ब्राह्मणादीनां पाषाणादीनां स्वर्णादिधातुभस्मनां लौहादिधातूनाञ्चाऽपि जातित्वं सिद्धम् । अत एव व्याकरणे 'आकृतिग्रहणा जाति' रिति न्यायस्थलक्षणसदृशलक्षणे कृतेऽपि 'सकृदाख्यातनिर्ग्राह्या' इति पृथग् जातिलक्षणं कृतं येन ब्राह्मणशूद्रादिषु जाति—भेदः सिद्ध्यति । अथ च 'समान प्रसव' शब्देन समानाकारो न विवक्षितः, किन्तु समानोत्पत्तिमात्रमेव । ब्राह्मणस्य सन्ततयो ब्राह्मणा एव भवन्तीति समानप्रसवतत्व; तेन तदीयमपि जातित्वं निर्बाधम् । आकाराग्रहे तु समान आकारः सर्व्वथा क्वापि न मिलेत् ।

अथ च समानाकृतौ जातिभेद एव नेत्यपि यत्किञ्चित् । हीरकादि-पाषाणानां स्वर्णादि धातुभस्मनां काकपिकादीनाञ्च समानाकृतावपि एषु जातिभेदोऽस्त्येव । अत एव तन्मूल्येऽपि तारतम्यं भवति । समानाकृतिमत्त्वादेव समानरुधिरादिवशादेव वा यदि ब्राह्मणशूद्रादिके न कोऽपि भेद इत्युच्येत, तर्हि तु भगिनीपत्न्योः, स्नुषाकन्यापत्नीनां, मातृपत्नीनाम्, निज-पतौ जारे च, सतीव्यभिचारिण्योश्च न कोपि भेदो भवेत् ? तर्हि किमेतदादिभिः सह व्यवहारसाम्यं भवितुमर्हति ?। यद्येवं तर्हि तु धन्या भवन्तः । तदा तु कस्याश्चिद् व्यभिचारिण्याः 'ब्रह्मैव सत्यमखिलं नहि तेन किञ्चित् तस्मान्न मे सखि ! पराऽपरभेदबुद्धिः । जारे तथा निजवरे सदृशानुरागो व्यर्थं किमर्थमसतीति कदर्थयन्ति' इत्युक्तिः प्रमाणं स्यात् । अस्तु —पुनः प्रकृतं प्रचाल्यताम् भूम्यास्सर्व्वत्र समानाकृतित्वेऽपि क्वचिदत्युर्वरता, क्वचिच्च कृषेरेवाऽभावः । एवं सुवर्णानां मिथस्समानाकृतिमत्त्वेऽपि तेषु जातिभेदो भवति, अत एव तन्मूल्ये तारतम्यम् । अन्नजातावपि एकस्यामेव गोधूमजातौ एकस्यामेव तण्डुलजातौ, जात्यन्तरेषु वाऽवान्तरजातिभेदाः; तन्मूलकमूल्यतारतम्यञ्च

प्राप्यते एव, ( एकस्यामपि स्त्रीजातौ, काचिद् वः पत्नी, काचिद् भगिनी, काचिद् मातेति भेदः )। अत्र सर्व्वत्र समानाकृतिमत्त्वेऽपि पृथक्-पृथक्-जातिमत्त्वं वर्त्तते, एवं ब्राह्मणादिष्वपि समानाकृतिमत्त्वेऽपि शूद्रादितो जातिभेदो वर्त्तते।

अत एवोक्तं न्यायदर्शने—"अनाकृति व्यङ्ग्यायां जातौ 'मृत्-सुवर्ण-रजतम्' इत्येवमादिषु आकृति निवर्त्तते, जहाति पदार्थत्वम् २।२।६६। अत एवाऽस्य तात्पर्य्यं टीकायामुक्तम्—"न पुनः सर्वा जातिराकृत्या लिङ्ग्यते इति। मृत्सु वर्णरजतादिका हि रूपविशेषव्यङ्ग्या, जाति र्नाकृति व्यङ्ग्या ब्राह्मणत्वादिजातिस्तु योनिव्यङ्ग्या आज्यतैलादीनां जातिस्तु गन्धेन वा रसेन वा व्यज्यते" इति।

यथा गोगर्द्दभयोः पशुत्वजातिस्समाना, तथैव ब्राह्मणशूद्रेष्वपि मनुष्यजातिस्समाना। यथैव गोगर्दभयोरवान्तरजातिभेदः पशुत्वसाम्येऽपि; तथैव ब्राह्मणशूद्रयोरवान्तरजातिभेदोऽस्ति मनुष्यत्वतुल्यतायामपि। तेन गोगर्द्दभभेददृष्टान्तो ब्राह्मणशूद्रभेदे न विषमः। यदि कथ्येत-गर्दभमरणे सर्व्वो वदितुं शक्तो यदयं गर्दभो मृतः, परं ब्राह्मणमरणे तु न सर्व्वो ज्ञातुं शक्तो यदयं ब्राह्मण इति। एतदपि यत्किञ्चित्। कश्चिदीदृशः पक्षीपशुर्वा म्रियेत, येन वयं न परिचिताः; तर्हि वयं तत्सामान्यजातिं पशुपक्षितां तु जानीमः, परं तद्विशिष्टजातिं न विद्मो विना परोपदेशम्। एवं यदि ब्राह्मणादिजातिमपि न वेदितुं शक्नुमो वयं बिना परोपदेशेन, तर्हि न कोऽपि दोषः। यथा ऽस्मदपरिचितो मृतपशुप्रभृतिरस्माभिः परोपदेशेन ज्ञायते, एवं ब्राह्मणादिरपि परोपदेशेन ज्ञास्यते। वस्तुतस्तु ज्ञानवन्तस्तु मृतेऽपि तद्-ब्राह्मणात्वादिजातिं जानन्ति; यतो हि सर्व्ववर्णेषु भेदसूचकानि चिन्हानि नियतानि। तथाच—'दक्षिणेन मृतं शूद्रं पुर द्वारेण निर्हरेत्। पश्चिमोत्तरपूर्वैस्तु यथायोगं द्विजन्मनः' मनु० ॥९२ इति मरणसमये दिशाभेदः। अथ च कार्पासमुपवीतं स्याद् विप्रस्योर्ध्ववृतं त्रिवृत्। शणसूत्रमयं राज्ञो' वैश्यस्याविकसूत्रिकम्' मनु० २।४४ इति यथायथं यज्ञोपवीतादिभेदवशान्मरणेऽपि स्वयमेव भेदो ज्ञास्यते। ( क्रमशः )



# श्रीमहामहिषमर्दिनी ।



पुरा समर-भूतले विजित-निर्जरैः संस्तुता ।
जगद्धितनिधित्सयातिकृपया च याविर्बभौ ॥
स्वतन्त्रविजया जया भगवती जयन्ती मुदा ।
महामहिषमर्दिनी मनसि मे सदा संविशेत् ॥ १ ॥
शरद्घनघटास्फुरत्तडिदिव स्वत्तेजोज्ज्वला,
प्रसन्नमदिरेक्षणालसदमन्दहासच्छटा ॥
हिरण्मयकिरीटिकाकिरणकोटिशृंगारिता,
महामहिषमर्दिनी सपदि मे हृदि स्थीयताम् ॥ २ ॥
प्रकृष्टमतिशालिनां त्रिजगतां सतां सिद्धये ।
श्रियै कवयतां तथा धृतव्रतात्मनां मुक्तये ॥
यया बहु समादधे प्रणतलोकरक्षाकरी ।
महामहिषमर्दिनी मम करोतु सन्मङ्गलम् ॥ ३ ॥
कवेः कलितकल्पना ललितवाङ्मयाह्लादिनी ।
मनोज्ञमृदुला, सुधारससरस्वती भारती ।
प्रमोदमधुवर्षिणी भुवनमोहिनी शारदा ।
महामहिषमर्दिनी मयि करोतु सानुग्रहम् ॥ ४ ॥
अनङ्गरसरञ्जितभ्रूकुटिवल्लरी भङ्गिभि—
र्वशीकृतविलोललोचनयुगा हि कामेश्वरी ॥
क्षणक्षणविलक्षणा प्रणयिनीव सा माधुरी ।
महामहिषमर्दिनी मम सुखाय वोभूयताम् ॥ ५ ॥
ललामकविताकलासुरसनिर्भरस्यन्दिनी ।
मनोहरपदैः प्रसन्नसुगिरा कलालापिनी ॥
निजानुभवभावुकान्नवरसैश्चमत्कारिणी ।
महामहिषमर्दिनी मनसि मे तरङ्गायताम् ॥ ६ ॥
श्रुतिस्मृतिपरम्पराकुलसमागतैः शाश्वतै—,
र्महर्षिकृतमन्त्रतन्त्रबहुलैः पुराणैर्यया ॥
स्वयं हि विदधे विधिर्निगमकल्पवल्लीव सा,
महामहिषमर्दिनी सदसि मे हृदि प्रस्फुरेत् ॥ ७ ॥

जघन्यपशुकर्मणामविरतिात्मनां दुर्हृदाम् ।
चिराय भवसंसृतौ विपचतां जनानामिह ॥
च्युताचरणदुर्धियामहह मादृशां पाप्मनां ।
महामहिषमर्दिनी किल हरेदघौघं द्रुतम् ॥ ८ ॥
ज्वलज्ज्वलनजाज्वलद्द्युतिमती सुतेजोमयी ।
मदोन्मदमहाद्विपोत्कटमदान्धमाहेश्वरी ॥
सुरासुरभयङ्करी भ्रुकुटिभीषणाभैरवी,
महामहिषमर्दिनी हरतु सा मदीयं भयम् ॥ ९ ॥
प्रचण्डरणकोविदोद्भटभटाँश्च चण्डासुरा—
नटाट्टहसतः खलाँस्त्रिभुवनाण्डभारायितान् ॥
प्रकाण्डरणताण्डवैः कृतवती तु या खण्डशो
महामहिषमर्दिनी तुदतु मे समस्तान् रिपून् ॥ १० ॥
अयाचितवराय विश्वजननीव या मातृभू—
रशेषरिपुदम्भमानमदनाशिनी मंगला ॥
सुशस्यजलशोभनां बहुफला च विश्वम्भरी
महामहिषमर्दिनी मम विनाशयेद्दुर्दशाम् ॥ ११ ॥
त्वमेव कुलकन्यका त्वमचला च लज्जावती ।
स्वयं प्रियपतिंवरा क्रतुमताञ्च पुण्या स्वधा ॥
हरेरभिनवावधूः प्रणयमुग्धसीमन्तिनी,
महामहिषमर्दिनी भवजले जनं पाहि माम् ॥ १२ ॥
अये ! कतु धृतिं लभे कमतुयोत्वयत्ने जनः ।
प्रसादयतु दुःखदग्धहृदयोऽन्यदेवानपि ॥
त्वमेव यदि नावलम्बमुपकल्पसे, मस्तके
न्यसेर्न मयि किङ्करे चरणपङ्करेणुश्रियम् ॥ १३ ॥

गणेशरामशर्मा 'विशारदः' ज्यौतिषोपाध्यायः प्रधान-पण्डितः 'पिन्है-हाई-स्कूल' पाठशाला डूंगरपुरम् ( राजपूतानाप्रान्तः ) ।

[ कवितायामस्यां प्रतिपद्य चतुर्थश्चरणः स्वर्गतानाम्माननीयानां कविचक्रवर्त्तिनां देवीप्रसादविदुषामस्ति शेषमस्माकमिति शम् ]

# अहो ! सुरभारतीसंरक्षणे विदुषामौदासीन्यम् ।

( ले० श्री "विनीतः" साहित्याचार्यः )

निखिलेऽपि भूमण्डले भारतवर्षाभिधोऽयमस्मदीयदेशः सर्वैर्जगद्गुरुरिति मन्यते। भगवतो मनोरेव डिण्डिमघोष आसीत् यत् एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवा इति। देवा अपि गौरव-गाथामस्य गायन्ति स्म। अत्र च जन्म गृहीत्वा धन्यमात्मानं कर्तुमभिलषन्ति स्म । भारतीयसाहित्ये एतद्देशसम्बन्धिन्या महत्ताया इयत्ता नास्ति। वैदेशिकेषु पण्डितेषु यद्यपि कैश्चित् पक्षपातादिदूषणग्रहग्रस्तै र्दोषदर्शनैकमात्रमानसैश्च भारतीयसाहित्यस्य भारतीयसंस्कृतेः भारतीयविचाराचाराणाञ्च नितरामनौचित्यमुद्वहन्ती कटुसमालोचना विहिता, महिलया चैकया "मदर इंडिया" ( mather India ) नाम्नि पुस्तके विविधैर्मिथ्याक्षेपैरक्षिणी निमील्य मनोऽनुकूलमधिक्षिप्ता भारतीयास्तथापि तादृशा अपि वहवोऽभूवन् सुदूरदर्शिनो विद्वांसो यैः केवलं भारतगौरवगीतावेव नीतं वयः । यः कश्चिद्यमेव विषयमादाय किमपि पुस्तकमलिखत् त त्रैव भारतस्य गुरुतां स्वीचकार आजीवनं संस्कृतसाहित्यानुशीलन एव समर्पिताशेषसमयो विद्वान् मैक्स मूलर ( Maxmuller ) महाशयस्तु मुग्धमानसः सन् "If there is any paradise in the world, I should point out to India" अर्थात् यदि संसारे स्वर्गप्रदेशो वर्तते कश्चन तदाऽहं भारतमेव स्वर्गं मन्ये, इति व्याजहार। एवं सर्वत एव भारतस्य प्रशस्तिपरम्परैव दृश्यते श्रूयतेऽधीयते च। ये केचनाक्षेपा अपि कैश्चन विहिता स्तेऽपि समाहिताः सम्यक् दृढप्रमाणैर्भारतीयविद्वद्भिः। "मदर इण्डिया" पुस्तकस्य चानुकूलमुत्तरं लालालाजपतराय महोदयेन "फादर इण्डिया [ Father India ] नाम्नि पुस्तके दत्तमितिविरमामोऽस्मिन् प्रसङ्गेऽत्रैव ।

अथ कथं खलु भारतवर्षं एवादर्शतां लेभे जगति, कथञ्च स्वकीयैः परकीयैश्च निर्विशेषं प्रशंसितो भूरिशः, कथमिव च मध्ये मध्येऽनेकैराक्रान्तोऽपि नैकवारमाक्रमणकारिभिरद्यावधि जीवितं धारयामासेति कारणगवेषणे क्रियमाणे संस्कृतसाहित्यमेव प्रधानतया पुरस्तात् पतति । कस्यापि देशस्य स्तुतिर्निन्दा वा जीवनं मरणं वा तदीयसाहित्यस्यैव उपचयाऽपचयौ उत्कर्षापकर्षौ वाऽवलम्बते इति सर्वसम्मता वार्ता। केनापि हिन्दीकविना लिखितम् "अन्धेरा वह देश जहाँ आदित्य नहीं है। मुर्दा है वह देश जहाँ साहित्य नहीं है। जहाँ नहीं

साहित्य वहाँ आदर्श कहां है । जहां नहीं आदर्श वहां उत्कर्ष कहां है" । इति । यस्य देशस्य साहित्यं यथा यथा विस्तृतं मौलिकं महत्त्वपूर्णं च भवति तथा तथा स देशः समुन्नतः सभ्य उत्कृष्टश्च गण्यते इति फलितम् । भारतस्यापि साहित्यं संस्कृतसाहित्यं मौलिकं सुतरां समुन्नतञ्चासीत् । आध्यात्मिकग्रन्थ-समूहादृते लौकिकसमुन्नतिसाधनीभूतेषु आयुर्वेद-धनुर्वेद-राजनीति-कामशास्त्र-कलाशास्त्र-कृषिशास्त्रप्रभृतिषु विषयेषु निबद्धैः परःसहस्रैर्निबन्धैः परिपूर्णोऽभूत् संस्कृतसाहित्यभाण्डागारः । तत एव च किञ्चित् गृहीत्वा देशान्तरीया आत्मनः साहित्यमरीरचन् । भारतीयाश्च महामतयो मनीषिणः परदेशेभ्यः समागतान् शिक्षयामासुः शिष्यवत्, देशान्तरेषु स्वयमपि गत्वा प्रसारयामासुरात्मनो बुद्धिवैभवं, महतीं प्रतिष्ठां च लेभिरे तत इति नास्त्यविदितमितिहासविदां विदुषाम् । किमधिकम्, यवनसाम्राज्यकाले पातितेष्वपि बहुषु महापुस्तकालयेषु तक्षशिला-नालन्दा-विक्रमशिलाप्रमुखेषु, प्रज्वालितेष्वपि तृणराशिवत् नैकसहस्रेषु ग्रन्थरत्नेषु वर्षपर्यन्तम् दृढतरार्गलेन अवरुद्धेष्वपि साहित्यिकसमुन्नति-द्वारेषु, चोरयित्वा नीतेष्वपि वैदेशिकैरनेकानेकामूल्यपुस्तकेषु, धूलिमिलितेष्वपि च केषुचिदवशिष्टेषु वर्तमानकाले यत् किञ्चिदुपलभ्यते सौभाग्यवशाद् दैवरक्षितं संस्कृतसाहित्यं, तदेवादाय अद्यापि धनबलरहितः पराधीनोऽप्ययं वृद्धो भारत-देशस्तालस्फोटपुरस्सरं प्रतिस्पर्धतेऽन्यान्समुन्नतदेशान् । बहवस्तु जीवात्म-परमात्मसम्बन्धिनोऽतीन्द्रियविषया ग्रन्थभूता अद्यत्र वर्तन्ते यत्र बुद्धिरेव न व्यापारिता वैदेशिकैर्बुधैरद्यावधि । तदेवं संस्कृतसाहित्यस्वरूपैवैका ईदृशी सम्पत्तिरक्षयाऽमूल्या च वर्तते ययाऽद्यापि भारतीया आत्मनो गर्वं प्रकटीकुर्वन्ति तत्तद्देशीयसाहित्यतुलनायाम् ।

अथ वर्तमानयुगे कीदृशी अवस्था वर्तते तस्याः सुरभारत्याः, तत्संरक्षणे च कियद् यत्यते संस्कृतविद्वद्भिरिति विषये विचार्यते । एष एव चास्मद्वक्तव्यस्य प्रधानोंऽशः । "उन्नतिः पतनाय भवतीति" जनश्रुतिर्वर्तते । अथवा नियम एवायं जगतो नैसर्गिकः । यतः "चक्रारपंक्तिरिव गच्छति कालपक्ति" । यदा भारते भारतीयं साम्राज्यमासीत् राजानश्च निज-भाषावेश-भूषाऽनुरागिण आसन् तदा चरमं समुन्नतिशिखरमारूढाऽभवत्सुरभारती । परमिदानीन्तु विदेशीय साम्राज्यवशात् आङ्ग्लभाषायाः सर्वेषु क्षेत्रेषु प्रचारे जाते, हिन्दीभाषायाश्च राष्ट्रभाषापदमलङ्कुर्वाणायामस्तमितः अस्तमेष्यन् वा विभाति सुरभारती सौभाग्यदिवाकरः । अचिरादेव च निराशामयी तामसी निशा समागन्तुमीहते

इति दर्शं दर्शं कस्य न सचेतसः सुरभारतीसेवकस्य हृदयं शतधा भिद्येत ? यतो हि भारतीयानामपि बहूनामधिकारिपुरुषाणामुपेक्षादृष्टिरवलोक्यते सुरभारती विषये । फलशून्यमिवाकलयन्ति अस्या अध्ययनमध्यापनञ्च ।

श्रूयते विहारप्रान्तात् १९४१ ई० वर्षेत आङ्गलविद्यालयेभ्यः संस्कृतभाषाया बहिष्कारो भविष्यति । अर्थात् संस्कृताध्यापनं न भविष्यतीति । अत्रविषये, माननीया विद्वांसो विद्यार्थिबन्धवश्च ! क्षणं विचारयन्तु । इयमेकस्य प्रान्तस्य व्यवस्था वर्तते । या विहारभूमिः कदाचन संस्कृतभाषाया विहारवाटिका बभूव । यस्य विहारस्य प्रधानं नगरं पाटलिपुत्रं संस्कृतस्य प्रधानं केन्द्रमासीत् परीक्षास्थानञ्च । यस्मिन् विहारे विश्वविश्रुता नालन्दा-सदृशा विश्वविद्यालया आसन्, हा ! हन्त ! तस्मादेव विहारात् संस्कृतस्य बहिष्कारो भवेत् ! किमेतस्माधिककष्टप्रदं भविष्यति संस्कृतविदुषाम् ? प्रथमोऽयं सोपानो विरचितः सस्कृतविनाशाय । अद्य विहाराद्वहिष्कारो जातः, श्वो युक्तप्रान्ताद् जायेत, परश्वश्च वङ्गप्रान्तात्, एवं शनैः शनैः सर्वतोऽपि बहिष्कृतिर्जायेत चेत् कथं जीविता स्थास्यति कुत्र स्थास्यति कः पालयिष्यतीति न बुद्धौ आयाति नो मुहुर्विचार्यमाणेऽपि । परमस्य निरोधः कथं क्रियेत ? सुरभारतीरक्षणभारस्तु तदनुरागिणां विदुषामेव शिरसि आपतति । परन्ते तदर्थं किं कुर्वन्ति ? न किमपि । न तेषां क्वचित् सभासमाचारः श्रूयते, नवा लेखाएव दृष्टिपथमायान्ति। एकः खलु अ०भा० संस्कृतसाहित्यसम्मेलन वर्तते संस्कृतरक्षकं तदपि विदुषां साहाय्यमनवाप्य किं कर्तुं क्षमते । सम्मेलनस्य तु नामापि न ज्ञायते बहुभिः । विहारतः संस्कृतापसारणसमाचार-श्रवण-समकालमेव युक्तमासीत्तभत्यविदुषां सुमहदान्दोलन कर्तुम् । क्रान्तिकालोऽयं वर्तते । युगेऽस्मिन् क्रान्त्या आन्दोलनेन च सर्वं कर्तुं शक्यते । एतस्य प्रतिदिनमुदाहरणानि मिलन्ति । परन्तु संस्कृतसमाजे तु अस्य कल्पनापि सम्भवतो न भवति । अस्मिन्नपि समये संस्कृतानुरागिणामभावो नास्ति । धनसाहाय्यं जनसाहाय्यं च पर्याप्तं लब्धुं लभ्यते । परमेतत्सकल कः कुर्यात्? अतः संस्कृतरक्षणाय, संस्कृत विदुषामन्याधिकारलाभाय च साम्प्रतमेत त्परमावश्यकं वर्तते यत् प्रतिप्रान्तं, प्रतिमण्डलं प्रत्युपमण्डलञ्च एकैका सुसङ्घटिता संस्था भवेत् संस्कृतविदुषां यासां समष्ट्या किमपि महतो महत् कार्यमल्पेनायासेन कर्तुं पार्येत । सम्प्रति केषाञ्चित् तादृशवीराणामावश्यकता वर्तते ये पदत्राणं क्षत्रं च विहाय, अङ्गरक्षणमप्युपेक्ष्य पवित्रेऽस्मिन् सुरभारतीसंरक्षणक्षेत्रे समागच्छन्तु । तदैवा-

स्या उद्धारः सम्भवति । सुरभारती आह्वयति परित्राणायात्मनः । औदासीन्यं विहाय, झटिति उत्थाय आगच्छन्तु धावन्तु । एतस्या रक्षणाय प्रतिजानन्तु । कृतप्रतिज्ञेन किं न कर्तुं शक्यते ।

प्राङ्गणवेदिर्वसुधा, कुल्या जलधिः, स्थली च पातालम् ।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्य ॥



## छात्राणां कर्तव्यम् ।

संस्कृतसाहित्यरसिकानां वाणीसेवकानां विदुषां मध्ये मादृशेऽयोग्यतमे यस्तावद् गरीयान् विषयस्तस्य कथनसामर्थ्यं मयि विद्यते इति स्पर्धा स्वप्नेऽपि मे मनसि न भवति । तथापि देवानां विदुषामाशीर्वादरूपेण शिरसा गृह्णन् भवतां सेवायामात्मानं विषयं विदधामि ।

न खलु लेशतोऽपि तथाविधज्ञानं वा पाण्डित्यं येना ऽस्मिन् संस्कृतसमाजे संस्कृतछात्राणां किं कर्तव्यमिति—वक्तुं प्रभवेयम् । केवलं देववाणी सेवकानां छात्राणां दुर्दशां दुष्कर्तव्यमन्वीक्ष्य तन्निराकरणाय निवेदयामि ।

संस्कृतभाषा देवभाषाऽस्माकं धर्मशास्त्राणां वेदमन्त्राणां च भाषा अस्माकं नित्यनैमित्तिक काम्यक्रियाकलापानां भाषा अत एव सरलतमा धुरतमा भाषा, अस्याः पाठकानां छात्राणामपि तस्यां निर्मितनियमानुसारेण "सर्वदा सत्यं वक्तव्यं, सत्यं वीरस्य लक्षणं, अनृतञ्च नपुंसकस्य । न कदाचिदपि वार्ता इदृशी वक्तव्या यया लोके सन्देहो भवेत् । मिथ्याभाषिणः नरस्य लोकः कदापि नो विश्वासं विदधाति, सत्याश्रयो मानवं विजयिनं विदधाति । शपथं कदापि न कुर्युः, पाठालयान्निर्वतनसमये कदापि नो योद्धव्यम् । असभ्या वार्ता क्रिया च कदाचिदपि न विधेया, शिष्टाचारो गृहे पाठालये वा सर्वदा कुर्युः । अतिशीघ्रचलनं, कपाट त्रोटनं, निर्लज्जगानम् बहुसम्भाषणञ्चेत्यादि मूर्खता लक्षणानि । मातृपितृस्वसृ मुखानां श्रेष्ठजनानां प्रणामाः विधेयास्तथा सरलत्वविनम्रतया भाषणं कर्तव्यम् । कस्याचिदपि आज्ञा नोलङ्घनीया । दीन वृद्धेभ्यो मार्गनिर्देशोऽपि कर्तव्यस्तेषु च दयापि विधेयाः । अन्येषां हृदयानि मा सीदत । सर्वदा साधारण भोजनं भोक्तव्यम् । संध्यावन्दनादि सर्वदैव कर्तव्यम् । संस्कृत-भाषा-समुन्नत्यै सर्वदैव प्रयतितव्यम् । इत्यादि विधेया नियमाः सन्ति । जननी जन्मभूमिश्च स्वर्गादपि गरीयसी इति वाक्यात्, देशोद्धाराय छात्राणां कार्यं प्रधानतमम्, इत्यादिनियमानां संविधानेनैव छात्राणां समुन्नति र्भविष्यतीति ।

लेखक—हरिद्वारशर्मा विद्यार्थी,

# संस्कृतभाषायाः सारल्यम् ।

( ले०—ब्रह्मचारी सर्वेन्द्रो गुरुकुल गोरक्षपुरस्थः )

गतानुगतिकोऽयं लोकोऽर्धचन्द्रं दत्वा धिषणामपि यस्मिन् कस्मिन् वा कर्मण्य-विचिन्त्यैव सहसा प्रवृत्तः संजायते । किमधिकम्, अधुना पाश्चात्य-शिक्षा-दूषित-मस्तिष्कप्रदेशेऽयं झञ्झावात "परित" प्रसृत" प्रतीयते, यत्संस्कृतभाषा कठिनतरा नह्यस्यां सारल्यस्य गन्धोप्यस्तीति । स्मर्य्यते मया यद्वीतहायने पाटलि-पुत्रतः प्रकाशितायां नवशक्त्यामेकेन आंगलभाषाप्रेताकीर्णेन बी० ए० परीक्षो-त्तीर्णेन स्वीय जाड्यस्य साधु परिचयः प्रत्तः । असौ लिखत्येवं—बिहारप्रान्तीय-महाराष्ट्रिय-सभाशासकवर्गो निजप्रान्तेऽनिवार्य-रूपेणाङ्गलविद्यालयेषु निर्धा-रितां प्रचलिताञ्च संस्कृतभाषां निःसार्य्य वैकल्पिकपदमारोप्य सौकर्यमेव सम्पा-दितवान् । यतो हि यत्संस्कृतमुररीकृत्यांगल विद्यार्थिनो दुःखोदधौ नितरां निमज्जन्ति स्म । यथा तस्मिन्नेव मयापि तत्कालमास्वादितम् । इत्थमेवं वितथं विचारमवलम्ब्या न्ये हिन्दीभाषाज्ञा अपीदं स्वीकृत्य तत्सरणीं तारस्वरेण समर्थयन्तो मम दृष्टिगो-चरतां चापद्यन्ते । परन्तु ते नो विचारयन्ति यत्किं यथायथम् । अतस्सुहृद्भूतोऽहं तेषां पथप्रदर्शनार्थं सारल्यात्संस्कृतपठनार्थञ्चास्य सारल्यं संक्षिप्य लेखेऽस्मिन्नु-ल्लेखयिष्यामि ।

वयमत्र तानांगलभाषा-पठन-पक्षपोषकान् पृच्छामः, यत्ते यां भाषां सरलां हितां समवगम्यार्चयन्ति चर्चयन्ति च, अथात्मीयदशवयसापन्नान् द्वादशवर्ष-कल्पान् वा लघु बालकान् पाठयन्ति किं सा सरला ? मम दृष्टिमार्गे तु तेषां तत्कथनं केवलं साहसमात्रमेव, यतो हि यदाहमिदं विचारजटाजालं तर्कनिकषायां घर्षयामि तदा सर्वं रहस्यं नयनयोर्दूष्यमानं भवति । तद्यथा, यदि कश्चिन्मनुष्यः ( चूहा ) इत्यस्य शब्दस्य संस्कृतं बोद्धुं जिज्ञासति तदा तस्य ज्ञानाय "मूषकः" इत्येव पर्याप्तम् । परन्तु तमेव शब्दम् अवगन्तुमांगलभाषायां ( Rat =रैट=चूहा ) इयद्विगुणितस्य त्रिगुणितस्य परिश्रमस्य व्ययः । कथमित्यस्य समाधाने मनोदेयम्-अत्र पूर्वं तावद्रैट (Rat—रैट) शब्दे ( Word—वर्ड ) आर, ए, टी, इति त्रयोऽक्षराः

सन्ति, तत्पश्चादुच्चारणस्य ( Pronunciation–प्रोनन्सिएशन ) यत् आर, ए, टी, इति त्र्याणामक्षराणां सम्मेलनेन किमुच्चारणं जायते, तदेषां ज्ञानमन्तरेण "रैट" शब्दस्य "चूहा" इत्यर्थं न वेत्ति । किं संस्कृतापेक्षमांगलभाषायामियं कठिनता नो दरीदृश्यते । अपरञ्च संस्कृते एकस्मादेवाख्यातात्प्रादीनामुपसर्ग–साहाय्येन क्रिया-कदम्बकाः प्रभवन्ति । उदाहरणाय यथा गम् धातोः गच्छति ( जाता है ) अत्रैवाङुपसर्गसंसर्गेण आगच्छति ( आता है ) अवोपसर्गसंकलनेन अवगच्छति ( जानता है ) निरुपसर्गसंयोगेन निर्गच्छति ( निकलता है ) । अनयैव रीत्या "हृ" हरणेधातोः हरति, आहरति, विहरति, संहरति, परिहरति इत्यादि शब्दाः अन्यानन्यानर्थान् ज्ञापनायाख्यातनिष्पन्नतां नयन्ति । किन्त्वांगलभाषायां तु गच्छतीत्यर्थे ( Goes–गोज ) आगच्छति ( Comes–कम्स ) अवगच्छति ( Knowds–नोज) इत्यादयो भिन्नाः शब्दा एव प्रयुज्यन्ते । अतो भिन्नभिन्न क्रियाव्यवहारवशादत्र सारल्यमुपेत्यम् । नह्यस्यामेकेनैव धातुना वहूनि कार्याणि सिद्ध्यन्ति । अतः किमिदं संस्कृतभाषायाः सारल्यं नो ? एवमेवांगलसाहित्यसागरो हि भाषानीरेणासन्निभत्वात् भागद्वये विभक्तश्चास्ते । साम्प्रतिकानां मातृकुलाशन–( मैट्रिक्युलेशन ) परीक्षोत्तीर्णानां छात्राणां किमाकलनम्, परन्तु वी० ए०, एम० ए०, परीक्षोत्तीर्णाः विद्यार्थिनोऽपि प्राचीनकवितावनिता–परिचयं सम्यक् रीत्या ज्ञातुं नो पारयन्ति भाषायाः विभिन्नत्वात् । इयमेव दशा हिन्दी साहित्यस्यापि, इयमपि अस्मादगदात्सुरक्षिता नोऽस्ति । नवीन प्रसिद्ध प्रचलित-साहित्यपाठकाः पुरावर्त्ति केशवादिकवीनां कविताकौमुद्याः कमनीयतां विलोकयितुं कदापि नो शक्नुवन्ति । कारणञ्चैतद्यत् प्राचीनहिन्दीसाहित्यधाराऽन्यस्मिन्नेव प्रदेशे प्रवहति । तस्यामेकस्मिन् स्थाने व्रजभाषायाः, अपरस्मिन् अवधीभाषायाः, अन्यस्मिन् खड़ीभाषायाः, क्वचित्क्वचिच्च उर्दू फारस्यादि भाषाणां शब्दाः निवेशिताः सन्ति । यस्माद्धेतोः हिन्दीभाषाया आंगलभाषायाः वा पारावारीणपदं प्राप्तुं मर्म वा वोद्धुं नवीनप्राचीनव्याकरणद्वयस्यापि पठनं नितान्तमावश्यकम् । परन्तु चिरन्तनमथवा प्रत्नं संस्कृतसाहित्यमध्येतुं संस्कृते व्याकरणसाम्यम् । वयं यथा कविकुलकमलदिवाकर कालिदासादिकवीनां रुचिररोचिष्णु रचनामधीमहे भाषाशैलींश्लाघनीयाञ्च प्राप्नुमस् तथैव कविभास्करोदयाऽभूतविद्वद्वरिष्ठ वाल्मीकिवेदव्यासादेः भाषारचनास्थानं जानीमः । अतः किमिदं संस्कृतस्य सारल्यं नो

यदेकेनैव व्याकरणेन सकलसंस्कृतसाहित्य समीचीनपरिज्ञानम्? अस्मिन्नेवोपक्रमे ज्ञेयं यदांगलहिन्दीभाषयोः प्रौढ़ाहार्य पूर्णज्ञानं प्राचीननिर्मितव्याकरणेन वार्वाचीन रचित व्याकरणेन नहि सर्वेषां शब्दानां रहस्यं प्रकाशितं भविष्यति। यथा हि कश्चिदेकशब्दोऽस्ति, तर्ह्ययं शब्दः कस्माद्धातोः कस्य प्रत्ययस्य संमिश्रणेन निष्पन्नो भवति। काममेव हिन्दी व्याकरणमधीत्य हिन्दी शब्दानथवांगलव्याकरणं समुत्तीर्यांगलशब्दान् जानन्तु। परन्तु ये शब्दाः एतयोः भाषयोः अन्यभाषास्थाः बहवःशब्दाः विविधस्थले बहुधाङ्गीकृताः, तान् शब्दान् कथं हि बोधिष्यति कोऽपि? कथं वा एतयोः भाषयोः विद्वान् भवितुमर्हति? एवं अन्यास्वपि भाषास्वियं कठिनता, बिस्तारवशात्सर्वासां विशेषव्याख्यानं नो विधीयते। परन्त्वहो! कीदृशं संस्कृतस्य सारल्यम्, यत्संस्कृते सर्वस्वकीयशब्दत्वात्केवलमेकेनैव संस्कृतव्याकरणपठनेन सर्वेषां शब्दानां धातुप्रत्ययादीनां प्रचुरपरिचयायाऽलम्। अन्या कठिनता अन्यस्यां भाषायामियं यत्कर्त्तृकर्म क्रियाकलापस्य पर्य्यायानुकूल्यन प्रक्षेपाय नियमो निर्धारितो विद्यते। यथा हिन्दी भाषायां पूर्वं कर्त्तुः तत्पश्चात्कर्मादीनामन्ते च क्रियायाः स्थापनस्थानमुदाहरणञ्च (राम गाँवको जाता है) परन्त्विदमेव वाक्यं कश्चिदेवं कथयति (गाँव को राम जाता है) (जाता है गाँव को राम) तदासौ हिन्दीसंसारमध्ये वालिशश्रेणीमेवालंकरिष्यति। इत्थमेवांगलभाषायामप्यस्ति। (R m goes to Villag राम गोज टू विलेज) अस्तु, पूर्वं कर्त्तुः तदनन्तरं क्रियायाः सर्वान्ते च कर्मणः प्रवेशस्थानम् समुद्घोष्यते। अथैतद्वाक्यस्थशब्दानां व्यवहितत्वेनाऽपि वाक्यमिदं त्रुटिपूरितत्वमयिष्यते। परन्तु संस्कृतेऽस्मिन् सम्बन्धे सर्वेषां कृते सर्वथा स्वातन्त्र्यस्य सुदृढं साम्राज्यम्। अस्यां तु यत्र कुत्रापि कर्मादीन् संप्रयुज्य सरलतया वक्तुं नियमस्संतिष्ठते। यथा हि रामो ग्रामं गच्छति, गच्छति रामो ग्रामम्, ग्रामं गच्छति रामो वा। एवमेव प्रतिवाक्यं द्विधा त्रिधाख्यातुं व्याकरणस्य कठिनशृङ्खला कमपि संस्कृतज्ञं नो वध्नाति। अतः किमिमानि संस्कृतभाषायाः सारल्यानि स्वीकर्त्तव्यानि नो सन्ति? विष्णुशर्मा च षड्मासेनैव संस्कृत भाषापण्डितं कर्त्तुं प्रतिज्ञातवान्। इत्थमस्ति क्वापि भाषायां प्रतिज्ञा?

अतोऽन्तेऽहमिदानीं तान् सर्वान् सनिवेदनं सानुरोधञ्च प्रार्थयामि यत्तेऽन्याः कठिनाः भाषाः विहाय सारल्यवशात्संस्कृतस्यैव पठनपाठने स्वकं रत्नोपमं जीवनं

यापयन्तु। यस्मान्मनुष्यजीवनस्य साफल्यं हस्तगतं स्यात्।

[ किं लेखकमहोदयेन 'नवशक्ति' पत्रे कोऽप्येतत्सदृशो लेखः प्रकाशितो न वा ?
तत्रैव तत्सदृशेषु पत्रेषु च संक्रुतस्य सारस्यप्रकाशनं हितकरं नेह
संस्कृतपत्रे तथापि आवश्यकमिति प्रकाश्यते स० सम्पादकः ]





## साहित्यकुसुमवाटिका

समालोचकः—श्रीदीनानाथशर्मा शास्त्री सारस्वतः
मुलतानस्थः।



"कर्तव्यशिक्षण (हिन्दू लॉ)।" अस्य प्रणेता प्रकाशकश्च चिकित्सकचूडामणिः श्रीविश्वेश्वरदयालुवैद्यराजः 'अनुभूतयोगमाला' पत्रिकासम्पादकः। आकारः ८॥×५। इञ्चमितः। पृष्ठसंख्या १४६ । मूल्यम् ।॥)। प्राप्तिस्थानम्—अनुभूतयोगमाला आफिस वरालोकपुर (इटावा) यू० पी०।

इदं हिन्दीभाषानिबद्धं पुस्तकम्। ग्रन्थकर्तुरिदमभिप्रेतं यद्—अद्यत्वे गृहे गृहेऽशान्तिर्विराजते। एतदपोहनं वर्त्तमानाभ्यराऽभ्यासरूपशिक्षया न क्रियते; प्रत्युत परिवर्ध्यते। अत्र तु कर्त्तव्यशिक्षणरूपशिक्षैव अशान्तिं दवयितुमलं स्यात्। सा च शिक्षा आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीतिप्रभृतिभेदैर्विभक्ता। सैव वास्तविकी शिक्षा। इति विविच्य ग्रन्थकर्त्राऽत्र विविधानामर्थशास्त्राणां संहितानां स्मृतीनामायुर्वेदग्रन्थानाञ्च सारं प्रमथ्य तेनैतत्पुस्तककलेवरं परिपोषितम्।

स्त्रीणां स्वातन्त्र्येण का हानिः, तत्र जर्मनीदेशस्य का सम्मतिः; अमेरिकयाऽस्य कीदृक्षा दुष्परिणामा अनुभूताः, फ्रांसे कियान् धनव्ययः स्त्रीवेषभूषायां भवति, वर्त्तमानशिक्षिता 'ग्रैजूएटाः' परिणतौ कीदृशीं हानिं प्राप्नुवन्ति, वार्त्तमानिक-न्यायालयानां न्यायस्य कीदृग् दुरवस्था—एतदादिकमशान्तिवीजं भूमिकायां प्रदर्शितम्।

प्रस्तुतपुस्तके च भिन्नभिन्नाऽपराधिनां दण्डप्रकाराः, राज्ञ आरभ्य दरिद्रपर्य्यन्तं गृहस्थकर्त्तव्यानि—इत्थं प्रदर्शितानि, यत्समवलम्बनेन राजप्रजयोः, पितापुत्त्रयोः, पतिपत्न्योः, भ्रातृभगिन्योः, पुत्त्रपुत्र्योः, श्वश्रूस्नुषयोः, ननान्दृभ्रातृपत्न्योश्च जायमानानां कलहानां शान्तिः स्यात्। कुटुम्बतोऽशान्तिर्व्यपगच्छेत्, गृहे च स्वर्गीयसुखोपलब्धिः स्यात्। इदं हिन्दीपुस्तकं भवन्तः स्वयं पठन्तु, स्वसन्ततिभ्यः स्वपत्नीभ्यश्च पठनार्थं ददतु श्रावयन्तु वा। तर्हि भवतां गृहं स्वर्गमयं स्यात, देशे ग्रामे गृहे च शान्तेर्वातावरणोपलब्धिः स्यादिति सभेरीनादं घोषणा प्रणेतुः। आशासे जनतैतत्पुस्तकं समाहृत्य स्वहितं प्राप्नुयात्।

अत्र सर्वविधपाठकानां कृते महोपयोगिनी सामग्री वर्त्तते, येन सर्वविधाधिकारिण एतेन लाभं प्रपत्तुमलम्भूष्णवः स्युः। अत्र 'राजाओं के कर्तव्य, साक्षी के कर्तव्य, खरीद या बिक्री में अन्तर पड़ जाना, गाली गलौज या मारपीट, परपुरुष के साथ स्त्रीसम्पर्क, पति पत्नी के धर्म की व्यवस्था, पत्नीकृत्य, पैतृकसम्पत्तिविभाग विद्या, धन प्राप्ति के मार्ग, अक्षपटल, चातुर्वर्ण्य, चतुराश्रम, कृषि, पुत्र कर्तव्य, स्वामिसेवककर्तव्य, बालशिक्षण, कन्या कर्तव्य, शिष्य, शिक्षक, शरीर को नीरोग बनाने के लिए वेदविहित खाद्य'—इत्यादयः १८७ विषया विवृताः। वयमेतद्ग्रहणाय हिन्दीहितैषिणोऽशान्तिग्रस्ताँश्च जनान् प्रेरयामः।

"भूमण्डल के समस्त आर्यसमाजियों से प्रश्न"। प्रणेतुर्नाम अत्र न लिखितम्। पृष्ठसंख्या २०। मूल्यम् ‒)। शतसंख्याग्रहणेन मूल्यं २)। प्रकाशकः—चौधरी शिशुपाल शरण अग्रवाल, चन्दौसी यू० पी०। एतदेव च प्राप्तिस्थानम्।

अत्र लेखकेन स्वा० दयानन्द प्रणीतसत्यार्थप्रकाशस्य भूमिकायां लिखितया 'इन समुल्लासों में (विशेष कर ग्यारहवें तक) जो कि सत्यमत प्रकाशित किया है, वह वेदोक्त होने से मुझको सर्वथा मन्तव्य है' एतत्प्रतिज्ञया सत्यार्थप्रकाशसिद्धान्तान् आर्यसमाजिकानां मते वैदिकान् विज्ञाय समस्ताऽऽर्य्यसमाजिकान् प्रति त्रय ॅ प्रश्ना ॅ कृताः।

तत्र प्रथमः प्रश्नः—'आर्यसमाजियों को मृतक मनुष्य का मांस खाने की आज्ञा' इति। द्वितीयः—'गू–गोबर और हवनसे दुर्गन्ध दूर करने की फिलास्फी' इति। तृतीयः 'स्वामीजी का विचित्र नुसखा–(गर्भ पर गर्भ) इति सत्यार्थप्रका-

शस्थवचनानामुपरि कृतान् एताँस्त्रीन् प्रश्नान् अवलम्ब्य स्वकीयटीकाटिप्पणी सुन्दरप्रकारेण कृता । अन्ते च श्रीयुतगान्धिमहाशयस्य आर्यसमाजिनां विषये सम्मतिरपि 'यङ्ग इण्डिया' त उद्धृता ।

अत्रत्याटीकाटिप्पणी मनोहरप्रकारेण लिखिता । सनातनधर्म्मभिर्जनैर्द्रष्टव्योऽयं निबन्धः ( ट्रैक्ट ) । एतत्प्रश्नत्रितयस्याऽऽर्य्यसमाज द्वारा उत्तरप्राप्त्यनन्तरं लेखकोऽन्यानपि प्रश्नान् प्रचिकाशयिषति । आर्यसमाजेन अनुयोगितया वा प्रतियोगितया वा सम्बद्धा जना इमं निबन्धमवश्यं पश्यन्त्विवति निवेद्य विरम्यते ।

---

## ❁ जीवनम् ❁

### ( नेपोलियन बोनापार्ट नाम्नः महापुँसः । )

लें०—सुखदेव भद्रानी, बीकानेर ( राजपुताना )

( १ ) योरोपदेशीये-तिहासे—एकोऽद्वितीयप्रतिभाशाली पुरुषो बभूव, स स्ववीरत्व—साहसमतिभिः, साधारण-स्थित्यामपि फ्रांसस्य सम्राडभूत् । स लघुतरान्प्रदेशान्स्वायत्तीकृत्य फ्रांसं सकलदेशाग्रगण्यमकरोत् । नेपोलियनस्य जन्म १७६९ ईशवीये वर्षे कार्तिकानाम्नि द्वीपेऽभूत्, तदा सर्वे तत्रत्याः पुरुषा अन्योन्यहन्तारः आसन्, शिष्टाचारस्य लेशोऽपि नाभूत्, गृहे कलत्राणि गदर्भवत्कार्यमकुर्वन्, ईदृशे समाजे नेपोलियनस्य शिक्षाऽविद्यत । तस्य पिता एको वाक्कीलोऽभूत्, मातुश्च लेटिजिया नामासीत्, सा शिक्षितापि विचारशीलाभूत्, तस्याः मितव्ययेनाति—प्रसिद्धाभवत् । अस्याः शिक्षाया अयं परिणामोऽभूत्, यत्, फ्रांसस्य सम्राजाभूतेनासंख्यं द्रव्यंप्राप्तम्, परमनेन तस्यापव्ययो न कृतः ।

शैशवावस्थायामयं फ्रांसे विद्यां प्राप्तुमगमत् । अयं तत्रत्यैः धनिकपुत्रैः स्सह शिक्षां गृहीतुमारब्धवान् ते सर्वे नेपोलियनं तिरस्कृतदृष्ट्यापश्यन्, येनायं दुःखितो भवतिस्म ।

अस्या अतिविलक्षणा मति रासीद्यां दृष्ट्वा सर्वेऽध्यापकाः आश्चर्यान्विता अभूवन् । लेख विषयेऽनेनानेक पारितोषिकान्यपि प्राप्तानि । अयं धर्मश्रद्धा मकरोत्,

अस्यमनः राष्ट्रोदासीनत्वमालोक्य क्षुब्धमभूत्, अयमैच्छद्यदहं कार्यक्षेत्रमुत्पाद्य मनुष्यहितसम्पादनकार्यं करवै ।

परिजनैस्सह प्रेमाणमकरोत्, मात्रासहाप्यधिकं सत्कारादिकमकारीत्, फ्रांसस्य सम्राड्भूत्वापि मातुः संस्कारन्तु पूर्ववदेवारक्षत्, स एवमवोचत्सदसि—यन्ममोन्नतिकारणं केवलं माता—एवास्ति । वस्तुतो बालभविष्यः जनन्या उपरि वर्त्तते ।

सैनिकां शिक्षां समाप्य कटक ऊषितुमारब्धवान्, वृत्तिं गृहीत्वा गृहपालनमकरोत्, अस्य लघुतरं पदमासीत् परमस्य युद्धकौशलं दृष्ट्वा महत्तमाः युद्धविद्याविशारदास्तथानुभविसेवकाश्चमत्कृता अभवन् । अयं व्यावहारिककुशलता दूरदर्शितयोरपि कुशलोऽभूत् । अनेनैव फ्रांसे शान्तिः स्थापिता ।

नेपोलियनस्य राज्यकालतः पूर्वं तत्रैको महा—राष्ट्रविप्लवोऽभूत् । येन देशस्य स्थितिः परिवर्तिताभूत् । सर्वत्र पुरुषा दुःखिता अभूवन् । शत्रुभिरधिकारिणामधिकाराः गृहीताः सहस्रशः स्त्री पुरुषाः मृत्युं गताः, तदापि सुखं न प्राप्तम् । न्यायादीनां कोऽपि नियमो नाभूत् । राष्ट्रस्य सकलान्यङ्गानि विशृंखलान्यासन् । अस्यामवस्थायामीश्वरेण नेपोलियनः फ्राँस सम्राड् प्रेषितः । अस्य विलक्षणमति वीरत्वाभ्यां पुमांसः मुक्तकण्ठाः स्वागतमकुर्वन् । फ्राँसायेदृशशासकस्यावश्यकताभूद्यो भयङ्करप्रलयानुदस्य सम्मुखे भवेत् ।

नेपोलियनः शीघ्रमेवोत्साह पूर्वकं कार्यं कर्तुमारब्धवान्, तस्याहोरात्रकार्यकरणे कोऽपि समानतां न गतः, स लघुतमाः वार्ता अपि स्वयमेवापश्यत् राज्य· विरुद्ध लेखने सति समाचार सम्पादकान्नाताड़यत् । येऽपमानसूचकान् शब्दान् अकथयन् तान् देशाद्बहिष्कृतानकरोत् । एवं करणेऽस्य विरुद्धपुरुषाः अपि भयान्विताः सञ्जाताः ।

सर्वत्रानेन शिक्षालयाः स्थापिताः, सिद्धान्तानुसारं शिक्षाभवितुमारब्धवती । सर्वत्राखिलानि कार्याणि नियमानुसारेणाभूवन् । स्त्रीभ्यः पतिव्रतधर्मस्यादेशमदात् । तस्य राज्ये सर्वत्र शान्तिरभूत् कालान्तरं स युद्धं कर्तुमारब्धवान्, शनैः २ समीपस्था देशास्तथा, इटली हालेण्ड, स्वीटजरलेण्ड, देशा अपि स्वायत्तीकृताः ते सर्वे नेपोलियनं स्वस्वामिनं मन्तुमारब्धवन्तः, यदास्य प्रभुत्वमधिकमभूत्तदा पराजितान्देशान्प्रति दुर्व्यवहर्तुमारब्धवान् । स्वकार्यसाधनार्थमन्येषां कार्यं

किञ्चिदपि नापश्यत् येनास्य बहवः पुरुषा विरुद्धाः सञ्जाताः । स्वार्थवशे भूत्वानेन लक्षशो योद्धारः रणे हताः ।

इङ्गलैण्डदेशेन सहास्य शत्रुताभूद्येन इङ्गलैण्डदेशभूपालोऽनेकदेशानां सहायतां गृहीत्वानेन सहायुद्ध्यत । अस्मिन्युद्धेऽयं परास्तोऽभूत् । इङ्गलैण्डनृपः इमं कारावासे निधाय हेलीना-नामके द्वीपेऽप्रैषीत् । तत्र १८२१ ईशवीयेऽयं युद्धवीर मृत्युं गतः । नेपोलियनस्य राज्यलक्ष्मी दीर्घकालं नावसत्परन्त्वयं साधारण-पुरुषोऽपि नाभूत् । अस्य नाम लोकस्येतिहासेऽमरं भविष्यतीति ।

—

## सूक्तिसुधा----

### सज्जनप्रशंसा ।

सुजनो न याति वैरं परहित-निरतो विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ १ ॥
यदमी दशन्ति दशना, रसना तत्स्वाद-सौख्यमनुभवति ।
प्रकृतिरियं विमलानां, क्लिश्यन्ति यदन्यकार्येषु ॥ २ ॥
शरदि न वर्षति गर्जति, वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते, न वदति सुजनः करोत्येव ॥ ३ ॥
उत्कर्षन्न् निजगुणो यथा यथा याति कर्णमन्यस्य ।
धनुरिव सुवंशजन्मा तथा तथा सज्जनो नमति ॥ ४ ॥
विप्रियमप्याकर्ण्य ब्रूते प्रियमेव सर्वदा सुजनः ।
क्षारं पिबति पयोधेर्वर्षत्यम्भोधरो मधुरमंभः ॥ ५ ॥
अनुकुरुतः खलसुजनौ अग्रिम-पाश्चात्यभागयोः सूच्याः ।
विदधाति रन्ध्रमेको मुद्रणमस्यापरोऽपि पिदधाति ॥ ६ ॥

( केषामपि )



पञ्चदशे वर्षे १५ ]　　श्रावण पूर्णिमा १९९६　　[ २ संख्या




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
　　तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
　　सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

Sanctioned by the Directors of Public Instruction, United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—

त्यक्त-महामहोपाध्यायपदवीको

महामहाध्यापकः श्रीपञ्चानन-तर्करत्न-भट्टाचार्यः ।

सहकारि-सम्पादकः—

अवधेशप्रसादशर्मा द्विवेदः

उद्गम-स्थानम्—

श्रीभारतधर्ममहामण्डलम्, ( जगत्गंज ) काशी

——:o:——

वार्षिकं मूल्यं मुद्रात्रयम् ।

संरक्षकेभ्यः ५) । वहिर्भारतम् ६)　　छात्रेभ्यः पुस्तकालयेभ्यश्च १)

---

# विषयसूची ।





---

# भ्रमसंशोधनम् ।

श्रीधर्मव्यवस्था वज्रहारः—

पुल्य उमामहेश्वरशास्त्री-मुगुण्डअग्रहार पो० अम्बाजी पेट, वेस्टगोदावरीमण्डलम् (मद्रासप्रान्तः) विज्ञापयति यत् धर्मव्यवस्थावज्रहारपुस्तकस्य किमपि मूल्यं नास्ति, बिना मूल्यं प्रदीयते । किन्तु स्वीयव्ययेन प्रेषयितुं न पारयामि, अतो जिघृक्षुभिः प्रेषणव्ययमात्रं आणकचतुष्टयं पत्रद्वारा चोपयुक्त संकेतेन प्रेषणीयमिति निवेदयामि ।

श्रीकृष्णकुमारव्यासः, ( व्यासपुस्तकालय मानमन्दिर, काशी ) सूचयति—गुप्ताशुद्धि प्रदर्शनम्" नामकलघुपुस्तकस्य मूल्यमेकाणकं विद्यते । अतश्च प्रेषणव्ययेन सह सार्द्धैकाणकः ।—चिटिका तदभिलाषिभिः सज्जनैः प्रेषणीयेति ।

---

# सूर्योदयः ।

पञ्चदशवर्षे १५ } श्रावण-पूर्णिमायाः १९९६ { २-संख्या

## सम्पादकीया अभिप्रायाः ।

## काश्यां संस्कृतच्छात्रावासावश्यकता ।

पुरा भारतीय-साम्राज्यसूर्ये समुद्दीप्यमाने सर्वतः सर्वथा समुन्नति-स्थानमधिगतेयं सुरगवी समुद्दीपितप्रभावा समन्तादपि वसुमत्यां संसरन्ती सर्वाभ्यर्हितं पदमधिगता आसीदिति केषाम् मनोषिणामविदितं विद्यते। एतदीयः प्रभावः सर्वास्वपि भाषासु सम्प्रसृत एवासीदिति तु भुवि विद्यमानानां साम्प्रतिकीनां भाषाणां स्वरूपावलोकनादेवावगम्यते । पश्यन्तु सर्वासां भाषाणां स्वाभिजनवाचकाः सर्वेऽपि शब्दाः संस्कृतभाषात एव विनिर्गता दृश्यन्ते। किं बहुना अन्यस्मिन्नपि विषये बहवः तत्समाः कियन्तश्च तद्भवाः शब्दाः सर्वास्वेव भाषासु संस्कृतभाषात एव समागतास्सन्ति । तथाहि—

| संस्कृत | फारसी | यूनानी | लैटिन | अंग्रेजी | हिन्दी | |
|---|---|---|---|---|---|---|
| पितृ | पिदर | पाटेर | पेटर | फादर | पिता | |
| मातृ | मादर | माटेर | मेटर | मदर | माता | |
| भ्रातृ | ब्रादर | फ्राटेर | फ्रेटर | ब्रदर | भाई | |
| दुहितृ | दुख्तर | थिगाटेर | डेटर | डाटर | धी | |
| नाम | नाम | ओनोमा | नामेन | नेम | नाम | |
| द्वि | दू | डुगो | डुओ | टू | दो | |
| त्रि | द | ट्रि | ट्रि | थ्री | तीन | |
| अस्मि | अम | आमी | सम | ऐम् | हूं | |

एवं बहवः शब्दाः सन्ति ये हि संस्कृतभाषातो निःसृत्य सम्प्रति प्रान्तीय-भाषासु च तद्भवसंज्ञया व्यवह्रियन्ते। यथा 'अखिल' शब्दस्य गुर्जरभाषायां 'आखा' सर्वं' शब्दस्य हिन्दीभाषायां 'सारा' गो शब्दस्य इंग्लिशभाषायां 'काउ' हिन्दी-भाषायां गऊ इति 'तरु' शब्दस्य इंग्लिशभाषायां ट्री हिन्दीभाषायां 'वर' शब्द-योगे सति 'तरि वर' इत्यादयो बहवः शब्दा विद्यन्ते, ये हि संस्कृतभाषात एव सर्वभाषासु प्रसृता इति सुनिश्चितम् ।

इत्येवं सर्वमान्यायाः सर्वत्र द्वीपद्वीपान्तरेषु प्रसृतायाः संस्कृतभाषयाः पर्य्युपासकाः संस्कृतज्ञा विद्यार्थिनो विद्वांसश्च पुरा काले सर्वत्र मान्या आसन्। यतो हि तेषां संस्कृतसाहित्ये भूयान् समादरो विद्यते । तथाहि—

'सर्वस्वं ब्राह्मणस्येदं यत् किञ्चिज्जगतीतले'
सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च,
सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ।

तेषां समादरकर्तॄणां तेभ्यो धनमर्पयतां दातॄणामपि प्रशंसापराणि भूयांसि वचनानि पुराणादिषु समुपलभ्यन्ते । तथाहि:—

कुक्षौ तिष्ठति यस्यान्नं विद्याभ्यासेन जीर्य्यति ।
गोत्रगान् तारयेत्तस्य दश पूर्वान् दशापरान् । (भारते)
यो वृत्ति-वासं पठतां करोत्यनुदिनं नृप ।
स यज्ञफलमादत्ते वासाच्छादनभोजनैः । (वह्निपुराणे)
छात्राणां भोजनावासं वस्त्रं ग्रन्थमथापि वा
दत्वा प्राप्नोति पुरुषः सर्वकामान्न संशयः । (गारुडे)

इत्येवं बहूनि स्तुति(फल)वाक्यानि सन्ति । यत्प्रभावत एवाधुना सहस्रशः संस्कृतच्छात्रा अध्ययनकाले, भोजनाच्छादनादिचिन्ताविरहिता वेदादिसंस्कृतशास्त्रा-ध्ययनं कुर्वाणाः काशी-प्रयाग-काञ्ची-नासिकप्रभृतिमहानगरेषु सरस्वतीं देवीं पर्य्युपासते । सत्यप्येवं संस्कृतभाषाध्यायिनां सर्वतः समादरे, सम्प्रति देशकाला-नुरोधतो बहुत्र वैषम्यमपि दृश्यते । बहवो धनाढ्याः संस्कृतभाषाध्यायिनां कृते भोजनावासादीनां व्यवस्थामकृत्वैव सप्तसमुद्रीपारगाया धर्मेश्वरादिभारतीय-संस्कृति-परिचायक-भावशून्याया इंग्लिशभाषाया अध्यायिनामेव कृते सर्वप्रथमं भोजनावासादिव्यवस्थां कुर्वन्ति । पश्चात् संस्कृताध्यायिनामपि कृते किञ्चिन्नाममा-

त्रतो नैजमौदार्य्यं दर्शयन्ति। वहवस्तु इंग्लिशभाषाध्यायिनामेव कृते सर्वं कुर्वन्ति। संस्कृतभाषाध्यायिनां कृते किञ्चित् कुर्वन्त्येव नहि। अल्पीयांस एवाद्यत्वे भारतीय-संस्कृतिपोषिकाया धार्मिकाध्यात्मिकादिभावसंरक्षिकाया अस्याः संस्कृतभाषाया अध्ययनं कुर्वतां संस्कृतानुरागिणां द्विजवालकानां कृते भोजनावासाच्छादनादि-व्यवस्थां विदधति।

दृश्यताम्, इहैव काश्याम्—यादृशं सौविध्यम् इंग्लिशभाषाध्यायिनां कृते विद्यते नैवास्ति तादृशं सौविध्यम् संस्कृतभाषाध्यायिनाम्। यावन्तश्छात्रावासा इंग्लिश-भाषाध्यायिनां कृते विद्यन्ते, न सन्ति तावन्तः संस्कृतभाषाध्यायिनां कृते। किं बहुना संस्कृताध्यायिनां कृते एव जनतासकाशाद् द्रव्य—सञ्चयं कुर्वद्भिः श्रीमाल-वीयमहोदयैरपि यावन्ति जनताद्रव्याणि इंग्लिशविभागे व्ययीकृतानि न तावन्ति संस्कृतविभागे। ये हि, पूर्वं मालवीयमहोदयानां व्याख्यानम् श्रुतवन्तस्तेषां श्रोत्रेषु मालवीय—महोदयानां व्याख्यानकालिकाः शब्दा अधुनापि प्रतिध्वनन्त एव सन्ति—यत् "एभिर्भवद्दत्तद्रव्यैर्गङ्गातीरे सहस्रशः संस्कृतच्छात्रा व्यासवामदेववशिष्ठ-याज्ञवल्क्यसदृशाः संस्कृतशास्त्राध्ययनं कुर्वन्तः प्रातःकाले सूर्य्योपस्थानं कुर्वन्तोऽव लोकिष्यन्ते" इति। अधुना आगत्य ते दातारः पश्यन्तु, हिन्दूविश्वविद्यालये कियन्तः छात्राः संस्कृतभाषामधीयते, तत्र कियन्तो गङ्गातीरे सूर्य्योपासनां विद-धतीति। लोकेऽस्मिन् प्रसिद्धिरस्ति, अन्यो हि हस्तिनां दन्तो भोजनाय, अन्यश्च दर्शनायेति।

अस्तु, इतोऽपि शोचनीया राजकीय-संस्कृतविद्यालयस्य (गवर्नमेंट संस्कृतका-लेजस्य) दशा विद्यते। संस्कृतभाषाया भारतीय—संस्कृतेश्चापि समुन्नत्यै एव भारतीया राजानो निजद्रव्यैः काशिक—राजकीय—संस्कृतपाठशालायाः प्रतिष्ठापनं कारितवन्तः। परन्तु अद्य यावत् तदीयः सर्वोऽपि द्रव्यसञ्चय इंग्लिश विभागे एव व्ययीभूतोऽभवत्। कियतः कालात् संस्कृतविभागे वर्तमान—शासकवर्गाणां दृष्टि र्व्यावृत्ता विद्यते, द्रक्ष्यामः किं भविष्यतीति।

आस्तां तावत् प्रकृतेऽस्माकमेतदेव वक्तव्यं विद्यते यत् काश्यां सम्प्रति इंग्लिशभाषाध्येतृभ्यश्छात्रेभ्यस्संख्यायां संस्कृतभाषाध्येतारश्छात्रा अल्पीयांस एव सन्ति तत्रापि च यावान् यादृशो वा प्रबन्धस्तेषां कृते विद्यते नास्ति तावान् तत्सदृशो वा संस्कृताध्येतॄणां कृते। येषां पुरा साम्राज्यमासीत्त एव सम्प्रति सर्वथा समुपहस्यन्तेऽवज्ञायन्ते इति सर्वथा कलिकालविलास एवेह वीजम्। येऽपि भार-

तीयार्य्यमर्य्यदाप्रिया विद्वांसः श्रेष्ठिनः साधवो मध्यमवित्तेशाः सज्जनाश्च इमां संस्कृतवाणीं समुन्नमयन्तः संस्कृताध्यायिनः सेवन्ते तेऽपि वस्त्राच्छादनभोजनादिव्यवस्थां तु संस्कृताध्यायिनां कृते कुर्वन्ति। परन्तु संस्कृतच्छात्रावासानां कृते तैरपि न किञ्चिदनुष्ठीयते इति महदाश्चर्य्यास्पदमेतत्। इह वाराणस्यां सर्वतोऽपि संस्कृताऽध्येतारश्छात्रा निदाघावकाशान्तेऽध्ययनार्थम् वर्षाम्बुवेगवत्समेधन्ते, परन्तु निवासकष्टपरम्परया समुद्विग्नास्ते धर्मशालायां क्वचन पण्यजीविनामापणालये कुत्रापि घट्टे क्वचित्तीर्थपुरोधसां निलयने निलीय सर्वतो वञ्चिता यथागतमेव प्रत्यावर्तन्ते। नास्ति तेषां निवासाय किमपि समुचितं स्थानम्। यत्र तेषां यावत्कालं संस्कृतविद्यालये क्वापि प्रवेशो न स्यात्, अथवा कुत्रचित् स्थिरे स्थाने समुचितनिवासाय व्यवस्था न स्यात्तावत्ते तत्र स्थातुमनुज्ञाताः स्युः। यद्यपि वङ्गदेशीयै र्गुर्जरदेशीयैश्च कैश्चिद्धार्मिकप्रवरैः वङ्गालीछात्रनिवासो गुर्जरछात्रावास इत्यादिनाम्ना प्रतिष्ठापिता द्वित्राः संस्कृतच्छात्रावासाः श्रूयन्ते। परन्तु किं तावतैवैतादृश्यां विशालनगर्य्यां काश्यां तत्तत्प्रान्तीयानां विशेषतो विहार, यू० पी० सी० पी०, पञ्चाल-मद्रासादिप्रान्तीयच्छात्राणां कृते स्यात् कथमपि समुचिता व्यवस्था? इदन्तु द्विदले लवणपातनवदपि संस्कृतच्छात्राणां सन्तोषाय न स्यात्। अतो वयम् भारतीयान् आर्य्यमर्य्यादाप्रियान्—

"व्यवस्थितार्य्यमर्य्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो देशः प्रसीदति न सीदति॥"

इत्यादिवचनेषु श्रद्धाजुषोऽभ्यर्थयामहे यत्ते पुण्यपुर्य्यामस्यां काश्यां संस्कृतच्छात्राणां कृते कस्यापि विशालस्य संस्कृतच्छात्रनिवासस्य प्रतिष्ठां कुर्वन्तु। सम्प्रत्यपि इत्थम्भूताः संस्कृतानुरागिणो धनिनो विद्यन्ते, ये हि इह काश्यां विशालं संस्कृतच्छात्रनिवासं कियद्भिरेवाहोभिः कारयितु प्रभवन्ति, ते हि स्वद्रव्यस्य सदुपयोगं कुर्वन्तः सञ्चिन्वन्तु पुण्यपरम्पराम्। संस्कृतच्छात्राणां निवासकष्टं दूरीकर्तुं बद्धपरिकरा भूत्वा निर्मापयन्तु द्वित्रान् बृहतः संस्कृतच्छात्रनिवासान्। यत्रोषित्वा संस्कृतच्छात्रा यथेष्टस्थाने विद्याध्ययनं कुर्वन्तो भारतीयप्राचीनमर्यादासमेधकरा भवेयुरिति।

बहूनां राज्ञां, मोहान्तानाम् श्रेष्ठिनां महान्ति भवनान्येवेह काश्यां शून्यानि तिष्ठन्ति। तान्येव यदि संस्कृताध्यायिनां कृते समुद्घाटितानि स्युस्तदापि तेषामयं निवासकष्टदोषस्तु व्यपगतः स्यात्। यस्य कृते ते—

"असनं वसनं वासो येषां चैवाविधानतः ।
मगधेन समा काशी गङ्गाप्यङ्गारवाहिनी ॥"

इति कविभणितिपात्रतामुपगच्छन्ति । सम्प्रति स्वल्पेनैवोदाराशयानां महतां पार्श्वेऽस्माभिःकाशीस्थानां संस्कृतच्छात्राणां निवासकष्टपरम्पराया दूरीकारक्षते निवेदनं कृतम् । आशास्यते सनातनधर्मावलम्बिनां संस्कृतविदुषां श्रेष्ठि-धनिनां च दृष्टिपातोऽत्रावश्यं भविष्यतीति ।





महामहाध्यापकाः श्रीमन्तः पण्डित ईश्वरीदत्त दौर्गादत्ति शास्त्रि एम० ए०
एम० ओ० एल० महोदयाः,
विहारसंस्कृत एशोसियेशनस्य सम्पादकाः

## शक्तिभाष्ये प्रकाशितश्लोकाः।

बन्धः श्लथस्तनुमनोरचनासु दृष्टिः।
क्षीणा स्मृतिश्च गलिता ललिता च भाषा ॥
कम्पः करे हृदि च केवलमम्बिकायाः।
कारुण्यमस्ति शरणं मम दुःस्थितस्य ॥ १ ॥
दुर्गाध्वना विचरतो जरतो ममालं।
मन्तूयतः प्रतिपदं जगदम्बिकायाम् ॥
तस्या निसर्गकरुणा यदि नावलम्बः
किं त्राणकारणमहो मम हीनशक्तेः ॥ २ ॥
धावन्ति धूमशकटानि चलन्ति याना-
न्याकाशवर्त्मनि तरन्त्युदधींश्च पोताः ॥
श्रीशक्तिभाष्यमहमारचयामि चैवं।
यन्त्राणि नाम वयमत्र परोऽस्ति यन्त्री ॥ ३ ॥
तस्यै पराह्वयजुषे जगदम्बिकायै।
नित्यं नमो मम हिमद्युतिशेखरायै ॥
यस्याः प्रसादमधिगम्य निसर्गसिद्धं
मूढोऽपि शान्तिसुखसंविदमभ्युपैति ॥ ४ ॥
दोषो न मे न च गुणोऽस्ति तदर्प्यमाण-
सङ्कल्पबुद्धिवचनासुवलप्रवृत्तेः ॥
तत्कोविदान् सविनयं विनिवेदयामि।
नम्योऽस्मि लङ्घितपुरातनभाष्यवादः ॥ ५ ॥
अधिकरणनामसंख्याभेदः क्वचिदर्थसंश्रयाद्विहितः।
सिद्धान्तभेदभाजां पूर्वेषामस्त्ययं पन्थाः ॥ ६ ॥
आविर्भूय स्वयं स्वप्ने या मां शास्त्रार्थमन्वशात्।
सा काली प्रीयतामेतन्मूकालापनलीलया ॥ ७ ॥

*[सूर्य्योदयस्य गताङ्के शक्तिभाष्यसमालोचनप्रसङ्गे शक्तिभाष्यावसाने भाष्यकर्तोपनिवद्धानि पद्यानि इमानीति दर्शयितुं प्रतिज्ञातमासीत्, परन्तु तत्र स्थानाभावान्न प्रकाशितानि, तानीह प्रकाश्यन्ते जिज्ञासुभिस्तत्र संयोज्य पठनीयानि श्री गोपालशास्त्री]*

## मेघसन्देशमहोत्सवः ।

सुषमामञ्चति सौराषाढप्रथमदिवसे मानससरोवरघट्टविराजमानभूदेव-चतुष्पाठीविद्याभवने मेघदूतमहोत्सवः पण्डितकुलावतंसानां श्रीमद्वसन्तकुमार-तर्कनिधिमहाशयानां साभापत्ये महता समारोहेण समपद्यत । तत्र श्रीमन्तः विद्वत्कुलकमलदिवाकराः श्रीजीवन्याय तीर्थ M. A. महोदया एवम् पं० सिद्धेश्वर-भट्टाचार्याः पं० आप्पेपु वेंकटमूर्तिशास्त्रिमहाशयाः पं० सिद्धेश्वरस्मृतितीर्थाः पं० सिद्धेश्वरकाव्यव्याकरणतीर्थाः बालकभागवतप्रणेतारः श्रीललितमोहनवन्द्योपाध्यायाः, अन्ये च सज्जना आस्तिकशिरोमणयश्चोपस्थिता आसन् । तदानीं श्रीमन्तः न्यायतीर्थमहोदयाः सरससौकुमार्यादिकमनीयां सहृदयहृदयाह्लादिनीं मांगलिकीं कवितां स्वीयां श्रावयामासुः । श्रीमन्तः पण्डितप्रवरास्सुब्रह्मण्यशास्त्रिणः मेघदूताख्यमिदं महाकविकालिदासविरचितं काव्यं अक्षरेण संक्षिप्तं व्यंग्यार्थेन सर्वाङ्गीणसुन्दरमिति सन्देशकरकाव्यनिर्माणस्यायमेव मार्गदर्शी कविकुलतिलकः कालिदास इति सारवत्तरं गम्भीरं विस्मयावहञ्च भाषणमकुर्वन् । अनन्तरं न्यायतीर्थमहोदयैः क्वत्योऽयं कालिदास इति पूर्वपक्ष उपक्षिप्तः । ततश्च कालिघट्टस्थ–कालिदास-ग्रन्थप्रकाशकसमित्या प्रतिपादिताभिः युक्तिभिस्तस्य च वंगीयत्वं प्रत्यपादि । मध्ये श्रीवेंकटरमणमूर्तिशास्त्रिमहोदयैः कर्णाकर्णिकया कर्णपथप्राप्तं वृत्तान्तं कालीदासीयमुपन्यस्य तस्यावंगीयत्वं स्थापितम् । पुनश्च श्रीन्यायतीर्थमहोदयैः तस्य पद्यान्युदाहृत्याभेद्याभिर्मनोहराभि युक्तिभिस्तस्य वंगीयत्वं सुप्रतिष्ठापितम् । ततःश्रीमद्भिः सभापतिमहोदयैरयं विषयोऽनुमोदित श्श्लाघितश्चाभूत् । अवसाने च न्यायतीर्थमहोदया मान्यमाननीयेभ्योऽध्यक्षमहोदयेभ्योऽन्येभ्यः विद्वत्तल्लजेभ्यः सज्जनेभ्यश्च सानुरागेण मनसा सूनृतेन वचसा शतशो धन्यवादान् प्रायच्छन् । ततः करघोषेण साकमियं सभा विसर्जिता अभूदिति शम् ।

निवेदयिता—श्री जानकीजीवनभट्टाचार्यः,
( सौदामिनीविद्यालयः मानसरोवर, वाराणसी । )

## श्रीधर्मप्रचारमण्डलस्यावश्यकता ।

इह परमपवित्रभारतवर्षेऽनेऽके पन्थानः धर्मशब्दस्थाने मतमजहवरिलीजनादिनाम्ना प्रसृताः सन्ति तेषां प्रचारका भक्ताश्च तान् धर्मशब्दवाच्यानेव वदन्ति । यतश्च तत्प्रचारकाः शब्दमात्रे विवदमाना विद्वेषस्य प्रचण्डाग्निं प्रज्वाल्याशान्तिं कुर्वन्ति । तत्र यदि एकेन धर्मशब्देनैव व्यवहारः स्यात्तर्हि तदर्थविरोधकृता तावद-

शान्तिर्नोदीयात् "यतोऽभ्युदयनिश्श्रेयससिद्धिस्स धर्मः" इत्येवंरूपो हि धर्मस्वभावो विद्यते। अत आवश्यकता वर्ततेऽधुना उपर्युक्तानि दुःखानि नो भवेयु र्भारतवासिभ्यः, इत्यतः सनातनधर्मस्य प्रचारोऽनिशं विधेयः। येन भूमण्डलस्थाः सर्वे एव मानवसमाजा उपकृता भवेयुरिति कार्यमिदं श्री धर्मप्रचारमण्डल एव विधास्यति।

यदा श्री धर्मप्रचारमण्डलस्य विकाशोऽभूत्। तदारभ्यायं धर्मप्रचारे संलग्न स्तिष्ठति। वर्तमानकाले ऋते धनं प्रचारस्य कार्ये विघ्नो जातः। अतः धार्मिकाणामग्रे निवेदनमस्ति यत्ते श्रीधर्मप्रचारमण्डलायार्थिकसहायतां दत्वा धर्मप्रचारस्य पुण्यं लभेरन्।

वक्तृभजनीकौ संस्थायाः स्वं भवतः। मुखरहितः कोऽपि जीवो जीवनं धर्तुं न शक्नोति। एवं कापि संस्था वक्तृभजनीकौ त्यक्त्वा कृतकार्यतां लब्धुं नार्हति। अनेन हेतुना श्रीधर्मप्रचारमण्डलाय वक्तृभजनीकानामावश्यकता वर्तते। तेषां भोजनस्य तथा मार्गव्ययस्य व्यवस्थापि धार्मिकाणां स्कन्धयोर्निर्भरास्ति। अतो धार्मिकसज्जनाः कश्चित् स्वधनस्यांशम् उक्तमण्डलाय दानस्वरुपेण दत्वा यशस्विनः भवितुमर्हन्ति।

धनस्य तिस्रो गतयो भवन्ति लोके दानं भोगो वा नाशः। तत्र प्रथमा गति र्दानम्। दानाच्च श्रीमान्भवति लोक इति प्रसिद्धं गरुणपुराणेऽपि। यथा कृपणाः सुकाले उर्वरां भूमिं दत्वा अचिरेणैव कालेन श्रीमन्तो भवन्ति। अतो धार्मिकाः श्रीमन्तः श्रीधर्मप्रचारमण्डलाय साहाय्यं दत्वा अनन्तकालपर्यन्तं श्रीमन्तो भूयासुः।

निवेदकः संस्थापकः श्रीधर्मप्रचारमण्डल अल्लापुर, शाहाबाद जिला हरदोई [अवध]

## धर्मप्रचारः।

श्रीभारतधर्ममहामण्डलस्य सुप्रबन्धेन काश्यां दशाश्वमेधघट्टे विभिन्ने प्रतिवेशेऽपि पुरुषोत्तममासेऽस्मिन् विविधविवेचनाविलसितं धार्मिकं युक्तिप्रमाणोर्जितं परिमार्जितं व्याख्यानं वोभवीति। अनेके विद्वांसो जना व्याख्यानं श्रोतुं समुत्कण्ठया समुपतिष्ठन्ते प्रतिदिनं श्रोतारः समेधन्ते। अपूर्वमाकर्षणं व्याख्यानेऽनूभूयते। तत्र परमानंदस्य स्रोतः मन्दाकिन्यास्तरङ्ग इव प्रवहति। महामहोपदेशकः श्रीमान् पण्डितगङ्गाविष्णुशास्त्री व्याख्यानमालाया अस्याः सुमेरुरिव प्रतिभाति। अनेन धर्मप्रचारेण वाराणस्यां धार्मिकेषु पूर्णा जागर्तिरुत्पद्यते। ततः कार्यमेतदग्रे सरिष्यतीति।

## ब्राह्मणानां श्रेष्ठत्वं जन्मना वर्णव्यवस्था च ।

निबन्धा—पण्डित दीनानाथशर्मा शास्त्री सारस्वतः
सनातनधर्म कालेजोपाध्यक्षः मुलतान ।

( क्रमागता )

किञ्च—'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः' मनु । २।१६८ इति मनुपद्यस्थेन 'जीवन्नेव' इति पदस्थेन 'एव' कारेणाऽपि स्पष्टं सिद्ध्यति यज्जीवन्नेव वर्णो न परिवर्तते किन्तु मरणे एव । अन्यथा 'जीवन्नेव' इति शब्दो व्यर्थोऽनियमे नियम इति दोषग्रस्तश्च भवेत् । अत एव तु स्वा० दयानन्देन स्वपक्षखण्डनभीतेनाऽस्य श्लोकस्य व्याख्याने चतुरता कृता यद्—'जीवन्नेव' इति पदस्याऽर्थ एव न कृतः । यतोऽनेन मरणे एव वर्णपरिवर्त्तनं सिद्ध्यति । तथा च—'जो वेद को न पढ़ के अन्यत्र श्रम किया करता है, वह अपने पुत्र पौत्र सहित शूद्रभाव को शीघ्र ही प्राप्त हो जाता है' सत्यार्थ प्र० तृ० २६ पृ० । 'जीवन्नेव' इत्यस्याऽर्थानुल्लेखच्छलेन स्पष्टं सिद्ध्यति यद् वर्णपरिवर्त्तनं जीवने न भवति, परन्त्वनेन तन्मतखण्डनमासीत्; अतस्तदपलापः कृतस्तेन । अथ च जीवनेऽपि यद् द्विजस्यात्र सपुत्रपौत्रं शूद्रता निर्दिष्टा; सा साहित्यसङ्गीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः' इतीव निन्दार्थवादे पर्य्यवस्यति न वर्णपरिवर्त्तने अन्यथा तत्पुत्रपौत्रादिषु अकृताभ्यागमदोषः प्रसज्येत । तत्र 'ताद्धर्म्यात्ताच्छब्द्यम्' इति न्यायश्चरितार्थः । अथ च 'तस्य भावस्त्वतलौ' ५।१।११६ इति 'त्व' प्रत्ययस्तद्भावाऽर्थे भवति, न तु तस्मिन् साक्षात् । अथ चाऽमुत्र पद्ये 'त्व' प्रत्ययो वर्त्ततेऽपि । यदि नाऽपि स्यात्; तर्हि केवल 'शूद्र' शब्दोऽपि तत्र न 'शूद्र' वाचकः स्यात्, किन्तु 'शूद्र' धर्म्मवाचक एव स्यात् । अत एव 'पुंयोगाद्' ४।१।४८ सूत्रे महाभाष्ये—'चतुर्भिः प्रकारैरतस्मिन् स इत्येतद् भवति । तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्याद् इति । तात्स्थ्यात्तावत्—मञ्चा हसन्ति, गिरिर्दह्यते । ताद्धर्म्यात्—जटिनं यान्तं ब्रह्मदत्तेत्याह, ब्रह्मदत्ते यानि कार्य्याणि जटिन्यपि तानि क्रियन्ते इति । अतो जटी ब्रह्मदत्त इत्युच्यते ॥ तत्सामीप्यात्—गङ्गायां घोषः, कूपे गर्गकुलम् । तत्साहचर्यात्—

कुन्तान् प्रवेशय, यष्टीः प्रवेशयेति।" ४।१।४८। तेन तात्स्थ्यादिना ताच्छब्द्य-मौपचारिकमेव भवति 'गौर्वाहीकः, अग्निर्माणवकः' इतीव; नतु तदभिधायकम्। अन्यथा—'साहित्यसङ्गीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः' इत्यत्र मनुष्योऽपि पशुः, पशुः किं—साक्षात्पशुर्भवेत्। किमत्रत्य ऽ पशुशब्द ऽ पश्वर्थस्यैव प्रतिपादकः? यद्येवं तर्हि तादृशपुरुषस्य भोजनाय पशुभोज्यं तुषबुसखलादिकं देयं भवेत्?। परन्नैवम्। साक्षात् पशुशब्देऽपि गौणी लक्षणैव ग्राह्या भवति। तज्जाड्यातिशयद्योतनं तत्फलम्। एवं 'योऽनधीत्य' इत्यादिपद्यस्थ—'शूद्र' शब्देऽपि व्यवस्था ज्ञेया। एवम्—"अन्तरेणाऽपि वतिमतिदेशो गम्यते, तद्यथा—एष ब्रह्मदत्तः। अब्रह्मदत्तं ब्रह्मदत्त इत्याह, तेन मन्यामहे ब्रह्मदत्तवद् अयम्भवति" इति 'वहुगणवति' १।१।२३ इति सूत्रे महाभाष्ये। तेनाऽत्राऽपि 'शूद्रत्वं' इत्यस्य 'शूद्रवत्त्वम्' इत्यत्रैव तात्पर्यम्। भवन्तो वादिनो यदीमां व्यवस्थां न मन्वीरन्; तर्हि भवद्भ्य उचितं यत्-एतदनुसारं स्व 'ग्रेजुएटान्' यैर्वेदान् सर्वथाऽनधीत्य अन्यत्र आङ्गलविद्यायां श्रम ऽ कृतः—तान् पुत्रपौत्रसहितान् शूद्रान् स्वीकुर्व्वन्तु। वयं कश्चिद् 'ग्रेजुएट' महाशयं 'अये शूद्र! इतो गच्छे'ति यदि कथयेम; तर्हि सोऽस्मभ्यं न क्रुध्येत्। परं स क्रोत्स्यति; तर्हि वादिन एव तेषां शूद्रतां प्रसाध्य तान् सन्तोषयन्तु। अस्मत्सनातनधर्म्मस्थानां कृते त्वियमेव व्यवस्था यदिदं पद्यं वेदाऽध्ययन-प्रशंसाऽर्थवादरूपमेव। तत्राऽनाचरतां निन्दार्थवादरूपमेव। अत एव 'स्वेभ्यः स्वेभ्यस्तु कर्मभ्यश्च्युता वर्णा ह्यनापदि। पापान् संसृत्य संसारान् प्रेष्यतां यान्ति शत्रुषु' मनु० १२।७० वान्ताश्युल्कामुखः प्रेतो विप्रो धर्मात् स्वकाच्च्युतः। अमेध्यकुणपाशी च क्षत्रियः कटपूतनः।१२ ७१ मैत्राक्षज्योतिकः प्रेतो वैश्यो भवति पूयभुक्। चैलाशकश्च भवति शूद्रो धर्मात् स्वकाच्च्युतः' १२।७२ इति स्वस्वकार्मभ्रष्टानां वर्णानां विविधदण्डा निर्दिशिता जन्मान्तरेऽपि; नतु तेषां परस्परं वर्णपरिवर्त्तनं निर्दिष्टम्।

एवं यत्र अब्राह्मणे ब्राह्मणशब्द ऽ क्वापि दृश्यते; स प्रशंसामात्रफलकः; ब्राह्मणादिके प्रयुक्तोऽब्राह्मणशूद्रादिशब्दो निन्दमात्रफलक एव; नतु तथा वर्णव्यवस्थापकः। अत एवैतरेयब्राह्मणे पेलूषाय कवषाय प्रयुक्ताऽब्राह्मणशब्दो निन्दार्थक एव; तस्य जन्मना ब्राह्मणत्वात्। एतद्विषये 'किं महिदासकवषजानश्रुतयः शूद्रा आसन्?' इति मम लेखो 'मधुरवाण्यां' २।७-८ द्रष्टव्यः।

अथ च 'तपः श्रुतञ्च योनिश्चेत्येतद् ब्राह्मणकारकम् । तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः' २।२।६, ५।१।११५ इति महाभाष्योद्धृतपद्येनाऽपि जन्मसिद्धा वर्णव्यवस्था सिद्ध्यति । यदि गुणकर्म्मकृता वर्णव्यवस्थाऽभविष्यत् तन्मते; तर्हि तपःश्रुताभ्यां हीनं ब्राह्मणं स जातिब्राह्मणं नाऽकथयिष्यत, किन्तु शूद्रममंस्यत । परं नैवमत्र प्रोक्तम् । तेन जन्मना वर्णः सिध्यति । अत एव महाभारते ' ये योनिशुद्धाः सततं तपस्यभिरता भृशम्' अनुशासन० १२१।१६ इत्युक्तम्, ये ब्राह्मणाः । त्रिशिष्टलोहनिर्म्मिता × तन्त्री *कदाचित् सुवर्णाऽपेक्षयाऽपि महार्घतया विक्रीयते, या त्रिशिष्टवीणाद्युपयोगमेति । सुवर्णाऽपेक्षया महार्घत्वेऽपि तत्तन्त्रीजातिर्लौहस्यैव मन्यते, न सुवर्णस्य उत्तमधात्वन्तरस्य वा । एवं कश्चिच्छूद्रो जातिब्राह्मणाऽपेक्षया गुणकर्म्मसूत्कृष्टतरोऽपि शूद्रजातिक एव भवति, न ब्राह्मणजातिकः । अत एव वेदे—'न यो ररे आर्य्यं नाम दस्यवे' ऋ० १०।४९।३ यः—इन्द्रो दस्यवे—शूद्रादिकाय आर्य्यं नाम न ररे—न दत्तवान् । स्पष्टताऽत्र । वस्तुतस्तु गोजातिग्रहणे यथा काणा पङ्गुर्निर्दुग्धाऽपि च गौर्गोजातिमत्येव मन्यते। तथैव ब्राह्मणजातौ निकृष्टगुणकर्म्माऽपि ब्राह्मणजातीय एव भवति, नाऽन्यः । अत एवाऽयं न्यायः 'प्रकृतिग्रहणे विकृतेरपि ग्रहणम्' । अत एव तु महाभाष्ये पस्पशाह्निके वर्णोपदेशप्रयोजनप्रकरणे —'इष्टबुद्ध्यर्थश्चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः' इति पूर्वपक्षिवार्त्तिके 'आकृत्युपदेशात सिद्धमिति' समाहितम् । तदा तत्र 'आकृत्युपदेशात् सिद्धमिति चेत् संवृतादीनां (दोषाणां) प्रतिषेधः' इति वार्त्तिकमाक्षिप्तम् । तस्याऽयमेव भावो यद् ×जातिग्रहणे सति दोषयुक्ता अपि तदन्तर्गता एव मन्यन्ते । तेन गुणकर्म्महीनस्याऽपि ब्राह्मणस्य ब्राह्मणजातीयत्वं सिद्धम् । अत एव 'यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति' मनु० २।१५७ इति पद्ये विप्रस्याऽनधीयानस्याऽपि नामधारित्वमपि कामं स्यात् तत्त्वमेवोक्तम्; शूद्रत्वं तस्य नोक्तम् । एवं प्रागुक्ते महाभाष्यपद्येऽपि ज्ञेयम् । तत्र समुदिते कारणत्रयेऽपि योनिरेव योनिः—ब्राह्मण्यं ब्राह्मणाज्जन्म इति कैयटः) प्रधानम् । यतस्तपः श्रुतञ्च तु शूद्रजातीयेऽपि सम्भवि । परं तस्मिञ्छूद्रे योनिस्तु कथमपि न सम्भविनी; तर्हि 'तपः श्रुतञ्च योनिश्च' इति त्रयं तत्र कथं

× तन्त्रीः । अङ्यन्तत्वान्न सुलोपः ।

* जानत्यपि । अत्र निमित्ताऽभावान्न नुम् । पश्यन्तीत्यत्र तु शप्त्वान्नुम् ।

प्राप्येत ? ब्राह्मणजातीये योनिस्तु वर्त्तते एव; तपः श्रुतञ्च तत्र सम्भव्येव। यदि नाऽपि भविष्यतस्तपः श्रुते तस्मिन्; तर्हि स जातिब्राह्मणस्तु सिद्ध एव; यतो नाऽत्र स शूद्र उक्तः। तेन योनेरर्थाज्जन्मन एव मुख्यत्वं जातौ। तपः श्रुतादिकर्म्मणान्तु प्राशस्त्यमात्रमेव द्योतितम्। अत एव 'त्रीणि यस्याऽवदातानि योनिर्विद्या च कर्म्म च। एतच्छिवे! विजानीहि ब्राह्मणाग्र्यस्य लक्षणम्' ४।१।४८ इति महाभाष्योद्धृतवचनान्तरे योनिशब्दः पूर्वमुपात्तः। 'ब्राह्मणाग्र्यस्य, इति कथने न विद्याकर्मादिमतश्च ब्राह्मणस्य अग्र्यत्वं–श्रेष्ठत्वम् इतरस्य (केवलयोनिमतः) साधारणत्वञ्चध्वनितम्। तस्य साधारणत्वेऽपि जातिब्राह्मणत्वमेव। शूद्रस्योत्तमत्वेऽपि जातिशूद्रत्वमेव।

अत एव विदुरादिभिःशूद्रैः (विदुरः क्षत्ताऽऽसीत्) स्वब्राह्मणयोग्यगुणकर्म्मवत्त्वेऽपि ब्राह्मणजातीयता न प्राप्ता, नच स्वयं मता॥ कर्णो जन्मना क्षत्रिय आसीत्; कुन्त्या स नद्यां प्रवाहितः। सूतेनाऽसौ पालितः। तस्य जातिरपि गुणकर्म्माण्यपि पूर्णक्षत्रियस्याऽऽसन्। परम अविदितवास्तविकतावशात् स स्वं सूतं मेने, सूतश्च कथ्यते स्म। स्वयंवरसमये यदा स द्रुपदप्रतिज्ञानुसारं धनुषा मत्स्यवेधमैच्छत्; तदैव स द्रौपद्या 'दृष्ट्वा तु तं द्रौपदी वाक्यमुच्चैर्जगाद नाहं वरयामि सूतम्' महा० आदि पर्व० १८९।२३ इति निषिद्धः। यद्यपि स सर्व्वविधक्षत्रियगुणकर्म्मपूर्णोऽविद्यत, वस्तुतो जन्मनाऽऽसीदपि क्षत्रियः, परं तज्जन्मरहस्यस्य गुप्तत्वात सर्व्वे एव तं शूद्रं मेनिरे। यदि तदा वर्णव्यवस्थां गुणकर्म्मानुसारमभविष्यत; तर्हि तस्य क्षत्रिययोग्य-गुणकर्म्म* जानत्यपि पश्यन्त्यपि च द्रौपदी तस्य सूतपुत्रतामात्रप्रसिद्ध्यैव तं कथमरोत्स्यत्? अथ च गुणकर्म्मणैव वर्णव्यवस्थायां सत्यां तदा कर्णस्य क्षत्रियत्वात् तस्य सूतजातिमूलकलज्जानिमग्नतायास्तद्विषये मौनस्य च काऽऽवश्यकताऽऽसीत्? स स्वक्षत्रियत्वं प्रसाध्य स्वलज्जामगोपायिष्यत्। परं तेनैवं न कृतम्; तेन सिद्ध्यतीदं यत्—तदा गुणकर्म्मकृतवर्णव्यवस्थाया गन्धमात्रमपि नासीत्; किन्तु परम्परात ⌒ प्राप्ता जन्मनैव वर्णव्यवस्था तदापि आञ्जस्येन प्रसृताऽऽसीत्।

मतङ्गस्तपस्यन्नपि ब्राह्मण्यं न भेजे। दासीपुत्रः सुकर्म्मनिरतो नारदोऽग्रिमजन्मन्येव ब्रह्मपुत्रतां प्राप; न तु वर्त्तमाने। एवमत्र जनकयुधिष्ठिरश्रीकृष्णादय एव द्रष्टव्याः। तेषु केषामुत्तमगुणकर्म्मणां न्यूनताऽऽसीत्?। तेऽपि ब्राह्मणा न जाताः, न वा तथा व्यपदिष्टाः। द्रोणाचार्य्ये ⌒ परशुरामश्च

युद्धादिकं कुर्वन्तौ, क्रूरस्वभावञ्च धारयन्तावपि न क्षत्रियौ जातौ मतौ वा। एवं युध्यमानावपि कृपाचार्याऽश्वत्थामानौ विप्रौ, उपदिशन्नपि च विदुरः शूद्रः स्थितः। यदा खलु ब्राह्मणवेषधारिणाऽर्ज्जुनेन लक्ष्यवेधं कृत्वा द्रौपदी विजिता; तदा कर्णादयोऽर्ज्जुनेन सह युयुधिरे। तदा कर्णस्तं पप्रच्छ, यत्-त्वं किं ब्राह्मणोऽसि अन्यो वा? 'तमेवं वादिनं तत्र फाल्गुनः प्रत्यभाषत। ब्राह्मणोऽस्मि युधां श्रेष्ठः सर्वशस्त्रभृतां वरः' आदि पर्व० १६२।२०-२१ एवमुक्तस्तु राधेयो युद्धात् कर्णोन्यवर्तत। 'ब्राह्मं तेजस्तदाऽजय्यं मन्यमानो महारथः' १६२।२३ यदि गुणकर्म्मणैव वर्णव्यवस्थाऽभविष्यत्; तदा तस्यार्ज्जुनस्य ब्राह्मणत्वकथनमात्रेणैव तं को ब्राह्मणममंस्यत? कथं वा कर्णो युद्धविमुखस्तस्मादभविष्यत्?। तेन सिद्धा जन्मना वर्णव्यवस्था। यदि गुणकर्म्म कृतवर्णव्यवस्थाऽभविष्यत्; तर्हि ब्राह्मणवेषधारिणोऽर्ज्जुनादीन् प्रति द्रुपदस्य 'कथं जानीम भवतः क्षत्रियान् ब्राह्मणानुत' आदि० १६७।२ इति प्रश्न एव व्यर्थ आसीत्। तेन सिद्धा जन्मना वर्णव्यवस्था। (क्रमशः)

—

## वर्षाकालिकं किञ्चित्

### ( मेघान्योक्तयः )

( १ )

*एतस्य तस्य मन्ये धन्यामभ्युन्नतिं जलधरस्य ।*
*विश्वं सशैलकाननमाननमवलोकते यस्य ॥*

( २ )

*आश्वास्य पर्वतकुलं तपनोष्मतप्तं,*
*दुर्वारवह्नि-विधुराणि च काननानि ।*
*नानानदीनदशतानि च पूरयित्वा,*
*रिक्तोऽसि यज्जलद ! सैव तवोत्तमा श्रीः ॥*

( ३ )

*गाजतवधिरीकृतककुभा किमपि कृतं न घनेन ।*
*कियती चातकचञ्चुपुटी सापि भृता न जलेन ॥*

( ४ )

आसक्ताः प्रतिकोटरं विषधरा भानोः करा मूर्धनि ।
ज्वालाजालकरालदावदहनः प्रत्यङ्गमालिङ्गति ॥
सर्वानन्दनचारुचन्दनतरोरेतस्य जीवातवे ।
रे जीमूत ! विमुंच वारि बहुशो युष्मद्यशो जृम्भताम् ॥

( ५ )

त्वयि वर्षति पर्जन्ये सर्वे पल्लविता द्रुमाः ।
अस्माकमर्कवृक्षाणां पूर्वपत्रेषु संशयः ॥

( ६ )

शीतलादिव संत्रस्तं प्रावृष्याच नभस्वनः ।
नभो वभार नीरन्ध्रं जामूतकुलकम्बलम् ॥

( ७ )

क्षपां क्षामीकृत्य, प्रसभमपहृत्याम्बु सरिता,—
म्प्रताप्योर्वीं कृत्स्नां, तरुगहनमुच्छोष्य सकलम् ।
क्व संप्रत्युष्णांशुर्गत इति तदन्वेषणपरा—
स्तडिद्दीपालोका दिशि दिशि चलन्तीह जलदाः ।
( पाणिनेः )

( ८ )

सर्वाभ्युद्गतकंदला वसुमती, वृद्धिर्जलानां परा,
जातं निष्कमलं जगत्, सुमलिनैर्लब्धा घनैरुन्नतिः ।
सर्पन्ति प्रतिमन्दिरं द्विरसनाः, संत्यक्तमार्गो जनो
वर्षाणां च कलेश्च संप्रति जयत्येकैव राज्यस्थितिः ॥

# निबन्धस्य कावश्यकता ?

ले॰ श्री लक्ष्मणत्रिवेदी विशारदः (सारनमण्डलीयः।)

निबन्धो नाम रसगुणादियुक्तानां क्लिष्टभाषाभावमुक्तानां मुक्तानामिव कियतां सूक्तानां समवाय एव। तस्यैतस्य प्रस्तावप्रबन्धादीन्यपि पदानि वाचकतां दधते। विश्वसाहित्यनिकषायमाणोऽयं निबन्धो नामेति विश्वेषामपि विशारदानां निर्विवादं मतम्।

भाषावाटिकापि निबन्धानुबन्धेनैव शोभतेतराम्। परां कोटिङ्गत एकोऽपि निबन्धः साहित्यसागरस्यानर्घं रत्नं भवति। निबन्धसम्बन्धमन्तरा कस्यापि साहित्यजीवनं नैवेति ज्ञेयम्। साहित्यशेवधिरयं शेवधिरिव भवति लोकाय। किञ्च अयं दधिविलोडनान्निःसृतं नवनीतमिव सागरादुत्थिता सुधेव, चन्द्रादुत्थिता चन्द्रिकेव ज्ञानराशिभ्य उत्पद्यते।

तथा चायं निराकारोऽपि सज्जनतोऽग्रे भाषाभावौदार्य्यशालीनतया पूर्वापरापेक्षितुलितवर्णनेन चैकां जगतीमुपस्थापयति। अनध्यापकोऽप्ययं सदध्यापनगुणतयाध्येतनध्यापयति। मूकोऽपि सच्छब्दार्थव्युत्पत्त्याधायकतया परापरं वक्तुं व्यवसाययति, किं बहुना, सखेव साधु शास्ति, कान्तेवाभिरमयति, वशीकरणमिवारसमपि हृदयमभिमुखीकरोति, कामिनीकटाक्ष इव हृत्तले पदं धत्ते, प्रियपत्नीव प्रतिपदमनिर्वचनीयमानन्दमाविष्करोति, प्रथमसमागमनिशेव महान्तमपि कालं क्षणमिवातिवाहयति।

कोविदानां क्रीडैकभूमिरयं भूमिरिव नैकविधपदार्थोपेतः विविधभावभवनसमेतः महागौरवमेति। केन्द्रीभूतविषयस्य सरसस्यास्य साम्यं सालिमालः कश्चिद् रसाल एव धारयितुमर्हति।

तथा चायं गाम्भीर्ये सागरेण, चातुर्ये नागरेण गुणे सुरगुरुणा, अलङ्कारे मेरुणा, भङ्ग्यां नवोढया अभिधेयेऽभिधया, लाक्षणिके लक्षणया, व्यङ्ग्ये व्यञ्जनया, आस्वादने शर्करया परिणामे परीक्षाफलेन च वसता व्यक्तविविधाकृतेरनुकरोति संसृतेः।

स चायं प्रतिज्ञाहेतूदाहरणाद्युपेतः कुभाषाभावाद्युपेतः रसगुणालङ्कारसमेतः विचित्रां विच्छित्तिमाधत्ते। एतज्जनितः प्रभावुकः प्रभावश्चिरमपि न विस्मर्य्यते। यदा चायं लिपीकृतः सामूहिकतया धृतो ग्रन्थरूपाश्रितो भवति।

तदा काव्यरूपकप्रकरणादिनाम्ना व्यपदिश्यते । व्यज्यते चानेन महती शक्तिस्तदा । एतेनैवानुस्यूतानि काव्यकोशदर्शनप्रभृतीन्यपि । लघीयांसमप्यस्थिरांशमपि विषयमयं पतितपावनपरमात्मेव समुद्धरति । नभस्यपि वैचित्र्येण प्रासादं निर्मिमीते ।

यर्हि चायं नैवाभविष्यत्तर्हि रमणीयं रामायणं महीयो महाभारतं सुगेयां गीतां वेदाङ्ग वेदाञ्चिरीक्षितुं श्रोतुमपि कः प्राभविष्यत् । एतल्लेखनसरणी प्रतिमासं प्रतिलेखकं भिन्नभिन्ना नान्योन्याधीना ।

सोऽयं गद्यपद्यादिभेदेनानेकविधो भवति, परं गद्यमेव निबन्धाय साधीयः स्यात् । तस्मिन्नेव च पूर्णं पाण्डित्यं व्यक्तं भवति, "गद्यं कवीनां निकषं वदन्तीति" ।

निबन्धस्य प्रकृष्टरूपा गद्यस्वरूपा कादम्बरी दशकुमारहर्षचरिते च कस्य चेतसि नैकं चैतन्यमापादयतः । पद्यचम्पूरपि तज्ज्योतिषैव द्योतते । किञ्चाधुनापि प्राच्याः विशेषतश्च पाश्चात्याः विपश्चितो निबन्धस्यैवाभिमुखिनः सन्ति ।

मतिमन्मतल्लिकानामम्बिकादत्तव्यासप्रभृतीनां शिवराजविजयादिकृतयः कृतिभिर्निबन्धविधौ यतनीयमिति सदाभिदधते । हिन्दी साहित्ये साहित्यान्तरे प्रत्यहं प्रकाशमानानि परःशतानि पुस्तकानि निबन्धमेव निबध्नन्ति । अपि च निबन्धेऽस्मिन्नल्पकायेऽपि यतोऽपरिमितानां शब्दानां निचायः गूढतराणामप्यर्थानां समवायः संबन्धे सान्द्रत्वं भाषामन्द्रत्वं पदानां स्फुटता, अर्थगौरवस्वीकारः गिरां पृथगर्थतो सामर्थ्यानपोहनञ्च वरीवर्ति अतोऽस्य निबन्धाख्यस्य कस्यचित् वस्तुनोऽवश्यमेवावश्यकतेति ।

———

## परीक्षा नियमावली

विदित हो कि परीक्षा नियमावली छप रही है । यथा शीघ्र केन्द्राध्यक्ष महाशयों के पास भेजी जायगी । अन्य सज्जनों को नियमावली के लिये डाक व्यय अवश्य भेजना चाहिये ।

सन् १९३९ में समुत्तीर्ण परीक्षार्थियों के प्रमाण पत्र ( सर्टिफिकेट ) तैयार हो रहे हैं ।

निवेदक—सेक्रेटरी
अ० भा० सं० विश्वविद्यालय परीक्षा काशी ।

# आत्मसिद्धिः ।

ले० पं० केदारनाथत्रिपाठी शास्त्री (विष्णुपुर सारन ।)

अतति सर्वत्र व्याप्नोति इत्यात्मेति व्युत्पत्तिसिद्धस्य शरीरेन्द्रियाधिष्ठातु र्व्यापकस्य कैश्चिदेव चार्वाकमार्गानुसृत्या कलुषितमतिभिर्जनैरनङ्गीक्रियमाणस्य सर्वविद्याप्रदीपानां प्रतीपमप्यनुकूलयितुं क्षमताशालिनामस्मत्सच्छास्त्राणामनुमतस्यात्मनः सत्ता युगसहस्रेऽपि नैव शक्यापलपितुम्-तथापि संसारे बहवो जना आक्षिपन्ति जीवात्मास्तित्वमिति ।

उद्घोषयन्ति च—"न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः ।

तथा—यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिवेत् ॥

भस्मीभूतस्य देहस्य पुनरागमनं कुतः ।

अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ॥

देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः ।

मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकी" ॥ इति

अर्थात् आत्माभावे स्वत एव दुःखादिभोक्तृत्वस्याप्यभावे सिद्धे न वयमास्तिका इव दुःखादिभोक्तारो भविष्याम इति कथयन्तो निषेधयन्त्यात्माऽऽस्तित्वमिति । तेषामत्र सर्वतः स्थूलबुद्धीनां "चारुर्वाको यस्ये"ति व्युत्पत्तिसिद्धचार्वाक शब्दमनन्वर्थयतां देह एवात्मेति अप्रभावताञ्चार्वाकाणां मतमेव पूर्वं समीक्ष्यते—

यदि शरीरमेवात्मा स्यात् तदा मृतशरीरेऽपि चैतन्यमुपलभ्येत नैवमुपलभ्यते तस्मात् शरीरस्यात्मत्वमनादेयमेव । ननु यथा भवन्मते मुक्तात्मनां प्राणाभावेन ज्ञानेच्छाद्यभावेऽपि न तस्यात्मत्वं हीयते तथैव मन्मतेऽपि मृतशरीरस्य आध्यात्मिकवायुसम्बन्धाभावेन चैतन्याभावेऽपि तस्यात्मत्वे न कोऽपि दोषः इति चेन्न, शरीरावयवानामुपचयापचयैरुत्पत्तिविनाशशालित्वेन बाल्ये विलोकितस्य वस्तुनो यौवने वृद्धावस्थायां वा स्मरणन्न स्यात् ।

न च पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कारस्योत्पन्नत्वात् स्मृतिरुपपद्यत इति वाच्यम्-अनेकसंस्कारकल्पनायां गौरवादतिरिक्तात्मन एव स्वीका-

रस्योचितत्वात्। एवं शरीरस्य चैतन्ये बालकानां स्तन्यपाने प्रवृत्तिर्न स्यात् मन्मते तु शरीरादिभिन्नोऽस्त्येक आत्मा यश्च पूर्वजन्मनः संस्कारेण सहैव शरीरं प्रविश्य प्रवर्तयति बालकं स्तन्यपान इति। न च समेषामेव अनुभूतवस्तूनां संस्कारस्यान्यजन्मनि संभवात् सर्वेषामेव वस्तूनां स्मरणं स्यादिति वाच्यम्-उद्‌बोधकाभावात्। स्तन्यपाने किमुद्‌बोधकमितिचेत् अगत्या धर्माधर्मस्यैव उद्‌बोधकत्वकल्पनात्। अथवा यदि मय्यस्मिन्नेव जन्मनि दशवर्षीये भूते यत् यत् कृतं श्रुतं घ्रातं वा तत् तत् सर्वमेव न स्मर्य्यते तर्हि पूर्वजन्मनि कृतानां कार्य्याणां सर्वेषामेव कथं स्मरणं स्यात् अर्थान्न भवितुमर्हति। तस्मात्-चक्षुरादीनि-इन्द्रियाणि चाक्षुषादिज्ञानजनने चेतनाधिष्ठितानि करणत्वात् छिदायां कुठारादिवत् इत्यनुमानेन देहादिभिन्न एवात्मा सिद्‌ध्यति। न हि चार्वाकैर्नानुमानं मन्यते इत्येतावतैव नात्मसिद्धिः। तस्यापि तैरवश्यं स्वीकरणीयत्वात्, अन्यथा गृहात् प्रोषितं पतिमपश्यन्ती चार्वाककामिनी मृतं मत्वा स्वोरस्ताडयन्ती रोदनमेवाश्रयेत्। पत्रादिलिङ्गेन तत्सत्ताज्ञाने तु समायातमेवानुमानमपि प्रमाणमिति-युक्तिप्रमाणविरुद्धमनादेयमेव चार्वाकमतमिदम्। न चेन्द्रियस्यैवात्मत्वमिति इन्द्रियात्मवाद एव युक्त इति वाच्यम्-चक्षुरादीनीन्द्रियाणि सकर्तृकाणि करणत्वादिति पूर्वोक्तानुमानेन स्वयमेव तेषामन्याधिष्ठीयमानत्वात्। अधिष्ठीयमानाधिष्ठात्रो र्मिथो भिन्नत्वात्। ननु ज्ञानादिकं प्रति करणत्वं कर्तृत्वञ्चेन्द्रियाणामेवास्तु तर्हि का क्षतिरिति वाच्यम्—इन्द्रियाणां ह्रासवृद्‌ध्यादिना प्रतिक्षणं परिणामात् पूर्वप्रत्यक्षीकृतानां पश्चात् कथं स्मरणमित्यापत्तिरापद्यते—यतो ह्यन्यानुभूतस्यान्येन स्मरणाभावात्। एवं यत् पुस्तकं चक्षुरवलोक्य ज्ञापयति पुस्तकमिति तदेव त्वचा अन्यविषयत्वे ज्ञापयितव्यम् किन्तु ज्ञायते पुस्तकमेवातो मन्यतामिन्द्रियभिन्न एवात्मा यश्चेन्द्रियद्वयेनापि एकमेव विषयीकरोति। तथा जम्बीरादिफलमवलोक्य जीह्वयाऽसंयोगेऽपि तदाम्लत्वस्य ज्ञानं भवतीत्यतो विज्ञायते चक्षुराद्यतिरिक्त एवास्तीति। नापि मन आत्मवादिनां मतं युक्ततमम् यतो ह्याश्रयप्रत्यक्षे एवाश्रितप्रत्यक्षं भवतीत्यस्ति नियमः। अतो यदि मनस एव न प्रत्यक्षं तर्हि तदाश्रितानां ज्ञानसुखादीनां प्रत्यक्षं कथं स्यात्, अहं सुखीत्यादि प्रत्यक्षात्मकप्रतीतेरेव विलोपापत्तिरतो मन आत्मवादोऽपि भ्रान्तिमूल एवेति स्पष्टयति राद्धान्तोऽयमा-

स्तिकानाम्। "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्ग" मित्यनेन मनसोऽप्रत्यक्षत्वसाधनात्। क्षणिकविज्ञानवादियोगाचारमतावलम्बिनस्तु—विज्ञानमेवात्मा तस्य च स्वतः प्रकाशरूपत्वाच्चेतनत्वं भावत्वात् क्षणिकत्वञ्च। अहं सुखी दुःखीत्यत्र तु विज्ञानमेव तत्तद्रूपेण भासते। एवन्तेषां द्विविधं हि विज्ञानं प्रवृत्तिविज्ञानमालयविज्ञानञ्चेति, अयं घटः, अयं पट इति प्रवृत्तिविज्ञानमहं सुखी अहं दुःखीति त्वालयविज्ञानम्। न च विज्ञानस्य क्षणिकत्वे पूर्वविज्ञानस्य नष्टत्वात् अन्यस्य च सुषुप्तिकालेऽभावात् सुषुप्तिरेवं न सिद्ध्येदिति वाच्यम् पूर्वपूर्वविज्ञानस्य उत्तरोत्तरविज्ञानहेतुत्वात् तत्राप्यालयविज्ञानधारायाः सत्वात्। ननु विज्ञानस्य क्षणिकत्वे तस्यैवाकारविशेषसंस्काराणामपि क्षणिकत्वात्तेषान्नष्टत्वाच्च स्मृतिर्न स्यादिति चेन्न मृगमदवासनावासितवसन इव पूर्वविज्ञानजनितसंस्काराणामुत्तरविज्ञाने सङ्क्रान्तत्वादिति प्रतिपादयन्ति, तन्नास्माकमास्तिकानां मनोरमम्—भवद्विज्ञानञ्जगद्विषयकमुत यत्किञ्चिद्विषयकम् प्रथमञ्चेत् सर्वः सर्वं जानीयात् द्वितीयञ्चेत् यत्किञ्चित्पदग्राह्यघटादेः सुषुप्तावपि ज्ञानप्रसङ्गात्। न च तस्मिन् काले निराकारैव विज्ञानसन्ततिरायातीति वाच्यम् तस्या विज्ञानरूपत्वे मानाभावात् नहि प्रमाणाभावात् प्रमेयसिद्धिरिति नियमात्। सुषुप्तौ यदि प्रमाणमन्तरापि मन्येत विज्ञानन्तर्हि विनिगमकाभावात् जागरणावस्थायामपि घटपटादिसत्ताऽभावस्वीकरणप्रसङ्गात्। विज्ञानव्यतिरिक्तवस्तुनोऽभावादिष्टापत्तिरिति चेन्न-अयं घटोऽयं पट इति स्थाने इदं विज्ञानम् २ इत्येवोच्येत किन्तु नैवमुच्यतेऽतःपदार्था विज्ञानादिभिन्ना एवेति स्वीकार्य्यम्। न च घटादिपदार्था विज्ञानस्यैव स्वरूपविशेषा इति वाच्यम्? किमयं स्वरूपो विज्ञानादिभिन्न आहो स्विदभिन्नः? आद्यश्चेत् ममैव मतमायातम् नातिरिक्तश्चेत् इमे नील पीते इत्यत्रेमे नीले इमे पीते इति व्यवह्रियेत नीलपीतयो र्विज्ञानस्वरूपत्वात्। अतो न साधु योगाचारमतमपीत्ति। तस्मात् युक्तिप्रमाणसिद्धो देहादिव्यतिरिक्त आत्मास्तीति अवश्यं ज्ञायते। श्रूयतान्तावदपरमपि मानमात्मास्तित्वे—यदा कश्चित् दूरवीक्षणयन्त्रेणावलोकयति किञ्चिद्वस्तु तदा प्रतिभाति सन्निकटमेवेदं वस्तु वर्तते किन्तु अन्ततो दूरताज्ञानमेव हृदये तिष्ठतीत्यात्मास्वीकार्य्य एव यश्चास्ति तत्र वास्तविकतापरिचायक इति। इत्थं सूक्ष्मवीक्षणेनावलोकनेनापीति वोध्यम्—यद्वा द्वौ वालावधीयाते कस्याञ्चित् पाठशालायां सहपाठिनौ समानभोजनादिकौ च सन्तौ ततो निःसरति कश्चित्

ऽयोग्यः कश्चिदयोग्य इति पूर्वसंस्कार एव कारणम् संस्कारवत्त्वञ्चात्मन्येव शरीरस्य पूर्वमेव नष्टत्वात् अतोऽप्यात्मा सिद्ध्यत्येव । अयञ्चात्मा परदेहादौ अनुमानेनैव ज्ञायते—यथा देवदत्तशरीरम् आत्मवत् प्रवृत्तिमत्त्वात् प्रवृत्तिमत्त्वञ्च चेष्टारूपहेतुनैवानुमेयम् ।

तथा—बुद्ध्यादि षट्कं सङ्ख्यादि पञ्चकं भावना तथा ।
धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश ।

इति कारिकोक्तचतुर्दशगुणवान् व्यापको नित्यश्चास्तीति जीवात्मसिद्धिः ।

## स्वाध्यायोऽध्येतव्यः ।

( विमर्शः )

ले०—श्री पं० विद्याधर गौड़महाशयः, अग्निहोत्री ( प्रिंसिपल, धर्मविज्ञानविभाग हिन्दूयुनिवर्सिटी काशी )

उपनीतस्य माणवकस्य 'स्वाध्यायोऽध्येतव्य" इत्यध्ययनं विहितम् । तत्र अध्यायशब्दः शाखापरः । तत्र स्वत्वस्य एकत्वस्य च विवक्षितत्वात् एकैव शाखा एकवेदसम्बन्धिनो स्वपरम्परागता अध्येतव्या । "अनया त्रय्या विद्यया लोकं जयति- "वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्" इत्यादि शाखापर्यालोचनया वेदान्तराध्ययनस्यापि कर्त्तव्यतावगमात् ऋग्वेदादिषु एकैकस्मिन्वेदे एकैका शाखा अध्येतव्या इति फलति । तत्रापि प्रथमं स्वशाखामधीत्य वेदान्तरगतशाखान्तराध्ययनं कर्त्तव्यम् । इदं सर्वं पूर्वमीमांसायां द्वितीयाध्यायस्य चतुर्थपादे शाखान्तराधिकरणे वार्त्तिकादौ स्पष्टम् ।

तत्रापि श्रौतानि कर्माणि, स्मार्तानि शान्तिकपौष्टिकानि च स्वशाखयैव कर्तव्यानि । स्वशाखाया लाभे तां परित्यज्य शाखान्तरपरिग्रहे प्रत्यवायस्मरणात् । अलाभे तु स्वशाखाऽविरुद्धं शाखान्तरोक्तमप्युपादेयम् । अत्र प्रमाणवचनानि वीरमित्रोदयरुद्रकल्पद्रुमादावुक्तानि । तानि यथा—

"पारम्पर्यगतां मुक्त्वा स्वां समाख्यादिबन्धिनीम् ।
शाखां, शाखान्तरं युक्तं नाध्येतुं सदृशे श्रमे ॥

"पारम्पर्यगतो येषां वेदः सपरिवृंहणः ।
तच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् ॥
अधीत्य शाखामात्मीयां परशाखां ततः पठेत्"
"स्वेन पित्रादिभिर्वाऽपि यः कल्पादिः पुराऽऽहृतः ।
स तु नैव परित्याज्यः इति वेदानुशासनम् ॥
"एकवेदेऽपि शाखानां मध्ये योऽन्यतमां श्रयेत् ।
स्वशाखां तु परित्यज्य शाखारण्डः स उच्यते"
"यः स्वशाखां परित्यज्य पारक्यामधिगच्छति ।
स शूद्रवद् वहिष्कार्यः सर्वस्माद्द्विजकर्मणः"
"आत्मशाखां परित्यज्य परशाखासु वर्त्तते ।
उच्छेत्ता तस्य वंशस्य रौरवं नरकं व्रजेत् ॥
स्वीया शाखोज्झिता येन ब्रह्मतेजोऽर्थिना स्वयम् ।
ब्रह्महैव परिज्ञेयः सर्वकर्मसु गर्हितः ॥
न जातु परशाखोक्तं वुधः कर्म समाचरेत् ।
आचरन् परशाखोक्तं शाखारण्डः प्रकीर्तितः ॥
यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत् ।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति ॥
स्वशाखाश्रममुत्सृज्य परशाखाश्रमं तु यः ।
कर्त्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥
अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणाम् ।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया ॥
ऊनो वाऽप्यतिरिक्तो वा यः स्वशाखोदितो विधिः ।
तेनैव तनुयाद्यज्ञं न कुर्यात्पारशाखिकम् ॥
वहुलं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्त्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ।
यत्राम्नातं स्वशाखायां पारक्यमविरोधि यत् ॥
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥

परशाखोऽपि कर्त्तव्यः स्वशाखायां न नोदितः।

सर्वशाखासु यत्कर्म एकं प्रत्यवशिष्यते ॥ इति ॥

एवमाचार्यस्यापि कारयितुः स्वशाखीयस्य लाभे प्रथमं स एव शान्त्यादिकर्मसु वरणीयः। तेनाप्याचार्येण गुरुमुखात् यथावदधीतवेदेन सम्यक् ज्ञातकर्मकाण्ड-प्रक्रियेण च भाव्यम्। अन्यथाऽऽचार्यस्याध्ययनाद्यभावेऽनधीतानां मन्त्राणां फला-जनकत्वस्य तत्र तत्र शास्त्रकारैः समुद्घुष्यमाणत्वात्। तादृशैर्मन्त्रैः कृतं कर्म न केवलं निष्फलं भवति अपि तु "मन्त्रो हीनः स्वरतो वर्णतो वे" ति न्यायेन कर्मकर्तुर्य-जमानस्यानिष्टमपि सम्पादयति। अतश्च यद्याचार्यः अधीतवेदः स्वशाखीयो लभ्यते तदा स एव ग्राह्यः। यदि तादृशो न लभ्यते तर्हि अन्यशाखीयोऽपि यदि यजमान-शाखां विधिवदधीत्य तच्छाखीयान् पदार्थांश्च सम्यग् जानाति स एव कर्मसु नियोज्यः। नतु स्वशाखीय इति कृत्वा अनधीतवेदः अपरिज्ञानकर्मकलाप आचार्यो योजनीयः। एतदभिप्रायेणैव सर्व आचार्यो यजमानशाखीय एव। अन्यथाऽऽचार्यस्य यजमानशाखाध्ययनाभावे तच्छाखीयपदार्थानां निर्वाह एव न स्यात्। स्वशाखयाऽ नुष्ठाने वैगुण्यं स्यात् इति प्रतिष्ठेन्दुशान्तिकमलाकारादावुक्तम्। एवं च रुद्र-कल्पद्रुमे "रुद्राध्यायस्य च यजुर्वेदशाखास्वेव आम्नातत्वेन तदितरवेदशाखासु तदभावेन च यजुर्वेदभिन्नवेदशाखीयानां रुद्राध्ययनाभावेन तज्जपादौ तेषाम-नर्हत्वम्। अत एव वह्वृचाश्छन्दोगा आथर्वणाश्च विप्रा रुद्रजपादावार्त्विज्ये वर्ज्या यथाह शाङ्खायनः। वह्वृचाः सामगाश्चैव तथा चाथर्वणा द्विजाः। महा-रुद्रजपे नैव शस्तास्ते श्रुतिधर्मतः" इति

यदुक्तं तत् अनधीतरुद्राध्यायस्य आर्त्विज्यनिषेधपरतया नेयम्। नतु रुद्राध्या-यिनोऽपि अन्यशाखीयस्य निषेधपरम्। अत एव च "बह्वृचाद्या अपि याजुषरुद्रा-ध्ययनवन्तो रुद्रजपसमर्थास्तु वरीतव्या" इत्युत्तरत्र तत्रैव लिखितम्। एवं सर्वत्र यजमानसमशाखीया इति पद्धतिकाराणामभिप्रायो बोध्यः—यद्यपि, वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम्। स्वशाखाढ्य (ज्ञ) मनालस्यं विप्रं कर्मार-मीप्सितम्" इति श्लोके आचार्यस्वरूपनिरूणपरे स्वशाखाढ्यमित्यस्ति पदम्। तेन च स्वशाखीय एव आचार्यः कर्तव्य इति प्रतिभाति, तथापि अन्यवाक्यस्य उपनयनप्रकरणस्थत्वात् उपनेतृस्वरूपमात्रनिरूपणपरत्वम्, नतु शान्तिक-

पौष्टिकादि-सर्वकर्मसु अस्य वचनस्य प्रवृत्तिः संभवति । अन्यप्रकरणस्थस्य वचनस्य अन्यत्र गन्तुमसामर्थ्यात् । अत एव च सर्वैरपि निबन्धकर्तृभिर्वचनमिदमुपनेतुराचार्यस्य स्वरूपनिरूपणपरतयैव व्याख्यानम्, यथा– स्मृतिमुक्ताफले-उपनयनकर्त्तारमाह व्यासः वेदैकनिष्ठमिति । वीरमित्रोदय-संस्काररत्नमालादावपि उपनेतृपरकत्वमेवास्य वचनस्योपवर्णितम्, नतु कारयितृपरकत्वमुक्तं कुत्रापि । लोकेऽपि च इदानीं यजुराद्येकशाखीयः स्वशाखां प्रथमतोऽधीत्य ततो वेदान्तरगतं शाखान्तरमप्यधीयानः तद्वेदीयं हौत्रमौद्गात्रं च श्रौतेषु कर्मसु करोत्येव । शिष्टा अपि तत्कर्म सदाचारतया परिगृह्णन्त्येव । अतश्चेदं सिद्धं भवति प्रथमतः स्वशाखाध्यायी स्वशाखीय आचार्यत्वेन कर्मसु नियोक्तव्यः । तदलाभे अन्यशाखीयोऽपि यजमानशाखामधीतवाँश्चेत् सोऽपि नियोगमर्हति । प्रथमतः स्वशाखीयस्यैव प्रतीतेः, इतरशाखीयस्य विलम्बेन प्रतीतेश्च । प्रथमोपस्थित-परित्यागे कारणाभावाच्चे ति शम् ।

*महा-महाध्यापक श्रीमन् पण्डित ईश्वरी-दत्त दौर्गादत्तिशास्त्रि, एम. ए. एम. ओ. एल. महोदयःनामखिल-भारत-चर्षीय-छात्र-सम्मेलने सभापतित्वेन काश्याम् ।*

## "प्रदत्त-भाषणम्"

अयि ब्रह्मवर्चसवीतिहोत्राऽरणयः । संसार-सागर समुत्तारणाय धरणिमवतीर्णा दिव्यास्तरणयः ! भारतहितैषिणो मनीषिणो मान्याः ! सौहार्दसुधाह्रदाः सुहृदः ! सदा मदन्तर्वसन्तोऽन्ते वसन्तश्च !

विलक्षणोऽयं क्षणः । पुण्यपाथोधितटीयं घटी, गौरवेलेयं वेला, नितरां मनोहरोऽयं प्रहरः; अतीवादीनमिदं दिनम ; अप्रतिपक्षोऽयं पक्षः, असम्भवदुत्सवसमासोऽयं मासः ; मङ्गलस्यायनमिदमयनम, महाहर्ष-वर्षमिदं वर्षम् ।

यदद्य वयं सर्वे सकल-लोक शङ्करेण भगवता शङ्करेण निरशनाऽऽशनार्थवितरणतया सुर-शाखि गर्व-खर्वी करण-निपुणदर्वी लसत्करकिसलयया भगवत्यान्नपूर्णया च सततं सश्रद्धञ्च समाधिष्ठितायाम, प्रचण्ड दण्ड-धर दण्ड-भय खण्डन-परम पण्डितेन कलिकालभैरवेण च ।भीक्ष्णमभिरक्ष्यमाणायाम्, समस्तसिद्धिसमृद्धी-

नामधीश्वरेण सकल-क्रियाकलाप-साफल्यलब्धये देवदानवमानवैः समुपास्येन भगवता द्विपास्येन निरन्तरं निरालस्यञ्च समुपास्यमानायाम्, दुरित-दुर्गति-दलन-दयावलोकन दुर्गया भगवत्या दुर्गया च दलित-सर्वोपसर्गायाम्, अमीन-क्षेमकराद्या भगवत्यो मीनाद्याऽनुक्षणं निरीक्ष्य-माण-निवासि-निवह-निवास-क्षेमायाम्, ललितचरितया भगवत्या ललितयाऽनुबेलमुद्वलित-लालित्या-याम्, त्रिपुरहर पुरौकशोक-शकलीकरणचतुरचरिताभिरपराभिरपि परःश-ताभिः त्रिपुर-भैरवीप्रभृतिभि र्देवताभिरनिशमपास्यमान--परिदेविताबकाशायाम्, स्फुरत्समस्तसन्तापप्रशमन-सपर्य्यया, मुमुक्षुमनोरथरथ्यया भगवत्या भागिरथ्या चानुपलं हीरकहारिताभिः कल्मषहराभिः सलास्याभिर्लहरीभि र्निर्वास्यमान निखिलमालिन्यायां वृन्दारकवृन्दवदनारविन्दमकरन्दायमानायाः संस्कृतगिरः, आर्य्यसंस्कृतेश्च प्रधानराजधान्याम्, भुक्तिमुक्त्योकेलिवन्या मवनीतलतिलकस्थानीयायामस्यां वाराणस्यां संपद्यमाने संस्कृत-संसारस्य सर्वा ण मालिन्यानि, अमङ्गलानि चालस्यानि, अकल्याणानि च दुरितानि दुःखानि च निखिलं दारिद्र्यं दौर्भाग्यञ्च समुन्मूल्य तस्य भोगापवर्गसाधनक्षमतामाधातुं संस्कृतज्ञानां प्राक्तनीं मानमर्य्यादां प्रतिष्ठां च पुनः प्रतिष्ठापयितुं प्रत्यग्रवयसां वयस्यानामन्तरभिनवजीवन-स्फूर्तिलहरीं फूत्कर्तुं च परिवद्धपरिकराणामखिल-भारत संस्कृत-च्छात्राणामस्मिन् महासम्मेलने स्फुरदमन्दानन्दसन्दोहसंगताः स्मः।

यदिदानीं वयं एतन्महोत्सवोत्संगे सङ्गत्य भूलोकसौभाग्येन भुवि आविर्भूताया: सम्भावितसर्वभूताया भगवत्याः सुरभारत्या अकल्याणविस्मरणे स्मरणे उदञ्चत् प्रेम-रोमा चनिचयं निमग्नाःस्मः।

यदघेन्द्रोपेन्द्रादिवृन्दारक-वृन्दवन्दितपादारविन्दायाः स्वर्गिणां गिरः अवन्धनासु वन्दनासु अमन्दादरं समर्पितशिरःसरसीरुहाः। आस्महे। यदिदानीं समुत्सादित-समस्त-साहित्य-शुभाशां प्रकाशितपरःसहस्राऽपरभाषां देवभाषामस्यां सभायां समायां सभाजयामः। यदधुना सुधा-सहचरीमवाच्यां देववाचं वचोमयैः सरुचिरैरुपचारैः समर्चयामः।

अयि स्वनामधन्याः सुधीमूर्धन्याः! विद्याव्रतव्रतति-सुकुमारकिशलयाश्च! नास्त्यविदितमिदं भवतां यद्वाङ्मनसगोचरप्रभावस्य हविर्भुजां भाषितस्य

करुणाकणायमानान् वेद-वेदिकायां विकीर्णान् सुवर्णवर्णान् विचित्य विरञ्चि-रुच्चावचं प्रपञ्चं विरचयाम्बभूव । यत् शशाङ्ककोटिभिरपि अनपाकरणीये सहस्रांशुसहस्रैरपि दुष्परिहरे घोरघोरे विश्वघस्मरे आदिमे अविद्यान्धकारे ध्वस्त-धैर्यो विधिः संस्कृतवाङ्मयस्याङ्गभूतं नैगमं ज्योतिरासाद्यैव स्वं पन्थानं ददर्श, विधेयं चावदधार ।

अत एवैतत् कर्णेजपानि वचनाम्बुजानि वेदाम्बुधौ स्मृतिसरसीषु च प्रस्फुरन्ति । "स भूरिति भूमिमसृजत्" स सर्वेषान्तु नामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥" अत एव च पूर्वजैः गीर्वाणवाणी जगतां जननीति वा प्रपञ्चप्रसूरिति वा विश्वप्रसविनीति वा सम्बोध्यते स्म । बुध्यते चास्माभिरपि मातेयमस्माकमिति । देशान्तरीया भाषाविज्ञानतत्व-विदोऽपि भूमण्डलभाषाणामादिमां भूमिं ज्येष्ठां भगिनीं वा विभावयन्ति । अपरिमितानां प्राकृतानां प्रकृतिञ्च कथयन्ति । सर्वतः पूर्वमियमाविर्बभूव इति कृत्वैवेयं देवभाषा सर्वभाषासु भूषायते । किन्तु सन्ति कल्याणकुलविपणयोऽस्या नैकेऽलौकिका गुणाः । धीयत एव धीरैरधिधरमधरमजिहासती अदसीया माधुरी; यस्याः पुरत इक्षुरसा रसाय न भवन्ति, सिताप्यसिता प्रतिभाति, । क्षौद्रं क्षुद्रायते, द्राक्षा अदक्षा उदीर्यते, सुधापि मुधैव मधुरंमन्येति अवमन्यते । एतदीया लोकोत्तरा सरणिसुरलता कं सरलतरुसोदरं न तरलयति । इदमीया नन्दनवनविहरणविलक्षणाः पदविन्यासाः कं वैशाखनन्दनसनाभिं नाभिनन्दयन्ति । अस्या अनिर्वचनीया वाचां वैचित्री कं सचेतसं न चमत्करोति । सुधाकर समूहसब्रह्मचारिणी दुरापा प्रकृतिः कस्य पशुसहपाठिनः परितोषाय न कल्पते । अभिनवहैयङ्गवीनमनोहारिणी शाब्दी मसृणता कस्य कुणपसकुलस्य मनो न हरति अदृष्टपूर्वमर्थगाम्भीर्यं कं वैधेयसहाध्यायिनं न धिनोति ।

निरामयस्य देववाङ्मयस्य लोकशोकशोषः कोशोऽपि अवनीतले नितरामनिकाशः । इह शिवतमश्रुतयः विश्वविश्रुताः श्रुतयः श्रुतियुगलं सफलयन्ति । तत्र युक्तितर्कोपबृंहणानि बृहन्ति ब्राह्मणानि ब्राह्मणानामसदृशीं शेमुषीं प्रकाशयन्ति । अत्यत्र विद्याविद्योतविद्योतिताऽरण्यकानि आर्य्याणाम सक्तविवेकां व्यक्तविविक्तव्यवहृतिपद्धतिं प्रथयन्ति । परञ्च परमरमणीयाः

प्राक्तनसूत्रपरम्परा महर्षीणामभिमतां मितभाषितां निदर्शयन्ति । अपरश्च सदाचाराविस्मृतिं दिशन्त्यः स्फीताः स्मृतयः स्वीयां स्मरणीयतां समर्थयन्ति। अत्र च पुण्यरूपाणि पुराणानि पूर्वपुरुषाणां परतरपौरुषं प्रकटयन्ति । एकतो दूरीकृतदुरितदर्शनानि दर्शनानि स्वदर्शिनां निःश्रेयसं निर्दिशन्ति दरीदृश्यन्ते। अन्यतो वल्गूनि भगवतः कणभुजो वल्गनानि द्वीपान्तरीयविद्वद्गुम्फितानां गल्भग्रहमादिशन्ति ।

अपरतः कमनीया कापिला आलापा अपरलपितानि अपलपन्ति । तत उत्तमोत्तमा गौतमीयाः सूक्तयो गोतमांसि आचामन्ति । मध्यतः-प्राञ्जलाः पातञ्जल-कल्पना देशान्तरीय–दार्शनिकनिकरमजल्पाकं रचयन्ति । परतोऽमीमांस्या मीमांसाधिकरणीयैरधिकरणैर्धीराणां धीरतां धियश्चाधिकुर्वाणावलोक्यते। उपरिष्टाच्च समस्तसमस्तभेदान्ता वेदान्ताः संसारसाहित्यशिरोरविन्देष्वप्रति-द्वन्द्विनीमासन्दीं विन्दाना विद्वद्वृन्दान्यानन्दयन्ति ।

अयि विज्ञानतरणयो विद्वन्मणयः ! देवगवीपयःपानपटवो वटवश्च नास्ति तिरोहितमिदं भवतां यत् सम हितसिद्धि सम्पादितमहीसौहित्यमिदं सुरसरस्वतीसाहित्यं पूर्वेषामार्य्यपुङ्गवानां परःशताभिः समभिः समुपार्जितस्य पाण्डित्यस्य परिपाकः, तेषामप्रतिभटायाः प्रतिभाया रमणीयः परिणामः । अप-रिभवानामनुभवानां शुभाशंसनमवसानम् । इदं हि "प्रियमाकृणु", "भुञ्जते" "उदारचरितानाम्" इत्यादिभिर्भणितिभिः सार्वभौमस्य सौहार्दस्य "सर्वे भद्राणि पश्यन्तु", "मा हिंस्यात्" "नाकरणं मृल्लोष्टं मृन्दीयात्" "वर्षे वर्षेऽश्वमेधस्य" "यस्माद् नोद्विजते लोकः" "अहिंसा परमो धर्मः" इति स्वकीयपरकीयभेदरहि-ताया अहिंसायाः "पिता धर्मः" इति पितृभक्तेः, "गुरुर्ब्रह्मा" इति गुरुभक्तेः दुःशीलो" तीर्थस्नानार्थिनी" इति पतिभक्तेः, "नराणाञ्च नराधिपः" "बालोऽपि नावमन्तव्यः" इति राजभक्तेः, 'अभिवादनशीलस्य,' "ब्रह्मादिस्तम्ब" इति विनयस्य, "अपकारिषु यः साधुरिति" सज्जनतायाः, एवमपराभिर्वचनपरम्परा-भिर्मानवजन्मजन्मनां भव्यतमानां भावानो "मुज्ज्वलोज्ज्वलानादर्शान् संसार-स्य पुरतः उपस्थापयत् स्वामदृष्ट-पूर्वामश्रुतचरीं विश्वजनीनतां विवृणोति ।

न सन्ति सुमेरोः प्रचराणि चामीकराणि यै र्वाचस्पतेर्वचसामेकापि चारुता समर्थितुं शक्येत । न सन्ति कुत्रापि तादृशाः शातकुम्भकुम्भाः यादृशैः सकलशङ्करीणां शाङ्करीणां गिरां गरिमा समादरमासादयितुं शक्येत । नास्ति भुवि सा विभूति र्या भवभूतेर्वाङ्मयस्य समुचितां सम्भावना भवा-

प्तुमलं भवेत्। न भाति कुबेरस्यापि बहवः कोशाः यैः कालिदासस्यैकाप्यनुपमोपमोपार्जितुं पार्येत। न सन्ति तावन्त सौवर्णाः पणाः यावद्भिः पाणिनेरेकमपि सूत्रं सत्कर्तुं शक्येत। न सन्ति रत्नाकरे तावन्ति रत्नानि यावन्ति पतञ्जलेर्महाभाष्यस्य अरत्निप्रमाणाया अपि पङ्क्तेः पूजार्थं पर्याप्तानि स्युः। न सन्ति वसुन्धरायां तावन्ति वसूनि यावद्भिर्गीताया एकापि गीतिका सत्कर्तुं शक्येत। न सन्ति महीमण्डलेऽपरिमितियुक्ता मुक्तावलयः याभिः कविता कान्तारे विहरतो वाल्मीकिकोकिलस्यैकापि काकली लब्धुमलं भवेत। न प्रतिभान्ति ब्रह्माण्डे ताः सम्पत्तयो याभिरेकस्या अपि ऋचः अर्चा सम्भवेत्।

अस्य महनीयमहिम्नः संस्कृत-साहित्यस्यैव हेतोरस्मदीयेयं जन्मभूमिः समासां भूमीनामधुनापि कैश्चित्सूर्धन्या मन्यते। अत एव च नः पूर्वजाः पूर्वं सर्वत्र समं सम्पूज्यन्ते स्म। अत एव च मनुनापि भारतीयाश्चराचरस्याचार्य्यस्वरूपा नियोजिताः। अयं देशश्च सर्वदेशानां देशिकतया संकेतितः, इयं धारा धरणीतलस्याद्याध्यापिका निर्धारिता। देशान्तरीया इदानीमपि संस्कृतस्यैव साहाय्येन विशालं भाषावितानमाविर्भावितवन्तः। विश्वविस्मापकान् विविधान् विषयाँश्चाविष्कृतवन्तः।

अद्य यावदविद्यान्धकारे निह्नुतानि तत्वानि चाधिगतवन्तः। अस्माकं पूर्वजानां नूनमपरिमेयपुण्यराशिरासीत् यत्तेषां देववाक्यनिर्वचनीया रुचिराचकाशे। यत्तेषां तत्र निरपेक्षः पक्षपातो विमलतरो विश्वासः केनाप्यनिरुद्धा श्रद्धा चाभवत्। तस्याः सेवायामेव तैरुज्ज्वलानि जीवितान्यतिवाहितानि। तस्या एव समाराधनायां समे समया नीयन्ते स्म। तदीक्षण एव तदीयाः क्षणाः क्षीणा अभवन्। सा एव तेषां सौभाग्यविधिरमन्दानान्दानमवधिः सततसन्निधिः शेवधिश्चाभवत्। सा एव च तेषां सर्वस्वस्य, शरीरस्य, स्वान्तस्य च सर्वाधीश्वरी, भ्रार्ता, भयत्राता, पाता, पिता, सर्वावलम्बाम्बा च बभूव। हुतभुजि हुताश्चापिते तां न जहुः। अन्तरायै निरन्तरं तान्ता अपि ते तस्या अन्तं न वितेनुः। रक्षोभिरभीक्ष्णं भक्ष्यमाणापि तां नाचिक्षिपुः। तत्प्रणयिभ्यः कविपुङ्गवेभ्यः प्रत्यक्षरं लक्षं प्रदायापि लज्जयैव ते आलक्षिता अभवन्। तत्परिचर्य्यापरायणेभ्यो वैश्रवणीः सम्पदो विश्राणयन्तोऽपि न परितोषं तेनिरे।

अयञ्च तेषां तदनुपमप्रेमपरिपाकस्य परिणाम आसीत् यत्तेषां वर्णनातीतवीर्य्यायां तद्वर्णमालायामप्यविश्रान्ता प्रीतिरासीत्। प्रतिसन्ध्यं प्रतिपर्व प्रतिमहोत्सवं ते तदीयैः सुवर्णैः स्वीयान्यङ्गान्यलङ्कुर्वन्तिस्म।

तस्या एकैको वर्णस्तै मातेति मन्यतेस्म यदनुकुर्वन्तो वयमिदानीमपि वर्णान् मातृका इति कथयामः। एतान् वर्णान् ते जड़ा इति नावहेलयन्ति स्म, किन्तु तान् हिम-हिमांशुभासुराया भगवत्याः सुरभारत्या इन्दुकुन्दावदातानवयवान् मेनिरे।

अहो स कीदृशः समय आसीत्। यदा सुरभाषाऽखण्डब्रह्माण्डस्य मातृभाषाऽभवत्। यदा देवदानवसिद्धगन्धर्वकिन्नररक्षोभिः प्रतिक्षणं संस्कृतमेव भाष्यतेस्म। यदाधिधरणि तस्यैव सर्वाधिकोऽधिकार आसीत्। यदा भारते तदीयमेव साम्राज्यमभूत्।

यदारङ्कमारामचन्द्रम्, आकृषकमाकृष्णचन्द्रम्, आकुविन्दमागोविन्दम्, आकिङ्करमाशङ्करम्, सर्वे संस्कृतमेवाविकलमविकलञ्च जल्पन्तिस्म।

यदा परिमितपराक्रमो विक्रमोऽपि, अभोजोऽपि, भोजोऽपि, पामरोऽपि पण्डितोऽपि तरुणोऽतरुणश्च सर्वे गीर्वाणवाणीं ब्रुवन्ति स्म। यदा शाकुन्तकुलानि तदध्येतुमुत्कलिकाकुलानि बभूवुः। यदा श्रुतिशिरांसि गायन्त्यः कीराङ्गना अस्माकमङ्गनानि मङ्गलमयानि चक्रुः। यदा च संस्कृतरणरणिकया रटन्त्यः सारिकाः क्लेशोत्सारिकाः समभवन्। किन्तु हा हन्त!!! अमृतान्धसाममृतकल्पं तदेव जल्पितमिदानीमस्मदीययात्रहेलया कलिकालस्य लीलया वा क्रमशोऽल्पीभवत्प्रभावं प्रस्खलत्प्रचारं संकुचत्सहायकसेवकसख्यं दीनदीनां दशामावहत् तान्तिसन्ततिमातनोति।

क्वास्त्यधुना स एकोऽपि लोको यः संस्कृतमेव सोलोकं करोति। क्व राजते सम्प्रति तद्राज्यम्; यत्र तस्यैव राज्यमाभाति। क्व दृश्यते स प्रदेशो यत्र तस्यैवादेश आद्रियते। कुत्र वा प्रतिभाति स प्रान्तो यदीयमोष्ठप्रान्तं संस्कृतमेव स्पृशति।

दिव्यवाङ्मयस्य प्रायः सर्वं एवावयवा तादृशमेव दशाविपर्यासमनुभवन्तो विभाव्यन्ते। वेदा नाम्नापि दुर्वेदा भारते संवृत्ताः। स्मृतयोऽपि विस्मृतिपथमवतरयन्त्यो दृश्यन्ते। पुराणानि पुराणानीति कृत्वापुस्तकालयेभ्यः अपाक्रियन्ते। ब्राह्मण-सन्ततिर्ब्राह्मणसन्ततिरिव अनर्थसार्थे सुविभाव्यते। उपनिषदो द्रव्योपार्जनासूपद्रवोद्भाविन्य उदीर्यन्ते। इतिहासा उपहासनीरनिधौ निरस्यन्ते। अपराश्चास्मदीया विद्याः सावद्या इति सर्वतोऽपोद्यमाना दरीदृश्यन्ते।

हा धिक्! अस्मदीयैर्दुष्कृतैरेव मधुमधुरं संस्कृतमितस्ततो निरस्त-

मस्तमितमिवाभाति। भारतीयानामितः परं भयङ्करतरं किं दौर्भाग्यं सम्भवति यद् भास्करसहस्रभासुरा सुरभारती भारताद् वहिर्भवन्ती शरणार्थिनी शर्मण्यादिदेशानाश्रयति। अत्र यथाकथञ्चिदुपलभ्यमानाऽपि कैश्चिदपेया परित्यज्यते। कैश्चित् सन्धिनीक्षीरधारा इव पुण्यक्षयकारिणी वीक्ष्यते। कैश्चित् दारिद्र्यदायिनी दरिद्रेव निराद्रियते। अन्यैर्दु भिक्षराक्षसीति सभयं प्रेक्ष्यते परैरुत्पातवात्या इवोत्सारयितुमिष्यते, अपरैर्मृता इति स्पर्शयोग्या न मन्यते, इतरैश्च भारतसौभाग्यभानु स्वर्भानुरिति सशङ्कमालोक्यते।

( संस्कृतस्याधःपतनकारणानि )

सुरगिरोऽस्या दुरन्ताया दुरवस्थितेः (१) शिक्षाशरण्या अनुपयोगित्वम् (२) राजसहायताथास्तनीयस्त्वम् (३) जनताया औदासिन्यम् (४) धार्मिकजीवनस्यावनतिः (५) विद्यानुरागस्य ह्रासश्चेति पञ्च प्रधानहेतवः सन्ति।

तत्र शिक्षाक्रमस्यानुपयुक्ततायाः प्रत्ययायेदानीन्तनेषु सततपरीक्षार्थं निर्धारितानां ग्रन्थानामावलीषु दृष्टिर्निक्षिप्यतां तावत् प्रायोऽर्वाचीनै विद्वद्भीरचिता ग्रन्था आर्षीषु रचनासु सुलभां शाब्दीं सुगमतामार्थीं गम्भीरताञ्च न बिभ्रति, नापि च स्वविषये विचारं विवेचनां वा तच्चरमक्षीमां प्रापयन्तः प्रतिभान्ति। बहवस्तेष्वेकमेव वस्तु भिन्नैः पदैः प्रतिपादयन्तःपरीक्षार्थिभारवर्द्धनैकप्रयोजनाः प्रतीयन्ते। तदीयेषु विषयेषु विरला एव केचन लौकिकव्यवहारेषु दैनिक जीवनयात्रायां वा किमपि साहाय्यं कर्तुं क्षमन्ते। विरलतरा एव च परीक्षावसानेऽप्यनवसितप्रयोजना भवन्ति। विद्यार्थिभि ।वधीयमानं विषयस्य वरणञ्च तदीयं तदनुरूपसंस्कार-विशेषं शक्ति-विशेषं वा न सम्बध्नाति, किन्तु स्वस्य परीक्षोत्तरणसौकार्य्यविचारमूलकत्वं व्यनक्ति। परीक्षाणां लेखबहुलतयाऽऽपतन्तीनां परीक्षा-शुद्धिहन्त्रीणां त्रुटीनां दुर्वारत्वेन वास्तविकयोग्यतरनिर्णये स्खलन्ती इदानीन्तनी परीक्षापद्धतिरपि न क्षेमाय कल्पते। युगपदेव विविधासु परीक्षासु प्रवेशार्थमवकाशस्य प्रदानमपि तदीयां विषयगाम्भीर्य्यविनाशकतामाविष्करोति। एतानि शिक्षासरणिदूषणानि प्राचीनार्वाचीननिबन्धानां मञ्जुलसामञ्जस्यशालिनां मिश्रणेनैव गणित-भूगोलेतिहासप्रभृतीनां लौकिकव्यवहारोपयोगिविषयाणां निर्वाचनेन परीक्षणक्रमसंशोधनेन विचारयितुं शक्यते।

अष्टलोकपाल-मूर्तिर्हि स्वप्रभावविशेषेणोच्चावचान् रुचिरानरुचिरांश्च

विनिमयाननायासं घटयितुमीष्टे सत्वरमेव सा सत्यं कलौ कलिञ्च सत्ये दीनं धन पतौ धनपतिं च दीने सुखं दुःखे दुःखञ्च सुखे परिवर्तयितुं क्षमते। कठिन तमोऽपि विषयस्तदानुकूल्येन सरलतमो जायते

अतीतेषु समयेषु संस्कृत साहित्यं यमद्भूततरमभ्युदयमवापत्। यश्च तस्य सर्वतः प्रसृमरः प्रचारोऽभवत्। तस्य विक्रमभोजादिभूभुजामोजस्विनी सहायतैव निदानमभूत्। इदानीं च तदीयं यद्दैन्यं तस्यापि प्रधानमेकं कारणं वर्तमानमहीपतीनां साहाय्यस्याभावोऽल्पत्वं वा। सम्राजा स्वशासिते भारते संस्कृतस्य कृते यत् क्रियते तदपि भारतीयभूपतिभिः स्वराज्येषु कर्तुंन्नेष्यते। अत एव तत्र तस्य दशा दैन्यस्य परां कोटिमाटीकते।

अधुनातनजनतयाऽपि गीर्वाणगिरं प्रति असामान्यमेवौदासिन्यं तन्यते तस्य च लीलास्थलानि निदर्शनानि वा विद्यमाना योगक्षेमाक्षमदक्षिणाऽदूनशिक्षका वृत्यभावसन्तापसन्तप्तान्तेवासिराशयो विद्यालया एव विद्यन्ते। रञ्जापूर्णमनुगृहीताऽपि दोषोज्झिताऽपि कापि विश्वजनीना संस्था तावन्न समृद्धिमृच्छति यावत् समाजेन सादरं सौजन्यजलाञ्जलिभिर्नाभिषिच्यते। शिक्षाशून्यतातिवृष्ट्य नावृष्टिदुर्भिक्षाद्युपद्रवप्रयुक्तस्वाभाविकमार्थिकंकाठिन्यं च संस्कृताऽननुरक्तेः कारणम्। धनेन साहाय्यं कर्तुमनीशा अपि लोका अनुदासीना भवन्तो बालकानां शिक्षार्थं समर्पणेन विद्यालयानुपकर्तुमर्हन्ति। उदासीनास्तु तत्राप्युदासते। हन्त! एतेनै वौदासीन्येन कोटिकोटिरसायनातिशायिक्षेमत्तरणदाक्ष्यया संस्कृतशिक्षया वर्जिता जनता स्वयमनुदिनं सर्वतो नीचैर्गच्छन्ती ताञ्च नीचैर्नयन्ती स्वशुभेच्छुभिर्विषादजुषा दृशा दृश्यते।

पशुभावतिरोभावैकभूमेर्धर्मस्यावनतेर्जीवन्तीं प्रतिभां प्रत्यक्षीकर्तुकामैरार्यजीवन जीवानुभूतवेदध्वनिशून्यतयाश्मशानायमानेषु अस्माकं सद्मसु श्रौतस्मार्तसकलक्रियाकलापसाफल्यजनन्याः प्रधानजनन्याः सावित्र्या अपि उपासनासु मन्दादरतां मन्दात्वं वा भजत्सु सनातन-सभ्यतालता-प्रथम पुष्पं यागपञ्चकञ्च सावलेपं वञ्चयत्सु भूयःसु द्विजेषु सर्वाऽशाशातननिष्णातासु परमेश्वरप्रार्थनास्वश्रद्धामविश्वासञ्च तन्वत्सु तदितरेष्वेकादशेन्द्रियवशीकरणाभ्यसनाभिमुखप्रयोजनानामेकादशीप्रभृतिपावनतिथीनामप्यातिथ्यमनाचरत्सु असंख्यातेष्वार्यसन्तानेषु स्वगोत्रमप्यपरिचिन्वत्सु गायत्रीमप्यजानत्सु कोटिकोटिमितेषु ब्राह्मणबटुष्वभितोऽभिनयस्वरूपतामाकलयत्सूपनयनपरिणयनादिप्रमुखसंस्कारेषु कथामात्रावशिष्टासु, रामायणमहा

भारतादिकथापरिपाटीषु, शरीराद्यासक्त्यानुष्ठाननिष्ठाशून्यासु सभ्यगोष्ठीषु च दृष्टिर्व्यापार्यताम् !!!

विद्यानुरक्तेरिदानीन्तनो अनभिव्यक्तिस्तु प्रतिव्यक्ति प्रतीतिपथमव तरति। पूर्वजा हि विद्याया विद्यामेव, ज्ञानस्य च ज्ञानमेव प्रयोजनं मेनिरे। अत-एव च ते वैदुष्यस्य चरमां सीमां ज्ञानस्यान्तिमं सोपानञ्च सलीलमारोढुमलम भवन्। तत्प्रसादेनैव च ते ब्रह्मानन्दसहोदरमानन्दमनुभवन्त एव स्वी-यान्यादर्शजीवनान्यत्यवाहयन्। हा हन्त !!! सम्प्रति सर्वादर्शभूताया अस्माकं सनातनाऽर्षशिक्षाप्रणाल्यां उद्देश्यमामूलमाचूलं विषमं वैपरीत्यं भजति। शिक्षां परीक्षार्थं परीक्षाञ्च प्रशंसापत्रार्थं, प्रशंसापत्रञ्च पदप्राप्त्यर्थं पद-प्राप्तिरपि चण्ड-पूरणार्थमेव प्रायोऽपेक्षमाणा वयं चिन्तामणिं मृत्कलशरन्ध्रपूर्त-ये शकलयन्त इव कल्पलतावनीमजस्रमजाभोजनविधये निर्मूलयन्त इव वा कथं नोपहसनीया स्यामः।

अयि संस्कृत-कुसुमकाननवसन्तायमानसमुत्साहाः प्रियतमा अन्ते-वासिनः! अस्माकमसीमस्य महतो महीयसो हर्षस्य चायं विषयो यत् साम्प्रतं भवन्त एतत्क्षोणिवैलक्षण्यरक्षणदक्षिणाया स्वर्गिणां गिरो गौरवं पुनः सन्त-नयितुं परिवद्धपरिकराः सन्ति। भवदीय मिमामननुभूतपूर्वामुत्साह-सम्पदमालोक्य न वयं भवत्समारम्भसाफल्ये संशयस्य लेशमप्यनुभवामः। भवतामिमां सर्वतः प्रस्फुरन्तीं सङ्घटनशक्तिं वीक्ष्य वयं स्मयस्य परे च विस्म-यस्याम्बुधौ निमग्नाः। वस्तुत एतेन महनीयतमेन भवत्सम्मेलनेन संस्कृतज्ञ-समाजस्य ललाटेऽङ्कितः, अकर्मण्यतात्मकः कलङ्कोऽपाकृतः जागर्तिज्वर ज्वालाकुलेऽस्मिन् काले यदा सर्व एव समाजाः संघाश्च सर्वाः संस्थाः जात-यश्च स्वस्वोन्नयनकर्मणि प्रतिपद प्रत्यग्रां व्यग्रतां प्रकटयन्ति। दिव्यवाङ्म-यैकावलम्बाना भवतामियं प्रवृत्तिः सर्वतः स्तोतव्यैवास्ति।

प्रतिकार्यं सिद्धिलाभाय यथा सर्वैः सामग्रीविशेषोऽपेक्ष्यते तथैव भव-द्भिरपि सोऽपेक्ष्यत एव। संस्कृत-साहित्योद्धरणलक्षणस्य भवतां चिकीर्षित-स्योपकरणम् (१) विद्यानुरागः (२) विनयः (३) वीर्यं (४) विश्वासः (५) व्रतम् (६) वृत्तम् (७) विश्वप्रेम चेति साक्षादवयवो वर्तंत इति शास्त्राणां परिस्थितेश्च पर्यालोचनया प्रतिभाति।

अयि देशदशोदञ्चनविचाररुचिरचेतसः सचेतसः स्ववाङ्मय-साम्राज्यस्य तरुणोत्तराधिकारिणश्च भवन्तः सर्वं एव स्वमातृहृदयप्रसन्नता-

मयकृतु मिच्छन्ति, तदर्थं प्रयतमानाश्च सन्ति। परन्तु ममेयं दृढ़ा धारणा, निरूढ़ा यत् यावत् सुरभारती भारती भुवं नाभिव्याप्नोति, यावत् प्रतिग्रामं सुरगिरो, गुणग्रामो न गीयते, प्रतिग्रामं तस्या एव गरीयस्त्वं न गण्यते, प्रतिरथ्यं तस्याः पथ्यतातिशयो न समर्थ्यते। प्रतिहट्टं प्रतिघट्टं च तद्भटानां सङ्घट्टै दृष्टि-राकृष्टा न भवति यावत् प्रतिमण्डलं सैवाखण्डलमण्डलायमानखण्डकं मण्डनं न मन्यते, यावत् सर्वाणि मन्दिराणि तन्मन्दिराणि, सर्वा धर्मशालाश्च तदध्ययनैकधर्मशालाः, सर्वं गृहाश्च तदेकगृहा न वोभूयन्ते, यावद् भारते आस्तनन्धयमावृद्धमारङ्कमामहाराजं सर्वे दिव्यां वाचं ब्रुवन्तः सगर्वा न भवन्ति यावत् प्रतिव्यवहारं प्रतिव्यापारं प्रत्यधिकारञ्च संस्कृतं साधिकारं न सम्पद्यते, तावत् वयं काञ्चनापि काञ्चनमयीं चिन्मयीं वा सम्पदमासादयितुं पूर्वजैनिरन्तरमास्वादितायाः अनन्तशान्ति-सुधायाः शीकरमपि करे कर्तुं तैः प्रत्यहं निपीतस्य परितोषस्य परमाणुमपि प्राप्तुं पदमात्रमपि निरापदे स्पन्दितुं क्षणमपि प्राणितुं वा न प्रभविष्यामः।

## मनीषा-पञ्चकम्

मिलिन्द महिला (?) मदीय हृदयाम्बुजस्यासि चेत्<br>
सदा च रसना-सुधा सरसिकारसा (? सारसी॥<br>
विलोचन चकोरयो विधबाणि (?) वा चन्द्रिका।<br>
सुरेशविभवे भवेऽपि मम नैव भावो भवेत्॥१॥

श्रुतौ तव मम श्रुतिर्यदीयमहोत्सवं मन्यते।<br>
तवैव वदनं मदीयवदनं व्रतं वेद वा (?)॥<br>
तवैव परिचर्य्यया भवति धर्मचर्याऽथवा।<br>
धनाधिपधनाधिपत्यमपि (?) धन्यतायै नमः॥२॥

त्वयैव रमणीमुखेन्दुरमणीयता तन्यते।<br>
त्वया यदि कलीकृता सकलबालिकाकाकली॥<br>
त्वया भुवि कुमारका अमरवाक्! कुमारन्ति वा।<br>
न किञ्चिदपि किञ्चन क्वचिदकिञ्चनोऽभ्यर्थये॥३॥

त्वयीह कलयन्ति मे बहु कुतूहलं किङ्कराः।<br>
त्वदीयपदसेविकाऽस्त्यशिवशारिका सारिका॥<br>
तवाभ्यसनतःसुखी शुकति मामको वा शुकः।<br>
शिवाय न शिवं शिवां च मनसापि सम्मानये॥४॥

त्वमेव परिपठ्यसे सकलपाठशालासु चेत्।<br>
सभासु च मनीषिणामुत सभासु सम्भाष्यसे॥<br>
त्वमेव यदि भारती भवसि भारते भारति!<br>
स्वराज्यमपि सार्वभौममपि नैव सम्भावये॥५॥



पञ्चदशे वर्षे १५ ]          भाद्र पूर्णिमा १९९६          [ ३ संख्या




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीपोलब्धमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—

त्यक्त-महामहोपाध्यायपदवीको

**महामहाध्यापकः श्रीपञ्चानन-तर्करत्न-भट्टाचार्यः ।**

सहकारि-सम्पादकः—

**अवधेशप्रसादशर्मा द्विवेदः**

उद्गम—स्थानम्—

**श्रीभारतधर्ममहामण्डलम्, ( जगत्गंज ) काशी**

—:o:—

वार्षिकं मूल्यं मुद्रात्रयम् ।

संरक्षकेभ्यः ५) । वहिर्भारतम् ६)          छात्रेभ्यः पुस्तकालयेभ्यश्च १)

---

## विषय सूची ।











# सूर्योदयः ।

पञ्चदशवर्षे १५ } भाद्रपद-पूर्णिमायाः १९९६, सितम्बर १९३९ । { ३-संख्या

## संस्कृतभाषाया अभ्युदयोपायाः ।

भारतवर्षस्य सर्वोऽपि धार्म्मिकः सामाजिको राजनैतिकः साहित्यिको व्यवहारोऽद्यापि संस्कृतभाषायामेव विद्यते । वेदसमयादारभ्याद्यावधि संस्कृतभाषैवाविहतप्रचारेह जगति सर्वत्र समादृता आसीद्, इति संस्कृतभाषायां लिखितानां विविधविषयकाणां ग्रन्थानां समुपलब्ध्या सर्वजनसमक्षमेवास्ति । प्राकृत-पालीमागधीप्रभृतिदैशिकभाषाप्रचारसमयेऽपि बौद्धैर्विद्वद्भिः स्वसिद्धान्तस्थिरीकरणधिया संस्कृतभाषायामेव ग्रन्था विरचिताः सन्ति । अद्य यावत् द्वीपद्वीपान्तरेऽपि बहवः संस्कृतशब्दा अविकृता विकृता वा तत्तद्द्वीपनिवासिभिर्व्यवहृता अस्याः प्रचारातिशयं सूचयन्ति ।

इत्येवं सर्वत्र सर्वतः सर्वैःसर्वथा समादृतेयं सुरभारती सम्प्रति सङ्कुचितप्रचारा भारतेऽपि कियत्सु एवाङ्गुलिगण्येषु प्रान्तेषु तत्रापि ब्राह्मणवर्गान्तर्गतेषु कियत्सु एव विशिष्टपुरुषेषु कियत्यैव मात्रया विद्यत इति महद् विषादास्पदम् । तत्रापि च अद्यत्वे पाश्चात्यभाषायाःप्रचारबाहुल्येन परम्परागतं सदाचारं सञ्जिहाने जनवर्गे काशीकाञ्चीमायावन्तिकादिपुर्य्यामपि प्राचीनानां संस्कृतविदुषां सन्तानाः संस्कृतभाषां विहाय पाश्चात्यदेशोद्भवामिंग्लिशभाषामेवाधीयते । ततोऽप्यपरोऽयं गण्डस्योपरि विस्फोटकवत् संस्कृतभाषाप्रचारे विघ्नःसंवृत्तो विद्यते, यत् प्राचीनाध्ययनाध्यापनपद्धतिरामूलतः परिवर्तिता विद्यते । यया संस्कृतभाषाया व्याकरणमात्राध्ययने एव सर्वोऽप्यायुषो भागः क्षपितो जायते । संस्कृतभाषया विषयान्तरस्याध्ययनार्थं समय एव नासाद्यते । अतश्च देशकालात्मज्ञै र्विद्वद्भिरस्य परिष्कृतौ सर्वथा प्रयत्नो विधेयः । संस्कृतभाषायाः पठनपाठनपद्धतिर्यदि परिष्कृता स्यात्तर्हि पुनरपि संस्कृतभाषायाः पूर्वसदृश एव सर्वत्राविहतप्रचारः स्यात् । यतो हि अस्यां सुरभाषायां बहवो गुणाः सम्भृताः सन्ति ।

सर्वप्रथमं सारल्यं, माधुर्य्यं, गाम्भीर्य्यं, सर्वविधगहनातिगहनभावव्यञ्जनसामर्थ्यम्, किं बहुना जगति सर्वाभ्युन्नतसमाजस्थितौ तद्भाषायां ये ये गुणा

अपेक्ष्यन्ते ते सर्वेऽप्यस्यां देवभाषायामामूलचूड़ं सम्भृताः सन्ति । परन्तु सम्प्रति पठनपाठनपद्धते वैगुण्येन प्रचारशैथिल्येन च सर्वेऽपि गुणाः—

"आस्वाद्यतोयाः प्रभवन्ति नद्यः । समुद्रमासाद्य भवन्त्यपेयाः"

इति लोकसरणिवत् दोषतयैव परिणताः सन्ति ।

पश्यन्तु, सर्वतोऽभ्यर्हितस्य सारल्यस्य गुणस्य कीदृगपलापो विद्यते। सम्प्रति इंग्लिशकुमारशालामहाशालासु संस्कृतस्य काठिन्यभयादेव सर्वैं तत्रत्याः छात्राः संस्कृतभाषाध्ययनं विहाय विषयान्तरं यवनान्यध्ययनं विज्ञानचित्रकलाध्ययनादिकमङ्गीकुर्वन्ति । अतश्चास्या भाषाया येन सर्वाभ्यर्हितः सारल्यगुणः पुनरप्युद्भूतः स्यादेवं प्रयत्नस्तन्मर्मज्ञैः प्रथममनुष्ठेयः । सच मद् दृष्टौ अयमेव भाति यत् प्राचीनकाले यथा बाल्यावस्थायामेव सामान्य-शब्दानाम् सामान्यधातूनाञ्च रूपाण्यभ्यस्य संक्षेपतो लिङ्गानुशासनञ्च ज्ञात्वाऽष्टाध्यायीसूत्राणि चाभ्यस्य तदर्थज्ञानं कृत्वा पदानि संसाध्य पदज्ञानवन्तो बालाः सर्वमपि वाल्मीकीयरामायण-महाभारतप्रभृति इतिहासपुराणपुस्तकं स्वयमेव पठितुं समर्था भवन्ति स्म, साहित्यस्थाने च महाकवीनां भासकालिदासप्रभृतीनां ग्रन्थानेव गुरुदेवानां केवलं साहाय्यमाश्रित्य स्वयमधीयते स्म, तथैवाधुनाऽपि सर्वप्रथममियमेव पद्धतिः सर्वैः समादरणीया। मातृभाषाध्ययनानन्तरं तत्समकालमेव वा बालाः केवल-शब्दरूपधातुरूपघोषणमात्रे एव व्यापारयितव्याः । न तु लघुकौमुदीघोषणे। तत्रापि सामान्यतोऽभ्यासप्रकारः सूचनीय एव। येन घोषणे सारल्यम् स्यात् । इत्थञ्च सामान्यतः पदज्ञानवन्तो बालाः परस्परं संस्कृतभाषयैव व्यवहर्तुं क्षमा भविष्यन्ति। सम्प्रति तु सर्वप्रथमं लघुकौमुदीमधीयानाः पदज्ञानविरहिताः सामान्यतोऽपि संस्कृतशब्दज्ञानशून्याः गुरुभिश्च सवृत्तिकं सप्रयोगं सूत्रं घोषितुं प्रेर्यमाणाःसंस्कृतभाषां महतीं कठिनां मन्यमानाः तदध्ययनादेवोपरमन्ते । बहवश्च बद्धपरिकरा यथाकथमपि मनसोद्वेजिता अपि महता प्रयासेन साहसातिरेकात् सूत्राणि सवृत्तीनि सप्रयोगाणि जोघुष्यमाणाः सुबन्तं यावत् केचित् तिङन्तं यावदधीत्य उद्विजन्मानाअध्ययनादेव परिग्लायन्ति। यदर्थं साम्प्रतिकी लोकोक्तिरस्ति—

केचिन्नष्टाः सुप्युपास्यप्रयोगे ।
केचिन्नष्टाः शब्दसाधुत्वजाले

केचिन्नष्टाः फक्किकावादमग्नाः
सर्वे नष्टा यङ्लुङन्तप्रयोगे । इत्यादि ।

ये च महासाहसिकाः शरीरं सम्पात्य घोषणपरा मनो बुद्धिञ्च कुण्ठयित्वा घोषणमात्रव्यापारेण कल्पनां शक्तिं शोषयित्वा परीक्षापाथोधिं समुत्तीर्य्य निःसरन्ति ते जगति अनुपयुक्ताः केवलम् यथाकथमपि अध्यापनमात्र-व्यापारभाजो भवन्ति । इति किं बहूक्त्या सर्वथा विगुणितो विद्यते संस्कृतभाषाध्ययनाध्यापनप्रकार इति कथं सर्वमान्या संस्कृतभाषा साम्प्रतं प्रसृतप्रभावा स्यात् स्याच्च सर्वत्र सर्वैः पूर्ववत् समादृता । अतश्च

मात्सर्य्यमुत्सार्य्य विचार्य्य कार्य्य-
मार्य्याः समर्य्यादमिदं वदन्तु
गोप्यास्ति गीर्वाणगिरा कथञ्चिद्
आहो विलोप्यास्ति युगप्रभावात् ॥

यदि च तृतीयचरणस्थ एव भावोऽभिप्रेतोऽस्ति चेत् सर्वेऽपि बद्धपरिकरा भूत्वा सरलया पद्धत्या पूर्वं संस्कृतशब्दानां पदज्ञानमात्राधायकप्रकारेण ज्ञानं विधाय संस्कृतभाषणानुरक्ताः सन्तः परस्परं संस्कृतभाषायां व्यवहारं कुर्वन्तु । प्रतिपाठशालञ्च संस्कृतभाषणशक्तिसंवर्द्धनाय अवकाशतिथिषु वादविवादसरण्या संस्कृतभाषायां शास्त्रार्थं कुर्वन्तु । गुरवोऽपि परिश्रमं कुर्वन्तः शिष्याणां व्याकरणशास्त्राध्यापनवेलायां अष्टाध्यायीक्रमेण सूत्रार्थं कारयित्वा प्रयोगसंसाधनं कारयन्तु । नहि वृत्तिघोषणप्रकारेण । एवञ्च सर्वतः संस्कृताध्ययनसरलतायां जायमानायां प्रचारोऽपि तदीयः सर्वत्र स्यात् । दर्शादर्शि च ब्राह्मणातिरिक्ता अन्येऽपि क्षत्रियवैश्यादयः संस्कृताध्ययने व्यापृताः स्यु र्येन पूर्ववत् तन्तुवाय-कर्मकरप्रभृतयोऽपि संस्कृतज्ञा भवेयुः । यतश्च संस्कृतभाषायाः समादरेण सह सनातनधर्मस्य ब्राह्मणवर्गस्य भारतीयसंस्कृतेः आर्य्यसभ्यतायाश्चैकपदे एव स्यात् सर्वतः सर्वथा समादरो भूयोऽभ्युदयश्च भवेत् संस्कृतभाषाया इति ।

× × × ×

# महामहोपाध्याय दिवङ्गता मधुसूदनशर्म्माणः !

जगति वेदविज्ञानस्याद्वितीया विद्वांसो जयपुरराजमान्या महामहोपाध्यायाः पण्डितमधुसूदनझा विद्यावाचस्पति-महोदया भुवमिमामपहाय दिवं प्रस्थिता इति सहसा समाचारं समाकर्ण्य वयं स्तब्धाःस्म । अहो ! कालमहिम्नोऽनुल्लङ्घनीयोऽभिनिवेशः । कोऽपि महामहिमशाली मरणधर्मा कालप्रभावमत्येतुन्नैव पारयति । इमे हि स्वजन्मना मिथिलाभुवमलङ्कुर्वाणा वाल्ये काश्यां व्याकरणवेदादिकमधीत्य जयपुरराजाश्रिता वैदिकशिरोमणयो वेदविज्ञानं नवीनपद्धत्या परिष्कर्तुंकामाः लोके परमख्यातिजुषोऽशेषितस्वकर्तव्या एव स्वावस्थाया आसन्नसप्ततितमे वर्षमध्ये मृत्युना समाक्रान्ताः । सर्वेऽपि अदसीयाः सुहृदः सहचराः सर्वथाऽमीभिः समेधितोत्साहा वेदविज्ञानपरिशीलने बद्धपरिकरा आसन् । तेषामध्यवसायः कामपि सीमानं नैवाजगाम तावदेवेमे मध्येमार्गं तान् विहाय दैवपरायत्ताः परलोकं प्रस्थिताः । सर्वमपि मनश्चिन्तितं मनस्येव विलीनम् । अस्तु प्राक्तनैरपि कविभिर्धातुरीहितं बहुधा समुत्प्रेक्षितमेवेह विषये तथाहि —

सृजति तावदशेषगुणाकरं पुरुषरत्नमलङ्करणं भुवः ।
तदपि तत्क्षणभङ्गु करोति ! चेदहह ! कष्टमपण्डितता विधेः ॥

सम्प्रति तदीयशोकसन्तप्ता वयमिदानीं तदीयवियोगदुःखाऽनलसन्तप्तेभ्यः तत्परिवारजनेभ्यः सुहृद्भ्यश्च समवेदनां प्रकटयन्तस्तदीयचिरशान्तिं श्रीकाशीविश्वनाथात् समभ्यर्थयामहे । ( स० सम्पादकः )

## शोकप्रस्तावः ।

अक्टूबरमासस्य ५ म तारिकायां श्रीभारतधर्ममहामण्डलीयस्य उपदेशकमहाविद्यालयस्य विशेषाधिवेशनं सम्पन्नम् । तत्र भारत प्रसिद्धविदुषां विद्यावाचस्पति श्री पण्डितमधुसूदनझा महोदयानां देहावसानमुद्दिश्य तेषां गुण-गौरवादिवर्णनपुरस्सरं साहित्याचार्य्य श्री पण्डित वासुदेवद्विवेदिना निम्नलिखितः शोकप्रस्ताव उपस्थापितः । स च सर्वसम्मत्या स्वीकृतः । तथाहि—

"उपदेशकमहाविद्यालयस्येदमधिवेशनं जयपुरराज्यप्रधानपण्डितानां भारतप्रसिद्धविदुषां श्रीमधुसूदनझामहोदयनां देहावसाने हार्दिकं शोकं प्रकटीकरोति । तथा च तेषां शोकसन्तप्तपरिवारेण सहान्तरिकीं समवेदनां दर्शयद्दिवङ्गतस्यात्मन-

श्चिरशान्तिलब्धये भगवन्तं प्रार्थयते। एषां महोदयानां महामण्डलेन सह नितरां घनिष्ठः सम्बन्ध आसीत्। अवसरेऽवसरे तैर्निजसम्मतिप्रदानद्वारा महती सहायताऽनुष्ठीयते स्म। अल्पीयांसि दिनानि व्यतीतानि यदेभिर्महानुभावैः स्वरचितानि नानाविधपुस्तकानि महामण्डलपुस्तकालयाय प्रेषितानि यानि सुरक्षितानि सन्ति। एवैं दिकविज्ञानजिज्ञासूनां विद्यार्थिनां महानुपकारः सम्पद्यते सम्पत्स्यते च।"



## प्राप्तग्रन्थसमालोचनम्।

### अमरमङ्गलनाटकम्।

नानादर्शनपरमाचार्य्य सर्वतन्त्रस्वतन्त्र महामहाध्यापक श्रीपञ्चाननतर्करत्न भट्टाचार्य्य विरचितम्, वीररसप्रधानं संस्कृतभाषामयम् सटीकम्। मूल्यं छात्राणां कृते १)। तदन्येषां कृते २)। प्राप्तिस्थानम् श्रीयुक्त श्रीजीवन्यायतीर्थभवन, पो० भाटपाड़ा, जि० २४ परगन्ना।

सम्प्रति संस्कृतसाहित्ये वीररसप्रधानं नाटकम् अङ्गुलिगण्यमेव विद्यते। तत्रेदं नाटकं मेवारभूपतिषु प्रसिद्धस्य राणाप्रतापस्यात्मजममरसिंहनायकमधिकृत्य विरचितं विद्यते। तत्र चित्तोरविजयप्रतिज्ञापूरणं हि नाटकफलमुपदर्शितमस्ति। मानसिंह-समरसिंह-प्रभृतयः,प्रतिनायकोपनायकपदमलंकुर्वन्ति।विषयविन्यासनैपुण्ये कवेः प्रतिभाया महान् प्रकर्षः सूच्यते। त एव ऐतिहासिका विषया नाटकभूमिकामाश्रित्येदृशमुद्योतिता विद्यन्ते, यतश्च पठितुर्वीररसाप्लुतमन्तःकरणमेवं पुस्तकासक्तं भवति, यद्विना समाप्तिं विराममेव न लभते। किं बहुना भाषायां प्रसादेन सह ओजोऽर्थगाम्भीर्यध्वनिप्रभृतयः सर्वेऽपि अपेक्षिता गुणा विद्यन्ते। पद्यानि च यथास्थितरसव्यञ्जनायां पर्य्याप्तानि पात्राणां स्वभावप्रकाशोऽपि यथावदुपकल्पितो विद्यते। यादृशो वीरः प्रतापस्तादृश एवास्य कविः संस्कृतवाङ्मयस्य वीरः स्वप्रतिभानुकूलमेव च विषयोपन्यासं कृतवान्।भाषापि च वीररसव्यञ्जिका पात्राणि चैतिहासिकानि वीरप्रकृतीनि चेति "मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः," इति श्रीहर्षपद्यमेव याथार्थ्यं व्यनक्ति। मनाग् विद्वद्विनोदाय द्वित्राणि पद्यानि निर्दिश्य विरमामि विस्तरात्। तथाहि–

राजा · शालुम्ब्रापते अद्य खलु युक्तमभिहितम्, महाराजप्रतापसिंह सहचरेण भवता–तदहमद्य प्रतिजाने—

यावन्मे शस्त्रपातक्षुभितहयगजोद्भ्रान्तिविभ्रान्तयोधा
रक्तोद्गारारुणाङ्गा जवननरपतेर्वाहिनी मुक्तकेशा।
देशादस्मान्न गच्छत्यपचितविभवा नापि यावच्चितोरं।
प्रत्यापद्ये न तावत् कथमपि जनकस्यासनं संस्पृशामि।

तदद्यारभ्य–

सामन्ता मदनुव्रता रणभुवं गच्छन्तु तिष्ठन्तु वा
पौरा मे समयानुपालनविधिं वाञ्छन्तु नेच्छन्तु वा।
सैन्यं किंचन मामनुव्रजतु वा मा वा तथाप्यात्मना
यावज्जीवमहं स्थितोऽस्मि समये साक्षी भवत्वीश्वरः।

भरतवाक्यम्–

सन्तु स्वधर्मनिरता मनुजाः समस्ताः प्रीतिं सजातिषु भजन्तु विहाय मायाः।
संपूजयन्तु जननीमिव जन्मभूमिम् भूपालभक्तिनिरताश्च चिरं भवन्तु।

इत्येवं वीररसप्रधानं स्वदेश–स्वधर्म–स्वसमाज–स्वजातिभक्तिविस्तारकं नाटकं संस्कृत-वाङ्मये विरलमेवोपलभ्यत इत्येतस्य नाटकस्य प्रचारमहं सर्वथा कामये संस्कृतपरीक्षा संचालकानधिकारिणश्चानुरुणध्मि स्वपरीक्षा-पाठ्यपुस्तकतया निर्धारयितुमिति पठित्वैवास्य गुणदोषं विभावयन्तु सुधियः।

समालोचयिता–(महामहोपाध्यापकः श्रीगोपालशास्त्री। 'दर्शनकेशरी, काशी)

× × × × ×

अद्वैतसिद्धान्तसारसंग्रहः (प्राचीनः) मूल्यम् ।≈) प्राप्तिस्थानम्– निर्णयसागराध्यक्षः कालवादेवी, मुम्बई।

पुस्तकमिदं ईशवीय षोडशशताब्द्या मध्यकाले लब्धजनुषां श्रीमन्नारायणाश्रमाणां वेदान्तविषयिणी कृतिः। पञ्चपञ्चाशता पृष्ठैरस्मिन् पुस्तके प्रायः सर्वेषां वेदान्तसम्बन्धिनां सिद्धान्तानां प्राञ्जलभाषया प्रतिपादनमवलोक्यते। तदिदं पुस्तकं दुर्दैववशादद्यावधि अप्रकाशितमेवासीत्। इदानीं तैलङ्गोपाह्वश्रीरामकृष्णसूनुभिः श्रीगङ्गेशशर्म्मभिः सुमहता परिश्रमेणादर्शपुस्तकं हस्तलिखितं संशोध्य वेदान्तविषयकज्ञानपिपासूनां हिताय प्रकाशतां नीतम्।





## धर्मानुरोधः ।

(ले० पं० माधवप्रसादशर्मा देवकोठा, नेपाल-पालपा । )

अये भोः संस्कृतच्छात्रा ! आर्यधर्मावलम्बनाः ।
पश्यन्त्येव भवन्तोऽद्य कीदृश्यस्ति परिस्थितिः ? ॥ १ ॥
प्रविक्षोभ्याऽन्त्यजान्भ्रातॄनुद्दण्डैर्नेतृमानिभिः ।
बलादुपासनाकाण्डमर्यादा बत ! खण्ड्यते ॥ २ ॥
सर्वे जीवाः समीहन्ते शाश्वतं परमं सुखम् ।
तच्चोक्तं ब्रह्मणो रूपं यतो १नाऽन्याप्यमिष्यते ॥ ३ ॥
ब्रह्मणैव २ततो भाव्यं ३तत्त्वं ४तज्ज्ञानतो भवेत् ।
५तच्च ६ स्यात्तदुपास्त्यैव निर्गुणा सगुणा च ७सा ॥ ४ ॥
अत्यन्तसूक्ष्मालम्बत्वात्तत्र चाऽऽद्या सुदुष्करा ।
असंयतेन्द्रियज्ञानैरजातसमबुद्धिभिः ॥ ५ ॥
स्थूलालम्बनसद्भावात्सुकरा नु गुणान्विता ।
सगुणोपासना तस्मात्सर्वसाधारणी मता ॥ ६ ॥
निर्गुणोऽप्येष भगवान्भक्तानुग्रहतत्परः ।
उपासना प्रसिद्ध्यर्थं मूर्तिमानवभासते ॥ ७ ॥
उपासकरुचीनां हि वैचित्र्याज्जगदीश्वरः ।
एकोऽप्युपास्यो भगवान् बहुरूपी विराजते ॥ ८ ॥
व्यापकोऽपि परेशोऽसौ सुपरिच्छिन्न-बुद्धिभिः ।
परिच्छिद्य गृहीतोऽपि श्रेयोदातैव जायते ॥ ९ ॥

---

(१) ब्रह्मभिन्नेन अलभ्यम् । (२) ब्रह्मभिन्नेन अलभ्यत्वाद् हेतोः ।
(३) ब्रह्मभावः । (४) ब्रह्मज्ञानात् । (५) ब्रह्मज्ञानं च ।
(६) ब्रह्मोपासनयैव । (७) ब्रह्मोपासना ।

अतो यथागमं मूर्त्तिं परिकल्प्य शिलादिभिः ।
प्राणप्रतिष्ठाविधिना तत्राऽसौ सन्निधाप्यते ॥ १० ॥
स्वीकुर्वंस्तत्र च स्थित्वोपासनां तानुपासकान् ।
मुक्तिमार्गे यथाभावमग्रे सारयतीश्वरः ॥ ११ ॥
अतोऽस्मिन्भारते वर्षे प्रत्ना नूत्नाश्च भूरिशः ।
मन्दिरेषु विराजन्ते मूर्त्तयः परमात्मनः ॥ १२ ॥
एताश्च रक्ष्याः संसर्गादन्त्यजानां प्रयत्नतः ।
तैर्हि स्पृष्टेषु पीठेषु न सान्निध्यं स रक्षति ॥ १३ ॥
परं कालः समायातः कीदृगद्य हि नायकाः ।
प्रवेशयितुमिच्छन्ति मन्दिरेष्वन्त्यजानपि ॥ १४ ॥
श्रेयसश्च्याविताः शोच्या भ्रातरस्तेऽन्त्यजातयः ।
युष्माभिरित्थं बोद्धव्या दयया शास्त्रयुक्तिभिः ॥ १५ ॥
"जन्मदात्री महागुर्वी स्वशरीरप्रपोषिणी ।
साऽप्यार्य्यैः स्पृश्यते नैव सूतिका वा रजस्वला ॥ १६ ॥
जन्मदाता गुरुः पूज्यः शुभमार्गप्रवर्त्तकः ।
सोऽप्यार्य्यैः स्पृश्यते नैव प्रेतकृत्यं समाचरन् ॥ १७ ॥
आचारनिष्ठो विद्यावान् ब्राह्मणो हि जगद्गुरुः ।
सोऽप्यार्य्यैः स्पृश्यते नैव शावाशौचसमन्वितः ॥ १८ ॥
शुद्धसद्भावसंपन्नः सखा प्राणाधिकप्रियः ।
सोऽप्यार्य्यैः स्पृश्यते नैव सन्ध्योपासादिकर्म्मसु ॥ १९ ॥
अस्पृश्यत्वप्रथास्वासु न घृणा हन्त ! कारणम् ।
किन्त्वाध्यात्मिकविज्ञानमृष्युक्तं वेदमूलकम् ॥ २० ॥
या भूदन्नमये कोषे विकारः स्पर्शमूलकः ।
न स स्यादिति को वेद प्राण-चित्तमयादिषु ॥ २१ ॥
'कदा कस्य क्व वा स्पर्शात्कस्य विक्रियते च किम् ।'
इत्याध्यात्मिकविज्ञानमीश्वरो वेत्ति सर्वशः ॥ २२ ॥

(क्रमतः)



## ब्राह्मणानां श्रेष्ठत्वं जन्मना वर्णव्यवस्था च

निबन्धा—पण्डित दीनानाथशर्मा शास्त्री सारस्वतः
सनातनधर्म संस्कृतकालेजोपाध्यक्षः, मुलतान

( क्रमागता )

वार्त्तिककारेणाऽपि 'शूद्रा चाऽमहत्पूर्वा जातिः' इत्यनेन जातिशूद्रायाष्टापं कृत्वा जन्मना वर्णः साधितः । शूद्रस्य ( भिन्नवर्णा स्त्री तु तेन 'शूद्री' मता; न तु शूद्रा ( शूद्रजातीया ) । महाभाष्ये——'आकृतिग्रहणा जातिः' इति जातिसाधारणलक्षणेन ब्राह्मणशूद्रयोराकृतिसाम्येन समानजातिमत्त्वस्याऽतिप्रसक्तौ प्राप्तायां 'सकृदाख्यातनिर्ग्राह्या' इति द्वितीयं धर्म्मशास्त्रसम्मतं जातिलक्षणं कृतम् । अर्थात् सकृदेकस्यां व्यक्तौ कथनात् ( शूद्रादिके शूद्रत्वे उपदिष्टे ) व्यक्त्यन्तरे (तदपत्यसहोदरादिषु ) तदुपदेशं विनाऽपि सा जातिर्भवतीति भाष्याशयः । अतएव तन्मतेऽपि जननिमित्तकब्राह्मणत्वादिजातिः सिद्धा । तेनैव महाभाष्यकृता 'अतिशायने तमबिष्ठनौ' ५।३।५५ इति सूत्रे स्वीकृतम्—"जननेन या प्राप्यते सा जातिः" । 'आकृतिग्रहणा जातिः इति प्रथमलक्षणन्तु मनुष्यत्वादिजातिसाधकम् । सा मनुष्यजातिस्तूभयोः ब्राह्मणवृषलयोः समाना । अत एवाऽत्र कैयटेनोक्तम्—'आकृतिग्रहणा-एतेन गोत्वादिजातिर्लक्षिता, ब्राह्मणत्वादिस्तु न संगृहीता, ब्राह्मणक्षत्रियादीनां संस्थानस्य सदृशत्वादिति तत्सङ्ग्रहायाऽऽह—लिङ्गानामिति ; जातिलक्षणमिति ब्राह्मणत्वादिरेव लक्ष्यते" इति । एवं 'ब्राह्मणी' त्यादौ जातावेव ङीन् भवति, नतु गुणकर्म्मानुसारिता तत्र क्वापि निर्दिष्टा । एवं 'ब्राह्मोऽजातौ' ६।४।१७१ इति सूत्रे जातित्वाऽभावे 'ब्राह्म' इति, जातौ त्वपत्ये 'ब्राह्मणो' मतः । एवं क्षत्त्रस्याऽपत्यं जातौ क्षत्रियो मतः 'क्षत्त्राद् घः' ४।१।१३८ । जातित्वाऽभावे तु 'क्षात्त्रिः' । एवं वेदाङ्गप्रकाशे १६५ पृष्ठे स्वा० दयानन्देनाऽस्य सूत्रस्याऽयमर्थः स्वीकृतः' प्राक्तनस्याऽपि ।

महाभारते-'भगवन् ! भगनेत्रघ्न ! कालसूदन ! शङ्कर ! इमे वर्णाश्च चत्वारो विहिताः किं स्वभावतः ? उताहो क्रियया वर्णाः सम्भवन्ति महेश्वर ! एवं मे संशयः प्रश्नस्तं मे छेत्तुं त्वमर्हसि' इति पार्वती प्रश्ने शिवस्योत्तरम्—'स्वभावादेव

विद्यन्ते चत्वारो ब्राह्मणादयः। एकजात्या सुदुष्प्रापम् अन्यवर्णत्वमागतम् । तच्च कर्म्मविशेषेण पुनर्जन्मनि जायते ' अनुशा० । एवमनुशासनपर्व्वारम्भेऽपि 'ब्राह्मण्यं खलु दुष्प्रापं त्रिभिर्वर्णैर्नराधिप' ३।१ इति भीष्मेण साधितमध्यायद्वितये 'ब्रह्म-बीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः। जातिमात्रोपजीवी च स भवेद् ब्राह्मणः समः' व्यासः ४।४३। अत्र जन्मना ब्राह्मणवर्णताऽऽदिष्टा गुणकर्म्माद्यभावेऽपि। 'सैषा क्षत्रस्य योनिर्यद् ब्रह्म, तस्माद् यद्यपि राजा परमतां गच्छति, ब्रह्मैवाऽन्तत उपनिश्रयति स्वां योनिम्, य उ एन ँ् हिनस्ति, स्वा ँ् स योनि मृच्छति, स पापीयान् भवति, यथा श्रेया ँ् स ँ् हि ँ् सित्वा ' शतपथ० १४ । ४। २ । २३ स्पष्टम्।

एवं 'ब्राह्मण्यं तात ! दुष्प्राप वर्णैः क्षत्रादिभिस्त्रिभिः। परं हि सर्वभूतानां स्थानमेतद् युधिष्ठिर ! अनुशासनपर्बणि महाभारते २७।५। एवमत्र महाभारतीय-इन्द्रमतङ्गसंवादोऽप्यत्रार्थे उपोद्बलकः । स महाभारतस्याऽनुशासनपर्व्वणि २८ अध्याये द्रष्टव्यः। तत्रैवेमे श्लोकाः—'तिर्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति। स जायते पुक्कसो वा चाण्डालो वाऽप्यसंशयः।६। पुक्कसः पापयोनिर्वा यः कश्चिदिह लक्ष्यते। स तस्यामेव सुचिरं मतङ्ग ! परिवर्त्तते।७।ततो दशशते काले लभते शूद्रतामिति शूद्रयोनावपि ततो वहुशः परिवर्त्तते । ८ । ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि। वैश्यतायां चिरं कालं तत्रैव परिवर्त्तते । ९ । ततः षष्टिगुणे काले राजन्यो नाम जायते । राजन्यत्वे चिरं काले तत्रैव परिवर्त्तते। १०। ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम्। अनु० २८। ११ । तत एवाऽयं श्लोकः—२९ । ११ 'वह्वीस्तु संविशन् योनीर्जायमानः पुनः पुनः। पर्याये तात ! कस्मिँश्चिद् ब्राह्मणो नाम जायते' २७ । ६ । एतेन सिध्यति यद्-एकस्मिन्नेव जन्मनि वर्णान्तरस्य ब्राह्मणत्वं न जायते ; प्रत्युत जन्मजन्मान्तरेषु। अत एव 'जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा ' इति याज्ञवल्क्यस्मृतौ आचाराध्याये ९६। 'अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद् युगात् ' मनु० १०।६४ । तेन पुराणादिषु यदि क्वापि एतद्विरुद्धवचनानि दृश्येरन्, तानि कर्म्मप्रशंसामात्रपरतायां योज्यानि ; तथैव च सुव्यवस्थितानि भवन्ति। 'तयोर्द्वैधे स्मृतिर्वरा' व्यासस्मृ० १ । ४।

यत्तु क्वचित् पुराणे 'कर्म्मणा ब्रह्मतां गतः' इति लभ्येत ; तत्राऽयमर्थो यतः कर्म्मणा स ब्रह्मभावं-मुक्तिं गत इति । अत एव मनुनाप्युक्तम्-'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनूः ७२।२८ ब्राह्मीत्यस्य ब्रह्मपद (मुक्ति) प्राप्ति-

योग्येत्यर्थो न तु ब्राह्मणजातीयेति ।। अन्यथा 'ब्राह्मोऽ जातौ' ६।४।१७१ इति टिलोपाऽभावः स्यात्; जातौ तु ब्राह्मण इति भवत्यपत्येऽर्थेजातेरन्यत्र तु ब्राह्म इति । तेन कर्म्मणा ब्रह्मता (मुक्तिः) नानुपपन्ना । कर्म्मणो महिमा श्रोतव्यः । * 'कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः' गीता ३।२० सा संसिद्धिस्तु ब्रह्मपदप्राप्तिः; न कश्चिज्जनको ब्राह्मणनाम्ना श्रुतः; किन्तु ब्रह्मत्वं जीवन्मुक्तत्वं गतः । अयमेव 'कर्म्मणा ब्रह्मतां गतः' इति पुराणस्थेषु श्लोकेष्वाशयः । अत एव-'परे ऋषयो मनीषिणः परं कर्म्मभ्योऽमृतत्वमानशुः' इति श्रुतिरुपस्थापिता श्रीवाचस्पतिमिश्रेण सांख्यद्वितीयकारिकाव्याख्याने ॥ इति 'ब्रह्म' शब्दव्यवस्था ज्ञेया । क्वचिद् 'ब्राह्मण' शब्दे दृष्टे त्वियं व्यवस्था यत् 'ब्राह्मण' शब्दो यौगिकोऽपि भवति 'ब्रह्म जानातीति ब्राह्मणः' इति रीत्या । एवं 'शूद्रशब्दोऽपि यौगिको भवति-'शुचमभिद्रवति, शुचावाऽभिद्रवति, अवयवार्थसम्भवाद् रूढ्यर्थस्य च सम्भवात्' वेदान्तदर्शन० शाङ्कर १।३।३४। एतादृशशाब्दिक ब्राह्मणत्वन्तु विदुरादीनामप्यस्त्येव । एवं शाब्दिक परमात्मत्वन्तु महात्मसु साधुष्वपि-वर्त्तते; तर्हि किं ते वस्तुत एव 'परमात्मानो' जाता ईश्वरा वा ईशन क्रियायोगात् ? एवं शाब्दिकपौरुषेयत्वं तु वेदेष्वपि वर्त्तते 'पुरि शेते इति पुरुष इति व्युत्पत्तेः 'सहस्रशीर्षा पुरुषः' ३१।१ इति याजुषश्रुतेः । एवं शाब्दिकपौरुषेया अपि ते वेदा तथा व्यवहारेऽपौरुषेया भवन्ति; यथ ब्रह्मज्ञातारोऽब्राह्मणा अपि अब्राह्मणा एव । एवं शाब्दिकशूद्रा अप्यशूद्रा एव जानश्रुतिप्रभृतयः । अत्र विशिष्य 'मधुरवाण्यां' २।८ मल्लेखे द्रष्टव्यम् ।

अधुना केचिदाक्षिप्तश्लोकाः परीक्ष्यन्ते । तेषु 'शूद्रो ब्राह्मणतामेति' 'जन्मना जायते शूद्रः' इत्याद्याक्षेपाणामुत्तराणि 'सूर्योदये' ३।२०, २४ ब्रह्म-भविष्यपुराणस्थैतद्विषयकश्लोकानामुत्तराणि 'सूर्योदये' ११। ९-१०-११ द्रष्टव्यानि । नहुषयुधिष्ठिरसंवादे-'जातिरत्र महासर्प ! मनुष्यत्वे महामते ! सङ्करात् सर्ववर्णानां दुष्परीक्ष्येति मे मतिः' महा० वन० १८०।३१ । इत्यनेन गुणादिपरीक्षायास्तु तदाऽऽवश्यकता प्रतिपादिता, यदा खलु वर्णसङ्करताऽऽशङ्का स्यात् । अत एव तु वेदे उक्तम् 'देवाः पितरः पितरो देवाः ! यो अस्मि सो अस्मि' अथर्व० ६। १२३।३ 'स पचामि स ददामि स यजे' अथर्व० ६।१२३।४ 'योऽस्मि सोऽस्मि' इति

* महिमन् शब्दः पुंसि श्रोतव्यः ।

कथनाज्जन्मना वर्णः साधितः। गुणकर्म्मणा वर्णो मते तु तस्य तत्तद्वर्णविनिश्चयवशाद् 'यो अस्मि सो अस्मि' इति कथनं व्यर्थमासीत्। तेन जन्मना पूर्व्वजन्मगुणकर्म्मभिश्च तत्तद्वर्णजातिः सिद्ध्यतीति। अत एव भगवद्गीतासूपनिषत्सु—'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' १३।२१ सद्योनिर्ब्राह्मणादिः। असद्योनिश्शूद्रादिः। तासु यद् जन्म उत्पत्तिर्भवति, तत्र कारणं गुणसङ्ग एव। सच गुणसङ्ग एतज्जन्मकारयिता। तेनाऽत्र पूर्व्वजन्मनो गुणसङ्ग एव कारणं समजनि; यतो योनिजन्म जन्मान्तरे प्राप्यते पूर्व्वकर्म्मणा।

अथ च क्वचिद् यदि ब्राह्मणशूद्रशब्देनोक्तः; तत्र 'तात्स्थ्यात् ताच्छब्द्यम्; ताद्धर्म्यात् ताच्छब्द्यम्, तत्सामीप्यात् ताच्छाब्द्यम्, तत्साहचर्य्यात् ताच्छब्द्यम्, इति न्यायकारणाद्* औपचारिकतैव तस्य 'गौर्वाहीकः' इति प्रयोगवत्, नतु वास्तविकशूद्रता तस्य। अथवा तत्र शुद्धा लक्षणा, तात्कर्म्यलक्षणसम्बन्धादेव तथा प्रयोगः। यथा अतक्षा तक्षा। अभ्यस्तगृहकर्म्मणि तक्षाऽतिरिक्ते प्रयुक्तस्तक्षेति शब्दो लाक्षणिकः। तत्कर्म्मनिपुणत्वादिकं प्रयोजनमेव तत्र व्यङ्ग्यं भवति, नतु तस्य वास्तविकतक्षताऽभीष्टा भवति। यतो हि लक्षणा कृत्रिमा वृत्तिर्भवति नाऽभिधेवेदीश्वरप्रणीता। तेनैतदादिकलाक्षणिकशब्दैः सिद्धान्तः कथमपि नो निर्मातुं शक्यः॥ एवं क्वचित् क्षत्रियादिके प्रयुक्तो ब्राह्मणशब्दो 'ब्राह्मणवद्' इत्यतिदेशरूपे ज्ञेयः। तथा च 'बहुगणवति' १।१।२३ सूत्रे महाभाष्ये—"अन्तरेणापि वतिमतिदेशो गम्यते। तद् यथा एष ब्रह्मदत्तः। अब्रह्मदत्तं ब्रह्मदत्त इत्याह तेन मन्यामहे- ब्रह्मदत्तवदयं भवति"॥ एवमेव निरुक्ते-'अथ लुप्तोपमानि अर्थोपमानि इत्याचक्षते' ३।१८।१ 'सिंहो व्याघ्र इति पूजायाम् (सिंहो देवदत्तः) ३।१८।२ श्वा काक इति कुत्सायाम [ श्वाऽयम्, काकोऽयम् ] ३।१८।३ इति। एवं न्यायदर्शने—निमित्ताद् अतद्भावेऽपि तदुपचारो दृश्यते खलु। तथा च—"सहचरण १—स्थान २—तादर्थ्य ३—वृत्त ४—मान ५—धारण ६—सामीप्य ७—योग ८—साधना ९—ऽऽधिपत्येभ्यो १०—ब्राह्मण १—मञ्च २—कट ३—राज ४—सक्तु ५—चन्दन ६-गङ्गा ७—शाटका ८—ऽन्न ९—पुरुषेषु ७—अतद्भावेऽपि तदुपचारः" २।२।६३ अत्र भाष्यम् अतद्भावेऽपि तदु-

* अत एवोक्तम् 'तात्स्थ्यात् तथैव ताद्धर्म्यात् तत्सामीप्यात् तथैव च। तत्साहचर्यात् तादर्थ्याज्ज्ञेया वै लक्षणा बुधैः। यथा शय्या हसति। सिंहो माणवकः। वटे गावः। शस्त्राणि प्रवेशय। पार्थिवार्थो मृत्पिण्डः पार्थिव इति तदुदाहरणानि।

पचारः। १ सहचरणाद्—'यष्टिकां भोजय' इति यष्टिकासहचरितो ब्राह्मणोऽभिधीयते। २ स्थानात्—'मञ्चाः क्रोशन्ति' इति मञ्चस्थाः पुरुषा अभिधीयन्ते। ३ तादर्थ्यात्—कटार्थेषु वीरणेषु व्युह्यमानेषु 'कटं करोति' इति भवति। ४ वृत्ताद् 'यमो राजा, कुबेरो राजा' इति तद्वद् वर्त्तते इति। ५ मानात्—आढ़केन मिताः सक्तवः 'आढकं सक्तवः' इति। ६ धारणात्—तुलया धृतं चन्दनं 'तुलाचन्दनम्' इति। ७ सामीप्यात्—'गङ्गायां गावश्चरन्ति' इति देशोऽभिधीयते सन्निकृष्टः। ८ योगात् कृष्णेन रागेण युक्तः शाटकः 'कृष्णः' इत्यभिधीयते। ९ साधनात्—'अन्नं प्राणाः' इति। १० आधिपत्यात्—'अयं पुरुषः कुलम् अयं गोत्रम्' इति। * एवं प्रकृतेऽप्युन्नेयम्।

अथ च यदि केनचित् स्वप्रबलतपसा क्षत्रियशरीरपरमाणवस्सुतरां परिवर्त्तिताः स्युरपि पुराणे; स्त्रिया पुरुषभवनवत् तद् अपवादस्थलमुन्नेयम्। अपवाद् कादाचित्कं काचित्को वा भवति। न स सामान्यशास्त्रं व्यपोहति। अत एव 'मिदचो-' १।१।४७ सूत्रे महाभाष्ये—"नैवेश्वर आज्ञापयति, नाऽपि धर्म्मसूत्रकाराः पठन्ति अपवादैरुत्सर्गा बाध्यन्तामिति"। योगदर्शनेऽप्युक्तम्—'नचोत्सर्गस्य अपवादान्निवृत्तिरिति' साधनपादे १३ सूत्रे। धर्म्मश्च सामान्यशास्त्रमेव भवति सर्व्वसामान्यस्य; न विशिष्टशास्त्रम्। विश्वामित्रस्य तु जन्मन्येव ब्राह्मणत्वमासीत्। द्रष्टव्यमत्र वाल्मीकिरामायणं महाभारतञ्च। अथ च विश्वामित्रस्योत्पत्तिऋषिदत्तचरुद्वारा जाता, न मैथुनद्वारा। यदि तत्र मैथुनयोनिमर्य्यादितमर्य्यादाभङ्गोऽपि जातस्तदाऽपि न हानिः। यतो मैथुनयोनिनियतनियमा मैथुनयोनिकृते एव नियताः। कश्चिन्मैथुनयोनिको विश्वामित्रवत् परस्सहस्रवर्षाणि तपस्तप्तुं शक्तः किम्? यदि तस्य चरुद्वारा उत्पत्तिस्तथा परस्सहस्रवर्षतपस्या च 'गप्पं' मन्येत; तर्हि विश्वामित्र एव 'गप्प' रूपो मन्तव्यः। कुतस्तर्हि तत्र वादिनामाक्षेपाऽवकाशस्तदधिकारो वा?। वस्तुतस्तु तत्पितुर्वीर्याच्चु न तदुत्पत्तिर्जाता; येन तस्य क्षत्रियवर्णता स्यात् किन्तु ऋषिनिर्म्मितचरुद्वारा। केवलमुत्पत्तिद्वारसम्बन्धात् तन्मातुरवश्यं क्षत्रियत्वमासीत्। तत् खलु स स्वतपः—प्रबलबल-द्वारा दूरीचकार। यदि गुणकर्म्मणैव वर्णव्यवस्थाऽभविष्यत्; तर्हि गुणकर्म्माणि तु तस्योत्तमान्यासन् काऽऽवश्यकताऽऽसीद् ब्राह्मण्यप्राप्त्यै परस्सहस्रवर्षतपस्यायाः। महाभाष्यकारस्तु तत्तपस्यामृषि-

* सिंहपराक्रमो नरः सिंहशब्दो भवति वेदान्त० शाङ्कर ३।१।४

त्वत्कृते एवाऽदर्शयत्—'विश्वामित्रस्तपस्तेपे—नाऽनृषिः स्याम्' इत्यादिना ४।१।१०४॥ एवं वाल्मीकिरपि जन्मना ब्राह्मणोऽविद्यत। केवलं कुसङ्गत्या स गुणकर्म्मभ्रष्टो बभूव। परं सनकाद्युपदेशेन पुनः सच्चारित्र्यं प्राप्य पूजनीयतां भेजे। तथाचाऽध्यात्मरामायणे—'अहं पुरा किरातेषु किरातैः सह वर्द्धितः। जन्ममात्रं द्विजत्वं मे शूद्राचाररतः सदा' अयोध्याकाण्डे ६।६५। अत एव वाल्मीकिरामायणान्ते—'कृतवान् प्रचेतसः पुत्र' इत्यादि दृश्यते, इति तस्य जन्मना ब्राह्मणत्वं सिद्धम्। अस्तु।

स्वा० दयानन्देन चतुर्थसमुल्लासारम्भे सवर्णया सह विवाहो मतः। संस्कारविधौ च तेन 'अमुकगोत्रोत्पन्नामिमाममुकनाम्नीमलङ्कृतां कन्यां प्रतिगृह्णातु भवान्' पृ० १४० इति नियतगोत्रो-[वर्णो]त्पन्नया सह विवाहो मतः। एवं 'पाणिग्रहण संस्कारः सवर्णासूपदिश्यते' मनु० ३।४३।३।१२ इति सावर्ण्यकारणात्तया सह विवाहोऽपि तादृशगोत्रोत्पन्नस्य भविष्यति तन्मते। अत्र स्पष्टं तन्मते जन्मनैव (उत्पत्त्यैव) वर्णव्यवस्था सिद्धा, न तु गुणकर्म्मणा; अन्यथा सः 'अमुकगोत्रोत्पन्नान् अत्र उत्पन्नाशब्दं नाऽलेखिष्यत्? सत्यार्थप्रकाशे ९० पृष्ठे १ श्लोके कुलीन, ८ श्लोके 'प्रशंसित कुल में उत्पन्न' इत्युत्पन्न शब्दो दृश्यते दूतकृते, तेन जन्मना जातिसिद्धिः।

'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः' याज्ञवल्क्यस्मृ० आचाराध्याये ९०। 'सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु। आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते' मनु० १०।५ ब्राह्मण्यां 'ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत्। एवं क्षत्रियविट्शूद्रा ज्ञेयाः स्वेभ्यः स्वयोनिजाः। (देवलः 'चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्रास्तेषां पूर्व्वं पूर्व्वो जन्मतः श्रेयान् इत्यापस्तम्बः। जन्मनैव महाभागो ब्राह्मणो नाम जायते। नमस्यः सर्वभूतानामतिथिः प्रसृताऽग्रभुक्—महाभारतेऽनुशासनपर्वणि ३५।१। 'जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते (अत्रिसंहिता १४१, (१३८ 'ब्राह्मण्यां ब्राह्मणेनैव ह्युत्पन्नो ब्राह्मणः स्मृतः" हारीत० १।१५। त्रयो वर्णा द्विजातयो ब्राह्मणक्षत्रियवैश्याः; तेषां मातुरग्रेऽधिजननं' वसिष्ठ० २।२-३। एतदादिभि अप्रमाणैर्जन्मना वर्णव्यवस्था विशदं सिद्ध्यति।' स्वाध्यायेन व्रतैर्होमैः... ...ब्राह्मीयं क्रियते तनुः, मनु० २।२८ इति पद्ये 'ब्राह्मी' त्यस्याऽर्थो ब्रह्मपद मुक्तिप्राप्तियोग्या। तनूर्भवतीत्ययमेव; नतु ब्राह्मणजातीया' इत्यर्थः; 'ब्राह्मोऽजातौ ६।४।१७१ इति सूत्रेणाऽपत्यजातौ टिलोपाऽभावात्। तत्र तु ब्राह्मणी'

इत्येव भवति, न तु ब्राह्मीति प्रागप्युक्तमेतत्। अत एव संस्कारविधौ स्वा० दयानन्देन २३७ पृष्ठे 'ब्राह्मो' इत्यस्य 'ब्रह्मसम्बन्धी करे' इत्यर्थः स्वीकृतः।

'तस्मान्न ब्राह्मणः सर्वस्येव क्षत्रियस्य पुरोधां कामयेत स ँ ह्येतौ सृजेते सुकृतञ्च दुष्कृतञ्च, नो एव क्षत्रियः सर्वमिव ब्राह्मणं पुरोदधीत, स ँ ह्येवैतौ सृजेते सुकृतञ्च दुष्कृतञ्च।' शतपथब्राह्मणे ४।१।४।५ 'क्षत्रियोऽब्राह्मणो भवति, यद्ध किञ्च कर्म्म कुरुतेऽप्रसूतं ब्रह्मणा मित्रेणा, नहैवाऽस्मै तत्कर्म्म समृध्यते। तस्मादु क्षत्रियेण कर्म्म करिष्यमाणेन उपसर्तव्य एव ब्राह्मणः, तद्ब्रह्मप्रसूतं कर्म ऋध्यते, शत० ४।१।४।६। अत्र सुकृतदुष्कृतवन्तावुभावेव ब्राह्मणक्षत्रियौ मतौ। अथ च तादृशकर्म्मसामर्थ्यवत्तायामपि क्षत्रियस्याऽब्राह्मणतामाख्याय ब्राह्मण एव कर्म्मकारणार्थमादिष्टो न क्षत्रियः; अन्यथा कर्म्मणः समृद्धिर्न भवतीति स्पष्टं जन्मना वर्णव्यवस्था सिध्यति।

'विद्वांसं ब्राह्मणं' अथर्व० १३।३।१ 'सुब्राह्मणाः' अथर्व० ११।१।२६ 'सद्विप्राः' अथर्ववेदनवमकाण्डान्ते, 'ब्राह्मणो विद्वान्' तैत्तिरीयारण्यके प्रपा० १० अनु० ६४, 'सन् ब्राह्मणः' महाभाष्ये ३।२।१२६ 'गुणवानयं ब्राह्मणः' महाभाष्ये ५।१।११९ सूत्रे, 'गुणवतो ब्राह्मणान् भोजयेत्' मानवगृह्यसूत्रे १।१६।२ 'अनिन्द्यान् ब्राह्मणान्' गोभिलगृह्य० ४।२।२१ 'यो ब्राह्मणो बह्वृचो वीर्य्यवान्स्यात्' ऐतरेयब्राह्मणे २।३६ 'क्षत्रेण क्षत्रं जयति बलेन बलमश्नुते (राजा), यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः' ऐतरेय ब्रा० ८।२५—'ये वै ब्राह्मणाः शुश्रुवा ँ सोऽनूचानास्ते विप्राः' शतपथब्राह्मणे ३।५।३।१२ 'जन्मना ब्राह्मणो ज्ञेयः…विद्यया याति विप्रत्वं' अत्रि० १३९ 'यदन्ये शतं याचेयु ब्राह्मणा गोपतिं वशाम्। अथैनं देवा अब्रुवन् एवं हि विदुषो वशा' अथर्व० १२।४।२२ (अत्र अविदुषां ब्राह्मणानामपि 'अन्ये शतं ब्राह्मणाः' इति वचसा ब्राह्मणत्वं मतम्। एतदादिषु प्रमाणेषु "ब्राह्मणस्य" 'विद्वान्, सु, सद्, अनिन्द्यः गुणवान् बह्वृचः' इत्यादिविशेषणेन प्रतीयते यद्—अविद्वांसो ब्राह्मणाः, कुब्राह्मणाः असद्विप्रा निन्द्यब्राह्मणा अनृचा गुणरहिता अपि च ब्राह्मणा भवन्ति। अन्यथा, 'विद्वान्, सु, सद्' इत्यादि विशेषणानि ब्राह्मणस्य व्यर्थानि स्युः। तथा च न्यायः—'सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्'। 'अश्वत्थामा हतो नरः' अत्र अश्वत्थाम्नो 'नर' विशेषणं तदा सार्थकम्, यदा गजादिकस्याऽपि कस्यचिन्नाम स्यादेतत्। एवं 'सत्' 'सु'

'विद्वान्' इति विशेषणानि ब्राह्मणस्य तदा सार्थकानि; यदा कुत्सिता ब्राह्मणा अपि ब्राह्मणा मन्येरन् । कुत्सितानामपि तेषां [ब्राह्मणानां] तत्त्वे ( ब्राह्मणत्वे ) मते कर्म्मणा वर्णव्यवस्थाखण्डनं स्वतः सिद्धम् ।

अत एव 'कुमहद्भ्याम्' ५।४।१०५ इति सूत्रस्योदाहरणे कुब्रह्मा—कुब्रह्मः' इति सङ्गच्छते । अत्र 'ब्राह्मणपर्य्यायो ब्रह्मन्शब्दः' इति तत्त्वबोधिनी । 'कुत्सितो ब्रह्मा, इति तद्विग्रहः । महाभाष्ये 'अव्यये नञ्कु, ६।२।२ 'कुब्राह्मणः, कुवृषलः, इत्युदाहरणम् । 'कुगतिप्रादयः, २।२।१८ सूत्रे महाभाष्ये—'कुब्राह्मणः, कुवृषलः, सुब्राह्मणः, सुवृषलः, अतिब्राह्मणः, अतिवृषलः, दुर्ब्राह्मणः, दुर्वृषलः 'स्वती पूजायाम् 'दुर्निन्दायाम्' 'कुः पापार्थे, कुब्राह्मणः, इत्याद्युदाहरणानि । यदि सद्गुणैरेव 'ब्राह्मण, इति पदवी मिलन्त्यभविष्यत्; तर्हि 'सुब्राह्मणः—कुब्राह्मणः, इतिशब्दौ सर्वथा नाऽभविष्यताम्, यत ^ पूर्णविद्वत्तादिगुणेनैव तु स ब्राह्मणो जातः; तर्हि तत्राऽव्यभिचारात् 'सु, शब्दो व्यर्थः, यतः 'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्. इति हि न्यायः । एवं ब्राह्मणेन सह 'सु' शब्दप्रयोगो व्यर्थः । कुत्सितत्वञ्च तत्र भवेदेव कथं वादिनये; अतस्तत्र'कु, शब्दो व्यर्थः । एवम् 'असद्गुणैरेव शूद्रत्वपदे मते महाभाष्यस्य 'कुवृषलः' इत्याद्युदाहरणेषु 'कु, शब्दो व्यर्थो भवेत् । पूज्यत्वं तु तत्र भवेदेव कथमिति तत्र 'सुवृषलः' इत्याद्युदाहरणमेव कथं भवेत् ? । परं स्वा० दयानन्देनाऽपि 'उत्तम् शूद्रजनों को' सत्यार्थ० तृ० पृ० ३१ इति शूद्रस्य 'उत्तम' त्वविशेषणं दत्तम । तेन स्पष्टं प्रतीयते यत्-कुब्राह्मणोऽपि भवितुं शक्नोति, सु-शूद्रोऽपि । एवञ्चेत्कर्म्मणा वर्णव्यवस्था परास्ता; जन्मनैव च सा सिद्धा । एवं विद्यावत्त्वादेव ब्राह्मणत्वाव्यभिचारे 'विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि गीता० ५।१८ अत्र ब्राह्मस्य 'विद्याविनया' दि विशेषणं व्यर्थं भवेत् । एतेन अविदुषोऽपि ब्राह्मणत्वं सिद्धम् । तेन जन्मना वर्णव्यवस्था सिद्धा—इत्यवदातम ।        [ क्रमशः ]



* विभाति ! *

## श्रीप्रभातमिश्रः, प्रयागस्थः,

रम्योद्यानेऽभिनव-कलिका-संचयन्मोचयद् द्राक्
अन्धीकुर्वन्निखिल-सुभगान्मञ्जुलां भृङ्गमालाम् ।
गुञ्जीकुर्वत् खग 'कलकलैर्दिग्दिगन्तं समस्तम्
सद्योजातं प्रियसखि ! पुरः सुप्रभातं विभाति ॥ १ ॥
वर्षा-कालेऽखिल-जन-मुदे भूतले जायमाने
आभा-हीना परम मृदुला मञ्जरी हास्यमाना ।
नव्यां शोभां, कुसुम-सहितां धारयन्ती लसन्वी
लक्ष्मी-लीला ललित-लतिका वीथिकायां विभाति ॥ २ ॥
सद्यो भूतैः नवहरि-तृणैः रम्य-वन्ये निकुञ्जे
श्रावं-श्रावं घन-घन-रवं केकिनां विह्वलानाम् ।
नृत्यं दृष्ट्वा प्रकृति-सरला क्षेत्रपालस्य वामा
प्रीत्या वाण्या कथयति पतिं प्रावृषः श्रीर्विभाति ॥ ३ ॥

[ 'प्रयाग संस्कृतसम्मेलन' कविसम्मेलनावसरे रजतपदकेन पुरस्कृतैषा रचना । ]

प्राप्तपत्रद्वयम्

## सनातनधर्मस्य जाग्रतिजयः ।

। ( ले० पं० जगदीशप्रसादमिश्र शास्त्री काव्यतीर्थः )

साम्प्रतमप्यमुष्मिञ्जगतितले विद्यते नामाऽभितो धर्म्मस्य अनादित्ववीजम्, बीजमिदन्नान्यकपोलकल्पितं किञ्च भगवन्नियमपरिवद्धम्, अस्यैव धर्म्मस्य पुष्टा-युक्तिरेषा चरितार्थतामावहति नियतमेव, यथैषा—

धर्म्मः शर्म्म परत्र चेह च नृणां धर्म्मोऽन्धकारे रविः ।
सर्वापत्प्रशमक्षमस्सुमनसां धर्म्मो निधिर्मूल्यवान् ।
धर्म्मो वन्धुरवान्धवे पृथुपथे धर्म्मस्सुहृन्निश्चलः ।
संसारोरुमरुस्थले सुरतरुर्नास्त्येव धर्म्मात्परः ॥ ॥

किञ्चैतर्हि धर्म्मविमुखा अधर्म्मप्रमुखा जना विशेषेण मूल्यं विनाऽनवसरेऽदन्त इतस्ततस्स्वधर्म्मकृपणत्वं भूयो भूयः प्रदर्शयन्तीति, खल्वेतेषां यादृशी परिणतिर्भवति

सा चेदन्तःकरणमर्दकाऽपि भवेत्तथाऽपि न वा प्रकाशयन्ति, स्वव्रीडाकोषाधिक्यात्। वहुतिथपुण्यकृत्यगणेन पुंसो व्यवस्था जायते, ततश्च मनुष्यत्वमधिकं दुर्लभमेतदपि भाग्याऽभिवृद्धेस्स्यान्नाम तदा पुनर्विप्रताऽधिकयोगमाकाङ्क्षति, सति विप्रत्वे नयतत्त्वमयाऽविद्याविनाशिका सा विद्याऽतिदुष्कराऽर्थज्ञता च ततोऽत्यधिका। भवत्यर्थज्ञे वाक्छक्ति र्लोकाऽनुसारिका शास्त्रतत्त्वप्रदर्शिका च सुदुष्करा क्रमशोऽधिकात्त्वम्। एकस्मिन्नेव जने तु न ह्येतादृशास्सर्वे गुणाः परश्चैकोऽपि भवेन्नाम, सोऽपि प्रकाशयत्यपूर्णतामेव, शास्त्रतज्ज्ञानामन्ते चेदखिलास्स्युस्तथापि धर्म्मे तु धीषणाऽवर्णनीया दुष्करमार्गाऽनुगामिनी। अवसरे चाऽस्मिन्नधिकतरेण च धर्म्मे दुर्लभा धोस्समस्तानाम्, वायुरेवंविधो वहति, येन धर्म्मस्याऽभिधानमपि समाकर्ण्य जना भ्रमत्वं बाहुल्येन यान्ति, सर्वेषु वस्तुषु धर्म्मस्य चैतन्यम्मूलात्मकमस्त्येवेति सनातनधर्म्मस्य ब्राह्मणवर्गस्य चाऽहोरात्रमेव जागृतिजयो भूयादिति शम्।

## प्राप्तग्रन्थसमालोचनाभासः।

विदितचरमेतत् प्रायशः समेषां वाराणसेयविदुषां यत् पण्डितवर श्रीमत्पञ्चाननतर्करत्नकृतं शक्तिभाष्यं यथाज्ञानमालोच्य संदेहनिराकरणाय केनचित् सन्यासिना शक्तिभाष्यतिमिरभास्करनामकमेकं पुस्तकं व्यरचीति। साम्प्रतं तत्खण्डनचिकीर्षया पण्डितवर श्रीमद्गोपाल शास्त्रिणा 'प्राप्तग्रन्थ समालोचननामक' एको लेखः प्राकाटीत्यपि पत्रपाठकानां नाविदितम्। तत्समालोचनं तु पूर्वोक्तग्रन्थभावानवबोधात् संन्यासिषु रागद्वेषबाहुल्याद्वाऽभासमात्रं प्रतीयते। यद्वा तद्वा तत्परिहाराय प्रयतमानेन मया किञ्चिदधस्तान्निगद्यते, विद्वांसस्तु निष्पक्षपाता विचारयन्तु किं तावत् तत्त्वमिति। शास्त्रिप्रवरस्तु प्रष्टव्यः कुत्र तिमिरभास्करग्रन्थे भवता दृष्टं शक्तिभाष्यकृता चातुराश्रम्यपक्षो न स्वीक्रियते—इति लिखितम्।१ लिखितं चेत् तत्पुस्तके नोपलभ्यते (?)। अथ च लिखितं चेद् ब्रूयाद् वन्ध्या पुत्रं प्रसूत इतिवद्धास्यायैव तत्सर्वथा२। विंवादस्त्वावयोर्द्वयोर्न चातुराश्रम्यपक्षे किन्तु निवृत्तौ। भाष्यकृतो-

१ तिमिरप्रणेता प्रतिपृच्छ्यते शक्तिभाष्यकृता चातुराश्रम्यपक्षो न स्वीक्रियते इति तिमिरकर्त्तुर्लेखत्वेन मया क्व तावदुक्तम्? तिमिरपुस्तिकायां 'चातुराश्रम्यपक्षस्थापनम्' इति शीर्षलेखस्य स्वारसिकार्थमादायैव समालोचितं मया।

२ अयमाक्षेपः स्वस्मिन्नेव।

च्यते गार्हस्थ्येऽपि निवृत्तिः । तिमिरभास्करकृतोच्यते तुरीयाश्रम एवेति । यथा सम्भवमनेन ब्रह्मचर्यं परिसमाप्य गृही भवेदित्यादिना प्रमाणान्यपि—उपन्यस्तानि अत्र वात्स्यायनमतमपि दर्शितम् । भाष्यकृता तु ऐकाश्रम्यपक्षे ब्रह्मचर्याश्रमोऽप्या-श्रमान्तरत्वेन नाङ्गीक्रियते१ । नवा निवृत्तिस्तु गार्हस्थ्याश्रमे भवतीत्यत्र किमपि प्रमाणं प्रदर्शितम्२ । न च गौतमस्मृतावपि ऐकाश्रम्यपक्षः स्थिरीकृतो ३येन तत्र निवृत्तिस्ततस्तु मोक्षः स्यात् । नापि मनुवचनादपि स पक्षः शक्यसम्भवः प्रत्युत— "एष वोऽभिहितो धर्म्मो ब्राह्मणस्य चतुर्विधः" "अधीत्य विधिवद्वेदान्" इत्यादिना चातुराश्रम्यपक्षं व्यवस्थाप्य तुरीयाश्रमत एव मोक्षो निरूपितः यत्तु पुत्रैश्वर्ये सुखं वसेदित्यादिनैकाश्रम्यपक्षोऽपि मुनिवर्य्याणामभिमत इति उक्तम्, तदेतद्धा-त्तम् ? । भावानवबोधात् कुटीचरसन्न्यासविषयकं वचनं हि तत्४ । कुटीचराः सन्न्यासिनः स्वग्रामे ग्रामाद्बहिर्वा कुटीं निर्माय पुत्रगृहे भिक्षां कृत्वा तत्र निवसे-युरिति तत्परमेव तद्वचनं न तु गृहिपरं येन तद्वचनमात्रान्निवृत्तिस्ततस्तु मोक्षः स्यादेव । अन्यत् खलु ग्रन्थादेवावगन्तव्यम् । चरमदशायां पुत्रैश्वर्ये सुखं वसन्तो गृहिणो प्रवृत्तिधर्माणो निवृत्तिधर्माणः केचन, केचन तु केवलप्रवृत्तिधर्माण इति

---

१ न शक्तिभाष्यकृता किन्त्वैकाश्रम्यवादिभिर्महर्षिभिरपि, अन्यथैकाश्रम्यं त्वाचार्या इति तद्वचनं व्याहन्येत ।

२ शाङ्करसम्प्रदायाङ्गीकृतगुरुपरम्परावन्दनस्य सर्वप्रसिद्धतया तत्प्रमाणोपन्यासं पिष्टपेषणायितत्वेन विशेषतस्तद्विचारस्य निष्प्रयोजनत्वात् न विशेषोक्तौ प्रयतितं शक्तिभाष्य-कृद्भिः गुरुपरम्परावन्दने गृहिणां वसिष्ठशक्तिपराशरव्यासानां निवृत्त्यनङ्गीकारे तेषां सम्प्रदा-यप्रवर्त्तकत्वमेव न स्यात् । गृहिणो जनकस्य निवृत्तिपरत्वमपि न सिध्येत । सूत्रादेव पश्चात् च तत् प्रमाणितम् ।

३ न केवलं स्थिरीकृतः, किंतु वैदिकप्रमाणेन प्रबलीकृतः, तस्य मोक्षहेतुत्वे वेद एवाव-धीर्यत उक्तमेवैकाश्रम्यं शक्तिभाष्यकृद्भिः न स्वकल्पितं किन्तु शास्त्रप्रमाणकम् ।

४ कुटीचरसन्न्यासस्य नामापि किं मन्वादिस्मृतिषूक्तम् । प्रव्रजेद् गृहादित्येव मनुस्मृतौ संन्यासविधिः । अथ कुटीचरधर्मोऽयं हठात् कल्प्यते, बहूदकस्य धर्म्मानुपन्यासे को हेतुः ?

अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान् । अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः । मनु ६, ३७ । इत्येवमुपदिशतो भगवतो मनोश्चातुराश्रम्येण श्रीमच्छान्ता-श्रमसम्मतप्रव्रज्याया नास्ति सम्बन्धलेशोऽपि ॥

सा चेदन्तःकरणमर्दकाऽपि भवेत्तथाऽपि न वा प्रकाशयन्ति, स्वव्रीडाकोषाधिक्यात्। वहुतिथपुण्यकृत्यगणेन पुंसो व्यवस्था जायते, ततश्च मनुष्यत्वमधिकं दुर्लभमेतदपि भाग्याऽभिवृद्धेस्स्यान्नाम तदा पुनर्विप्रताऽधिकयोगमाकाङ्क्षति, सति विप्रत्वे नयतत्त्वमथाऽविद्याविनाशिका सा विद्याऽतिदुष्कराऽर्थज्ञता च ततोऽत्यधिका । भवत्यर्थज्ञे वाक्छक्ति र्लोकाऽनुसारिका शास्त्रतत्त्वप्रदर्शिका च सुदुष्करा क्रमशोऽधिकात्त्वम्। एकस्मिन्नेव जने तु न ह्येतादृशास्सर्वे गुणाः परश्चैकोऽपि भवेन्नाम, सोऽपि प्रकाशयत्यपूर्णतामेव, शास्त्रतज्ज्ञानामन्ते चेदखिलास्स्युस्तथापि धर्म्मे तु धीषणाऽवर्णनीया दुष्करमार्गाऽनुगामिनी । अवसरे चाऽस्मिन्नधिकतरेण च धर्म्मे दुर्लभा धोस्समस्तानाम्, वायुरेवंविधो वहति,येन धर्म्मस्थाऽभिधानमपि समाकर्ण्य जना भ्रमत्वं बाहुल्येन यान्ति, सर्वेषु वस्तुषु धर्म्मस्य चैतन्यम्मूलात्मकमस्त्येवेति सनातनधर्म्मस्य ब्राह्मणवर्गस्य चाऽहोरात्रमेव जागृतिजयो भूयादिति शम् ।

## प्राप्तग्रन्थसमालोचनाभासः ।

विदितचरमेतत् प्रायशः समेषां वाराणसेयविदुषां यत् पण्डितवर श्रीमत्पञ्चाननतर्करत्नकृतं शक्तिभाष्यं यथाज्ञानमालोच्य संदेहनिराकरणाय केनचित् सन्यासिना शक्तिभाष्यतिमिरभास्करनामकमेकं पुस्तकं व्यरचीति । साम्प्रतं तत्खण्डनचिकीर्षया पण्डितवर श्रीमद्गोपाल शास्त्रिणा 'प्राप्तग्रन्थ समालोचननामक'एको लेखः प्राकाटीत्यपि पत्रपाठकानां नाविदितम् । तत्समालोचनं तु पूर्वोक्तग्रन्थभावानवबोधात् संन्यासिषु रागद्वेषबाहुल्याद्वाऽभासमात्रं प्रतीयते । यद्वा तद्वा तत्परिहाराय प्रयतमानेन मया किञ्चिदधस्तान्निगद्यते, विद्वांसस्तु निष्पक्षपाता विचारयन्तु किं तावत् तत्त्वमिति । शास्त्रिप्रवरस्तु प्रष्टव्यः कुत्र तिमिरभास्करग्रन्थे भवता दृष्टं शक्तिभाष्यकृता चातुराश्रम्यपक्षो न स्वीक्रियते–इति लिखितम्।१ लिखितं चेत् तत्पुस्तके नोपलभ्यते (?) । अथ च लिखितं चेद् ब्रूयाद् वन्ध्या पुत्रं प्रसूत इतिवद्धास्यायैव तत्सर्वंथा२ । विवादस्त्वावयोर्द्वयोर्न चातुराश्रम्यपक्षे किन्तु निवृत्तौ । भाष्यकृतो-

१ तिमिरप्रणेता प्रतिपृच्छ्यते शक्तिभाष्यकृता चातुराश्रम्यपक्षो न स्वीक्रियते इति तिमिरकर्त्तुर्लेखत्वेन मया क्व तावदुक्तम् ? तिमिरपुस्तिकायां 'चातुराश्रम्यपक्षस्थापनम्' इति शीर्षलेखस्य स्वारसिकार्थमादायैव समालोचितं मया ।

२ अयमाक्षेपः स्वस्मिन्नेव ।

च्यते गार्हस्थ्येऽपि निवृत्तिः। तिमिरभास्करकृतोच्यते तुरीयाश्रम एवेति। यथा सम्भवमनेन ब्रह्मचर्यं परिसमाप्य गृही भवेदित्यादिना प्रमाणान्यपि–उपन्यस्तानि अत्र वात्स्यायनमतमपि दर्शितम्। भाष्यकृता तु ऐकाश्रम्यपक्षे ब्रह्मचर्याश्रमोऽप्याश्रमान्तरत्वेन नाङ्गीक्रियते१। नवा निवृत्तिस्तु गार्हस्थ्याश्रमे भवतीत्यत्र किमपि प्रमाणं प्रदर्शितम्२। न च गौतमस्मृतावपि ऐकाश्रम्यपक्षः स्थिरीकृतो३येन तत्र निवृत्तिस्ततस्तु मोक्षः स्यात्। नापि मनुवचनादपि स पक्षः शक्यसम्भवः प्रत्युत– "एष वोऽभिहितो धर्म्मो ब्राह्मणस्य चतुर्विधः" "अधीत्य विधिवद्वेदान्" इत्यादिना चातुराश्रम्यपक्षं व्यवस्थाप्य तुरीयाश्रमत एव मोक्षो निरूपितः यत्तु पुत्रैश्वर्ये सुखं वसेदित्यादिनैकाश्रम्यपक्षोऽपि मुनिवर्याणामभिमत इति उक्तम्, तदेतद्वात्तम्? । भावानवबोधात् कुटीचरसन्न्यासविषयकं वचनं हि तत्४। कुटीचराः सन्न्यासिनः स्वग्रामे ग्रामाद्बहिर्वा कुटीं निर्माय पुत्रगृहे भिक्षां कृत्वा तत्र निवसेयुरिति तत्परमेव तद्वचनं न तु गृहिपरं येन तद्वचनमात्रान्निवृत्तिस्ततस्तु मोक्षः स्यादेव। अन्यत् खलु ग्रन्थादेवावगन्तव्यम्। चरमदशायां पुत्रैश्वर्ये सुखं वसन्तो गृहिणो प्रवृत्तिधर्माणो निवृत्तिधर्माणः केचन, केचन तु केवलप्रवृत्तिधर्माण इति

---

१ न शक्तिभाष्यकृता किन्त्वैकाश्रम्यवादिभिर्महर्षिभिरपि, अन्यथैकाश्रम्यं त्वाचार्या इति तद्वचनं व्याहन्येत।

२ शाङ्करसम्प्रदायाङ्गीकृतगुरुपरम्परावन्दनस्य सर्वप्रसिद्धतया तत्प्रमाणोपन्यासे पिष्टपेषणायितत्वेन विशेषतस्तद्विचारस्य निष्प्रयोजनत्वात् न विशेषोक्तौ प्रयतितं शक्तिभाष्यकृद्भिः गुरुपरम्परावन्दने गृहिणां वसिष्ठशक्तिपराशरव्यासानां निवृत्त्यनङ्गीकारे तेषां सम्प्रदायप्रवर्त्तकत्वमेव न स्यात्। गृहिणो जनकस्य निवृत्तिपरत्वमपि न सिध्येत। सूत्रादेव पश्चात् च तत् प्रमाणितम्।

३ न केवलं स्थिरीकृतः, किंतु वैदिकप्रमाणेन प्रबलीकृतः, तस्य मोक्षहेतुत्वे वेद एवावधीयेत उक्तमेवैकाश्रम्यं शक्तिभाष्यकृद्भिः न स्वकल्पितं किन्तु शास्त्रप्रमाणकम्।

४ कुटीचरसन्न्यासस्य नामापि किं मन्वादिस्मृतिषूक्तम्। प्रव्रजेद् गृहादित्येव मनुस्मृतौ संन्यासविधिः। अथ कुटीचरधर्म्मोऽयं हठात् कल्प्यते, बहूदकस्य धर्म्मानुपन्यासे को हेतुः?

अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान्। अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः। मनु ६, ३७। इत्येवमुपदिशतो भगवतो मनोश्चातुराश्रम्येण श्रीमच्छान्ताश्रमसम्मतश्रमव्याख्या नास्ति सम्बन्धलेशोऽपि॥

भाष्यकृद्वचनादैकाश्रम्यपक्षे पाक्षिकचातुराश्रम्यपक्षानभ्युपगमः स्यादेवेति तत्स्थापननामकं शीर्षकं ग्रन्थे न वृथा१ । तथा च ग्रन्थभावानवबोधाद्धास्यायैव विदुषामिति यद्भवतोक्तं तत् स्वकाण्डताण्डवितमित्र ! अहो वैदग्ध्यं विदुषामतत्पराणामपि तत्परत्वख्यापनेन । अस्तु, यत्तु पूर्वोत्तरतन्त्रयोरेकशास्त्रत्वं भवताऽशङ्कितं भाष्यकृता च, तत् कथं संगच्छेत । मीमांसात्वधर्मसाम्येनैकत्वमभिप्रेतमथवा विषयादिसाम्येन, तद्वक्तव्यम् । नाद्यः—मीमांसात्वेनैकत्वं चेत् सांख्ययोगयोरपि तत्स्यात् । उभयत्र सांख्यत्वधर्मसामान्यात् । शास्त्रत्वेनापि सर्वशास्त्राणामैक्यप्रसङ्गात् । न च सांख्ययोगयोरेकत्वं वाच्यम् । तत्त्वभेदात् प्रयोजनसाधनभेदाच्च । सांख्या हि चतुर्विंशतितत्त्वानीच्छन्ति तत्त्वज्ञानेन च सर्वदुःखनिवृत्तिम् । योगास्तु षड्विंशतितत्त्वानि—अभ्युपगच्छन्ति योगेन च मुक्तिम्२ । नापि द्वितीयः, उभयत्र विषयादिभेदस्योक्तपूर्वत्वाद् ग्रन्थे । यत्तु शक्तिद्वयस्योभयत्र कथनेनैकशास्त्रत्वमुक्तं तन्न । शास्त्रतात्पर्यानवबोधात् । न हि वेदान्तेषु कुत्रापि ब्रह्मैव शक्तिः किंवा शक्तिरेव ब्रह्मेति व्यपदिष्टम् । द्वादशलक्षण्यामपि न कुत्रचिच्छक्तिविचारो येन तत्स्वीकर्त्तुं शक्यते। अनुल्लेखेऽपि कल्पनया तत्स्वीकाराद् बलाबलाधिकरणन्यायेन तत्सर्वं शशशृङ्गायेत। सर्वाण्यपि शास्त्राणि शक्तिपराणि—एकविषयकानि स्युः । न न्यायत्वादिना परस्परभेदः स्यात् । किञ्च सूत्रकृद्भिः "अल्पश्रुतेरिति चेत् तदुक्तम्" (१।३।११, सञ्ज्ञातश्चेत् तदुक्तम् ३।३।८ हानौ तदुक्तम् ३।३।२६ अक्षरधियां तदुक्तम् ३।३, इत्यादि सूत्रैरेकशास्त्रत्वमभ्युपगतमिति यदुक्तं तत्तुच्छम् । कुत्रापि दहराकाशस्य विचारात्, कुत्रापि उपनिषदां मध्ये सञ्ज्ञैकत्वाद् विद्यैकत्वप्रतिपादनात्, क्वचित् सुकृतदुष्कृतयोः प्रियाप्रिययोश्च हानोपादानालोचनात् क्वचिच्च विशेषनिराकरणेन ब्रह्मावधारणात् बादरायणीयसूत्राणामतत्परत्वात् । प्राचां मते द्वयोः शास्त्रयोः कर्मकाण्डत्वेन ज्ञानकाण्डत्वेन च परस्परभिन्नताख्यापनस्य भाष्यकारेणापि स्वीकारात् तयोरेकत्व-

१ एवं सति चातुराश्रम्यपक्षस्थापनमित्यर्थान्तरं, चातुराश्रम्यस्थापनमित्यस्यैव सम्यक्त्वात् ।

२ अत्र सुधीभिरवधेयं,—याज्ञवल्क्यादीनां विद्यागणने चतुर्दशत्वानुपपत्त्यां मीमांसात्वस्य विभाजकरूपतोपदर्शिता, प्रसिद्धिश्च तथा पूर्वमीमांसोत्तरमीमांसा चेति । सांख्यपातञ्जलयोः पृथग् दर्शनत्वे किं साधकं प्रमाणम् ? येन तस्य दृष्टान्तता । अपि च उत्तरमीमांसां पूर्वमीमांसां चापहाय ग्रन्थान्तरोक्तत्वभिप्रायेण सूत्रे क्वचिदपि 'तदुक्तम्' इतिरूपं वचनं नास्ति ।

कथनं साहसमात्रमेव। आचार्यचरणैरपि कुत्रचिद् द्वयोः शास्त्रयोरेकत्वं प्रतिज्ञातमिति केनापि दर्शयितुं न शक्यते।१ "धर्मजिज्ञासायाः प्रागपि अधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः" इति पूज्यपादाचार्यैरपि मीमांसानन्तर्यनिषेधात् भामत्यादिग्रन्थेषु तथैव लाभादपि तदानन्तर्यकथनम् न्याय्यं सूत्रभाष्यविरुद्धं चेत् तत्तु हास्यायैव। न तु चतुरचेतसां चेतसि चमत्कारमाधत्ते। प्रतिपद्य महि तदैव तस्यानन्तर्यं शास्त्रेषु कुत्रापि चेत् तदुल्लिखितं स्यात्। शास्त्रं तु शान्तो दान्तः[बृ० उ०] इत्यादिना शमादिसाधनसम्पत्यानन्तर्यावबोधकम्; आचार्यचरणानामपि तादृशमेव मतमुक्तपूर्वमेव तद्ग्रन्थे२। ये खलु पण्डिता निगमागमनिष्णाता वर्णाश्रमधर्मस्तम्भरूपास्तेषामपि विधर्मिवद् वेदादिशास्त्रेष्वपि अविश्वास इत्यहो करालकलिमाहात्म्यम्। निष्काम–कर्मणा चित्तशुद्धौ नित्यानित्यवस्तुविवेके जाते शमादिसाधनसाधनसम्पत्तिलाभाद् ब्रह्मजिज्ञासोपपत्तये कर्मकाण्डस्यावश्यकत्वेऽपि किमेतावता तदानन्तर्य्यं शक्यशङ्कम्? कर्मकाण्डस्यारादुपकारकत्वं न प्रकृते दण्डवारितम्। अस्तु, स्वस्वकर्मानुसारिणी हि प्रज्ञा वदतु यथाकामं स्वस्वबुद्ध्यनुसारं किं छिन्नमस्माकम्। यत्तु "एतस्माज्जायते प्राणो मनः "सप्राणमसृजत' 'एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुः

१ पूज्यपादाचार्य्यापेक्षया भगवद्बादरायणस्य प्रामाण्यं को नाम नाभ्युपगच्छेत्, विशेषतो यत्र भाष्यकारमत नाश्रीयते, तन्निरासाय भाष्यकारवचनप्रदर्शनायासो विफलः 'भाष्यकारो भगवदाचार्य्योऽपि तस्याः पूर्वतन्त्रत्वमुदाजहार। नहि दर्शनद्वैधे पूर्वोत्तरत्वं घटते। नहि न्यायदर्शनं ब्रह्मसूत्रस्य पूर्वभागः ब्रह्मसूत्रं वा न्यायदर्शनस्य पूर्वतन्त्रतया क्वचिदपि व्यवह्रियते। तस्माज्जैमिनीयमीमांसायां पूर्वतन्त्रत्वं वदतामाचार्य्यपादानां तस्यामेव शास्त्रान्तरत्वकथनमयुक्तमित्येव शक्तिभाष्यकृतामाशयः।

२ तस्माद् यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्त्तव्येति भगवदाचार्य्यपादाः, अस्मिन्नर्थेऽस्य सूत्रस्य प्रतिज्ञारूपत्वं न घटते किन्तूपदेशरूपत्वम्। तत्रैव कर्म्मावबोधानन्तर्य्यं विशेष इत्यादिना तत् खण्डनं शारीरकभाष्येऽस्ति।

शक्तिभाष्यकृन्मते तु प्रतिज्ञासूत्रमिदम्, अथ योगानुशासनम्, अथ ब्रह्मचारिधर्म्मा इत्यादिवत्, अनन्तरकर्त्तव्यत्वप्रकारक बोधानुकूलव्यापारो हि प्रतिज्ञा, सा च शिष्यानुन्मुखयितुं गुरुणा क्रियते। तादृक् सूत्रमिदम्। तत्र गुरोः शमदमाद्यानन्तर्य्यस्य ज्ञानाकांक्षितस्य सबन्ध एव नास्ति, कर्म्मावबोधस्यापि नास्त्यपेक्षा। किन्त्वधीतजैमिनीयभागं तत्सूत्रोपस्थापितजिज्ञासानिवृत्तये उपसन्नं निमित्तीकृत्य भगवान् बादरायण इदमुक्तवान् इति शक्तिभाष्यमनवबुध्यमानानां पण्डितमानिनां दण्डिस्वामिनां वृथावागाडम्बरः।

इत्यादिना प्राणाकाशयोः द्वयोरपि सर्वादित्वं भवितुं शक्यमिति यद्भवताऽशङ्कितं दवोधविजृम्भितम्। "तत्पूर्वकत्वाद्वाचः (वे २।४।४) इति व्याससूत्रस्य शाङ्करभाष्यावलोकनादेव कस्य सर्वादित्वं स्याद् विस्पष्टं विज्ञातं भविष्यति, किमरण्ये रोदनेन। प्राणादिसृष्टेः पञ्चभूतसृष्टिपूर्वकत्वादाकाशस्यैव सर्वादित्वं शास्त्रसम्मतं न तु हिरण्यगर्भस्येति दूषणतात्पर्यमस्माकम्। न च हिरण्यगर्भः समवर्त्तताग्रे "ब्रह्मा देवानां प्रथमः सम्बभूव' 'यो ब्रह्माणं विदधाति' इत्यादिश्रुतिवाक्यात् तस्य सर्वादित्वं प्रतिज्ञातमिति चेन्न। श्रुतितात्पर्यानवबोधात्। देवानां मध्ये तत्र तत्र तस्य सर्वप्राथम्यप्रतिज्ञातत्वेनातथात्वात्। अन्यथा पञ्चभूतानि सृष्ट्वा "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इत्यादि श्रुतिवाक्यान्यप्युपपद्येरन्। शास्त्रिणः! हिरण्यगर्भस्तु जीव एव। सच शारीरी। यदि प्राक् पञ्चभूतान्येव न स्युः तस्य तदुपादानकं शरीरं कथं स्यात् तत्तु विवेचनीयम्। यत्तु[1] विवर्त्तवादविषये यो दोष उद्भावितो भाष्यकृता तस्योद्धारः परिव्राजकाचार्यैर्न कृत इति या भवदीयोक्तिः सा तु निरर्थिकैव। सूत्रादितस्तत्स्थापनेन हि स परिहृतः। लोके तूभयथा प्रयोगो दृश्यते रज्जोः सर्पः रज्जौ सर्पः इति[2]। तत्राद्यस्तु रज्जुतोऽनिर्वचनीयसर्पोत्पत्त्या। द्वितीयस्तु बाधकाले—एतावत् कालं रज्जावेव सर्पः प्रत्यभादिति। नेयं राजाज्ञा रज्जौ सर्प इत्येका प्रतीतिः सर्वत्रेति। शास्त्रयोनित्वाधिकरणन्यायेन शास्त्रप्रमाणकेऽस्मिन् शास्त्रे युक्तिस्तु शास्त्रानुसारिण्येव भवितुमर्हति।

१ अविदितशारीरकभाष्यार्थस्याभासरसिकस्य स्मरणीयमुपादिशामि, स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत इति (शारीरकसूत्रस्य १ अ. २ पादे २३ सूत्रभाष्यम्) अत्र भूतानामित्यस्यार्थः प्राणिनांचेत्, 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्तीति प्राणनश्रुतेः प्राणिमात्रपरत्वं कथमपलप्यते। वस्तुतो हिरण्यगर्भो जीवो वा शरीराभिमानीश्वरो वा तच्छरीरं रजोगुणांशो वा समष्टिमहत्तत्त्वं वा समष्टिमनोवेतियत् श्रुतिस्मृतिषूक्तंतत् कल्पभेदेन मीमांसनीयं नतु तस्य जीवान्तरवद् भौतिकं शरीरमितत्त्वे स्थितेऽपि, शारीरकभाष्याङ्गीकृतं श्रुतिस्मृतिसम्मतं तस्य आद्यत्वमपलपता श्रीमता न लज्यते इति चित्रम्। अत्र विशेषबुभुत्सुभिः जन्माद्यस्य यत इति शक्तिभाष्यं द्रष्टव्यम्। यतः शक्तिभाष्यविचारमप्रकाश्य तत्खण्डनव्यापारात्मनय, शारीरकभाष्यतत्प्रस्थानानुयायि वचनान्यत्राप्रदर्शितानि।

२ अहो सन्यासिन् 'रज्जोः सर्प उत्पद्यते' इति प्रयोगाभावरूपं भ्रान्तिमात्यद्दत्तदोषमलीकचातुर्येण प्रच्छादयन् न लज्जसे भवान्।

येयं युक्तिर्भाष्यकृताहृता सा न शास्त्रानुसारिण्येव यतस्तदनुद्धारात् कश्चन दोषःस्यात्२ यत्तु वाल्येन तिष्ठासेत् [वृ] भवतिसिद्धान्तः पूर्वपक्षतया तिमिरभास्करकृता स्थापित इति यदुक्तं तत्तु पुस्तकभावानवबोधादेव । सूत्रभाष्योपनिषद्भाष्ययोः परस्परवैषम्यप्रदर्शनेन प्रपञ्चसारशारीरकभाष्ययोर्मध्येऽपि तत्सद्भावादेकत्र कुत्रचिच्चेत् चिदचिदात्मकं ब्रह्म नोक्तमन्यत्र तत्कथनात् तदात्मकत्वं ब्रह्मणः स्यादेवेति शक्तिभाष्यकृदुक्तौ दोषदानाय यथा भाष्ययोर्मध्ये परस्परं न वैषम्यमिति दर्शितम् । शाङ्करभाष्यदर्शनादेव तत्प्रतीयेत किं प्रलपितेन । अस्तु । समालोचनं तु सम्यग्विवेचनम् । विवेचनं तूभयोर्गुणदोषाविष्कारात्मकम् । तत्तु समालोचनायां नास्ति । किं पाक्षिकचातुराश्रम्यपक्षस्वीकारः शास्त्रसम्मतः ! किं चिदचिदात्मकब्रह्मवादोऽपि तथा ? अथवा किं सगुणनिर्गुणात्मकं साकारनिराकारात्मकं ब्रह्म शास्त्रयुक्तिसहम् ! किमवच्छेदकभेदेन वृक्षादौ कपिसंयोग-तदभाववन्निरवयवे निर्धर्मके धर्मिणि अवच्छेदभेदेन चित्वाचित्वव्यवस्था शास्त्रीया२ ? किमस्ति प्रपञ्चसारादौ कुत्रापि शक्तिरूपचिदचिद्ब्रह्मव्यवस्था३ ? कारणस्याऽन्यतरकर्मादेरभावात् कणभक्षाक्षचरणादिभिः प्रतिक्षेपाच्च किं विभुद्वयसंयोगः शक्यस्वीकारः४ ? दोषसत्वेऽपि तत्र तत्र किमपि दूषणं नोद्भावितम् । यत्र च दोषगन्धोऽपि नास्ति तत्र स्वमनीषया दोषोद्भावनं पुनः पुन र्भाष्यकृद्वचनाम्रेडनं यदि समालोचनं तर्हि शोभनमेव तत् । अहो पक्षपातः ! अहो आधुनिकनवीनपण्डितानां समालोचनशैली ! एतादृशः समालोचको यद्यन्यः कोऽपि जायेत तर्हि भारतवर्षं कृतार्थं स्यादिति प्रतीयते । रागद्वेषवशवर्त्तिना केनचन नेदं पुस्तकं लिखितं किन्तु परोपकारायैव । शास्त्रविरुद्धं वचनं मनसि निधाय कोऽपि स्वार्थान्न च्यवेताऽनर्थं च नच्छेदिति । शास्त्रार्थनिर्णयाय स्याच्चेन्मनीषा, तर्हि—अत्रागत्य दीयतां ग्रन्थकाराय वादभिक्षा, किं वृथा प्रलपितेन । नास्माकमादर एतादृशसमालोचने । प्रत्युत्तरं दत्तं केवलं सत्यासत्यनिर्णयाय । किं पिष्टपेषणेनेति पुनर्न दास्यते । इतिशम् ।

दण्डि-स्वामि शान्ताश्रमः रणमुक्तेश्वर महादेव, वड़ोदा ।

---

१ शास्त्रसम्मता एतेऽर्थाः शास्त्रं च दर्शितं शक्तिभाष्ये, तत्कथं जननयनेषु धूलिक्षेपःक्रियते ।

२ निरवयवे नीरूपे प्रणवेऽवच्छेदकभेदो मयैव दर्शितः, निर्धर्मकत्वं ब्रह्मणः शक्तिभाष्यकृद्भिरेव विचारितम् ।

३ अस्ति, तात्पर्य्येण, ब्रह्मसूत्रेचास्ति,मूलं दृश्यताम्; प्रदर्शितं च तच्छक्तिभाष्ये ।

४ भगवता अक्षचरणेन नित्यसंयोगखण्डनं न कुत्रापि कृतम् । प्रत्युत सर्वनैयायिकपूज्यचरणैरुद्योतकरपादैः न्यायवार्त्तिके कंण्ठरवेण नित्यसंयोगोऽङ्गीकृतः ।श्रीगोपालशास्त्रीदर्शनकेशरी

## समालोचनम्।

प्रमाणमञ्जरी- मूल्यम् ≈)। प्राप्तिस्थानम्- निर्णयसागर यन्त्रालयः मुम्बई।

प्राचीनन्यायविषयिणीयं षोडशपृष्ठात्मिका कृतिः श्रीसर्वदेवसूरिणः पञ्चदशशतकात् प्राग्भूतस्य। सा चेयं तैलङ्ग-इत्युपाह्व रामकृष्णात्मज-गङ्गेशशर्म्मणा सुपरिष्कृता निर्णयसागराख्यमुद्रणालयेन च प्राकाश्यं नीता। पुस्तकेऽस्मिन् संक्षेपेण न्यायशास्त्रोक्ता द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाभावपदार्थाः क्रमशो निरूपिताः। संक्षेपतः सप्तपदार्थ जिज्ञासुभिरवश्यमवलोकनीयतामर्हति पुस्तकमिदम्।

श्रीरामगीता, बालमधुकरीटीकाऽलंकृता। टीकाकाराः श्री वेदान्तरत्न-पण्डित त्र्यम्बकाभिजनशुक्लोपाह्व बालकृष्णशास्त्रिणः। मूल्यम् १२ आणकाः। प्राप्तिस्थानम् बालकृष्णशास्त्रीयशुक्ल, श्रीक्षेत्र त्र्यम्बकेश्वर, गंगेच ांठी नम्बर४२८।

भगवता श्रीरामचन्द्रेण लक्ष्मणं प्रत्युपदिष्टा द्विषष्ठि श्लोकात्मिका वेदान्तविषयकज्ञानगर्भा श्रीरामगीता प्रायः सर्वैरेव संस्कृतज्ञैर्ज्ञायते। अस्या यथा एकैवं पद्यं गम्भीरज्ञानगुम्फितं वर्तते तथा नासीदद्यावधि काचन तज्ज्ञानप्रकाशिनी समीचीना टीका। सम्प्रति श्रीबालकृष्णशास्त्रिभिर्बालमधुकरीटीकां विरचय्य सा त्रुटिरपाकृता। रामगीताया अर्थजिज्ञासूनां नितरां सङ्ग्रहार्हा इयं टीका। अन्ते बहूनां प्रख्यातविदुषां सम्मतयोऽपि सन्ति। धन्यवादार्हा टीकाकृतः।

वासुदेवद्विवेदी, साहित्याचार्यः।

---

## ज्यौतिषमीमांसादर्शनम्।

प्रणेता-ज्योतिर्भूषण पण्डित तारादत्त ज्योतिषी। ३२। मूल्यम् १) प्राप्तिस्थानम्-राजकुमारगुरुपण्डिततारादत्तज्योतिषी, रियासत जुब्बल, जिला शिमला।

प्रथमखण्डोत्तरखण्डयो र्विभक्तमिदं पुस्तकं सूत्राणां शतकं बिभर्ति। प्रतिसूत्रं विस्तृता हिन्दीटीका वर्तते। अन्ये परिशिष्टसूत्राण्यपि सन्ति। पुस्तकेऽस्मिन् फलितसिद्धान्तो द्वादशभावफलोपपत्तिश्चेति द्वयमपि दर्शनविज्ञानदृष्ट्या सुस्पष्टं वर्णितमवलोकयामः। नवीना कृतिरियं श्री तारादत्तज्योतिर्विदां ज्योतिषविषये तेऽतिसुतरां धन्यवादार्हा नः। फलितज्यौतिषविषये सन्देहानैरवश्यमेवेदं द्रष्टव्यमिति। प्रतिपाद्यविषयसमर्थने कृतः प्रमाणसंचयोऽपि सुतरां दर्शनीयः।

---

पञ्चदशे वर्षे १५ ] आश्विन-कार्तिकयोः पूर्णिमायाः १९९६ [४-५ संख्ये




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

Sanctioned by the Directors of Public Instruction United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—
त्यक्त-महामहोपाध्यायपदवीको
महामहाध्यापकः श्रीपञ्चानन-तर्करत्न-भट्टाचार्यः ।

सहकारि-सम्पादकः—
अवधेशप्रसादशर्मा द्विवेदः

उद्गम—स्थानम्—
श्रीभारतधर्ममहामण्डलम्, जगतगंज ) काशी

——:o:——

वार्षिकं मूल्यं मुद्रात्रयम ।
संरक्षकेभ्यः ५) वहिर्भारतम् ६) छात्रेभ्यः पुस्तकालयेभ्यश्च १)

# विषय-सूची।



# सूर्योदयः ।

पञ्चदशवर्षे १५ | आश्विन-कार्तिक-पूर्णिमायाः १९९६, अक्टूबर नवम्बर १९३९ । | ४-५ संख्ये

## आवश्यकं निवेदनम् ।

महानुभावाः सूर्य्योदयसंरक्षकाः पुष्टपोषकाः सहायकाः पाठका लेखका अन्येऽपि संस्कृतानुरागिणः सर्वेऽपि जानन्त्येव यत् सूर्य्योदयोऽयमद्य पञ्चादश-वर्षं यावत् संस्कृतसाहित्यस्य सनातनधर्मस्य च सर्वथा संरक्षणं सुप्रचारञ्च संस्कृतविदुषां गौरवसंरक्षणेन सहैव तेषां महत्त्वप्रख्यापनं संस्कृतच्छात्राणां च परस्परविचारपरिवर्तनावसरप्रदानाद्युपायेन तेषां साहाय्यकरणमित्यादि विविध-सेवां संस्कृतसमाजस्य विदधदायाति इति । अद्य संस्कृतपत्रेष्विदमेव पत्रं विद्यते यत् पञ्चदशवर्षावधि निरन्तरं संस्कृतसाहित्यसमाजसेवां कुर्वत् स्वल्पेनैव ग्राहकता-शुल्केन सर्वेषामेव पुरतः स्वात्मानं समर्पयते । श्रीविश्वनाथानुग्रहेण दैनन्दिनं संवर्द्ध-मानप्रचारमुत्तरोत्तरं लेखादिकलेवरसंवृद्धिमेवासादयति ।

सम्प्रति पाश्चात्यदेशोद्भवानीश्वरवादमूलकसमाजवादादि-भारतीयसंस्कृतिदू-षकभावप्रसारसमये संस्कृतभाषायाः सनातनधर्म्मस्य च महिम्नः प्रख्यापनस्य प्रचा-रस्य च विशेषत आवश्यकता प्रतीयते । तत्र च सर्वैरेव भवद्भिर्बद्धपरिकरैः सर्वथा सूर्य्योदय-साहायकैर्भवितव्यमिति सर्वेषामेवास्माकं सूर्य्योदय-सञ्चालक-सम्पादक-प्रकाशकानां महती आशा विद्यते । केवलमस्माकमाशैव नास्ति, किन्तु दृढा धारणा दृढमूलश्च विश्वासो विद्यते, यत् तत्र भवन्तोऽवश्यमस्माकमत्र हस्तावलम्बनं विधा-स्यन्ति इति । यदा यदा च वयमत्र विषये श्रीमतां साहाय्यमाकाङ्क्षितवन्तस्तदा तदैव श्रीमन्तो द्विगुणेनोत्साहेन चतुर्गुणेन चानुरागेणास्मानुत्साहयन्तः सूर्य्यो-दयसाहाय्यं कृतवन्त इति दृढमूलविश्वासेन सहैव वयं सूर्य्योदयपत्रमिदमधुना नूतनेनोत्साहेन पृथक्-पृथक् सामाजिक-साहित्यिक-राजनीतिक-धार्मिक-पौराणिकै-तिहासिक-व्यावहारिक-नागरिक-शिक्षासम्बन्धिसमाचारलेखेतिवृत्तानां स्तम्भविभा-गान् प्रकल्पयन्तः प्रतिमासं सर्वेषामेव विषयाणां सम्बन्धे लेखमालां प्रका-शयितुमिच्छन्तः श्रीमतां पार्श्वे प्रेषयन्तः सादरं सानुनयं सानुरोधमभ्यर्थयामहे यद् एषु लेखमालास्तम्भेषु यं कमपि विषयमधिकृत्य स्वकीयं लेखं निबन्धं वा सरलं

सुस्पष्टं वर्तमान-समयोपयोगिनञ्च विलिख्य प्रेषयितुमनुकम्पयेयुश्चेति । सम्प्रति धर्म-विमुखप्रायेऽस्मिन् काले श्रीमतां सर्वथा साहाय्यप्रदानमावश्यकम् । अतश्च लेख-मालास्तम्भेषु एषु कस्मिन् विषये भवन्तो नियमतो निरन्तरं लेखं प्रहेष्यन्तीति पूर्व-मेव सूचयितुमनुगृह्णन्तु । तेन वयं सर्वेषां श्रीमतां नामसूचिकां विधाय लेखमाला-स्तम्भविभागान् यथानुरूपं चालयितु मभिलषाम इति । लेखमालाक्रमश्चैवमस्माभि-र्निरूपितः । अत्रापि श्रीमतां किमपि परिवर्तनं परिवर्द्धनमपेक्षितं चेत्तदपि सूचनीयम् ।

### १—धर्म्मः—

अस्मिन् विभागे वर्णव्यवस्था, मूर्तिपूजा, श्राद्धमीमांसा, विधवोद्वाहनिराकृतिः, ब्रह्मचर्य्य-गार्हस्थ्यादयो-भारतीयवर्णाश्रमधर्माः ।

### २—संस्कृतसाहित्यम्—

स्तम्भेऽस्मिन् प्राचीनकवीनां समयनाटककाव्यग्रन्थादिसमालोचन-गवेषणा-नुसन्धानादिविषयकाः संस्कृतसाहित्यस्य महत्त्वे तदीयप्रचारे तस्य वर्तमानसमयो-पयोगितादिविषये लेखाः ।

### ३—शिक्षा—

अस्मिन् स्तम्भे—शिक्षोद्देशः प्राचीनशिक्षासरणिः, आधुनिकपाठनपद्धतिः । शास्त्रार्थविवादादिप्रकारविषयकाः लेखाः स्थास्यन्ति ।

### ४—ऐतिहासिकं पौराणिकञ्च—

अस्मिन् पुराण-माहात्म्यम् तदीयकथानां वैज्ञानिकं रहस्यम् । तत्र समुद्भूतानां शङ्कानां निरासः शिलालेखादि-युगपरिवर्तनादिविषयका लेखाः ।

### ५—स्वास्थ्यविज्ञानम्—

अत्रायुर्वेदविषयका गवेषणापराः, चिकित्सापद्धत्योः प्राचीनर्वाचीनत्वम्, दिन-चर्या, ऋतुचर्य्या, व्यायामोपयोगिता प्राचीनार्वाचीनव्यायामप्रणालिप्रदर्शनम् । रोगोद्भवहेतुनिराकरणादिविषयका लेखा अपेक्षिताः ।

### ६—कवितानिकुञ्जम्—

अत्र विविधविषयका भावपूर्णाः सरलाः छात्रबोधगम्याः प्रसादगुणप्रधाना एव कविता अपेक्षिताः ।

### ७—दार्शनिकतत्त्वम्—

अत्र जीवात्मपरमात्मविचारः । बन्धमोक्षादिविचारः, ईश्वरानीश्वरवाद-

विचारः। दार्शनिकप्रस्थानभेदविषयका, उपनिषद्भक्तियोगज्ञानयोगनिःश्रेयसपरलोकवादादिविषयका लेखाः।

८–राजनीतिकम्—

इह प्राचीनार्वाचीनशासनप्रकार-नगरशासन व्यवस्था-सभा-पत्रप्रचारविभाग-धूमानःसञ्चारादिविषयका लेखाः।

९–वैज्ञानिकम्—

विविधयन्त्रनिर्माणविषयका वायुयान-भूगोल-खगोल-सामुद्रिकयानादिविषयका विद्युद्यन्त्राद्याविष्कारसम्बन्धिनो विषयाः प्रान्तीयदेशीय-भूभागविभागविषयकाश्च-लेखा अपेक्षिताः।

१०–स्वर्गीयस्मृतयः—

अत्र संस्कृत-विदुषामन्येषाञ्च महानुभावानां संस्कृतानुरागिणां स्वर्गतानां शिक्षाप्रदायकजीवनचरितवर्णनम्।

११–सङ्गीतशिल्पकलादिवैचित्र्यम्—

अत्र प्रान्तीयगृहशिल्पकला-प्राचीनार्वाचीन-गृहनिर्माण-वास्तुविद्याविषयकाः सङ्गीतविषयका लेखा अपेक्ष्यन्ते।

१२—विविधाः समाचाराः—

देशवार्ता विविधा विचित्रा घटनाश्च अत्रावधानदानेन सानुग्रहं शीघ्रमेवोत्तरयन्तु इति सानुरोधमभ्यर्थयन्तो विरमामो विस्तरात्।



## काश्यां हिन्दीसाहित्यसम्मेलनम्।

आश्विने दुर्गापूजावकाशे इह काश्यां हिन्दीसाहित्यसम्मेलनं महता समारोहेण सुसम्पन्नम्। तत्र प्रधानसभापतिपदं श्रीमद्भिः पं० अम्बिकाप्रसादवाजपेयिमहोदयैरङ्गीकृतमासीत्। स्वागतकारिणीसभापतित्वञ्च श्रीमद्भिर्महामहिमशालिभिर्मालवीयमहोदयैः स्वीकृतम्। तत्र वहवोऽन्या अपि परिषदोऽभवन्। यथा राष्ट्रभाषापरिषद्, कहानीपरिषद्, कलापरिषद् इत्यादयः। तत्र बहवः प्रस्तावाः समुपयोगिनः स्वीकृताः। हिन्दीभाषाया द्वीपान्तरे प्रचारव्यवस्था, इह भारतेऽपि प्रान्तेषु हिन्दीभाषाध्यापन-व्यवस्थाप्रभृतयश्च। राष्ट्रभाषायाश्च स्वरूपनिर्धारणे महान् विवादः प्रादुर-

भूत्। परन्तु तत्सभापतिभिः श्रीराजेन्द्रप्रसादमहोदयैस्तत्समस्यासामञ्जस्यं कृत्वा राष्ट्रस्वरूपनिर्धारणेन हिन्दीभाषायाः स्वरूपवृद्धिरेव भविष्यति न कापि हानिर्भाविनीति सर्वेषां सदस्यानां कथमपि सन्तोषोऽकारि। इत्येवं सर्वत्रैव परिषत्सु हिन्दीभाषावृद्धिकराः प्रस्तावाः सर्वसम्मत्या निर्द्धारिता अभूवन्। एतादृशेन समारोहेण संस्कृतसाहित्यसम्मेलनमपि संस्कृतज्ञैर्विद्वद्भिः समनुष्ठितं स्यात्तर्हि संस्कृतभाषाया अपि एवमेव समुन्नतिः प्रचारश्च संसाधितौ स्यातामिति।

---

## अहो ! ज्यौतिषविज्ञानभास्करो विलुप्तः।

आश्विनमासे काशीस्थाः परमप्रसिद्धा विद्वांसो वाराणसेयसंस्कृतकालेज-ज्यौतिषप्रधानाध्यापकपदमलङ्कुर्वाणा महामहाध्यापकाः श्रीहृषीकेशोपाध्याया ज्योतिषाचार्य्याः काश्यां भदैनीस्थिते निजभवने नश्वरमिदं कलेवरं विहायान्यलोकपदं प्रस्थिताः। ज्योतिर्विद इमे प्राचीना विद्वांसः, एतेषां पाण्डित्यं प्रख्यातमासीद्। यथा इमे ज्यौतिषशास्त्रे प्रवीणा आसन् तथैव धर्मशास्त्रेऽपि। एषां धर्मशास्त्रपाण्डित्यं प्रसिद्धमासीत्। इमे हि धर्मशास्त्राणां समन्वयं साधु कुर्वन्तिस्म। एतेषां पञ्चाङ्गमपि सर्वत्रैव भारते प्रसिद्धं विद्यते। अन्येषां ज्योतिर्विदां पञ्चाङ्गापेक्षया स्वर्गीयाणामेषां पञ्चाङ्गे जनानां महती श्रद्धा विद्यते। इमे हि महोदयाः शरीरत्यागावसरे सर्वैरेव स्वबन्धुबान्धवैः परिवृताः सर्वथा सर्वविधलौकिकसम्पत्तिसम्पन्नाः श्रीविश्वनाथनगर्य्यां केदारखण्डान्तर्गतभूभागे प्राणवियोगं विधाय शिवपुरीम्प्रस्थिताः। एतेषां योग्यतमाः पुत्राः पौत्राश्च सन्ति। एतेषामाकस्मिकेनानेन शरीरवियोगेण शोकसन्तप्तेभ्यस्तत्परिवारेभ्यः समवेदनां प्रकाशयन्तो वयं श्रीकाशीविश्वनाथात्तदीयात्मनश्चिरशान्तिं तत्कुटुम्बेभ्यश्च तद्वियोगसन्तापसहनसामर्थ्यमभ्यर्थयामहे। ( स० सम्पादकः )

---

## आवश्यक–सूचना

अखिल भारतवर्षीय-धार्मिकाध्यात्मिक-संस्कृतविश्वविद्यालयस्य ऐषमः पाठ्यग्रन्थावली नियमावली च प्रकाशिता जाता। परीक्षार्थमावेदनपत्राणि च परीक्षार्थिनां कृते मुद्रितानि सन्ति। अतश्च केन्द्राध्यक्षैः शीघ्रतया स्व-स्वकेन्द्रे परीक्षार्थिसंख्यानुपातत आवेदनपत्राणि इतः समानाय्य सम्भृत्य सशुल्कं प्रेषणीयम्। इत आवेदन पत्राणां समानयनतिथिः दिसम्बरमासान्तं यावत् विद्यते। सम्भृत्यात्र कार्य्यालये प्रेषणतिथिर्जनवरीमासान्तं विद्यते। एतद्वर्षीया नियमावली परिष्कृता परिवर्द्धिता च सरलतया स्फुटार्थज्ञानाय हिन्दीभाषायामेव प्रकाशिता विद्यते। सर्वे चावश्यज्ञातव्या

विषयाः सन्निवेशिताः सन्ति। अतश्च सर्वथा संस्कृतच्छात्राणां धार्मिकपरीक्षा प्रदानार्थं परमं सौलभ्यं सञ्जातम्, इति विज्ञापयतो मे प्रसीदति चेतः।

मन्त्री—अ० भा० धा० आ० सं० विश्वविद्यालयस्य
(श्रीभारतधर्ममहामण्डल जगत्गंज, बनारस।)

## नाहनराज्ये धर्मप्रचारः।

पञ्चाम्बुप्रान्तीय—प्रशस्तनाहनशिरमौरराज्यस्य धर्मानुरागिणा परराष्ट्रसचिवेन श्रीमता ए० एन्० रायमहोदयेन साग्रहं सम्प्रेषितमामन्त्रणमासाद्य श्रीभारतधर्ममहामण्डलेन काशीत एकं धर्मप्रचारकमण्डलं सप्तक्रोशपरिमितामूर्द्ध्वभूमिं गिरेरधित्यकामध्युषितायामलौकिकप्राकृतिकसौन्दर्यसम्पन्नायां शिरमौरराज्य-राजधान्यां नाहननगर्यां प्रेषितम्। धर्मप्रचारकमण्डलमेनत् नवम्बरमासस्य १९३९ खिष्ट्रीयस्य चतुर्दश्यां तारिकायां नाहननगरे समुपस्थितम्। अस्मिन् मण्डले महामहोपदेशकाः शास्त्राचार्याः श्रीमन्तो विद्वद्वरा गङ्गाविष्णुशास्त्रिण', महोपदशकाः श्रीमन्तो गोपालचन्द्रचक्रवर्त्तिनो वेदान्तशास्त्रिणस्तथा साहित्याचार्याः श्रीमन्तो वासुदेवशर्माणो द्विवेदिनः सममिलन्। विदुषामेषां पञ्चदश्यां सप्तदश्यां च तारिकायां नवम्बरमासस्य रात्रौ सप्तमघण्टाबादनतः श्रीजगन्नाथमन्दिरस्य प्रशस्ते प्राङ्गणे सनातनधर्मस्य विविधविषयमवलम्ब्य गंभीरगवेषणासंवलिताः सुललिताः सामयिका मार्मिका उपदेशा अभूवन्। सहस्राधिकाः श्रोतारो नागरिका राज्यस्य उच्चपदाधिकारिणः कर्मचारिणश्चात्र समुपस्थिता आसन्। उपदेशानां जनतासु नितान्तं प्रभावः समजनि। सर्वतो हर्षवर्द्धकः करतलध्वनिरभूत्। प्रधानसचिवेन सभापतिपदमलङ्कृतम्।

षोडश्यां तारिकायां श्रीमन्नाहनाधीश्वरस्य स्वतन्त्रनृपतेर्महाराजाधिराजस्य श्रीराजेन्द्रप्रकाश वर्मणो धार्मिकवरस्य सभापतित्वे विमले विशाले सुसज्जिते शमशेरविलानाम्नि भव्ये राजभवने राजपरिवारमण्डलमण्डितायां सभायां त्रयाणामुक्तसुधियां सुधासमं गीताधर्मं, हिन्दुधर्मं, जीवब्रह्मस्वरूपं चाश्रित्य प्रवचनमभवत्। प्रवचनमाकर्ण्य सपरीवारो महाराजाधिराजः परमाह्लादमुपेयिवान्। श्रीराजमाताऽपि नितान्तं प्रसीदति स्म। सभापतिपदमलङ्कुर्वाणः श्रीमान् महाराजाधिराजः श्रीभारतधर्म-महामण्डलं प्रति स्वकीयां कृतज्ञतां हार्दिकीं प्राकाशयत्। निर्दिष्टैः पण्डितैरपि नारीकेलफलैः समं शुभाशीराशिप्रदानपुरस्सरं श्रीमता गङ्गाविष्णुशास्त्रिणा सद्योविरचितमधो विन्यस्तं पद्यमेकं पठितम्। तद् यथा—

श्रीमान् मान्यवरः स्वतन्त्रनृपतिः श्रीनाहनाधीश्वरो
धीरो वीरवरः स्वधर्मनिरतः सम्यक् प्रजापालकः।
श्रीविश्वेश्वर-विश्वनाथदयया राजाधिराजो महान्
श्रीराजेन्द्रप्रकाशधार्मिकवरो जीव्याच्चिरं भूतले॥ १॥

एतदन्तरं श्रीजगन्नाथमन्दिरे एवाऽष्टादशतारिकायां पञ्चवादनतः सार्धाष्ट-वादनपर्यन्तं क्रमशः श्रीगोपालचन्द्रचक्रवर्तिनां वेदान्तशास्त्रिणां गीतामवलम्ब्य वेदान्तविषये, महामहोपदेशक श्रीगङ्गाविष्णुशास्त्रिणाञ्च सनातनधर्मस्यावताराघनेक-विषयमवलम्ब्य सुतरां मार्मिकं भाषणमभूत्। अद्यैव श्रीगङ्गाविष्णुशास्त्रिमहोदयैर्महा-मण्डलस्य, तदीयधर्मप्रचारोपयोगिनः कार्यकलापस्य च परिचयं दत्वा सनातन-धर्मसभास्थापनार्थमनुरोधः कृतः।

अथोनविंशतारिकायां पुनस्तत्स्थल एव श्रीवासुदेवशर्मद्विवेदिभिः संस्कृतभाषा-प्रचारविषये म० म० श्रीगङ्गाविष्णुशास्त्रिभिश्च सनातनधर्मस्य विविधविषयेषु तथा सुमधुरं सारगर्भितञ्च भाषणं दत्तं यथा निखिलापि जनता सर्वे राजकर्मचा-रिणश्च नितरां प्रसन्नाः प्रभाविताश्चाभवन्। अन्ते सनातमधर्मसभां संस्थाप्य सभापतिमन्त्रि-प्रभृति निर्वाचनानन्तरं सभा विसर्जिता।

निवेदकः—
नरेन्द्रनाथ रायः
(फॉरेन एंड पॉलिटिकल मिनिस्टर, नाहन)

—o—

## विहारसंस्कृतशिक्षासुधारसमितिः।

मिथिला हि सुप्रसिद्धा संस्कृतवाङ्महार्णवमूलोद्गमस्थानीया समृद्धावनिः वेद-कालत एव जागर्ति। तत्रैव हि जनकयाज्ञवल्क्य-संवादरूपा बृहदारण्यकोपनिष-दात्मानमाविश्चकार। तत्रत्य एव योगी याज्ञवल्क्यो महर्षि र्वेदे स्मृतौ च युगान्तर मुपस्थापयन् शुक्लयजुर्वेदरूपेण याज्ञवल्क्यस्मृतिरूपेण च नवीनमेवाविष्कारम् जनमाजे संस्थापयामास। अद्यापि राजनीतिविभागे याज्ञवल्क्यस्मृतेर्मिताक्षराया दायभागस्य महान् समादरो विद्यते। तत्रैव सम्प्रति कांग्रेस (राष्ट्रियमहासभा) सदस्यानां सञ्चालनसमये तदीयशिक्षामन्त्रिणा महामान्येन भारतीय-संस्कृतिप्रेम भाजा डा० शैयदमहमूदमहोदयेन एका संस्कृतशिक्षायाः पुनः संशोधनसमितिः प्रतिष्ठापिता। तत्र भारतीयाः सर्वेऽपि परमप्रसिद्धाः संस्कृतविद्वांसो देशकालात्मविदश्च लौकिकव्यवहारविदो महाप्राज्ञा महामाननीया आदरणीयाः सदस्याः सन्ति। तथाहि सर्वप्रथमं श्रीमन्तो महाराजाधिराजा दरभङ्गानरेशाः सभापतिपदमधितिष्ठन्ति। महा-महोपाध्यायाः पं० गङ्गानाथ झा महोदयाः, म० म० श्री पं० हरिहरकृपालुद्विवेदिमहो-दयाः, म० म० श्री पं० बालकृष्णमिश्र महोदयाः, महामहाध्यापकाः श्री पण्डित गोपाल शास्त्रिणो दर्शनकेशरिमहोदयाः, श्री पं० हरिश्चन्द्रशास्त्रिमहाशयाः (प्रिंसिपल पटना कालिज) श्री पं० धर्मराज ओझा महाशयाः (प्रिंसिपल मोजफ्फरपुर संस्कृतकालिज) महामहाध्यापकाः श्री पं० ईश्वरीदत्त दौर्गादत्ति शास्त्रिमहोदयाः (कार्य्यसम्पादकाः) वि० एन० वनर्जीमहोदयाः (संस्कृत प्रधानाध्यापक पटना कालिज) महामहाध्यापकाः

राजपण्डिताः श्री पं० बलदेवमिश्रमहोदयाः श्रीबद्रीनाथवर्म महोदयाः ( आचार्य्य विहारविद्यापीठ ) परमप्रसिद्धा नेतारः श्री बाबा राघवदासमहोदयाः, श्रीकुमार गङ्गानन्दसिंह महोदयाः श्रीचन्द्रेश्वर नारायण सिंह एम्० एल्० ए० महोदयाश्च सन्ति। तस्याः समितेः प्रथमाधिवेशनञ्च दरभङ्गानगरे श्रीमतां महाराजानां लक्ष्मीविलासभवने महाप्रासादे नवम्बरमासस्य १४, १५, तिथौ समपद्यत। तत्र सर्वेऽपि सदस्याः समुपस्थिता आसन्। वादविवादानन्तरं महता परिश्रमेण संस्कृतविदुषां विशिष्टसम्मतिग्रहणाय प्रश्नावलीप्रकाशनं सामान्यतः सिद्धान्तञ्च निर्णीय समितिः पुनरग्रेऽधिवेशनार्थमनिश्चितं दिवसं कृत्वा कार्यसम्पादनसौलभ्यार्थं काञ्चनान्याम् उपसमितिं निर्माय मध्ये विरामार्थं विसर्जिता। आशास्ति यत् शीघ्रमेव समागतेषु प्रश्नावलीविशिष्टोत्तरेषु पुनरपि समितिः समेष्यति। समितिरियं मनोयोगेन कार्यं सम्पादयितुं बद्धपरिकरा दृश्यते। अग्रे विहारस्थविदुषां सम्मत्यनुरूपपरिवर्तनं सामयिकमवश्यं विधास्यतीति भावुकानां नवयुगीन-संस्कृतच्छात्राणां समितावस्यां महती आस्था विद्यते—

कश्चित् संस्कृतानुरागी—

अतिक्रान्तदर्शी।

## विहारप्रान्ते श्रीमहामण्डलतो धर्मप्रचारः

निवेदकः—मुनिराज शर्मा प्रत्यक्षदर्शी,

काशीस्थ-श्रीभारतधर्ममहामण्डलेन पितृपक्षीयमेलायां धर्मप्रचारार्थं धर्मप्रचारकमण्डलं गयानगरे प्रेषितम्। अत्र महामहोपदेशकाः श्रीमन्तो विद्वद्वरा गंगाविष्णुशास्त्रिणो, गोपालचन्द्रचक्रवर्त्तिनो वेदान्तशास्त्रिणः, साहित्याचार्याः कोषगोचरगवेषणपरा वासुदेव शर्माणो द्विवेदिनः सम्मिलिता आसते स्म। एतेषां पण्डितप्रकाण्डानां गयानगरस्य विविधासु पण्यवीथिकासु महता समारोहेण सारगर्भितमोजस्वि सामयिकं व्याख्यानमभूत्। ततो गयावास्तव्यनागरिकेषु श्राद्धनिमित्तमागतेषु यात्रिवर्गेषु च सनातनधर्मस्य पूर्णा जागर्तिरुत्पन्ना। व्याख्यानावसरे ते मन्त्रमुग्धा इवासन्। साम्प्रतं गयायां सर्वत्रैव श्रीमहामण्डलस्य धर्मप्रचारकार्यं प्रशंसन्ति जनाः। अनेके प्रतिष्ठमाना नागरिकाः श्रीमहामण्डलस्य आजीवनसभ्या अभूवन्।

## प्रचारस्य कार्यक्रमो यथा—

१९३९ अक्टूबरमासस्य सप्ततारिकान्ते दशतारिकापर्यन्तं रमनायां धर्मसभाभवने श्रीमद्भगवद्गीतायाः प्रवचनमभूत्, तदभ्यन्तर एवाष्टमतारिकायां व्रजभूषणसंस्कृतमहाविद्यालये द्विवादनसमये छात्राध्यापकानां समुपस्थितौ महती सभा समजनि। तत्र नैयायिको विज्ञवरः श्रीसिद्धेश्वरमिश्रः सभापतेः पदमलमकरोत्। अत्र मङ्गलाचरणे केनचिदन्तेवासिना विहिते प्रथमतो वासुदेवशर्माणो द्विवेदिनो देववाण्या महत्त्वं तत्राधीतिनां छात्राणां सामयिकं कर्त्तव्यञ्चेति विषयद्वयमवलम्ब्य संस्कृतभाषायां धाराप्रवाहतः प्रभावोत्पादकं व्याख्यानं विहितवन्तः। ततो गङ्गाविष्णुशास्त्रिभिर्निजनैसर्गिकव्याख्यानकौशलेन तस्मिन्नेव विषयद्वये लोकोत्तरं विवेचनापूर्णमभिभाषणं व्यधायि। येन सर्वे छात्रवर्गा अध्यापकाश्च चमत्कृताः। व्याख्यानद्वयमाकर्ण्य सर्वे प्रसीदन्तिस्म।

ततो दिनत्रयं भारतसेवाश्रमसंघस्य वार्षिकमहोत्सवे श्रीमतो रायबहादुर काशीनाथसिंहमहोदयस्य, श्रीमतः सर मन्मथनाथमुख्योपाध्यायमहाशयस्य तथैकस्य कांग्रेसिमहोदयस्य च सभापतित्वे हिन्दुराष्ट्रनिर्माणं हिन्दुधर्मस्य वैशिष्ट्यम् तथा हिन्दुसंघटनमिति विषयत्रयमुपजीव्य श्रीगङ्गाविष्णुशास्त्रिणामपूर्वं व्याख्यानमभवत्। व्याख्यानतो जनताया नितान्तं मनमुग्धम्। श्रीविष्णुपदमन्दिरे श्राद्धतत्त्वं युक्तिप्रमाणाभ्यामुक्तशास्त्रिमहोदयैरद्भुतं प्रतिपादितम्। श्रोतृवर्गे महान् हर्षो जातः।

× × × ×

धर्मप्रचारकमण्डलीयं मोतिहारीनगर्य्यां विहारप्रान्तीय-संकीर्त्तनमहामण्डलस्य द्वितीयवार्षिकमहोत्सवे निमन्त्रणामासाद्य सम्मिलिता। अयं महोत्सव आंगलस्याक्टूवरमासस्य २५ तारिकातः २७ पर्यन्तं दिनत्रयमवर्त्तिष्ट। तत्र श्रीमतां महामहोपदेशकानां गंगाविष्णुशास्त्रिणां नामकीर्त्तनमहत्त्वे व्याख्यानद्वयमश्रुतपूर्वमभूत्। अत्र महोत्सवे निम्नाङ्कितनामधेयाः साधवो महात्मानो विद्वांसः संगीतकलाकुशलाश्च सममिलन्। यथा—नैमिषारण्यवासिनो महात्मानः ( सभापतयः ), ग्वालियरप्रभृतिस्थानत आगताः साधवः। संगीतसम्राट् भगवत्किशोर व्याकुलः, अनुजद्वयसहिता बुद्धिचन्द्रशर्माणः ( पंचाम्बु प्रदेशिनः ) श्रीरामदेवी महोदया, श्रीराधाप्रसादपाठकः रामाभ्यासप्रभृतयश्च। यस्य समारोहस्य समस्तं श्रेयः श्रीबाबूरामेश्वरप्रसादसिंह विद्वद्वरश्रीकैलासप्रसादमिश्र—श्रीबाबूव्रजनन्दनसाही एम०, एल०, ए० महोदयप्रभृतीनामेवास्ते।

## "भाषा-लिपी"

लेο पण्डित नारायणपति त्रिपाठि महोदयः ( काशी )

ब्राह्मी स्वयं काल-विपर्ययेणाऽभूद्भारती भारतवर्ष ( मातृ ) भाषा ।
तां भारतस्था न विदन्ति ये ते, कथं भवेयु र्भुवि भारतीयाः ॥ १ ॥
ते भारतीत्रव्यथयापृतत्वात्, वक्तुं स्वदेशेऽपि न पारयन्ति ।
मनोगतं भावमशेषमेवं, कर्तुं स्वयं व्यक्तमपि क्षमा नो ॥ २ ॥

स्वराष्ट्रभाषैक्यमतो मतज्ञै
देशोन्नतिव्रातपरैः समस्तैः ।
लिपिः प्रशस्या भ्रमहीनवर्णा,
सुस्पष्टलेख्या खलु नागरीह ॥ ३ ॥

भवन्ति ये नागरिका युवानः,
परस्परालापविनोदमग्नाः ।
वैदेशिकीमेव वदन्ति भाषां,
स्वविज्ञतागौरवदर्शनार्थम् ॥ ४ ॥

प्रान्तीय-भाषानवबोधभीत्या, देशीयभाषैक्यमवश्यभाव्यम् ।
यतो भवेत् सार्वजनीनभावज्ञानं मतं यत् सकले स्वदेशे ॥ ५ ॥

---

## ब्राह्मणानां श्रेष्ठत्वं जन्मना वर्णव्यवस्था च ।

( क्रमागता )

[ लेο—पंο दीनानाथशर्मा शास्त्री सारस्वतः ]

मङ्गलाचारः शुचिः···संपूज्य देवतामश्विनौ गां ब्राह्मणांश्च कृतोपवासः प्राङ्मुख उदङ्मुखो वा गृह्णीयात्, चरकसंहितायां कल्पस्थाने १।१२ इति स्वाο दयानन्दस्याऽपि मान्यायाश्चरकसंहितायाः ( उपवेदस्य ) प्रमाणम् । अत्र देवतापूजनमपि निर्दिष्टम्, ब्राह्मणपूजनमपि । अत्र प्रष्टव्यम्—देवा इति विदुषां नाम ? अथवा मनुष्य-भिन्न-देवयोनिविशेषस्य ? यदि कथ्येत यद्—देवा इति विदुषां नाम; तर्हि ब्राह्मणोऽत्राऽविद्वानपि पूजनीयो मंस्यते यतो ब्राह्मणोऽत्र देवात् पृथगुक्तः—इति जन्मसिद्ध-वर्णव्यवस्था सिद्धा । यदि कथ्येत—देवा इति मनुष्य-भिन्नयोनिविशेषस्य नाम;

तर्हि देवयोनिसत्ता सिद्धा। सूर्य्यादिदेवनामस्वीकारे मूर्त्तिपूजाऽपि सिद्धा। एवं 'गर्भिणी शान्तिमङ्गल—देवता—ब्राह्मण—गुरुपरा च भवेद्' इति सुश्रुतसंहितायां शरीरस्थाने १०।३ सूत्रेऽपि द्रष्टव्यम्।

'ब्राह्मणा ब्रह्मयोनिस्थाः ये स्वकर्म्मण्यवस्थिताः। ते सम्यगुपजीवेयुः षट् कर्म्माणि यथाक्रमम्' मनु० १०।७४ अत्र ब्राह्मणानामेव कृते षट्कर्म्मणामाज्ञा दत्ता, नतु सर्व्व-साधारणानां कृते। तेन जन्मना वर्णव्यवस्था सिद्ध्यति। अन्यथाऽत्र 'ये षट्कर्म्माणि कुर्व्वन्तु त एव ब्राह्मणाः स्यु' रित्येव कथितमभविष्यत्। अग्रे विशदयति मनुमुनिः 'षण्णां तु कर्म्मणामस्य त्रीणि कर्माणि जीविका। याजनाऽध्यापने चैव विशुद्धाच्च प्रतिग्रहः १०।७६ अनेन सिद्ध्यति यद्—ब्राह्मणस्य कृते त्रीणि कर्म्माणि धर्म्मस्य, त्रीणि च कर्म्माणि जीविका। तर्हि धर्म्मकर्म्माणि तु (दान—यजन—पठनानि) त्रयाणां वर्णानां समानान्येव; काऽऽवश्यकताऽऽसीद् वेदत्रयस्य? जीविका तूदरपाल-नार्थमेव भवति। तेनैवैतत् सिद्ध्यति यद्—जन्मनैव एषां भेदः। 'एतद्देशप्रसूतस्य सकाशाद् अग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः' मनु० २।२० अत्रत्यं 'प्रसूतस्य' 'अग्रजन्मनः' इति पदद्वयं जन्मना वर्णं व्यवस्थापयति। अत एव ब्राह्मणयोग्यजीविकां कर्त्तुं समर्थोऽपि क्षत्रियवैश्यादिस्तत्कृते निषिध्यते। तथा च मनुः—

'त्रयो धर्मा निवर्तन्ते ब्राह्मणात् क्षत्रियं प्रति। अध्यापनं याजनञ्च तृतीयश्च प्रतिग्रहः' १०।७७ वैश्यं प्रति तथैवैते निवर्त्तेरन्निति स्थितिः। न तौ प्रति हि तान् धर्म्मान् मनुराह प्रजापतिः' १०।७८ इति स्पष्टमाचष्ट मनुः। अत एव सिध्यति जन्मना वर्णव्यवस्थाऽस्ति न तु कर्म्मणा। यदि कर्म्मणाऽभविष्यत्; तर्हि क्षत्रियवैश्यादिस्त-ज्जीविकाकर्म्मणा कथं वञ्चितोऽकरिष्यत; यतोऽध्ययनयजनदानानि तु क्षत्रियवैश्या-देरपि भवन्ति कर्म्माणि कथं तदर्थं जीविकान्तरं कृतमभविष्यत्।

किं वहुना—उपनयनाऽवस्थाभेद एव साधयति यद् जन्मना वर्णाः। अन्यथा सर्व्वेषां वर्णानामष्टमे, सर्वेषां वैकादशे, सर्व्वेषां वा द्वादशे वर्षे उपनयनाऽवस्था निर्द्धा-रिताऽभविष्यत्। परमेषां त्रयाणामेव भिन्नभिन्नाऽवस्था उपनयनस्य जन्मना निर्द्धारिता व्रात्याऽवस्थायामपि भिदा प्रतिपादिता, शूद्रस्योपनयनावस्था प्रतिपादितैव न; तेन स्पष्टं जन्मना वर्णाः सिद्ध्यन्ति॥ 'शस्त्राऽस्त्रभृत्त्वं क्षत्रस्य, वणिक् पशु कृषिर्विशः। आजी-वनार्थम्, धर्म्मस्तु दानमध्ययनं यजिः' मनु० १०।७९ इति मनुना स्पष्टं वर्णत्रयस्य कर्म्मैक्यं प्रतिपादितम्, केवलं जीविकाभेदः प्रतिपादितः। तेन कर्म्मैक्येऽपि पुनस्त्र-याणां वर्णानां नामभेदः स्पष्टं जन्मसिद्धतत्तत्सञ्ज्ञां ब्रूते।

'अजीवँस्तु यथोक्तेन ब्राह्मणः स्वेन कर्म्मणा। जीवेत् क्षत्रिय-धर्म्मेण स ह्यस्य प्रत्यनन्तरः' मनु० १०।८१ इति पद्येन स्पष्टं सिध्यति यद्—ब्राह्मणः क्षत्रियधर्म्ममपि कर्त्तुं समर्थः। यदि कर्म्मकृता वर्णव्यवस्थाऽभविष्यत्; तर्हीयमाज्ञा कदाऽपि नाऽभ-

विष्यत् । यतस्तथाकरणे तु तस्य 'क्षत्रिय' इति सञ्ज्ञाऽभविष्यत् । तदाऽदआज्ञायाः × किं फलमभविष्यत् । श्लोके क्षत्रियधर्म्मेण जीवतोऽपि ब्राह्मण इति सञ्ज्ञा जन्मना वर्ण्णं व्यवस्थापयति । एवमग्रे—'उभाभ्यामप्यजीवँस्तु कथं स्यादिति चेद्भवेत् । कृषिगोरक्षमास्थाय जीवेद् वैश्यस्य जीविकाम्' १०।८२ इति पद्याभ्यां ब्राह्मणस्य क्षत्रियवैश्यवृत्तिविधानमपि विहितं तदाऽपि ब्राह्मणसञ्ज्ञा दर्शिता । परं क्षत्रियवैश्ययोर्ब्राह्मणजीविकाविधानं 'न तौ प्रति हि तान् धर्म्मान् मनुराह प्रजापतिः' मनु० १०.७८ 'प्रब्रूयाद् ब्राह्मणस्त्वेषां नेतराविति निश्चयः' म० १०।१ इति वचसा निषिद्धम् । तेन स्पष्टं सिद्ध्यति यद्—मनुमतेऽपि जन्मना वर्ण्णव्यवस्था । अन्यथा कर्म्मकृतवर्ण्णव्यवस्थापने ब्राह्मणस्य कृते एष पक्षपातो नाऽभविष्यत् । तदा त्वेष सिद्धान्तोऽभविष्यद्, यद्—यो यत् कर्म्म कुर्य्यात्, स तत्पदवाच्यः स्यात् । कुतस्तत्राऽऽपत्कालः, कुतश्च तत्रैकस्य वैशिष्ट्यम् ? परं तत्र याऽव्यवस्था; साऽस्माभि × प्राङ् निदर्शिता ।

केचिद् वादिनः—'आचार्य्यस्त्वस्य यां जातिं विधिवद् वेदपारगः । उत्पादयति सावित्र्या सा सत्या साऽजराऽमरा' मनु० २।१४८ इति पद्येन समावर्त्तनसमये यां जातिं गुरु × कल्पयेत्; सैवाऽजराऽमरा भवति—इति प्रदर्श्य गुणकर्म्मणा वर्ण्णव्यवस्थां प्रदर्शयन्ति; परमेतदपि मन्दम् । यदि ते स्वगुरुणा दत्तां जातिमजराऽमरां मन्यन्ते; तर्हि ते प्रष्टव्याः—यदा तेऽस्मान् मिलन्तु; तर्हि वयं कथं जानीमहि यदयं ब्राह्मण इति । किं वयं तद्गुरो × पञ्जिकां ( Register) प्रमाणीभूतां कुर्व्वीमहि ? यदि कथ्येत—भवन्तो गुणकर्मपरीक्षां कर्त्तुं शक्ता अस्माकमिति चेत्; तर्हि यदि तस्मिन् समये तानि गुणकर्माणि भवत्सु न मिलन्तु, यथा च भवन्तो धर्म्मपाल ( अब्दुलगफूर ) वत् स्वगुणकर्म्मभ्य × पतन्तु; तर्हि किं तस्मिन् समयेऽपि भवन्तो ब्राह्मणाः स्थास्यन्ति मंस्यन्ते वा ? । यदि कथ्येत—आम्, तदापि वयं ब्राह्मणा इति; तर्हि गुणकर्म्मणां व्याज × कुतोऽगात् ? । यदि व्यपदिश्येत—नहि, तस्मिन् समये वयमन्यजातीया भविष्यामो धर्म्मपाल ( अब्दुलगफूर ) वत्; तर्हि भवद् गुरुदत्ता जातिरजराऽमरा तु नाऽभवत्, कथमेतत् ?

वस्तुतस्तु 'आचार्य्यस्त्वस्य यां जातिं विधिवद् वेदपारगः । उत्पादयति सावित्र्या सा सत्या साऽजराऽमरा' मनु० २।१४८ नाऽयं श्लोकः समावर्त्तनकालिकः, किन्तु सावित्रीप्रदानकालिकः । अत्र जातिरित्यस्य जन्मेत्यर्थः । यदि वर्ण्णाऽर्थस्य आग्रहः स्यात्; तर्हीदं ज्ञेयं यदस्मिन् पद्ये जात्युत्पादने हेतुः 'सावित्र्या' इति । सावित्रीश्च (-गायत्रीमन्त्रं ) त्रयोऽपि वर्ण्णा आचार्य्यसकाशात् साम्येनैव ❀ अधीयते उपनयनसमये, तर्हि पूर्व्वविद्यमानवर्ण्णत × कथं तत्र भेदः स्यात् ? । अत्रेदं बोध्यम्, यद् इदं

× अद आज्ञायाः ! इति समस्तं पदम् ।

❀ अधीयते—इति बहुवचनम्, कस्याऽत् !

पद्यम् उपनयनसामयिकद्विजत्वसूचकम् । अर्थात्—सावित्री ब्राह्मणाय ८ वर्षे, क्षत्रियाय ११ वर्षे, वैश्याय १२ वर्षे प्रोच्यते उपनयनसंस्कारसमये आचार्य्येण। आचार्य्यकर्तृक-सावित्रीप्रदानात् प्राग् ८ वर्षे ब्राह्मणकुमारस्य मातापितृद्वारोत्पन्ना एका ब्राह्मणजातिरासीत्; ११ वर्षे क्षत्रियस्य च प्राक्तनी एकैव क्षत्रियजातिरासीत्, एवमेवाऽऽचार्य्यकर्तृकसावित्रीप्रदानात् प्राग् १२ वर्षे वैश्यस्य मातृगर्भद्वारा जाता सकृद्भूता एकैव वैश्यजातिरासीत्। एवमेते त्रयो मातृगर्भात् सकृदेवोत्पन्ना अत एव एकजाः । ततो 'द्विर्बद्धं सुबद्धं भवतीति न्यायादाचार्य्येण स एव अष्टवर्षकालिक एकजो ब्राह्मणो दिनत्रयकृते स्वगर्भे स्थाप्यते सावित्रीप्रदानसमये उपनयनसंस्कारे। ततो दिनत्रयोत्तरं पुनस्तस्यैव ब्राह्मणस्य जन्म जायते । प्राक् स मातापितृजत्वाद् एकज एवाऽऽसीद् ब्राह्मणः; इदानीं स एव ब्राह्मण आचार्य्यगर्भतो द्वितीयवार-मुत्पन्नो दिनत्रयान्तरे; अतः स एकजाद् द्विजो जातः । एवं ११ वर्षे क्षत्रियो य × प्राग् एकज आसीत्; सोऽपि उपनयनसमये आचार्य्यगर्भाद् द्वितीयवारमुत्पन्नः; अत एव सोऽपि द्विजः क्षत्रियो जातः । एवं १२ वर्षे वैश्यो य ॅ प्राङ् मातृजत्वाद् एकज आसीत्; सोऽपि उपनयनसमये सावित्रीं प्राप्य दिनत्रयानन्तरमाचार्य्यस्य गर्भादप्युत्पन्नत्वाद् द्विजो वैश्यो जातः । एवं ८ वर्षे एकजस्य ब्राह्मणस्य द्वितीया ब्राह्मणजातिः, ११ वर्षे एकजस्य क्षत्रियस्य द्वितीया क्षत्रियजातिः, १२ वर्षे एकजस्य वैश्यस्य द्वितीया वैश्यजातिः ( जन्म ) 'द्विर्बद्धं सुबद्धं भवतीति न्यायेन आचार्य्येण द्वितीयावृत्त्या उपनयनसंस्कारे सावित्रीप्रदानकाले दिनत्रयाऽभ्यन्तरे च ( 'यतोऽयं सावित्री प्रदानकालिकः श्लोकः ) अजराऽमरा कृता यदा; तदा इयमेव तेषामजरा-ऽमरीकृता द्वितीयवारमुत्पादिता प्राक्तनी जाति × कथं केनाऽपि अज्ञेन परिवर्त्तयितु-मिष्यते ? शूद्रस्तु मातृजत्वाद् एकजः; तस्य च द्विजत्वाज्ञा कस्याञ्चिदप्यवस्थायां क्वापि न दत्ता; अत एव सोऽपि उन्नतिं कर्त्तुं सर्व्वथा नाऽर्हति; अत एव तस्याऽपि परि-वर्त्तनमसम्भवि ❋ एतदेवाऽभिप्रेत्योक्तम्—'ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः । चतुर्थ एकजातिस्तु शूद्रो, नास्ति तु पञ्चमः ( वर्णः इति शेषः, अत एव चाण्डालादयोऽवर्णा आख्यायन्ते, न सवर्णाः ), मनु० १०।४ । 'वेदमाता...... पावमानी द्विजनाम्' अथर्व्व० १९।७१।१ 'अयं स होता यो द्विजन्मा' ऋग्वेदे १।१४९।५ इति वेदप्रमाणाच्च वेदमातरि गायत्र्यां द्विजानाम् ( ब्राह्मण क्षत्रिय-वैश्यानाम् ) अधिकारः सिद्धो न एकजानां शूद्रादीनाम् ।

फलतः × पूर्वमनुश्लोकेन सिद्धं यद्—उपनयनकाले एव आचार्य्यो गायत्री-

❋ अत एव स्वा० दयानन्देनापि स० प्र० द्वितीय० पृ० १८ द्विजानामाचार्यकुले प्रेषण-मादिष्टम्, शूद्राणां तु तेन आचार्यकुले प्रेषणं नाज्ञप्तम् । मनु० २।१४० श्लोकानुसारमुपनयने आचार्यस्याऽधिकारः ।

मन्त्रमध्याप्य दिनत्रयोत्तरं पूर्व्वजन्मसम्बद्धं द्वितीयं जन्म करोति यद्—अविनश्वरम्, नतु समावर्त्तनकाले। अत एव वेदेऽप्युक्तम्—

'आचार्य्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः। तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः' अथर्व्ववेदे ११।५।३ अत्र दिनत्रितयपर्य्यन्तमेव अष्टमादिवर्षे उपनयनसमये ब्रह्मचारी आचार्य्यसमीपे तिष्ठति। दिनत्रयस्याऽयमभिप्रायो यद्—यज्ञोपवीतनियतदिनात् पूर्वं ब्रह्मचारी स्वस्ववर्णानुकूलं व्रतमाचरति दिनत्रयेण। एतत् स्वामी दयानन्दोऽपि स्वीकरोति; तथा च—'पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्य आमिक्षाव्रतो वैश्यः' यह शतपथब्राह्मणका वचन है। जिस दिन बालकका यज्ञोपवीत करना हो, उससे तीन दिन पूर्व, अथवा एक दिन पूर्व (इदं सौविध्यार्थं) तीन व्रत, वा एक व्रत (इदमपि बालकसौकर्य्यार्थम्) बालकको कराना चाहिये' इत्यादि—'संस्कारविधि—उपनयनसंस्कारे पृ० ७९। तेन दिनत्रयेण स्वस्ववर्णनियतव्रतसमाप्तौ चतुर्थे दिने यज्ञोपवीतसंस्कार〰 प्रारब्धव्यो भवति। तस्मिन्नेव चाऽऽचार्य्येण शिष्यं प्रति सावित्री उपदिश्यते। तस्मिन्नेव च चतुर्थे दिने तस्य पूर्व्वजात्या द्वितीयावृत्तिर्भवति। 'द्विर्बद्धं सुबद्धं भवति' इति न्यायेन च साऽजराऽमरा कीर्त्यते। एष एव निष्कर्षो मनुश्लोकस्य। तेनाऽयं श्लोको यज्ञोपवीतकालिकः सिद्धः, यज्ञोपवीतकालश्च जन्मनैव तत्तद्वर्णानां नियतो भिन्नभिन्नाऽऽयुषि। तेनाऽत्र गुणकर्म्मणो नामाऽपि कर्पूरायितं जातम्। तस्मिन्नेव काले यदि वादिन〰 पूर्वजातिप्राप्तिं स्वीकुर्व्वन्तु; तर्हि गुणकर्म्मणा तदीयवर्णव्यवस्थायाः सिद्धान्तो निरस्यते; यतोऽत्र 'सावित्र्या' इति पदं तं निरस्यति। समावर्त्तनकाले तु कस्मिन्नपि गृह्यसूत्रे कस्यामपि वा स्मृतौ, कस्मिन्नपि वा संस्कारविधौ पूर्व्वं वर्णपरिवर्त्तनं नाऽऽम्नातमिति स्वसंस्कारविधिरपि वादिभिर्द्रष्टव्यः। अन्यथा समावर्त्तनसमये एव यज्ञोपवीतं, तदैव च सावित्र्युपदेशः, तत एव च वेदारम्भ〰 कृतः स्यात्। परं नैवमस्ति; तेन तद्व्याजो वादिनां निराधारकपोलकल्पनामात्रम्।

अधुना विस्तरभिया विषयमिममत्रैवोपसंहरन्तो वयमन्ते इदं विचारयामो यद्—वादिनामभिमता वर्णव्यवस्था तेष्वपि प्रचलिता नो वा; का वा अनुविधास्तैस्तत्र दृश्यन्ते इत्यभिधाय स्वां लेखनीं विरमयामः। तथाहि—

स्वा० दयानन्देन गुणकर्म्मणा वर्णव्यवस्थापनार्थं स० प्र० ४ समुल्लासे ५३ पृष्ठे विद्यासभा, राजसभा च सङ्केतिता। परं सा खलु सर्व्वथाऽशास्त्रीया। न च साऽऽर्य्यसमाजेन अद्य यावन्नियतीकृता। तेन सिद्ध्यति यद्—आर्य्यसामाजिकाः सर्व्वेऽवर्णा अर्थात् वर्णहीनाः—कर्म्मविभागाऽभावाच्च 'व्यभिचारेण वर्णानामवेद्यावेदनेन च। स्वकर्म्मणाञ्च त्यागेन जायन्ते वर्णसङ्कराः' १०।२४ इति मनुप्रोक्तपदवीभाजः। वस्तुतस्तु सा सभाऽऽर्य्यसमाजेन नियमयितुमपि न शक्यते। यदि सा सभा नियम्येत; तर्हि सार्द्धद्विलक्षाऽऽर्य्यसामाजिकेषु शतद्विशतपुरुषान् विहाय वेद-

विद्याऽध्ययनाभावात् कर्म्महीनत्वाच्च अवशिष्टा सर्व्वे शूद्रपदव्या योजनीयाः स्युः; परं यदि आर्य्यसामाजिकपण्डिता एवं कुर्य्युः; तर्हि तदीयजनता तानेवाऽऽर्य्यसमाजाद् वहिष्कुर्य्यात्, स्वयं वा ततः पृथग् भवेत्। अधुनाऽऽर्य्यसामाजिकैर्निर्ण्णीतं योऽस्मदीयसमाजाय चतुराणकीं न्यूनान्न्यूनं प्रतिमासं दद्यात्, स यस्मिन् वर्ण्णे उत्पन्नः, तस्य वर्ण्णस्य ज्ञेयः। यश्च ब्राह्मणेभ्यः सनातनधर्म्मिभ्यो वाऽपशब्दप्रदानकुशलः, तर्कपाटववान्, वक्तृतायां वा निष्णातः स एवाऽऽर्य्यसमाजस्य ब्राह्मणः। परमेतदादिकनिर्ण्णीत्यभावादेव तैः 'शर्मा, वर्मा, गुप्तः, दासः, एषां प्रयोगो न क्रियते। अत एवैतदेव कथनीयम्, यद्—आर्य्यसमाजे गुणकर्म्मणा वर्ण्णव्यवस्था साफल्यं नाशिश्रियत्, साफल्यं किम्, सा प्रचलितैव न। सनातनधर्म्मस्तु वर्ण्णव्यवस्थां जन्मना मन्यते; तथैव वर्त्तमानेऽपि व्यवहारः प्रचलन् दृश्यते। स गुणकर्म्मणा प्रतिष्ठां मन्यते, न वर्ण्णपरिवर्त्तनम्। श्रीमान् गान्धिरद्य स्वगुणकर्म्मभिः सम्मन्यते जनतया; परं स वैश्य एव वर्त्तते जात्या, न केनाऽपि ब्राह्मणः क्रियते। समये लौहतन्त्र्या मूल्यं सुवर्ण्णतन्त्रीतोऽतिशेते; परं तज्जातिर्भवति लोहस्य, न कदापि सुवर्ण्णस्याऽऽख्यायते केनाऽपि। एष एव सनातनधर्म्मसिद्धान्तः। एवं कृते सति जगति न काऽप्यव्यवस्था भवेत्। परं सनातनधर्म्मो जन्मना वर्ण्णं स्वीकृत्याऽपि, कर्म्महीनस्य तमेव वर्ण्णं मत्वाऽपि, एतदपि कदापि नादिशति, यत्—तत्तद्वर्ण्णेन स्वस्वकर्म्मत्यागो विधेय इति। नैवम्, असौ स्वकर्म्म त्यक्तवतां भूयिष्ठां निन्दां विधत्ते; अग्रिमजन्मनि च तेषां दुर्दशां पिशुनयति। तेन पुनर्जन्मविश्वासिभिः सनातनधर्म्मस्थतत्तद्वर्ण्णोत्पन्नैः स्वस्ववर्ण्णकर्म्म त्यागः सुतरां न विधेयः। स्वस्वकर्म्मत्यागे जाते सति हिन्दुजातिदुरवस्था प्रसज्येत। तत्तद्वर्ण्णोत्पन्नो यथा स्वस्ववर्ण्णकर्म्मणि सौविध्यमश्नुते, त्वरया च तत्कर्म्मणि निष्णातो जायते, न तथाऽन्यवर्ण्णोऽन्यदीयकर्म्मणि। तेन सर्व्वैः स्वस्ववर्ण्णकर्म्माचरणे सर्व्वदाऽप्रमत्तैर्भाव्यम्। अथ च यजमानानामपि कर्त्तव्यं यत्—ते स्वपुरोहितब्राह्मणकुमारान् स्ववृत्तिदानमुखेन अध्ययनार्थं प्रोत्साहयन्तु, येन ते विद्यासम्पन्ना अग्रे यजमानानां कर्म्माणि कारयितुं समर्थाः सन्तस्तेषां स्वेषाञ्च लाभदायकाः सिध्येयुः।

केचित् खलु 'वर्ण' शब्दस्याऽर्थम् अक्षरमिति कृत्वा 'दध्यत्रे'त्यादौ इकारस्थाने यकारं विकारं दृष्ट्वा वर्ण्णव्यवस्थायामपि विकारमिच्छन्ति। तदप्यसत्—इकारस्य यकारो न विकारः, किन्तु आदेशः। स च पूर्वस्य नाशेऽन्य उत्पद्यते—इति न्यायदर्शने २।२।४० 'अस्तेर्भूः' 'ब्रुवोवचि'रित्युदाहरणेन स्पष्टम्। एवं वर्ण्णपरिवर्त्तनं न भवति, किन्त्वेकवर्ण्णस्य नाशे जन्मान्तरेऽन्यो भिन्नस्तत्सदृशो वा वर्ण्णं आदेशरूपेण भवति 'ब्रह्म' द्वारा। जीवने सति तु विकार एव भवति; परं वर्ण्णे विकारो न्यायसम्मतो न। अथ च वर्ण्णव्यवस्थायां तु 'वर्ण्ण' शब्दश्चातुर्व्वर्ण्ये रूढो नाऽक्षरपर्य्यायः। तद्व्यवस्था च धर्म्मशास्त्राऽधीना, न कल्पिता। अस्तु।

विषयेऽस्मिन्नन्यदपि विशदयितुं शक्यते। परं विस्तरभिया विरम्यते। एतदादिकानां सार्द्धशतविषयाणाम् एकसहस्रपृष्ठेषु विवरणमस्माभिः 'श्रीसनातन धर्म्मालोक' नामक-स्वप्रणीतग्रन्थेऽकारि। यदि सनातनधर्म्माणोऽस्मभ्यं धनादिसाहाय्यप्रदानेन तत्पुस्तकप्रकाशने दक्षिणहस्ताः स्युः; तर्ह्यनेन सनातनधर्म्मश्रद्धजनताया महोपकारः साधितः स्याद्। अस्तु, इतोऽग्रेऽस्माभि× पाठकानां सेवायां 'सूर्य्योदये' मृतकश्राद्धविषयः समुपस्थाप्येतेति शम्।

---

## धर्मानुरोधः

ले०—पण्डित माधवप्रसाद शर्मा देवकोटा

(क्रमागतः)

स एव भगवान् वक्ति स्वसृष्टापत्यवत्सलः।
तस्यैव वाणी कल्याणी 'वेद' इत्यभिविश्रुतम्॥ २३॥
तदेवर्चम्भरप्रज्ञैस्तपोबलसमन्वितैः।
त्रिकालदर्शिभिः सर्वप्राण्युद्धारपरायणैः॥ २४॥
स्मृत्वा प्रकाश्यते धर्ममर्यादा लोकशर्मदा।
अस्पृश्यत्वमथा तस्मान्न क्रोधद्वेषहेतुका॥ २५॥
अन्त्यजा! भ्रातरस्तस्मान्माऽऽक्रोशत महेश्वरम्।
वेदान्, द्विजान्, स्मृतीर्वाऽपि स्वार्यधर्म व्यवस्थिताः॥ २६॥
कर्माणि क्षपयित्वैव जीवः कैवल्यमश्नुते।
तानि च द्विप्रकाराणि शुभाशुभविभेदतः॥ २७॥
शुभानि जात्यायुर्भोगैः शुभैरेव क्षिपत्यसौ।
अशुभान्यशुभैरेव माहेश्वर्या व्यवस्थया॥ २८॥
यस्यां जातौ समुत्पत्तिस्तां जातिमधिकृत्य यः।
शास्त्रेण विहितो धर्मः 'स्वधर्म' स्तस्य स स्मृतः॥ २९॥
तद्विरुद्धश्च यो धर्मो 'विधर्मः' स उदीरितः।
उच्चजातीयको वा स्यान्नीचजातीय एव वा॥ ३०॥

अत्यक्तेन स्वधर्मेण विधर्मात्तवर्ष्मणा ।
आराधितो हि भगवान् सिद्धिदाता न संशयः ॥ ३१ ॥
'वर्णा आश्रमिणश्चाऽद्य स्वधर्मे केऽपि न स्थिताः ।'
इति चेन्नहि वो हानिस्तेषामेव हि सा भवेत् ॥ ३२ ॥
अद्यत्वे केऽपि वः शिष्युः कार्यं वाऽकार्यमेव वा ।
परं शास्त्रीयसंमत्या कार्यः कार्यः विनिर्णयः ॥ ३३ ॥
जीवस्य लक्ष्यतां याति केवलं नैहिकं सुखम् ।
किन्त्वामुष्मिकमत्यस्ति स्वरूपानुभवावधि ॥ ३४ ॥
ऐहिकावेव संचिन्त्य हानिलाभौ प्रवर्त्तने ।
संभाव्येत महानर्थो न कथं पारलौकिकः ? ॥ ३५ ॥
श्वो भाविनि महादुःखे निश्चिन्तोऽद्यतने सुखे ।
स्वल्पेऽनल्पोत्सवो नृत्यन्पशुबुद्धिर्न शोभते ॥ ३६ ॥
आमुष्मिकौ हानिलाभौ नेक्ष्येते चर्मचक्षुषा ।
श्रुतिस्मृत्यात्मके तस्मादपेक्ष्येते उपाक्षिणी ॥ ३७ ॥
तद्विशिष्टा अतः शिष्टाः प्राच्याचारपरायणाः ।
विद्वांसो ब्राह्मणा एव स्प्रष्टव्याः पक्षवर्जिताः ॥ ३८ ॥
अज्ञानामृजुबुद्धीनामूर्द्ध्वं वा ह्यध एव वा ।
नयनादेव नेतॄणां नेतृत्वं तावदक्षतम् ॥ ३९ ॥
युष्माभिः स्पर्शनान्मूर्त्तेस्तां त्यजन्त्येव देवताः ।
इति चेदैश्वरी वाणी तत्स्पर्शो वो न भद्रकृत् ॥ ४० ॥
यं प्रसादयितुं देव मन्दिरं गन्तुमिष्यते ।
तमेव हन्त ! विद्राव्य श्रेयः किमुपपद्यते ? ॥ ४१ ॥
अहो ! उपासनापीठं विप्लाव्योपासकाञ्जनान् ।
विघ्नितोपासनान्कृत्वा लाभः कः पातकादृते ? ॥ ४२ ॥
स्वस्याऽप्यथ परस्याऽपि हानिः स्याद्येन कर्मणा ।
तदप्यहो ! अनुष्ठातुं क इच्छेन्मानवाकृतिः ? ॥ ४३ ॥
यत्प्रसादात्समैर्जीवैः शाश्वतं सुखमिष्यते ।
तस्यैवाऽऽज्ञां समुल्लङ्घ्य कस्य सिद्ध्येत्समीहितम् ? ॥४४॥

एवं नीचोच्चजातीयैः सह भोजनपानतः ।
अशास्त्रीयात्स्वयं भ्रष्टा भ्रंशयेत परानपि ॥ ४५ ॥
गर्ह्यानधिकृतैश्चेष्टा कृता वा कारिताऽपि वा ।
अवश्यमेव भविता भारतानर्थदायिनी ॥ ४६ ॥
तस्मात्सनातनान् धर्मान्पालयित्वैव साधितम् ।
स्वातन्त्र्यं भारतीयानां भूतये दूरदर्शिनाम् ॥ ४७ ॥

——o——

## मदीया राजगृहयात्रा ।

लेखकः—पं० शङ्करदत्तशास्त्री काव्यतीर्थो भिषगूरत्नम्, प्रधानचिकित्सको, मारवाड़ी आरोग्यभवनस्य, जसीडीह ( विहार )

प्रथमश्रावणशुक्लैकादश्यां गुरुवासरे ब्राह्मे मुहूर्त्ते चतुर्वादने जसीडीहतो धूम्रशकटीमारुह्यावश्यकवस्तूनि पाथेयं चादाय श्रीचिरंजीवलालगुप्तेन सह राजगृहनालन्दाविश्वविद्यालयादिकमवलोकितुकामः प्राचलम्। दिने दशवादनावसरे पाटलीपुत्रे धूम्रशकटीतोऽवरुह्यैकस्यां जीर्णशीर्णायां मशकमत्कुणपिपीलिकादिकृताधिपत्यायां धर्म्मशालायां स्थातुमचीकमे । धर्म्मशालायामस्यां नास्माकं सम्यङ् निर्वाहो भविष्यतीति विचार्य्य तत्समीपवर्त्तिभोजनालये वासमकल्पयम्। भोजनालये तु अस्माकं कृते सर्वविधसौविध्यमासीत्। यद्यपि बख्तियारपुर एव रेलपरिवर्त्तनं विधाय राजगृहं गन्तुं मार्गसौविध्यं भाटकसौविध्यं च वरीवर्त्ति, परं भारतप्रसिद्धवैदुष्याणां विहारप्रान्तेऽद्वितीयायुर्वेदप्रचारकाणां श्रीमतां व्रजविहारिचतुर्वेदिमहाभागानां दर्शनसौभाग्यमवाप्तुकाम एव पाटलीपुत्रमगमम्।

रत्नाकरौषधालये समुपविष्टस्य मम घण्टाद्वयन्तु चतुर्वेदिमहाभागप्रतीक्षायामेव व्यतीतम्, यदाहं मुख्यप्रतोल्यां चक्षुषी प्राहिणवं तदा मृत्तरादवतरन्तं वयसा सप्तत्यब्दात्मकमेकं पुरुषमद्राक्षम् । एत एव श्रीयुतव्रजविहारीचतुर्वेदिमहोदया इति केनचित्तत्रत्येनैव जल्पिते स्वासनादुत्थाय कृतप्रणामं मां हस्तेङ्गितेन त एव महोदयाः प्रावेशयन्। तदनन्तरमेकघण्टापर्यन्तं मया सह वार्त्तालापः समजनि। वार्त्तालापे पदे, पदे, चतुर्वेदिमहोदयानां वचसि, आयुर्वेदमहत्त्वे, भिषग्वर्गे, आयुर्वेदानुरागित्वसीमप्रेमसञ्चारो निभालितः—एतस्योदाहरणं तु मया प्रत्यक्षमेव दृष्टम्—मदुपस्थितिसमये पाटलीपुत्रीया अनेकशो गण्यमाना उच्चपदाधिकारिणः सज्जनाः समुपस्थिता आसन्परं भो ! भो !! रोगिमहोदयाः ! अपरिचितोऽयं वैद्यमहोदयोऽस्माकं

सन्निधौ समायातः, अतो यूयं क्षणं तिष्ठत यावदहमनेन सार्द्धं साक्षात्कारं कुर्वीय इत्यामन्त्र्यापरिचितेन साधारणश्रेणिस्थेन मादृशेन जनेन सह स्वीयममूल्यमेकघण्टा-मितसमयमल्पवाहयन्नितः परं किं निरभिमानित्वमलोलुपत्वमायुर्वेदानुरागित्वं च भविष्यतीति विज्ञपाठकमहोदया एव विभावयन्तु।

भारते भिषजां विदुषां च न्यूनत्वं नास्ति, परमीदृशव्यक्तिविशेषास्तु विरला एव दृष्टिपथमायान्ति। एतेषां महोदयानां स्मितपूर्वाभिभाषित्वाद्या गुणाः कस्य न चेतसि हर्षोद्रेकं जनयन्ति! येन केनापि प्रकारेणायुर्वेदोऽयं समुन्नतिपथं यायादिति विचार-धारा श्रीमतामायुर्वेदे प्रगाढपाण्डित्यं—औषधतत्त्वान्वेषणे बद्धपरिकरतां च प्रथ-यति। अद्य चतुर्वेदिमहाभागा आयुर्वेदीयबृहद्रुग्णालयं प्रसूतिस्थानशल्यशाला-द्यादियुतमद्वितीयमायुर्वेद-मुखोज्ज्वलजनकं भगवत्या भागीरथ्यास्तटे पाटलीपुत्रीय-बद्युभागंजे निर्मातुकामास्सन्ति। कार्य्यारम्भोऽपि तस्य कृतो विद्यते। श्रीमतामायुर्वेदा-नुरागित्वमवलोक्याशास्यते कार्यमिदं साफल्यमेष्यतीति। चतुर्वेदिमहाभागानां चिरञ्जीवित्वं निष्प्रत्यूहत्वञ्चेशतः कामये। समैरपि विहारप्रान्तीयभिषग्भिरन्यप्रान्त-वासिभिषग्भिरपि—एतादृशकार्यसंपादकचतुर्वेदिमहोदयानां साहाय्यकर्मणि मनसा, वाचा; कर्मणा धनेन वा सहायकैर्भवितव्यमिति सप्रश्रयं मया निवेद्यते श्रीमतां पुरतः। तदनन्तरं रत्नाकरौषधालय एव सनातनधर्म्मप्रचारकाणां परमप्रसिद्धानां त्यागमूर्त्ति-श्रीगणेशदत्त गोस्वामि-महाभागानामपि दर्शनसौभाग्यमलम्भि। तैरपि साकं सप्रेम परिचयादिक्रमभवत्। पाटलीपुत्रे प्रथितयशस्कानां श्रीमतां महादेवमिश्रवैद्य-महाभागानामपि तेषामेव चिकित्सालये दर्शनं जातम्। एते हि महोदयाः परमका-रुण्यपूरितचेतसो दीनसेवां स्वीयामोघचिकित्सया विदधति सप्रेम।

श्रावणकृष्णत्रयोदश्यां नक्तं नववादने श्रीमहादेवमिश्रभिषजां मृत्तरमारुह्य गत्वा च धूम्रशकट्यारोहस्थानमारुह्य च तां जहानाबादं, जहानाबादे रजन्यामेकस्या-मुषित्वा गयां, गयातो बशमारुह्य नवादादिनगरग्रामपर्वतारण्यान्यवलोकयन्नशीति-माइलदूरे स्थितं बिहारशरीफेत्यभिधं नगरमगच्छम्। रवौ संध्यायां षड्वादने, मार्टिन कम्पन्यधिकृतां लघ्वाकारां धूम्रशकटीमारुह्य नक्तं दशवादनवेलायां मद्यात्रा-मुख्यलक्ष्यं राजगृहं दृग्गोचरतां नीतम्। अवतीर्य्य च धूम्रशकटीतो भारवाहक-साहाय्येन सनातनधर्मधर्म्मशालायां स्थातुं विचारं स्थिरीकृतवान्परं तत्र सर्वविध-सौविध्याभावं विचार्य्य पार्श्वस्थितजैनधर्म्मशालायामेव स्थितिमकृषि। प्रत्यूषे पञ्चवादनकाले-कृतशौचविधिरधोवस्त्रमङ्गप्रोक्षणं चादाय धर्मशालातश्चार्द्धगव्यूति-मिति दूरं गत्वा नयनाभिरामं राजगृहकुण्डं दृक्सरणिमनैषम्। वस्त्रादिकमेकत्र संस्थाप्य सरस्वती गोदावरी ब्रह्मेतिकृतकृतकाभिधेषु पञ्चपेषु कुण्डेषु चैकैकशः अस्नासिषम्। सर्वेष्वपि कुण्डेषु कवोष्णं जलं वरीवर्त्ति, परमेकस्मिन्ब्रह्मनाम्नि कुण्डे-जलमत्युष्णं विद्यते। तत्र चास्माकं मित्रमहोदयश्चिरंजीवलालस्तु स्थातुमपि नाशक्नोत्। अहं तु तत्र स्वल्पसमयं यावत्स्नात्वा निरगमम्। पर्वतानामन्तस्तले गन्धकहरि-तालादिकमत्युष्णं वस्तु संचितं वर्वृतीति तत्प्रभावेणैवैतादृशोष्णजलमस्ति तदेव निर्झरपथादागत्य पञ्चपेष्वमीषु कुण्डेषु निपतन्तीति वैज्ञानिकमतम्। पौराणिकास्तु—

कुण्डेष्वेषु—अधिकमासे स्नानकरणान्महन्माहात्म्यमामनन्ति। एतदनुसारमेवाधिकमासे मासमेकं जनसमारोहो ( मेला ) ऽपि संलगति, विप्रकृष्टतो जनाः स्नानादिकं कर्त्तुं बहुसंख्यायां समायान्त्यत्रेति प्रत्यक्षमेव दृष्टं मया। आयुर्वेदिकदृष्ट्या यदवलोक्यते तदा जलमिदमत्रत्यं वातव्याधिग्रस्तजनानां कृते महदुपकारि वस्तु प्रमाणितं भवति। वातव्याध्यर्दितैर्हि शिरोमात्रं बहिः संरक्ष्य चान्यत्समं शरीरं जले नाच्छाद्य कियत्समयं यावत्कुण्डीयजले स्थेयं तेनैव हि दुष्टो वायुः प्रशाम्यति। श्रुतमपि मया तत्रैवैकसज्जनमुखात्—यत् पाटलीपुत्रे मद्गेहिनी—अर्दितरोगपीडिता जाता ततस्तामादाय राजगेहीयकुण्डेषु मासद्वयं तत्र स्थित्वा प्रतिदिनं स्नापयामि स्म, तेन सा पूर्णमारोग्यमलभिष्टेति। एतत्त्वस्माभिरप्यनुभूतम्—पाने जलमिदमत्रत्यं सुमिष्टं—सुपाचकं बुभुक्षाजनकं च प्रतिभाति, पर्वतमालास्थनानाविधवृक्षादितो निर्गत्य वायुर्यदा शरीरं स्पृशति तदा वर्णनातीत एवानन्दातिरेको जाजायते।

जनसमारोहावसरे शतशो बाला वृद्धा युवानः स्त्रियश्च कुण्डेष्वमीषु स्नात्वा स्वान्पूतान्मन्वते प्रवेशनिर्गमाभ्यां च पिपीलिकावत्किमपि हर्षोल्लासं जनयन्ति च। अत्रैव यवनानामपि कृते कुण्डान्तरं विद्यते तत्र तेऽपि स्नानादिकमाचरन्तीति।

पर्वतीयोच्चशिखरेपूपरिष्टात्सुधाधवलिता बौद्धप्रासादा अप्यनेकशो दृग्गोचरीभवन्ति, शीतकाले बौद्धमतावलम्बिनोऽपि शतसहस्रसंख्यायां समुपस्थाय शैलोच्चप्रदेशेषु बंभ्रम्यमाणाः स्वानलभ्यलाभान्वितान्दर्शनस्पर्शनादिना मन्यन्ते। इतः कियद्दूरे मगधदेशाधिपस्य जरासन्धस्य राज्ञो योगकुण्डमेकं ततश्च कियद्दूरे तस्यैव राज्ञः करचरणादिचिन्हिता व्यायामशाला भाण्डारगृहमेकञ्चेति वस्तूनि सन्तीत्यत्रत्यजनतामुखाच्छ्रुतम्। तेष्वेकं यागकुण्डमेव चतुरस्रचतुष्कोणाष्टदलमंडलनिर्मितं बहुवेदिकायुतमवलोकितं, मन्मित्रभ्रान्तिहेतोर्न च व्यायामशाला न च भाण्डारगृहम्। अत्र राजगृहे दर्शनार्थिनां कृते श्वेताम्बरदिगम्बर जैननिर्मिताः सनातनधर्मावलम्बिनिर्मिताश्च धर्मशालास्सन्ति, तासु सुखेन स्थातुं शक्यते। अतिलध्वी चैका पण्यवीथिका विद्यते यस्यामशनवस्तुजातमवाप्यते महर्घतया, परं दधि तु कुत्रचिदपि नावाप्यते। कुण्डेषु स्नात्वा दर्शनीयजातं दृष्ट्वाशिरवा च रेलमारुह्य नालन्दाबौद्धविश्वविद्यालयं द्रष्टुकामो नालन्दास्टेशन एवोत्तरामि स्म। नालन्दास्टेशनतो विश्वविद्यालश्चार्द्धगव्यूतिदूरमवतिष्ठते। तत्र गन्तुं यानादिकं तु बहुव्ययेनापि नावाप्यते अतो वस्त्रादिकं स्टेशनसमीपवर्तिचीनदेशीय-बौद्धभिक्षुकुट्यां संस्थाप्य तञ्चामन्त्र्य पदातिमार्गेणैव कियद्दूरं गत्वैकतो घनावलिघननादमाकर्णयन्नेकतः प्रचण्डचण्डांशुतापसंतापितः कथंचन विश्वविद्यालयसीमामगमम्।

विद्यालयसम्मुखे मैनेजरस्य गृहमस्ति। ततश्चाणकद्वयक्रीतं प्रवेशपत्रमेकमादाय तच्च विद्यालयद्वारपालाय निवेद्य द्वारपालमपि सहानीयान्तर्विद्यालयं द्रष्टुमुदचलम्। विद्यालयस्य भागद्वयं कृतं विद्यते—एकतः कानिचिन्मृन्मयबुद्धप्रतिकृतियुतानि मन्दिराणि कानिचिच्च मृतजनसमाधिमन्दिराण्यपि वरीवृत्यन्ते। कुत्रचिच्च बुद्धप्रतिकृतिसमीपे पालीभाषायां लिखितान्यक्षराणि प्रस्तरखानितानि विद्यन्ते, न तान्यहं वाचयितुमशकम्। अत्यायता भित्तयो दीर्घाकाराः पक्वेष्टकाश्चास्य विद्यालयस्य

प्राचीनत्वं प्रकटयन्ति । भित्तीनां सुधालेपादिकन्तु बहुकालभूगर्भस्थित्या सममपि विनष्टम् । विद्यालये पञ्चाषास्ततोऽप्यधिका वाऽध्यापनाध्ययनकक्षाः प्रतीयन्ते—एकतः अध्यापकोपवेशस्थानमन्यतस्तु छात्राध्ययनस्थानम् । समीप एव छात्रद्वयनिवास-योग्यश्छात्रावास एकस्तथैवापरश्छात्रावासः, इत्थमनेके छात्रावासाः पृथक्-पृथक् निर्मिता विद्यन्ते। पाकागारोऽपि प्रत्नस्तत्रैव मयावलोकितो यत्र महाचुल्हीद्वयं निर्मितं विद्यते। कूपोऽस्पष्टकोण-( अठपहलू ) निर्मितश्चैको दृष्टस्तज्जलमपि सुमधुरं मया पीतम् । कूपपार्श्वं एवच्छात्राणां भाण्डारगेहद्वयं दृष्टं यच्च निखननसमये तण्डुलपूर्णं निर्गतमिति द्वारपालोक्त्या प्रदर्शिन्यां विकृताः कृष्णतण्डुलास्त एव दृष्टाः । विंशत्यब्दतो विद्यालयोऽयं भूगर्भतः खन्यते खननमद्यापि प्रचलितं विद्यते न ज्ञायते चान्यदपि किं किं निस्सरिष्यति । अत्रत्यानां कथनमेतद्—यत्—नगरमपि प्राचीनं निस्सरिष्यति । लौहनिर्मितार्गलतालाकवचपैत्तलपादुका, आरकूटनिर्मितवरुण-बुद्धेन्द्राद्यनेकप्रतिमास्तत एवोद्धृता विद्यालयसंमुखीन-मैनेजर-कोष्ठिकायां प्रदर्शिनी-रूपेण सुसज्जिता दर्शनेच्छूनां कृते विद्यन्ते । शिलालेखास्ताम्रलेखाश्चानेकशः पाली भाषाङ्किता द्विसहस्राब्दतः पूर्ववर्त्तित्वं विद्यालयस्य प्रथयन्ति । मृन्मया घटा अप्यनेके बृहदाकारास्तत्रैव सुसज्जिता विद्यन्ते । विद्यालयं दृष्ट्वा मनसि मे महानाश्चर्यो जातो यत्—पश्यन्तु, पश्यन्तु—अघटितघटनापटीयसो वैचित्र्यम्—कश्चन तु—एतादृशः समयोऽभवद् यत्राखिलशास्त्रपारदृश्वानश्चाध्यापका हर्षोल्लासोल्लसिता वेदशास्त्रध्वनि-मुखरितदिग्विभागा—नानादेशागतान्तेवासिनोऽध्यापयन्ति स्म । अयन्त्वेतादृशः समयो जातोयद्—अधुना विद्यालयमभित उपरि च कृषकाः हलाकर्षणं विदधति । अशिवानि शिवारुतानि च श्रुतिपथमायान्ति । यस्योत्थानं तस्य पतनमप्यवश्यम्भावीति विचार्य कथंचन मनसि सन्तोषमकरवम् ।

श्रीकालिदासप्रमुखाः कवीन्द्रा यस्याः प्रसादादमरीबभूवुः । हा ! हन्त ! तेषामपि वंशजास्तां मृतेति देशादपसारयन्तीति "कस्य च न पद्यं मनस्युच्चारयन्—श्रीसाम्ब-सदाशिवानुग्रहाद्धूम्रशकटीमारुह्य नक्तमेकवादनवेलायां जसीडीहस्थमारोग्यभवनं प्रत्याययाविति शिवम् ।

—०—

## कथं संस्कृतभाषाप्रयोगः समुचितः ।

[ ले० शुक्लोपाह्व पण्डित बालकृष्ण शास्त्री ]

अयि महाभागा 'मधुरवाण्याः' तृतीयवर्षस्य तृतीयाङ्के 'संस्कृतभाषोद्गारः' इति शीर्षक एको लेखः गढ़वालसंस्थानन्यायाधिकारिभिः हरकरे इत्युपाभिधैः श्रीमद्भिः मुण्डेरायमहाशयैः प्राकाशि । तद्वाचनेन उक्तलेखपरामर्शे मदीया बुद्धिः प्रावर्तत

न्यायाधिकारिणां संस्कृतभाषोद्धारविषये याऽभिरुचिर्दरीदृश्यते तां को वा सहृदय आस्वादितसुरभारतीरसलवोऽपि नाभिनन्देत् । धन्यास्ते विद्वांसो महात्मानो ये सांप्रतिके कालेयेऽहनि सुरुचिरसौंदर्यां सालंकारां देववाणीमुद्दिधीर्षवः प्रयतन्ते । परं चास्मिन् विषये किञ्चित् विचार्यते—

संस्कृतभाषाया वैदिक-लौकिकभेदेन द्वैविध्यं वरीवर्ति, इति तु नाप्रत्यक्षं प्रेक्षावताम् । यथा संस्कृतभाषाजन्यभाषाणां महाराष्ट्र हिंद्यादीनां प्राचीनार्वाचीनकालकृतं द्वैविध्यं दृश्यते सर्वैः । अथ च देशकृताऽपि द्विविधता गीर्वाणभारत्यां उपलभ्यत एव । 'प्राचां ष्फस्तद्धितेः', 'उदीचामातः स्थाने यकपूर्वायाः' इत्यादिभिः सूत्रैश्चालोच्यते देशकृतभेदः । यथा सांप्रतं कोकणगतामराठी उत च विदर्भस्थिता मराठी इत्यनयोर्भिन्नता किञ्चित्स्वरवर्णोच्चारविशेषेण अनुभूयते महाराष्ट्रीयैः, तद्वत् किञ्चित्विभिन्नत्वद्वारा संस्कृतभाषाऽपि द्वैविध्यमनुभवति इति नाश्चर्यम् । यथा ज्ञानेश्वरादिमहात्मभिः तदानींतनसरणीं व्यापृता मराठी आधुनिकमराठी भाषातः विभिन्नतां भजते, तथैव गीर्वाणवाण्यपि वैदिकलौकिकभेदेन द्वैविध्यं भजतु । न तत्र व्याकरणहानिः एतदर्थमेव तत्र भवद्भिः पाणिनिमहाभागैः उक्तं 'इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम्' यास्काचार्यैः वैदिकभाषाव्याकरणं समपादि । तथा च लौकिकवैदिकशब्दानां व्याकरणं भगवता पाणिनिना स्वकारि— इति विदितमेव सर्वेषां यत् यत् असूत्रयत् भगवान् पाणिनिमहर्षिः तत् तत् सर्वं भाष्यवार्तिककारैः विज्ञविचारसरणीमनीयत । न तत्र काऽपि विप्रतिपत्तिः इदानींतनानां च । भवद्भिः पूर्वाचार्यदर्शितव्याकरणनियमानतिक्रम्याऽपि संस्कृतभाषायां संस्कृतशब्दानां प्रयोगाः प्रयोक्तव्याः । तेन संस्कृतभाषाव्यवहारसौलभ्यं भवेत् तदैव संस्कृतवाग्व्यवहारोद्धारश्च स्यात् इत्याशयो व्यलेखि ।

तद्विषये विप्रतिपद्यामहे वयम्—

किं नाम संस्कृतत्वं इति प्रश्ने कृते च इदमेव वक्ष्यमाणं समाधानम् तस्य संभविता—यत् व्याकरणनियमोक्तसंस्कारैः संस्कृतं शब्दजालं, संस्कृतम् इदं पदं, संस्कृतम् इदं वाक्यं वा इति कथनार्हं न अव्याकरणीयम् । अत एव असंस्कृतं शब्दजालं पदं वा वाक्यं वा संस्कृतमिदं पदं वाक्यं वा इत्यन्वर्थसंज्ञां विन्देत ? प्रत्युत असंस्कृतं अपशब्दं अशुद्धं इत्यादिसंज्ञयैव व्याकरणाघटितं पदं वा वाक्यमित्युद्घुष्येत सर्वैरिति तु सुविदितम् । यत्र शब्दे प्रकृतिप्रत्ययविभागो व्याकरणघटितो न दृश्यते उक्तस्य पदस्य शब्दस्य वा वाक्यस्य वा व्याकरणादिना विचारः कर्तुं न शक्यते स अप्रयोग इति निश्चीयते सर्वैः । एतादृशैः व्याकरणानिष्पन्नैः शब्दैः कतिभिश्चिद् वा शब्दैः व्यवह्रीयमाणा भाषा यदि केषाञ्चित् विदुषां वाग्व्यवहारम् अलंकरिष्यति अथवा लेखनीमुपकरिष्यति चेत् सा संस्कृता भाषा इत्यपि भणितुं लज्जिष्यन्ति चेतांसि देववाणीरसास्वादितहृदयानां विदुषामिति सुनिश्चितं ब्रूमः ।

यदि व्याकरणनियमापरिबद्धैरपि संस्कृतवाग्व्यवहारः सौलभ्यार्थं साधु मन्तव्यः इति इदानीन्तनैः नियमः कृतश्चेत्—

पाणिनिकात्यायनपतञ्जलिप्रभृतिशब्दशास्त्रप्रणेतॄणां शब्दानां साध्वसाधु विषयकः सर्वो विचारप्रयासः विफलिष्यति विंशतितमे शतके । हा हन्त ! गोर्वाण-वाण्याः दैवदुर्विपाकोऽयं नात्र सन्देहः । अयि महाशयाः सुमहद्भाग्यं वैदिकसुरभारत्याः यत् हरकरे महोदयैः याज्ञे कर्मण्येवासाधुशब्दप्रयोगे दोषः इति व्यवस्थापितत्वात्' इत्युक्तम् तथा च लौकिकव्यवहारभाषायां यदि असाधुशब्दः प्रयोगे दोष एव न स्यात् तर्हि प्रायः सूत्रवार्तिक भाष्यस्मृति-पुराणकाव्यादिषु व्याकरणघटित संस्कृतवाग्-व्यवहाररूपः प्रयासः पूर्वाचार्यैः महर्षिभिश्च पण्डितैश्च मुधैवाकारि इत्येवं संसिध्येत् ।

यदि व्याकरणनियमं क्वचिदतिक्रम्यापि संस्कृतवाग्व्यवहारे व्यवहार-भाषाप्रयोगो न दोषाय इत्येवं भवेत् तदा जगति व्याकरणप्रयोजनं नावशिष्येत । यथा कथञ्चित् स्वेच्छया प्रयुक्तानां सर्वेषां शब्दानां साधुत्वासाधुत्वे विवादाना-स्पदत्वमेव स्वीकृतं आधुनिकैः इत्येव संसिध्येत् ।

व्याकरणशास्त्रस्य प्रयोजनं तु महाभाष्यादिग्रन्थेषु बहु प्रपञ्चितम् । "रक्षोहा-गमलध्वसंदेहाः प्रयोजनानि" ॥ इत्यादिना न केवलं एतावदेव किन्तु एकः शब्दः सम्यक् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुक् भवति—एतच्च 'एकः पूर्वपरयोः' इति सूत्रे भाष्यकृत् विशेषेण वक्ष्यति इत्युक्तम् । कौस्तुमादिषु केवलवैदिकशब्दानां साधु प्रयोगार्थं तत् उक्तप्रमाणं इति न मन्तव्यम् । यतः एतन्मूलकमेव कात्यायनप्रणीतेषु भ्राजाख्येषु श्लोकेषु स्मर्यते—

> यस्तु प्रयुक्ते कुशलो विशेषे शब्दान् यथावद्व्यवहारकाले ।
> सोऽनंतमाप्नोति जयं परत्र वाग् योगवित् दुष्यति चापशब्दैः ॥ १ ॥

उक्तश्लोके व्यवहारकाले यथाशास्त्रनिष्पन्नशब्दप्रयोगकर्तारं प्रति अनन्तत्वप्राप्ति-रूपफलं तथा परत्र जयं अपशब्दप्रयोक्तारमतिदूषणं चोक्तम् । अत एव न केवलं याज्ञे कर्मण्येव साधुशब्दप्रयोगे चाग्रहः शास्त्रकाराणां किन्तु वैदिकलौकिकव्यवहारेषु अपि व्याकरणशुद्धशब्दप्रयोगाः ह्यपेक्षन्ते आचार्यैः ।

तथा च वैदिक-लौकिकसंस्कृतभाषायां अपशब्दप्रयोगे दोषमपि व्याजहार भगवान् भाष्यकारः । व्याकरणाध्ययनावश्यता प्रतिपादनावसरे—तद्यथा—ते सुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः तस्मात् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो वा एष यदपशब्दइति ब्राह्मणं १ अत्र न म्लेच्छितवा इत्यस्य विवरणं नाप-भाषितवै इति उभयत्राऽपि प्रकृत्यर्थे नवैके तवैकवेन्यत्वनः इति तवैप्रत्ययः धातूनां अनेकार्थतया निंदावचनात् म्लेच्छधातोः तेनापशब्दः सामानाधिकरण्यं न विरुध्यते इत्यादि । अत एव इहापि पराभूता माभूमेत्येव म्लेच्छा निन्द्याः शास्त्रबोधितविपरी-तानुष्ठानात् इतिभावः । एतावता साधुशब्द ज्ञानार्थं साधुशब्द प्रयोगार्थं च व्याकरणा-ध्ययनं आवश्यकम् । अन्यथा साधुत्वासाधुत्वज्ञानाभावे अपशब्दप्रयोगेण अपशब्दो-च्चारणेन वा असुरत्वप्राप्तेः पराभूतत्वं समगच्छेत् । उक्तप्रमाणैः साधुशब्दप्रयोगे दृष्टादृष्टफलभाक्त्वं अवोचि पूर्वाचार्यैः । अथ अपशब्दप्रयोगे दृष्टादृष्टफलविरहत्वं अर्थात् सिद्धम् ।

१ श्रीमद्भिः गुण्डेरायमहाशयैः सर्वेऽपि हलन्ताः पुन्नपुंसकयोः अदन्ताः कार्याः स्त्रियां ङ्यन्तावन्ताः अस्योदाहरणं तु यथा वाचा निशा दिशा इत्युक्तम्।

१ परं चास्माभिः एवं पृच्छ्यते। केवलं स्त्रियां हलन्तानां आवन्तकरणं भगवता भागुरिणा स्वमतेन चावोचि न तत्र पुन्न पुंसकयोरपि हलन्तानां अदन्तकरणम्, तथा स्त्रियां हलन्तानां ङ्यन्तकरणमन्वमोदि। भवदुक्तकरणे यदि शास्त्रकाराणां अनुमतिः स्यात् तर्हि तद्विषयक प्रमाणोपन्यासश्च अवश्यं कर्तव्यः महाशयैः, नहि स्वकीये लेखे प्रमाणमुपन्यस्तम्।

२--अतिप्रसिद्धशब्दवत् साधारणप्रसिद्धमपि देशीयं पदं परदेशभाषापदं च निःशङ्कं प्रयोक्तव्यं म्लेच्छप्रसिद्धयधिकरणवत्—इत्यवोचन् लेखकमहाभागाः। अत्र एवं शङ्क्यते—देशीयं पदं परदेशभाषापदं च किं यथास्थितमेव प्रयोक्तव्यं उत च संस्कृतव्याकरणोक्तविभक्त्यादि प्रत्ययघटितं ? तत्र आद्ये पक्षे स्वीकृते पदसम्बन्धानवबोधात् प्रयोगानर्हता आपतेत्। द्वितीये पाणिनिप्रणीत व्याकरणोक्त-विभक्त्यादिघटितमेव पदं प्रयोगार्हं भवेत् भाषायां इत्युक्तं भवति ततश्च व्यवहार-भाषायां व्याकरणसापेक्षता अर्थात् सिद्धा।

अथ च सांप्रतिके व्यवहारे उपयुक्ता नियतार्थबोधकाः शब्दाः कोशादिषु नोपलभ्यन्ते इति भवदीयाशङ्का चेत् यथा-स्टेशन, इंजन, टेबल, कुर्सी, मिल् इत्येतादृशाः बहवः शब्दाः सन्ति, येषां नियतार्थबोधकाः प्रतिशब्दा संस्कृतवाङ्मये न सन्ति पूर्वं तदभावात्। ते कथं व्याकरणघटिता भवेयुः इति पृच्छा चेत् कथ्यते—

सत्यं यद्भवद्भिः उक्तं, परन्तु संस्कृतं व्याकरणं नहि संकोचं भजते आकृतिगणानां बाहुल्यं सम्पश्यन्ति तत्र सर्वे उणादिप्रत्ययानां च उक्तनिर्वाहकत्वाय उपयोगः, स्यात् अपरिहार्यतया च सांप्रतिकव्यवहाराय नियतार्थबोधार्थं संस्कृतकोशादिषु यदि शब्दाः न स्युः तर्हि तत्तत्भाषीयशब्दाः संग्राह्याः, ते च संस्कृतव्याकरण दृष्ट्या व्युत्पाद्याश्च आकृतिगणेषु वा निक्षेप्तव्या निपाता वा मन्तव्याः, किंवा तदर्थबोधक-शब्दाश्च निर्मातव्याः संस्कृते च तथा शब्दजाते जाते न व्याकरणहानिः न वा संस्कृत-भाषा विकृतत्वं भजेत। ते च शब्दा विभक्त्यादिघटिताः सन्तः संस्कृतवाग्व्यवहारे अर्हाश्च भविष्यन्ति।

३--महाभागैः उक्तं द्विवचनं त्याज्यं—कथं भगवता पाणिनिना द्व्येकयोर्द्विवचनैकवचने इति सूत्रितं द्वित्वैकत्वविवक्षायां द्विवचनैकवचनबोधक-प्रत्ययघटितपदेन द्वित्वैकत्वादिसंख्या बोधकत्वेन द्विवचनस्य आवश्यकत्वं भासते तदेव साधु इति भाति—द्वित्वबोधकद्विवचनप्रत्ययाभावे द्वित्वविवक्षायां बहुवचन प्रत्यये कृते विना विशेषणं द्वित्वसंख्याबोधो न स्यात्। तत्र विशेषणपदोपादानापेक्षया द्वित्वबोधक-प्रत्ययघटितसुबन्तप्रयोग एव योग्यः प्रयोक्तुं। सूत्रं साफल्यं च लभेत। अथ चतुष्ट्यादित्वबोधनाय विशेषणोपादानं अपरिहार्यं अन्यथा वचनानवस्थादोषो ह्यापतेत्, अतः द्विवचनमत्याज्यम् इत्येव सुरुचिरम्।

४—लोके यल्लिङ्गव्यवहारयोग्याः पदार्थाः तद्वाचकशब्दा अपि तल्लिंगा एव

प्रयोक्तव्याः । तेन कलत्रं मित्रं दाराः, इत्यादि क्लेशो न भविष्यति इति भवदीयवचनं दृष्ट्वा सन्दिह्यते चेतसा—

लोके नाम लोकव्यवहारे—इत्येवार्थः विवक्षितः स्यात् चेत्, तत्र विषये 'पृच्छ्यते व्यवहारस्तु इदानींतनमहाराष्ट्रभाषागतलिंगव्यवहारः, अथवा हिंद्यादि-भाषागतलिंगव्यवहारः, उत संस्कृतलौकिकभाषाव्यवहारः स्वीक्रियते ? यदि मराठी हिंद्यादिभाषास्थलिंगव्यवहारो विवक्षितः इति चेत् भाषाणां बहुत्वात् भिन्नभिन्न भाषागतैकशब्दस्य भिन्नभिन्नलिंगत्वात् शब्दानां अनियतलिंगत्वं समागच्छेत् । तथा अनवस्थाप्रसंगः लिंगविषयकः संस्कृतभाषयाः ललाटे लिखितो भवेत् । यथा महाराष्ट्र-भाषायां तस्यैव मित्रशब्दस्य पुंलिंगेन व्यवहारो विद्यते संस्कृतभाषायां तस्यैव मित्र-शब्दस्य नपुंसकत्वेन व्यवहारः प्रसिद्धः । अथ मित्रं सखा सुहृत् इति कोशेनाप्युक्तम् । दारा पुंभुम्नि इत्यादिना संस्कृतभाषायां निश्चिततत्वेन कथं तेषां मित्रदारादिशब्दानां लिङ्गपरिवर्तनं कर्तव्यं कोशादिविरोधात् । कलत्रशब्दः यद्यपि स्त्रीवाची स्त्रीलिंगम-पेक्षते तथापि कोशेषु नपुंसकत्वेनोल्लेखितत्वात् न स्त्रीलिंगमर्हति कोशविरोधात् । यद्यपि 'लिंगमशिष्यं लोकाश्रयत्वात् लिंगस्य' इत्युक्तं अभियुक्तैः, तथापि संस्कृतलौकिक-व्यवहारे प्रायः शब्दानां निर्धारितलिंगत्वात् कोशादिषूक्तलिंगैरेव शब्दव्यवहारः संस्कृतभाषायां भवितुं योग्यः, अन्यथा अनवस्थादोषप्रसंगः स्यात् ।

४ सर्वेऽपि धातवः शब्दविकरणाः कार्याः गणकार्यस्यानित्यत्वात् तथा सर्वे धातवः स्वरितञितः कार्याः वक्तुर्विवक्षया चोपयोक्तव्याः । यदि गणकार्यमनित्यम् इति परिभाषा स्यात् चेत् भवदीय वचनं सुसङ्गतत्वं विशतु । परन्तु गणकार्यमनित्यं इति परिभाषैव भाष्यापरिगृहीता, अतः गणकार्यस्य नित्यत्वादेव नहि सर्वे धातवः शब्द-विकरणाः विधेया इति कथनं सुरुचिरम् ।

सर्वे धातवः स्वरितञितः कार्या इत्येतदपि असंगतम्, कथमिति प्रश्नश्चेत् कथ्यते-सर्वेषां धातूनां स्वरितेत्त्वं ञित्वं वा निसर्गतः स्यान् नाम तेषां स्वरूपलक्षणं भवेत् यतः स्वरूपान्तर्गतं सत् इतर व्यावर्तकत्वं स्वरूपलक्षणस्य लक्षणम् उक्तं पूर्वाचार्यैः तथात्वे सर्वधातूनां सति व्यावृत्तधातवः के इति वक्तुं अशक्यम् । अथ च येषां धातूनां स्वरितेत्वं ञित्वं वा निसर्गतः एव विद्यते तेषां वाचनिकमेव 'स्वरितञितः कर्त्र-भिप्राये क्रियाफले' इति सूत्रेण आत्मनेपदं अन्यथा परस्मैपदं परंतु येषां स्वरितेत्वं ञित्वं नास्ति कथं तेषां स्वरितेत्वं ञित्वं वा कल्पनीयं इति न ज्ञायते । स्वरितेत्वस्य ञित्वस्य स्वरूपलक्षणत्वात् धातूनाम् ।

लकारेषु लट् लृट् लोट आशीर्लिङ् एते एव प्रयोक्तव्याः नान्ये इति उपरितन-वाक्यगत एवकारेण ध्वन्यते । परन्तु उक्तलकारेभ्यः अन्यलकाराणां सूक्ष्मार्थद्योतक-त्वेन अस्त्येव आवश्यकत्वम् तथाहि भूतार्थद्योतकेषु लिट् लङ् लुंक्षु सत्स्वपि लिट् लकारे अनद्यतनपरोक्षभूतार्थवृत्तित्वं लङ्लकारे केवलानद्यतनभूतार्थवृत्तित्वं लुङ् लकारे केवलसामान्यभूतार्थवृत्तित्वं वरीवर्ति एतावता परोक्षानद्यतन-भूतार्थः अनद्यतनकेवलभूतार्थः अद्यतनाऽनद्यतनसामान्यभूतार्थः इति भेदेन भूतार्थद्योतकत्वेन लिट्, लङ् लुङाम् आवश्यकत्वं दृश्यते व्यवहारभाषायामपि,

अन्यथा उक्त-सूक्ष्मार्थ-द्योतनाय शब्दप्रयोगापेक्षा एव शरणीकर्तव्या भवेत्, तथा सति भाषागौरवं सूत्रवैयर्थ्यं चापतेत्।

तथैव—अनद्यतनभविष्यत्यर्थे लुटः प्रयोगः करणीयः, लृटस्तु प्रयोगः अद्यतनाऽनद्यतनसामान्यभविष्यदर्थे प्रयोक्तव्यः। लृङ् हेतुहेतुमद्भविष्यदर्थद्योतनाय उपयोक्तव्यः, इत्युक्तम्। तत्तल्लकाराणां अप्रयोगे उक्तसूक्ष्मार्थप्रतिपत्यर्थं शब्दगौरवमेव उपयोक्ष्यति नान्यःपन्था उक्तसूक्ष्मतमार्थबोधाय। परन्तु अयमेव संस्कृतभाषायां विशेषो वर्तते यतः शब्दपदलाघवेनाऽपि अर्थगौरवप्रतिपत्तिः प्रतीयते। इति विदितमेव सर्वेषाम्, तथा च विधिलिङ्विषये ज्ञेयं, प्रवर्तनायां लिङ् इति स्वयमेव भट्टोजिदीक्षितैः स्वीकृतम्। तथापि सुस्पष्टार्थद्योतनाय भृत्यादिप्रवर्तनासु कथितः प्रपञ्चः नानावश्यकः सौलभ्यात्। सन् यङ् यङ्लुङ् इत्यादि प्रक्रिया अत्रावश्यकी वाक्येन क्रियाविशेषणेन वा अधिगतार्थत्वात् इत्युक्तम् महाभागैः।

परन्तु 'धातोः समानकर्तृकादिच्छायां वा' इति सूत्रेण सन्नन्तेन अर्थद्योतनं लाघवेन यदि भवति किमर्थं तदर्थं वाक्येन वा क्रियाविशेषणेन वा भाषागौरवं कार्यमिति विद्वांस एव विदांकुर्वन्तु। अथ च सूत्रस्थ-'वा' पदेन वैकल्पिकत्वं उररीकृतमेव पूर्वाचार्यैः। अथ यङन्तप्रक्रियाऽपि आवश्यकी अन्यथा पौनःपुन्यं क्रियासमभिहारः भृशार्थश्च इत्यादिप्रकारार्थ–द्योतनाय लम्बायमानवाक्यप्रयोगं विना न घटेत उपर्युक्तार्थद्योतने जाते तथाविधे का हानिः इत्युच्यते चेत् लिख्यते भवद्भिः स्वकीये लेखारम्भे संस्कृतभाषावर्णनावसरे स्तोकपदेन बह्वर्थबोधकत्वम् अस्यां संस्कृतभाषायां दरीदृश्यते इत्युक्तं तदपि मुधैव भवेत्।

यङ्लुगन्तप्रक्रियाया अनावश्यकत्वं नागोजिभट्टैः शेखरे स्वीकृतमेव। व्यवहारानुरोधेन धातवो विवर्धनीया इति यदुक्तं महोदयैः तत्तु नामधातुप्रक्रियया गतार्थम् यथाप्रसंग-नामधातुवर्धनेन वक्ता वा लेखको वा सम्पादयत्येव भाषान्यूनतां। अतिप्रसिद्धा एव प्रत्यया उपयोज्याः। अनतिप्रसिद्धा उणादयो व्युत्पत्तिमात्रोपयोगिनः समानार्थबोधका असरूपप्रत्ययाश्च त्याज्याः।

सर्वेषां सौलभ्येन तत्तत्पदार्थबोधाय अतिप्रसिद्धा एव प्रत्यया उपयोज्याः, इति तु समीचीनमेव, परन्तु अनतिप्रसिद्धविशेषार्थबोधकप्रत्ययेन यदि विशेषार्थबोधो बुध्येत तर्हि अनतिप्रसिद्धस्य वा असरूपप्रत्ययस्य वा दुर्बोधस्याऽपि त्यागो नोचितः।

एकपदधातूपसर्गसमासेष्वपि संहिताया विवक्षाधीनत्वं स्वीकार्यं इत्यलेखि महाभागैः, परञ्च तथाकरणे को गुणः साधितो भवेत् संस्कृतवाग्व्यवहारे इति न ज्ञायते, प्रत्युत एकपदधातूपसर्गसमासेषु संहिताऽकरणेन भाषा विकृता दृश्येत। व्याकरणनियमातिक्रमदोषश्च स्यात्। तथा चोक्तम्—

संहितैकपदे नित्या नित्याधातूपसर्गयोः।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥१॥

इति सार्वजनीनम्।

समर्थानां प्रथमाद्वा इत्यत्र विकल्पश्रुत्या महाविभाषया च कृत्स्नस्याऽपि तद्धितप्रपञ्चस्य वैकल्पिकत्वं अङ्गीकार्यम् इत्युक्तं भवद्भिः।

प्रयोक्तव्याः। तेन कलत्रं मित्रं दाराः, इत्यादि क्लेशो न भविष्यति इति भवदीयवचनं दृष्ट्वा सन्दिह्यते चेतसा—

लोके नाम लोकव्यवहारे—इत्येवार्थः विवक्षितः स्यात् चेत्, तत्र विषये 'पृच्छ्यते व्यवहारस्तु इदानींतनमहाराष्ट्रभाषागतलिंगव्यवहारः, अथवा हिंद्यादि-भाषागतलिंगव्यवहारः, उत संस्कृतलौकिकभाषाव्यवहारः स्वीक्रियते ? यदि मराठी हिंद्यादिभाषास्थलिंगव्यवहारो विवक्षितः इति चेत् भाषाणां बहुत्वात् भिन्नभिन्न भाषागतैकशब्दस्य भिन्नभिन्नलिंगत्वात् शब्दानां अनियतलिंगत्वं समागच्छेत्। तथा अनवस्थाप्रसंगः लिंगविषयकः संस्कृतभाषयाः ललाटे लिखितो भवेत्। यथा महाराष्ट्र-भाषायां तस्यैव मित्रशब्दस्य पुंलिंगेन व्यवहारो विद्यते संस्कृतभाषायां तस्यैव मित्र-शब्दस्य नपुंसकत्वेन व्यवहारः प्रसिद्धः। अथ मित्रं सखा सुहृत् इति कोशेनाप्युक्तम्। दारा पुंसुम्नि इत्यादिना संस्कृतभाषायां निश्चितत्वेन कथं तेषां मित्रदारादिशब्दानां लिङ्गपरिवर्तनं कर्तव्यं कोशादिविरोधात्। कलत्रशब्दः यद्यपि स्त्रीवाची स्त्रीलिंगम-पेक्षते तथापि कोशेषु नपुंसकत्वेनोल्लेखितत्वात् न स्त्रीलिंगमर्हति कोशविरोधात्। यद्यपि 'लिंगमशिष्यं लोकाश्रयत्वात् लिंगस्य' इत्युक्तं अभियुक्तैः, तथापि संस्कृतलौकिक-व्यवहारे प्रायः शब्दानां निर्धारितलिंगत्वात् कोशादिपूक्तलिंगैरेव शब्दव्यवहारः संस्कृतभाषायां भवितुं योग्यः, अन्यथा अनवस्थादोषप्रसंगः स्यात्।

५ सर्वेऽपि धातवः शब्दविकरणाः कार्याः गणकार्यस्यानित्यत्वात् तथा सर्वे धातवः स्वरितञितः कार्याः वक्तुर्विवक्षया चोपयोक्तव्याः। यदि गणकार्यमनित्यम् इति परिभाषा स्यात् चेत् भवदीय वचनं सुसङ्गतत्वं विशतु। परन्तु गणकार्यमनित्यं इति परिभाषैव भाष्यापरिगृहीता, अतः गणकार्यस्य नित्यत्वादेव नहि सर्वे धातवः शब्द-विकरणाः विधेया इति कथनं सुरुचिरम्।

सर्वे धातवः स्वरितञितः कार्या इत्येतदपि असंगतम्, कथमिति प्रश्नश्चेत् कथ्यते-सर्वेषां धातूनां स्वरितेत्त्वं ञित्वं वा निसर्गतः स्यान् नाम तेषां स्वरूपलक्षणं भवेत् यतः स्वरूपान्तर्गतं सत् इतर व्यावर्तकत्वं स्वरूपलक्षणस्य लक्षणम् उक्तं पूर्वाचार्यैः तथात्वे सर्वधातूनां सति व्यावृत्तधातवः के इति वक्तुं अशक्यम्। अथ च येषां धातूनां स्वरितेत्त्वं ञित्वं वा निसर्गतः एव विद्यते तेषां वाचनिकमेव 'स्वरितञितः कर्त्र-भिप्राये क्रियाफले' इति सूत्रेण आत्मनेपदं अन्यथा परस्मैपदं परंतु येषां स्वरितेत्वं ञित्वं नास्ति कथं तेषां स्वरितेत्वं ञित्वं वा कल्पनीयं इति न ज्ञायते। स्वरितेत्वस्य ञित्वस्य स्वरूपलक्षणत्वात् धातूनाम्।

लकारेषु लट् लृट् लोट आशीर्लिङ् एते एव प्रयोक्तव्याः नान्ये इति उपरितन-वाक्यगत एवकारेण ध्वन्यते। परन्तु उक्तलकारेभ्यः अन्यलकाराणां सूक्ष्मार्थद्योतक-त्वेन अस्त्येव आवश्यकत्वम् तथाहि भूतार्थद्योतकेषु लिट् लङ् लुङ्षु सत्स्वपि लिट् लकारे अनद्यतनपरोक्षभूतार्थवृत्तित्वं लङ्लकारे केवलानद्यतनभूतार्थवृत्तित्वं लुङ् लकारे केवलसामान्यभूतार्थवृत्तित्वं वरीवर्ति एतावता परोक्षानद्यतन-भूतार्थः अनद्यतनकेवलभूतार्थः अद्यतनाऽनद्यतनसामान्यभूतार्थः इति भेदेन भूतार्थद्योतकत्वेन लिट्, लङ् लुङाम् आवश्यकत्वं दृश्यते व्यवहारभाषायामपि,

अन्यथा उक्त-सूक्ष्मार्थ-द्योतनाय शब्दप्रयोगापेक्षा एव शरणीकर्तव्या भवेत्, तथा सति भाषागौरवं सूत्रवैयर्थ्यं चापतेत् ।

तथैव—अनद्यतनभविष्यत्यर्थे लुटः प्रयोगः करणीयः, लृटस्तु प्रयोगः अद्यतनाऽनद्यतनसामान्यभविष्यदर्थे प्रयोक्तव्यः । लृङ् हेतुहेतुमद्भविष्यदर्थद्योतनाय उपयोक्तव्यः, इत्युक्तम् । तत्तल्लकाराणां अप्रयोगे उक्तसूक्ष्मार्थप्रतिपत्यर्थं शब्दगौरवमेव उपयोक्ष्यति नान्यःपन्था उक्तसूक्ष्मतमार्थबोधाय । परन्तु अयमेव संस्कृतभाषायां विशेषो वर्तते यतः शब्दपदलाघवेनाऽपि अर्थगौरवप्रतिपत्तिः प्रतीयते । इति विदितमेव सर्वेषाम्, तथा च विधिलिङ्विषये ज्ञेयं, प्रवर्तनायां लिङ् इति स्वयमेव भट्टोजिदीक्षितैः स्वीकृतम् । तथापि सुस्पष्टार्थद्योतनाय भृत्यादिप्रवर्तनासु कथितः प्रपञ्चः नानावश्यकः सौलभ्यात् । सन् यङ् यङ्लुङ् इत्यादि प्रक्रिया अनावश्यकी वाक्येन क्रियाविशेषणेन वा अधिगतार्थत्वात् इत्युक्तम् महाभागैः ।

परन्तु 'धातोः समानकर्तृकादिच्छायां वा' इति सूत्रेण सन्नन्तेन अर्थद्योतनं लाघवेन यदि भवति किमर्थं तदर्थं वाक्येन वा क्रियाविशेषणेन वा भाषागौरवं कार्यमिति विद्वांस एव विदांकुर्वन्तु । अथ च सूत्रस्थ-'वा' पदेन वैकल्पिकत्वं उररीकृतमेव पूर्वाचार्यैः । अथ यङन्तप्रक्रियाऽपि आवश्यकी अन्यथा पौनःपुन्यं क्रियासमभिहारः भृशार्थश्च इत्यादिप्रकारार्थ—द्योतनाय लम्बायमानवाक्यप्रयोगं विना न घटेत उपर्युक्तार्थद्योतने जाते तथाविधे का हानिः इत्युच्यते चेत् लिख्यते भवद्भिः स्वकीये लेखारम्भे संस्कृतभाषावर्णनावसरे स्तोकपदेन बह्वर्थबोधकत्वम् अस्यां संस्कृतभाषायां दरीदृश्यते इत्युक्तं तदपि मुधैव भवेत् ।

यङ्लुगन्तप्रक्रियाया अनावश्यकत्वं नागोजिभट्टैः शेखरे स्वीकृतमेव । व्यवहारानुरोधेन धातवो विवर्धनीया इति यदुक्तं महोदयैः तत्तु नामधातुप्रक्रियया गतार्थम् यथाप्रसंग-नामधातुवर्धनेन वक्ता वा लेखको वा सम्पादयत्येव भाषान्यूनतां । अतिप्रसिद्धा एव प्रत्यया उपयोज्याः । अनतिप्रसिद्धा उणादयो व्युत्पत्तिमात्रोपयोगिनः समानार्थबोधका असरूपप्रत्ययाश्च त्याज्याः ।

सर्वेषां सौलभ्येन तत्तत्पदार्थबोधाय अतिप्रसिद्धा एव प्रत्यया उपयोज्याः, इति तु समीचीनमेव, परन्तु अनतिप्रसिद्धविशेषार्थबोधकप्रत्ययेन यदि विशेषार्थबोधो बुध्येत तर्हि अनतिप्रसिद्धस्य वा असरूपप्रत्ययस्य वा दुर्बोधस्याऽपि त्यागो नोचितः ।

एकपदधातूपसर्गसमासेष्वपि संहिताया विवक्षाधीनत्वं स्वीकार्यं इत्यलेखि महाभागैः, परञ्च तथाकरणे को गुणः साधितो भवेत् संस्कृतवाग्व्यवहारे इति न ज्ञायते, प्रत्युत एकपदधातूपसर्गसमासेषु संहिताऽकरणेन भाषा विकृता दृश्येत । व्याकरणनियमातिक्रमदोषश्च स्यात् । तथा चोक्तम्—

संहितैकपदे नित्या नित्याधातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥१॥

इति सार्वजनीनम् ।

समर्थानां प्रथमाद्वा इत्यत्र विकल्पश्रुत्या महाविभाषया च कृत्स्नस्याऽपि तद्धितप्रपञ्चस्य वैकल्पिकत्वं अङ्गीकार्यम् इत्युक्तं भवद्भिः ।

'समर्थानां प्रथमाद्वा' इत्याकारया महाविभाषया प्राक्दिश इति मर्यादा प्रादर्शि। तन्मते वैकल्पिकत्वं तद्धितप्रत्ययानाम् इति तु घंटापथः परन्तु प्राक्दिशो मर्यादाया अनन्तरं वर्तमाना ये प्रत्ययाः सन्ति, तेषां न तद्धितप्रत्ययत्वं वर्तते इति कथं भणितुं शक्यम्? तेषां तद्धितत्वे सति भवदुक्तमहाविभाषाया अप्रवृत्तौ न सर्वेषां तद्धितप्रत्ययानां वैकल्पिकत्वम्। अतः कृत्स्नस्य तद्धितप्रपञ्चस्य वैकल्पिकत्वमसिद्धम्।

इत्थं शब्दशास्त्रनियमानां ऐच्छिकव्यवहारोऽदुष्टत्वेन ग्राह्यः, तेन संस्कृतभाषा व्यवहाराय सुलभा कल्पते। एतावता संस्कृतभाषा व्यवहाराय सुलभा भवतु नाम परन्तु सा पाणिन्यादि-पूर्वाचार्यप्रणीत-व्याकरणनियमावरोधं परिपाल्यैव व्यवहारार्हा यथा स्यात् तथैव पण्डितैः प्रयतितव्यम् इत्यस्माकीनं मतम्। अन्यथा दोषोक्तेः साधुशब्दप्रयोगे दृष्टादृष्टफललाभः वैपरीत्ये च प्रत्यवायः शास्त्रकारैः प्रत्यपादि। विंशतितमशताब्द्यामपि माभूत् संस्कृतभाषाविकृतत्वमित्यभ्यर्थये श्रीशम्।

---

## विरामचिन्हानि।

लें०—विद्यार्थी हरिद्वारशर्मा

साम्प्रतं गीर्वाण-वाणीसेवन-पराणां छात्राणां लेखन-विधौ विराम-चिह्न-प्रदाने वह्वी त्रुटिः दरीदृश्यते। तेषां प्रकाशनस्य महती आवश्यकता वर्तते। अतस्तेषां कुत्र कथञ्चोपयोगः कर्त्तव्य इति निर्दिश्यते।

अल्पविरामः ( , ) संस्कृत—भाषायामेतस्य चिन्हस्य प्रयोगो नितरामावश्यकः समुपयुक्तश्च। अस्य चिह्नस्य प्रयोगे प्रधानतस्त्रीणि कारणानि सन्ति। (१) अभेदान्वितशब्दानां योजनाय (२) भेदान्वितशब्दानां पृथक्करणाय (३) शीघ्रतया पठने यस्य शब्दस्य वाक्यांशस्य वा अर्थः भावः, शक्तिर्वा न्यूना, नष्टा वा भवेत्, तेषां स्पष्टीकरणाय। एतदतिरिक्तम्।

(क) यस्मिन् स्थाने एकस्योच्चारणसमयं यावत् विरामस्यावश्यकता स्यात्, तत्रास्य चिह्नस्य योजना कर्त्तव्या। यथा गङ्गा, यमुना तथा सिन्धुरिति भारतस्य महानद्यः सन्ति।

(ख) यदा साधारणवाक्ये, संक्षिप्तवाक्यमागच्छेत्, येन साधारणवाक्यस्यार्थः स्पष्टः स्यात्, तदा तस्य संक्षिप्तवाक्यस्य पूर्वं पश्चाद्वा अल्पविरामयोजना कर्त्तव्या। यथा—वार्तालापसमये सर्वदा ध्येयम्, यत् कोऽयम् केन सह कुत्र कदा किमर्थम् कथञ्च, वार्तां करोमीति।

(ग) यदा कस्मिन्नपि वाक्ये, एकस्यैव वाक्यस्य वहवः शब्दाः स्युः, येषां मध्ये

उभयान्वयिनोऽव्यया न समागताः स्युः, तदा प्रत्येकशब्दस्य पश्चात् अल्पविराम-योजना विधेया । यथा, देवदत्तः, कृष्णदत्तः, यज्ञदत्तः तथा वासुदेवः ।

(घ) यदा वाक्ये द्वौ शब्दौ अथवा वाक्यसंयोजकैरव्ययैस्तौ युक्तौ भवेताम् तदा तत्र नास्त्यल्पविरामस्यावश्यकता; किन्तु यदि ते वाक्यांशाः—दीर्घाः स्युस्तदाऽल्पविरामयोजना कर्त्तव्या । यथा अस्माभिर्यदि संस्कृतभाषाशिक्षणीया, तदा ऋग्वेदस्य बुद्धस्य वा, पतञ्जलेर्वाणभट्टस्य वा, वाचस्पति मिश्रस्य गदाधरस्य वा, पञ्चतन्त्रस्य पण्डिताभिमानिनां वा ।

(ङ) प्रधानवाक्याद् गौणवाक्यस्य पृथक्करणेऽस्य चिह्नस्यावश्यकता वर्तते । यथा—यदि किञ्चित् वर्तते चेत्, सोऽक्षराणामभावः, वर्णविन्यासव्यतिक्रमस्तथा उच्चारणस्य विश्रृङ्खलता ।

(च) यदा कस्मिन्नपि सामान्यविषये विशेषतो ध्यानमाकर्षणीयञ्चेत्, तदा तस्य वाक्यात्पृथक्करणाय, अल्प विरामस्य योजना विधेया । यथा पश्य, सावधानो भव ।

(छ) येषामव्ययानां पश्चाद् पूर्णक्रिया भवति, तेषामन्ते अस्य चिन्हस्य योजना भवति । एतेष्वव्ययेषु प्राय इमे भवन्ति यथा—परन्तु, अवश्यम्, तदा, तर्हि, परम्, अस्तु, अन्यथा, यत्, न्यूनतः, यतः, इत्यादि ।

अस्माद्धेतोः सुरभारतीसदनुष्ठानतत्परैश्छात्रैर्विरामचिह्नानि प्रदायैव लेखो लेखनीय इति शम् ।

[ अस्माभिर्लेखकस्योत्साहवर्द्धनार्थं पण्डितानां पुरतोऽस्य विषयस्य विचारणायैव प्रकाशितोऽयं लेखः । अस्माकं मते संस्कृतभाषायाः कारकाव्ययक्रियादिसम्बन्धमर्य्यादयैवार्थावगतिः स्फुटी भवति । इंग्लिशभाषावदत्र विरामादि-चिह्नानामावश्यकतैव प्रायशो नायाति इति सुधीभि र्विमर्शनीयम् ] ( स० सम्पादकः )

—— o ——

## "दीपावली-शुभशंसा"

ले०—शास्त्री प्राणजीवन बी० जोशी काव्यतीर्थः, सा० भूषण काशी ।

विश्वं विश्वगशान्तिवाडवदहद्धर्त्ता पुन र्निर्वृतिम्
यात्वन्योऽन्यकलिः शमं विजयतां श्रीरार्यभूमौ परा
भास्वद्भारतधर्मभानुरपनीयोच्चैस्तमोऽन्तर्गणा—
सुद्बोधं वितनोतु नस्तुतिरिति श्रीविश्वनाथाऽन्तिकम् ॥ १ ॥

—o—

# आत्मनः स्वरूपम् ।

लेखकः—वि० कृष्णस्वाम्यय्यङ्गार्यः, अध्येता, श्रीचामराजेन्द्र-
संस्कृतमहापाठशाला, चामराजपेठ, कल्याणपुरी,
महीशूरसंस्थानम्,

[ भाषाभ्यासिसभाकार्यदर्शी ]

तत्र तावदस्मिन्नाधुनिके जगति बहवः खलु कुदृष्टयः पामराः, यत्किञ्चन स्वकीयसिद्धान्ततया प्रतिपादयन्तो यानि कानिचन मतान्यापातरमणीयान्युद्घोषयन्तश्चाभिवीक्ष्यन्ते। प्राचीनभारतीयसिद्धान्तसारसर्वस्वमविजानाना अपि तदेतत्प्राचां मतमभित्तिचित्रायितमित्यस्माकीनानामार्याणामाचार्याणामप्रौढमतित्वमविमर्शशीलत्वमज्ञानान्धकारे एवावतिष्ठमानत्वमुपपादयितुमलंभविष्णवो 'न ह्यस्माकमिदं मतं केनचिदपि प्रत्याख्यातुं शक्यमिति स्वयमेव स्वकीयस्य मतस्य श्रेष्ठतमत्वं प्रतिज्ञापूर्वकमुद्घोषयन्ति । तत्र तावदात्मनस्स्वरूपे विमृश्यमानेऽप्यनयैव रीत्या विप्रतिपद्यमानानां शरीरस्यैवात्मत्वमित्यपलपताञ्चामीषां चार्वाकमतावलम्बिनामुक्तिरविचारितरमणीयेति प्रतिपादितचरमेवैतत्सूर्योदये ।

काममिमे प्रत्यवतिष्ठन्तां नाम मदान्धाः पामराः, अथापि नास्माकमत्र चोद्यावकाशो यतः प्रसिद्धमेव प्रत्यक्षमात्रस्य ते प्रामाण्यमभ्युपगच्छन्तीत्यतो नातिरिक्तमात्मानमभ्युपयन्ती'ति । परन्तु, सकलप्रमाणमूर्धन्यत्वं श्रुतीनामभ्युपगच्छन्तोऽपि, भारतीयतत्त्वग्रन्थकारेषु शीर्षण्यतामधिगच्छन्तोऽपि वेदान्तिनो नाम केचनैते यदाहुरात्मनो नातिरिक्तत्वमपि तु विज्ञानरूपत्वमेवेति तदेतच्छिनत्तीव मर्माणि, हृदयमुत्पाट्य निर्गमयतीव प्राणान् नैयायिकानां ये पुनर्ज्ञानाधिकरणमात्मानमभिदधति। तदेतत्तार्किकमतं विश्वनाथपञ्चाननादिभिर्मेधाविभिः परिष्कृतमस्तीति तदेवानुवदन्तो वेदान्तिनः प्रत्याचक्ष्महे ।

वेदान्तिनां पुनरेतावानाशयो यत् बौद्धमतानुरोधेन क्षणिकविज्ञानस्यात्मत्वमयुक्तं वक्तुं, यतो हि विज्ञानानामनेकेषां विज्ञानान्तरहेतुभूतानां तथैव तादृशविज्ञानवृत्तीनामसंख्याकानामुत्तरोत्तरसंस्कारकारणानां संस्काराणाञ्च कल्पने गौरवम् । एवमेव विज्ञानस्यैवात्मत्वे यद्यप्यस्माकमानुकूल्यमेव बौद्धैरप्याचर्यते तथापि तस्य क्षणिकत्वमभिदधाना ह्येते प्रत्याख्यातव्या भवन्ति । क्षणिकविज्ञानाङ्गीकारे हि स्मरणानुपपत्त्यादयो दोषा आविष्क्रियेरन्, यदन्यानुभूतार्थस्यान्येन स्मर्तुमशक्यतया पूर्वविज्ञानेनानुभूतो यो विज्ञानान्तरेण स्मर्तुमशक्यो भवति । नित्यस्याङ्गीकारादनुभवस्मरणयोरैकाधिकरण्यमप्युपपद्यते । न चैवं सुषुप्त्यवस्थायामपि नित्यविज्ञानस्यानपायाज् ज्ञानसामान्यस्य च सविषयकत्वनियमाद्विषयावबोधप्रसङ्ग इति वाच्यं, ज्ञानसामान्यस्य सविषयकतायां मानाभावात्तादृश्यामप्यवस्थायां निर्विषयकविज्ञानस्य

सत्त्वे बाधकाभावात्। न चैवं घटादीनामपि ज्ञानरूपत्वमङ्गीकर्तुं शक्यम्। यद्यपि विज्ञानातिरिक्तं वस्त्वनङ्गीकुर्वन्तो योगाचारमतावलम्बिनः पुनरिष्टापत्तिमभिदधानाः (प्रत्याख्यानप्रकारस्तावत् सूर्योदये द्रष्टव्यः) प्रत्याख्यायेरंस्तथाऽपि चेष्टाद्यभावेन घटादिष्वचैतन्यमुपपादयन्तोऽस्मादृशाः कथङ्कारं निरस्येरन्? आत्मनि हि तावच्चैतन्यमभ्युपगन्तव्यं, शरीरादीनां चेष्टावत्त्वेन चेतनाधिष्ठितत्वावश्यम्भावात्। अतः, नित्यविज्ञानस्यात्मत्वे न कोऽपि दोषः। श्रुतिरप्येतदास्माकम्मतमुपोद्बलयति, यत्सत्यं ज्ञानमनन्तं ब्रह्मेति ज्ञानात्मवादमनुगृह्णानैव श्रुति रविनाशी वाऽरेऽयमात्मेति तस्य विनाशप्रतियोगित्वाभावलक्षणं नित्यत्वमप्यभिधत्ते' इति। तदेतन्मतमापाततो मनोहरमेव प्रतिभाति। किन्त्वत्र मते कति दोषाः प्रादुर्भवन्तीत्यत्रैव सयुक्तिकं विचार्य सिद्धान्तं प्रदर्शयिष्यामः।

यदि विज्ञानरूपत्वमात्मनस्तर्हि सुषुप्तावपि विषयावबोधापत्तिरितीदं यद्यपि परिहृतमेव भवद्भिस्तथापि निर्विषयकस्य विज्ञानत्वे प्रमाणाभावः। अथ तत्राप्यस्तु नाम विषयानवबोधो विषयेन्द्रियसंयोगाभावनिबन्धनः, अथापि किमस्य विज्ञानस्य जगद्विषयकत्वमुताहो विषयशून्यत्वम्? प्राथमिके तु पक्षे मादृशानामपि सर्वज्ञत्वमापद्येत। द्वैतीयीकः पक्षः पुनरवलम्ब्यमानो घटादिभिः पटादीनां पटादिभिः कुडवकुसूलादीनां च विनिगमनाविरहाद्भवत एव पराजयमादधाति। यस्य चात्मनो (विज्ञानरूपस्य) यावद्विषयावगाहित्वं तस्य तस्य तावद्विषयकविज्ञानरूपत्वमिति नियमानुरोधेन चेन्निर्वाहस्तर्हि 'अहं जानामी'त्याद्याकारिकाणां, ज्ञानवत्त्वप्रकारिकाणां, प्रतीतीनामप्रामाण्यापातः। तादृशप्रतीतीनामपि भ्रमात्मकत्वमुक्तागमप्रामाण्यान्यथानुपपत्तिनिबन्धनतया कल्प्यते' इति चेन्न। सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिवाक्यानि हि तावत्परब्रह्मणो विज्ञानात्मकत्वमाहुर्न पुनरस्मादृशामप्यात्मनाम्। न च जीवब्रह्मणोरभेदस्यापि तत्त्वमसीत्यादिभिरनिदम्प्रथमाभिर्वाग्भिरुपपादितत्वेन ब्रह्मणो ज्ञानात्मकत्वमभिदधानयैव श्रुत्या जीवात्मनामपि तादृशत्वमुक्तप्रायमिति वाच्यम्। चैत्रस्य सुखित्वे मैत्रस्य दुःखभाक्त्वं, एकस्य कस्यचिदतिमेधावितया महामहोपाध्यायादिपदवीभाक्त्वे मादृशानां पुनर्मन्दमतीनामशेषैरप्यवधीर्यमाणत्वम्, कस्यचिद्रजतविशेष्यकरजतत्व प्रकारकज्ञानवत्त्वेऽप्यन्यस्य रजतविशेष्यकरङ्गत्वप्रकारकज्ञानवत्व मित्येवं रीत्या ज्ञानाज्ञानसुखदुःखादिनिबन्धनः जीवेष्वेव परस्परभेदस्सिध्यन्सुखदुःखादिरहितस्य परब्रह्मणो जीवभेदं कैमुतिकनयेन साधयितुमीष्टे। तथा च जीवब्रह्मणोरभेदबोधिश्रुतेस्साम्यप्रतिपादने तात्पर्यं कल्प्यम्। अत एव हि "निरञ्जनः परमं साम्यमुपैती" त्यपि श्रूयते। निरञ्जनत्वं हि नाम निर्दुःखम्। तथा च जीवस्य ज्ञानरूपत्वं सुदूरमपास्तम्। न च मोक्षदशायामभेद उत्पद्यते, ब्रह्मविद्ब्रह्मैव भवतीति श्रवणादज्ञानस्यैव भेदकारणतया तन्निवृत्तौ भेदनाशादिति वाच्यम्, अन्योन्याभावापराभिधानस्य भेदस्य नित्यत्वाङ्गीकारात्। न च भेदस्य नित्यत्वे मानाभावादभेदसिद्धिरिति वाच्यमभेदोत्पत्त्यङ्गीकारेऽपि व्यक्तिद्वयस्यावतिष्ठमानत्वात्। मुक्तात्मस्वस्मन्मते ज्ञानाभावात्तत्र ब्रह्माभेदनिबन्धनस्य विज्ञानात्मकत्वस्यानङ्गीकरणीयत्वात्। न च द्वित्वमपि नश्यत्येवेति कथङ्कारं व्यक्तिद्वयावस्थितिरिति प्रष्टव्यं, द्वित्वनाशे माना-

भावात्। अस्तु वा नाम द्वित्वस्यापि नाशस्तथापि व्यक्तिद्वयावस्थाने न काऽपि हानिः। भव- (वेदान्ति) न्मते परब्रह्मणि धर्मसामान्यशून्यत्वेन सत्यत्वात्मकधर्मविरहेऽपि यथा ब्रह्मणस्सत्यं ज्ञानमिति श्रुत्यनुरोधेन सत्यस्वरूपत्वमुररीक्रियते, तथा द्वित्वरूप- धर्माभावेऽपि जीवब्रह्मणोर्व्यक्तिद्वयरूपत्वमुपपादयितुं शक्यमेव। ननु 'न ह्यस्माभिः परमात्मनो धर्मसामान्यशून्यत्वमुक्तं, येनोक्तरीत्या भवन्तो दूषणमभिधातुं शक्नुयुः। अपि तु स्वभिन्नधर्मशून्यत्वमात्रमस्माभिरभिधीयते। सत्यत्वरूपधर्मस्य मिथ्यात्वा- भावात्मकत्वाभ्युपगमात्प्राभाकरपथानुयायिभिरस्माभिरस्य भावस्याधिकरणात्मकत्वा- ङ्गीकारान्मिथ्यात्वाभावस्य च स्वाधिकरणीभूतब्रह्मात्मकत्वात्सत्यत्वस्य (स्वं ब्रह्म) स्वभिन्नधर्मत्वाभावात् ब्रह्मणस्सत्यत्वाधिकरणत्वेऽप्यक्षतिरिति चेन्न। अभावानाम- धिकरणात्मकत्वे हि भूतलादीनामनन्ताधिकरणानां घटाभावादिस्वरूपत्वकल्पने गौर- वम्। अपि च, अभावतदधिकरणयोरैकात्म्ये तावद्भूतले घटाभाव इत्यस्यामबाधित- प्रमात्वकप्रतीतावुपभासमानस्याधाराधेयभावस्यानुपपत्तिः, भूतलघटाभावयोर्वास्त- विकभेदाभावेन, अभेदे चाधारत्वाधेयत्वयोरसमावेशात्। यो गुणो यदिन्द्रियग्राह्य- स्तन्निष्ठा जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते" इति ह्यस्ति नियमः। तथा च वायौ रूपाभावप्रत्यक्षन्तावत्संयुक्तविशेषणतया चक्षुषा गृह्यते, अभावप्रतियोगिनो रूपस्य चक्षुर्मात्रग्राह्यत्वादिति स्थितिः। तत्र यदि रूपाभावस्याधिकरणात्मकत्वमूरीक्रियते तर्हि वायोरप्रत्यक्षतया वाय्वभिन्नरूपाभावस्यापि प्रत्यक्षत्वाभावप्रसङ्गः। एवमभावस्याधि- करणात्मकत्वे दोषबाहुल्यादभावनाम्नोऽतिरिक्तपदार्थस्य सिद्धौ मिथ्यात्वाभावात्म- कस्य सत्यत्वस्य न हि ब्रह्मरूपत्वमित्यनुपपत्तितादवस्थ्यम्। अथवा अधिकरणात्म- कत्वमस्त्वभावस्य। तथा च सत्यत्वस्योक्तरीत्या परमात्मस्वरूपतया चानुपपत्तिः कामं परिहीयताम्। एवमपि व्यक्तिद्वयावस्थानमपलपितुमशक्यमेव; यस्माद्धि द्वित्व- स्याप्येकत्वाभावात्मकत्वाङ्गीकारादेकत्वाभावस्य च व्यक्तिद्वयात्मकं यदधिकरणं तदभिन्नतया भवताऽपि द्वित्वनाशो न तावदभ्युपगन्तुं शक्यते, जीवब्रह्मरूपस्य व्यक्तिद्वयस्य नाशप्रसङ्गात्। एकत्वाभावात्मकद्वित्वस्य व्यक्तिद्वयाभिन्नत्वात्। नच प्रत्येकमत्र व्यक्तिद्वये एकत्वमस्त्येवेति कथमेकत्वाभावरूपं द्वित्वमिति प्रत्यवस्थातु- मुचितम्। पृथिव्यामेकत्र गन्धसत्त्वेऽपि यथा पृथिवीजलयोर्न गन्धः, इति व्यवहारो भवन्मतेऽप्युपपद्यते तथा प्रत्येकमेकत्वेऽपि 'द्वयोरेकत्वाभाव' इत्यपि वक्तुं शक्य- त्वात्। ननु विषमोऽयं दृष्टान्तः, यतः पृथिव्यां गन्धसत्त्वेऽपि जले गन्धो नास्तीति तत्र व्यवहारनिर्वाहः; अत्र पुनः प्रथमव्यक्तावेव केवलमेकत्वमन्यत्र तु नास्तीत्यभि- धातुमशक्यत्वाभाव इति प्रतीतिः कथमुपपद्यते, इति चेन्न। परमाणुद्वयस्यापि प्रत्येकं परमाणुत्वानपायाद् द्व्यणुकत्वाभावप्रसङ्गात्, यतो हि परमाणुद्वयेऽपि परमाणुत्वम- व्यभिचरितमिति परमाणुत्वमात्रमत्रास्तीति वक्तव्यं न पुनर्द्व्यणुकत्वमस्ति तस्य परमाणुद्वयत्वात्मकत्वादत्र च परमाण्वोर्द्वित्वाभावात्। उक्तरीत्या द्व्यणुकोत्पत्त्यर्थं यदि परमाण्वोर्द्वित्वमुररीक्रियते, तर्हि प्रकृतेऽपि व्यक्तिद्वये एकत्वाभावलक्षणं द्वित्वं स्वीकर्तव्यमेव भवतीति कदापि कथंचिदपि केनापि जीवब्रह्मणोरभेदस्साधयितुम- शक्य एवेत्येवमुदाहृतश्रुतिप्रामाण्येन जीवात्मनां विज्ञानरूपत्वं प्रत्युक्तम्। नच काम-

मस्तु जीवात्मनो ज्ञानाधिकरणत्वमथापीतरस्योक्तश्रुत्या नित्यविज्ञानरूपत्वमप्रतिवक्तव्यमेवे'ति वाच्यम्, परमात्मनोऽपि ज्ञानाधिकरणत्वस्यैव श्रुतिसंमतत्वात्। तथाहि यस्सर्वज्ञस्स सर्वविदिति श्रुत्या परमात्मनोऽपि ज्ञानाश्रयत्वमभिहितम्। तथाच 'नित्यं विज्ञानमानन्दं ब्रह्म' त्यादिवाक्यानामपि ज्ञानाद्याश्रयत्वप्रतिपादने तात्पर्यं वक्तव्यम्। ज्ञानमस्यास्तीति ज्ञानमिति व्युत्पत्त्या विज्ञानशब्देन विज्ञानवत एवाभिधानम्। संभवत्यविरोधे विरोधाभ्युपगमस्यान्याय्यत्वात्। आनन्दशब्देनाप्यानन्दवानेव परमात्मा प्रतिपाद्यते, घञन्तस्य पुंलिंगत्वाव्यभिचारादत्रानन्दशब्दस्यार्श आद्यजन्तत्वमन्तरेण नपुंसकलिङ्गत्वानुपपत्तेः। छान्दसत्वं त्वगतिकगतिरिति संभवत्येवं हृदयंगमे वाक्यार्थे नैवाश्रयणीयम्। एवञ्ज्ञानन्दस्वरूपः परमात्मेत्यपि प्रत्युक्तम्। नचैवं परमात्मन्यदृष्टानुत्पन्नानन्दसुखदुःखे' इति भव-(तार्किक) वन्मते दोषः स्यादिति चेत्, न। आनन्दो हि नाम न तावत्सुखमेव; अपि तु भाराद्यपगमे 'सुखी संवृत्तोऽह' मितिवत् आनन्दशब्दोऽपि दुःखाभावमेव लक्षयतीत्यङ्गीकरणात्। लक्षणकल्पनमेव दोष इति चेदस्त्वस्मिन्नानन्दो न त्वसावानन्दः 'असुख' मित्यानन्दात्मकत्वप्रतिषेधश्रवणात्। नचासुखमित्यत्र बहुव्रीहिकल्पनमुचितम्, अदीर्घमस्थूलमह्रस्वमित्यत्र नञ्तत्पुरुषस्य प्रकृतत्वादसुखमित्यत्रापि नञ्तत्पुरुषस्यैवाभ्युपेयतया स्वरसतः प्रतीयमानमेतमर्थमपहायार्थान्तराश्रयणे क्लिष्टकल्पनापाताच्चेति वेदान्तिनः प्रत्युक्ताः।

एवमत्रात्मस्वरूपनिरूपणावसरे प्रत्यवतिष्ठमानास्सांख्यमतावलम्बिनः प्रत्याख्यास्यन्ते।

---

## शोकोच्छ्वासः।

विज्ञा! निधाय हृदये दृषदं स्वकीये,
धैर्यावलम्बनमहो कुरुत प्रकामम्।
शोकान्विते मनसि दुःखदमत्यसह्यं,
संभावयामि सततं दुरुदन्तमेतम्॥ १॥

दीना विलीनमतयो विलपन्ति सर्वे,
अन्ते वसन्त इह सन्त उदारचित्ताः।
"हा हा गतः क्व" शिशुकानिह नः प्रतार्य्य,
ज्योतिर्विदामहरहर्हितचिन्तकोऽसौ ॥ २॥

कोऽस्मान् फलव्रतमुहूर्तशुभोपदेशात्,
पुण्ये नियोदयति सदेति बहुप्रलापम्।

कुर्वन्ति दीनमनसाऽत्र समेऽपि लोका,
मर्म्मस्पृशं तृणविलापकरं विलापम् ॥ ३ ॥

दीना धरित्री वररत्नहीना,
दुःखेन भारं बहते कथञ्चित् ।
आक्रदते साश्रुविलोचनेन,
क्वागाद्धृषीकेशमहानुभावः ॥ ४ ॥

ज्योतिर्विद्धृत् कमलदिनपश्छात्रवृन्दोपकर्त्ता,
भर्ता ज्योतिःश्रिय उदयकृद् भारतीयाङ्गणस्य ।
काशीकाशी विशदयशसाकाशकाशी प्रवासी,
हित्वा नो द्राक् क स समगद्धा ! हृषीकेशविद्वान् ॥ ५ ॥

पञ्चाङ्गप्रथितस्वबुद्धिविभवैराश्चर्य्यितैः सद्ग्रहै
राहूतः किमहो ! अगाद्दिवि सुधीमान्यः स विद्यानिधिः ।
दृष्ट्वा भारतदैन्यमाजिगमिषुः श्रीशः किमाहूतवान्,
यात्रां शोचितुमित्यगाद्बुधवरो हित्वा हहा !! भारतम् ॥६॥

शान्तिं समेतु सततं स महानुभावो
विन्तां सुखञ्च परिवारजनस्तदीयः ।
दैवज्ञदैन्यदलनाय नवावतारं,
कुर्य्यात्स्वकं स जगतामधिभूर्महेशः ॥ ७ ॥

—लोकोत्तरकीर्त्तिभाजां म० म० पं० श्री अयोध्यानाथशर्म्मणां तनूजन्मनो रघुनाथशर्मणः ( प्रमोदपाठशाला नईबस्ती, काशी । )

---

## तंजापुर श्रीरामानुजसभा ।

[ १९३९ जूलै मासस्य २ ] प्रमाथि संवत्सर मिथुनमास १८ तारिकायां सूर्यवासरे तंजापुरी Tanjore श्रीभगवद्रामानुज दर्शन महासभायाः शतोपन्यास संपूर्त्योत्सवः, नाच्चियार्कोयिल् लक्ष्मीमन्दिरे श्रीउभयवेदान्ताचार्य सिंहासनाधिपतिः विद्वान् अभिनव सरस्वती, वाङ्मुखरत्नकोशः विद्वच्छिरोमणिः, पण्डितराजः, गुरुवर्यः नडादूर् स्वामीकृष्णमहाचार्य महोदयो विद्यते तस्याध्यक्षतायामभूत् ।

---

पञ्चदशे वर्षे १५ ]    मार्गशीर्ष-पूर्णिमायाः १९९६ दिसम्बर १९३९    [ ६ संख्या




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—
त्यक्त-महामहोपाध्यायपदवीको
महामहाध्यापकः श्रीपञ्चानन-तर्करत्न-भट्टाचार्यः।

सहकारि-सम्पादकः—
अवधेशप्रसादशर्मा द्विवेदः

उद्गम—स्थानम्—
श्रीभारतधर्ममहामण्डलम्, जगत्गंज, काशी।

——:०:——

वार्षिकं मूल्यं मुद्रात्रयम्।
छात्रेभ्यः पुस्तकालयेभ्यश्च १)
संरक्षकेभ्यः ५)    वहिर्भारतम् ६)

# विषयसूची ।

# सूर्योदयः ।

पञ्चदशवर्षे १५ } मार्गशीर्ष-पूर्णिमायाः १९९६, दिसम्बर १९३९ । { ६ संख्या

## शिक्षाया आदर्शः ।

प्रतिव्यक्ति या हि मौलिकी शक्तिर्विद्यते, सैव येन विधिना पूर्णतो विकशिता भवेत् स हि विधिः शिक्षादर्शो भवितुमर्हति । एवं समाजे जातावपि सङ्गमनीयम् । यस्य समाजस्य यस्या वा जाते र्यद्धि लक्ष्यं विद्यते, तदधिगम एव शिक्षादर्शो ज्ञेयः । यथा हि कस्यचन अश्वस्य सैव शिक्षा समुपयोगिनी भविष्यति यया तस्मिन्नश्वे निहितं अश्वत्वं पूर्णं विकशितं स्यात् । हस्तिनः शिक्षा सैव हस्तिवंशोपयोगिनी या हस्तिवंशेषु स्वभावतो निहिताया हस्तित्वबीजशक्तेः पूर्णतया विकाशं विदध्यात् । तथैव मानवानां पूर्णमानवताप्राप्तिरेव मानवशिक्षादर्शो भवितुमर्हति । मनुष्येषु प्रतिमनुष्यं पूर्णमनुष्यत्वबीजं निहितं विद्यते, तस्य पूर्णतया परिस्फुटतैव तु मनुष्य-शिक्षादर्शो भवितुमर्हति । जीवो हि ब्रह्मैवेति "तत्त्वमसि श्वेतकेतो" इति नवधा समुदीरितवत्या छान्दोग्योपनिषदा समर्थितं विद्यते । तस्य ब्रह्मत्वप्राप्तिर्यया शिक्षया स्यात् सैव शिक्षा जीवशिक्षाशब्दवाच्या, इत्यत्र न केषामपि मतभेदो भवितुमर्हति । ब्रह्मत्वप्राप्तावपि यद्धि सोपानं विद्यते तेन सोपानेन गमने जीवस्य न कापि बाधा स्यात्तदपि शिक्षान्तर्निहितमिति न विस्मरणीयम् । वटबीजे निहिताया विशाल-वटवृक्षपरिबृंहणशक्तेर्विकाशो येन विधिना भवेत् स सम्पादनीय एव वटबीज-रोपकेण पुंसा । येन वटबीजमङ्कुरितं सत् निर्बाधं महान् वटवृक्षः परिमण्डला-कारो विस्तृतचतुर्दिक्छाखः स्यादिति हि वटबीजसमुन्नतिः समुचिता स्यादिति आबालवृद्धं प्रतिभाति । तथैव ब्राह्मणो यदि शिक्षाप्रभावेण पूर्णब्राह्मणत्वमधि-गच्छेत् क्षत्रियवैश्यशूद्रा अपि याभिः शिक्षाभिः स्वभावतः स्वेषु स्वेषु निहितानां क्षत्रियत्व-वैश्यत्व-शूद्रत्व-शक्तीनां पूर्णतया विकाशमासाद्य पूर्णक्षत्रियाः पूर्णवैश्याः पूर्णशूद्रा यदि जातास्तर्हि तेषां शिक्षा पूर्णाऽभूदिति कथनीयं स्यात् । एवमेवार्य्य-जातिर्यदि शिक्षाद्वारा स्वीयमादर्शं नाधिगच्छति तर्हि कथं सा शिक्षा शिक्षा स्याद् ।

आर्य्यजातेरादर्शो हि ऐहलौकिक-पारलौकिकाभ्युदयासादनेनापवर्गप्राप्तिरेव विद्यते। स हि आदर्शो यया शिक्षया समासादितः स्यात्सैव शिक्षा आर्य्यजातिशिक्षा कथयितुं पार्य्यते। इत्थं हि आर्य्यनार्य्यो यदि शिक्षया स्वीयं सतीत्वं संरक्षन्त्यो भारतीयार्यमर्यादासंरक्षणेन साकम् आर्य्यमातृत्वमासाद्य जगन्मातुः स्वरूपमधिगच्छेयुश्चेत्तदैवार्य्यनारीणां शिक्षा शिक्षाशब्दवाच्या स्यात्। मातॄणां शिक्षा मातृत्वपूर्णतायामेव सम्पन्ना स्यात्। यतो हि तासु मातृत्वबीजमेव विनिहतं विद्यते, नान्यत् किञ्चित्। नारीणां शिक्षया नारीसमुचिताचारस्यैव वृद्धिरपेक्षिता नहि नारीषु पुरुषभावानां वृद्धौ नारीजातेः समुन्नतिः कथयितुं पार्य्यते। फलतः सिध्यतीदं यद् व्यक्तिसमष्टिगतबीजानां समुद्रेककरणमेव शिक्षालक्ष्यमन्तिममिति।

तत्र भारतीयेयमार्य्यजातिर्बहुकालादारभ्य स्वीय-शिक्षाविषये बहुविलवाघातप्रत्याघातान् सहमाना समायाति, इति ऐतिहासिकानां सर्वेषामेव विदितं विद्यते। पूर्वं हि भारतीयार्य्यमर्य्यादायां मनुष्याणाम् "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति काठकश्रुत्यनुरूपं कर्मफलभोक्तृस्वरूपभाजां सर्वेषामप्यङ्गानाम् आत्मनामिन्द्रियाणां मनसाम् स्थूल-सूक्ष्मकारणशरीराश्रितानाञ्च शक्तीनां सर्वथा विकाशो यथा भवति स्म, तथैव शिक्षापद्धतिर्निर्धारिता समजायत। तयैव शिक्षया जीवः स्वक्रमोन्नतिं विदधद् अन्तिमं लक्ष्यं जीवब्रह्मणोरैक्यमप्यासादयति स्म। फलतोऽध्यात्मज्ञानमूलिकैव शिक्षा अत्र भारते प्रशस्ता गण्यते स्म। यतो हि 'जानाति, इच्छति यतते' इति नैयायिक-सिद्धान्तानुरूपम् आध्यात्मिकज्ञानेन परिष्कृतेन इच्छापि परिष्कृता भविष्यति, परिष्कृतया चेच्छया क्रियापि साध्वी भविष्यति। तथा च ज्ञानेच्छाकर्मणां परिष्कारिकां शिक्षां समासाद्य भारतीया उभयलोकाभ्युदयमासाद्यावसानेऽपवर्गसुखं निःश्रेयसपदमासाद्य नन्दन्ति स्म। उक्तञ्च मनुना—

'सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च
सर्वलोकाधिपत्यञ्च वेद-शास्त्रविदर्हति'

'नह्यनध्यात्मवित् कश्चित् क्रियाफलमुपाश्नुते' इत्यध्यात्मज्ञानपरिष्कारिकैव शिक्षा भारतीयार्य्यमर्य्यादायां दीयते स्म। यतो हि आर्य्यजातिरेव मानवजीवनस्य चरमं लक्ष्यं परिचिनोति स्म। अन्या जातयस्तु पूर्वमधुनापि आधिभौतिकं सुखमेव मानवजीवनफलं मन्यन्ते। तदनुसारतश्च स्वीयशिक्षादर्शं प्रतिष्ठापयन्ति। स हि सिद्धान्त इह आर्य्यजाति-सिद्धान्तेषु बृहस्पतेराचार्य्यस्य सिद्धान्तश्चार्वाक-लोकायत-सिद्धान्तादिनाम्ना प्रसिद्धो नगण्यो गीयते। तमेव सिद्धान्तं स्वीयादर्शं मन्यमाना पाश्चात्यजातिषु वृटिशजातिरधुना भारतीयानां शिक्षां स्वहस्ते कृत्वा स्वसिद्धान्तानुरूप-

मेव तदीयामपि शिक्षां विस्तारयति। यतश्च शतेषु नवनवतितमाः साम्प्रतिकाः शिक्षिताः पुरुषाः स्वीयप्राचीनशिक्षादर्शं विस्मृत्यैतस्या आधिभौतिक्या एव शिक्षायाः प्रसारे दत्तावधाना इमामेव शिक्षां चरमकोटिगतां मन्यन्ते। किं बहुना एतदुपासकास्ते स्वीयप्राचीनेतिहासविषयेऽपि सन्दिहाना दृश्यन्ते, एतादृश एव शिक्षापरिणामः सम्प्रति सर्वतोऽवलोक्यते। तथाहि—आधुनिकाः पाश्चात्य-शिक्षा-दीक्षिता बालाः 'श्रीकृष्णं परस्त्रीभिः सह नृत्यकर्तारं', 'श्रीरामं बुद्धिविहीनं पितृनिदेशपरवशं कोल-भिल्लैः सहारण्ये पर्य्यटकं', 'भारतीयांश्च प्राचीनानन्यान् प्रस्तरपूजकान् असभ्यान्', 'वर्णाश्रमाचारादिव्यवस्थाञ्च स्वार्थपरायणै र्ब्राह्मणै र्व्यवस्थापितां देशविध्वंसकरी-म्मन्यन्ते'। किं बहुना स्वदेशाभिमानं मातृभूमिभक्तिं विलोपयितुञ्च शिक्षेयं सर्वानेव भारतीयान् बाल्यादेवेदं शिक्षयति यद् "यूयं एशियामध्यतः ( एसियामाइनर ) इह समागता नायं देशो भवताम्। देशोऽयमिहत्यानामनार्य्याणाम् ये सम्प्रति भवतां दासा अस्पृश्या विद्यन्ते, त एवास्य देशस्य मूलनिवासिनः" इति। इत्येवं विदेशीय-सिद्धान्तानुरूपस्य शिक्षादर्शस्य प्रचारेण तदनुरूपाया एव शिक्षाया ग्रहणे भारतीयाः सर्वेऽपि जनाः समुत्सुकाः सञ्जाताः। तदनुरूपमेवान्तःकरणं सर्वेषामेव जातम्, न कश्चिच्छ्रोतुमपि किञ्चिदभिलषति। प्रत्युत संस्कृतभाषा 'मृतभाषे'ति जोघु-ष्यमाणा सर्वथा कार्य्यक्षेत्रत एव बहिष्कृता जाता तदीयकथनश्रवणस्य तु दूरे कथा।

एतादृशमेव परिणामं परिजिघृक्षन् मैकालेमहाशय इह भारते पाश्चात्यशिक्षां परिचालितवान्। तथाहि—तदीयं वाक्यम्—( वृटिशपर्लियामेण्टपुरतः )।

"अंग्रेजीभाषाशिक्षया एतादृशो मानवसमुदायो निःसरिष्यति यश्च रक्ते रागे च भारतीयो भविष्यति, परन्तु आचारे, व्यवहारे, चरित्रे, चिन्तायां, विचारे चाभार-तीयं एव भविष्यतीति"। अतश्च तस्यैव विचारविषवृक्षस्येदं फलं फलितं सर्वेषामेव भारतीयानां पुरतो विद्यते। सम्प्रति वैदेशिक्यां शिक्षायां धर्मभावशून्यायां केवलमर्थ-परायणायाम् अर्थेनैव शिक्षाविनिमयो भवति। छात्राश्चार्थं दत्त्वा अध्यापकेभ्यः शिक्षां क्रीणन्ति। अध्यापका अपि प्रतिगृहं गत्वा स्वज्ञानविक्रयं कुर्वन्ति। यथोक्तं केनचित्

"अट्टशूला जनपदा शिवशूला द्विजातयः
कामिन्यः केशशूलिन्यो भविष्यन्ति कलौयुगे॥"

इति सर्वोऽपि भारतीयशिक्षादर्शः सर्वथा विगुणितो जात इति ईश्वर एव गोपा-यतु देशमिममस्मान्महापङ्कपातादिति विरमामो विस्तरात् पुनः कदाचिदवशिष्टा-भिधानेहया।

## श्रीगान्धिमहोदयः सनातनधर्माणश्च ।

माननीयानां भारतप्रतिनिधिमहोदयानां ( वायसराय ) गान्धिमहात्मना सह वार्तालापादिव्यवहारतो ज्ञायते । यद् भारतप्रतिनिधिमहोदयानामेवमभिप्रायो दृश्यते यद् अल्पसंख्यकानां राष्ट्रियमहासभासन्तव्येन सह विरोधो विद्यतेऽतश्च सम्प्रति भारते आंशिकस्वतन्त्रता (डोमिनियन् स्टेटस् ) सम्बन्धी अधिकारो न समर्पणीय इति। अत्रैव महात्मनो गान्धिमहोदयस्यैवं दृश्यते विश्वासो यद् भारते इस्लामधर्माणो हि नाल्पीयस्यां संख्यायां सन्ति । राष्ट्रियसभासम्बन्धिनश्च हिन्दवः सनातनधर्मव्यतिरिक्ता एव हिन्दवो ज्ञेयाः । महात्मनोऽभिप्रायो व्यज्यते यत् सनातनधर्माणोऽल्पसंख्यका एव सन्तीति ।

सनातनधर्माणो हिन्दवो हि महान्त उदारा भवन्ति। तेषामयमेव सिद्धान्तो विद्यते यत्—

'यं पृथग् धर्मचरणाः पृथग्धर्मफलैषिणः
पृथग्धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः ।

इति नियमानुसारं तेषां केनापि धर्मेण सह विरोधो नास्ति; प्रत्युत तेषां सिद्धान्ते तु—

"धर्म्मं यो बाधते धर्मो न सधर्मः कुधर्मतत्
अविरोधी तु यो धर्मः सधर्मो मुनिपुङ्गवाः !"

इति नियमतो धर्म्मस्य विरोधको धर्म एव न भवति। स हि सनातनहिन्दूनां दृष्टिपथेऽधर्म्म एव गण्यते। एवं सति सनातनधर्मणां धर्मान्तरविरोधस्य कथैव का ? तेहि

"अयं निजः परो वेति गणना लघुचेतसाम्
उदारचरितानान्तु वसुधैव कुटुम्बकम्"

इति वसुधामात्रस्य स्वकुटुम्बत्वं स्वीकुर्वन्तः शान्तिप्रिया एव भवन्ति। तेषां विशेषधर्मस्यैकादशभेदा प्रायो भवन्ति। तथाहि—

१—वेद-स्मृति-पुराणानां धर्मे प्रामाण्यम् ।
२—दैवे जगति देवपदाधिकारिषु च विश्वासः ।
३—कर्मणां तत्संस्काराणाञ्च स्वीकृतिः ।
४—जन्मान्तरवादे श्राद्धतत्त्वे दृढो विश्वासः ।
५—अवतारतत्त्वे विभूतिवादे चाचला श्रद्धा ।
६—उपासनापद्धतियोगपद्धत्योः स्वीकारः ।
७—मूर्त्तिपूजाविज्ञानस्य पीठरहस्यस्य चाङ्गीकृतिः ।

८—शुद्धाशुद्धविज्ञानस्य स्पर्शास्पर्शविज्ञानस्य च विवेकः।

९—यज्ञमहायज्ञयोः पृथक् सत्तास्वीकारः।

१०-वर्णाश्रमव्यवस्थायाः समाजविज्ञानस्य च स्वीकारः।

११-सगुणनिर्गुणेश्वरतत्त्वस्य मुक्तितत्त्वस्य चाङ्गीकृतिः।

इत्येवं वेदशास्त्रप्रमाणतः सनातनधर्मसिद्धान्तानुसारं साम्प्रतम् सनातनधर्मणां हिन्दूनां संख्या यदि अल्पीयसी विद्यते, तर्हि वर्तमानशासकानामिदं परमं कर्तव्यमस्ति यत् तेषां धार्मिकसिद्धान्तानां संरक्षणं स्यात्। एवं राष्ट्रियमहासभा ( कांग्रेस ) सदस्यानामपि परमं कर्तव्यं विद्यते यद् अल्पीयसां सत्यसनातनसिद्धान्तं स्वीकुर्वतां सनातनधर्मणां वर्णाश्रमवतां हिन्दूनां संरक्षणं स्यादिति सर्वैरपि स्वीकरणीयम्।

अद्यावधि राष्ट्रियमहासभाप्रधानाधिकारिणः सनातनधर्मणां हिन्दूनां धार्मिकसिद्धान्तरक्षायां तथा तेषामाचारविचारयोः संरक्षणे औदार्य्यस्य न्यायस्य वा परिचयं नैव दत्तवन्तः। उदाहरणतो यथा—मन्दिरप्रवेशनियमस्य हठात् निर्माणम्, एतेन सनातनधर्मणां सिद्धान्ते प्रहारस्तु जात एव, तदुपरि तेषां परममान्यानां प्रथम-द्वितीय-तृतीय-षष्ठ-सप्तमाष्टमसिद्धान्तानामनुपयुक्ताऽवहेलना भवति। तथाहि—

सनातनधर्मणामुपासनाप्रणाली वेदस्मृतितन्त्रपुराणशास्त्रानुसारं बहुकालात् यां पद्धतिमाश्रित्य प्रचलति तस्या उपरि महान् प्रहारोऽजनि। निरङ्कुशं सर्वेषामन्त्यजावधि हिन्दूनां मन्दिरादिषु अविहतप्रचारविधानेनानेन सनातनधर्म्मणां प्रथमसिद्धान्तविरोधो भवति।

सनातनधर्मे चतुर्दशभुवनेषु दैवलोकानां तेषु नानाविधानां देवपदाधिकारिणां स्थितिरित्यस्य द्वितीयसिद्धान्तस्य व्याघातो मन्दिरेषु सर्वेषां तेषां निरङ्कुशप्रवेशप्रदानेन भवतीति विभावनीयम्।

सनातनधर्मे शारीरिक-मानसिक-वाचनिकबौद्धिकक्रियाप्रतिक्रियाणां सिद्धान्तः स्वीक्रियते। तेनैव सह कर्म्मणां बीजस्वरूपाणां संस्काराणां रहस्यमपि वैज्ञानिकदृष्ट्या सिद्धं तैरङ्गीक्रियते, इत्येवं मन्दिरेषु निरर्गलं सर्वेषां मानवानां प्रवेशप्रदानतो देवमूर्तिप्रतिष्ठापकानां संस्कारव्याघातो भवतीति तेषां तृतीयसिद्धान्तोपमर्दनं जायते। सनातन-धर्मणामुपासनाक्रिया योगशास्त्राश्रिता विद्यते, तस्या भक्तिः प्राणस्थानीया योगः शरीरस्थानीयस्तत्र भावशुद्धेः प्राबल्यं तैरङ्गीक्रियते। तत्रापि व्याघातात् तेषां षष्ठस्य सिद्धान्तस्य तिरस्कारो जायते।

सनातनधर्मणां मूर्तिपूजया सह पीठस्य स्थायी सम्बन्धो विद्यते। ते हि मूर्तौ प्रस्तरादीनां पूजनम् न कुर्वन्ति, किन्तु मन्त्रादिभिः षोडशभिः प्रकारैः षोडशस्वेव

दिव्यदेशेषु स्वीयमन्त्रमनःप्राणशक्तिभिः पीठस्थापनां कृत्वा तत्र व्यापिकाया आधिदैवसत्तायाः पूजनं कुर्वन्ति । तथा च यस्मिन् पीठे यादृश्याः पीठशक्तेः प्रतिष्ठा विद्यते तद्विरुद्धाचरणेन पीठशक्तिर्दुर्बला भूत्वा ततोऽपसरतीति मन्दिरप्रवेशनियमविधानेन तेषां सप्तमसिद्धावहेलनं भवतीति ते मन्यन्ते ।

सनातनधर्मणामष्टमः सिद्धान्तस्तु साम्प्रतमायुर्वेदविज्ञानेन ( मेडिकलसायन्स ) आणवविज्ञानेनापि च ( जर्मथ्योरी ) साधु प्रमाणितो विद्यते । अन्यच्च—सनातनधर्मे शुद्धाशुद्धविवेकः स्पर्शास्पर्शविचारो वा आचारविचाराभ्यां कर्मोपासनाप्रभृतिभिः सर्वैः सहैव दृढं सम्बध्नाति । इत्येवं पात्रापात्रविचारं विनैव सर्वेषामेव मन्दिरेषु निरर्गलप्रवेशप्रदानेनास्याष्टमस्य सिद्धान्तस्य मूलोच्छेदो भवतीति सर्वेऽपि बुद्धिजीविनः स्वीकुर्वन्ति ।

इत्येवं कस्यचन धर्मस्य सर्वथा विरुद्धं नियमं निर्मापयतां स्वाहङ्कारप्रयोगेणैव सर्वं साधयितुमुद्यतानां राष्ट्रियमहासभासदस्यानां विचारणीयोऽयं विषयो विद्यते—यद् वयं यद् यत् सम्प्रति कुर्मस्तत् सर्वं न्यायदृष्ट्या सत्य-दृष्ट्या वा समुचितं विद्यते न वा ? सर्वमिदं कृत्यं यदि सनातनधर्मणां प्रधानप्रतिनिधिना परामर्शं कृत्वा विहितं स्यात्तर्हि एवमनर्थं न स्यात् ।

सनातनधर्मशास्त्रे पञ्चमवर्णानां सम्प्रति 'हरिजन' शब्दवाच्यानामन्त्यजानां कल्याणार्थं बहवः समुचिता उपाया विहिताः सन्ति । तत्सिद्धान्तानुसारं जगत्यां कोऽपि प्राणी जुगुप्साहों नास्ति। सर्वेऽपि स्व-स्वाधिकारानुसारमभ्युदयं प्राप्तुमर्हन्ति। स्पष्टत एवेदं ज्ञातुं शक्यते यत् यस्मिन् सनातनधर्मे 'वसुधैव कुटुम्बकम्' इति नीतिः प्रचलति, यत्र च नित्यमेव पञ्चमहायज्ञानां—

'स्वाध्यायो ब्रह्मयज्ञः स्यात् पितृयज्ञस्तु तर्पणं ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्' ॥

इति ब्राह्म-पैत्र-दैव-भौत-मानवयज्ञानामनुष्ठानं भवति, यत्र सनातनधर्मे 'सर्वस्याभ्यागतो गुरुः' इति सिद्धान्तो विद्यते, यत्र च 'आब्रह्मस्तम्बपर्य्यन्तमिति' प्रतिदिनं स्तम्बावधि सर्वप्राणिनस्तर्पयितुं सनातनधर्माणो मानवाः तर्पणं कुर्वन्ति । तन्मतानुयायिनः कदापि राजनीतिनेतॄणां शुभेच्छाव्याघातं कर्तुं नार्हन्ति । अतश्च यदि साम्प्रतिका नेतारो दम्भाहङ्कारं विहाय न्यायसत्यपक्षपातिनो भूत्वा लोककल्याणबुद्ध्या सनातनधर्मसिद्धान्ताविरुद्धं कार्य्यं करिष्यन्ति चेत् सर्वथा सामञ्जस्यं देशस्य जातेश्च मङ्गलं स्यादिति संक्षेपः ।

# आधुनिकं रणस्थलम्

( ले० पण्डित आद्याप्रसाद चतुर्वेदी, )

( १ )

मूर्त्ता मदान्धतममानवराज्यलिप्सा
क्रव्याद-काण्ड-कलनाकलि-कालकेलिः ।
'सूर्य्योदये'ऽपि पशुता क्षितिपालकानां
युद्धस्थली लसति लोहित-पृष्ठ-भूमिः ॥

( २ )

व्योम्नो विनाशि-'बम'-वर्षकवायुयाना
नाना नवीनतरशस्त्रविराजमाना ॥
ज्वाला-जेवन जन-जीवितमाददाना
युद्धस्थली विजयते हसितश्मशाना ॥

( ३ )

दन्दह्यमाननगराकुलपौर-जाला
कालाऽऽत्तवृद्ध-वनिताऽगणनीयबाला ।
नालावशिष्टतनुशस्यततालबाला
युद्ध-स्थली विजयते करुणा कराला ॥

( ४ )

विद्युद्विषाक्त-कटुधूम-विधूत-वीरा
नृत्यत्पदोरु-भुजदण्ड-शिरः-शरीरा ।
चीत्कार-शब्दबधिरीकृतदिग्विभागा
युद्धस्थली विहितमानव-मेध-यागा ॥

( ५ )

आच्छन्न-सूर-पदवी-प्रसृताऽन्धकारा
सेयं गलोद्गलित-शोणित-शोण-धारा ।
दुर्गन्ध-दुष्ट-पृषदश्वपथप्रसारा
युद्ध-स्थली परिहरन्नरकाधिकारा ॥

( ६ )

शान्ति-प्रियस्य मनुजस्य सुशिक्षितस्य
सीमातिगः प्रकटितः पशुता-प्रकर्षः ।
निरशक्ति-शोषण-विधिः सबल-प्रयुक्तो
युद्धाभिधः सपदि मानवता-कलङ्कः ॥

—०—

## समालोचनम् ।

वेदविज्ञानमीमांसा—काशिक-हिन्दूविश्वविद्यालयीय-धर्मविज्ञान-विभागाध्यक्ष-विश्वविख्यातयाज्ञिक मूर्धन्य पण्डितविद्याधरशास्त्रिपुत्रेण काशीस्थ-श्रीगोयनकासंस्कृतमहाविद्यालयाध्यापकेन वेदाचार्येण श्रीमता पण्डितश्रीवेणीरामशर्म-गौडेन विरचिता । मूल्यं ॥) प्राप्तिस्थानम्—

मैनेजर—भार्गव भूषणप्रेस, गायघाट बनारस।

पुस्तकरचयितुः वंशपरम्परागतं वेदानां वैदिककर्मकाण्डानां पाण्डित्यं परमं प्रसिद्धम्। अत एव वेदविज्ञानमीमांसाप्रशंसन विषये किमपि लेखनं निरर्थकं प्रतिभाति । वंशानुगतवैदिकसाहित्यमर्मज्ञेन विदुषा विरचितं ग्रन्थरत्नं सुमनोहरमेव विद्यते । वैदिकज्ञानाभिलाषिभिः संस्कृतज्ञैर्नूनमवलोकनीयं पुस्तकमिदम् ।

—०—

## श्रीभारतप्रशस्तिः ।

धर्मप्राणोऽखिलगुणगणानां सखा जन्मजातः;
प्रज्ञाकोषः प्रबलविभवे चण्डमार्तण्डबिम्बः ।
विद्याब्धौ विधुमणिरिव ज्ञानताराधिपस्य;
देशः सोऽयं सकलवसुधा-भामिनी-भालबिन्दुः ॥ १ ॥

भारतं प्रत्युक्तयः—

स्वर्गे भुवः सुरपते नैव नन्दनं त्वं
सौभाग्यमेव शुभकीर्त्यमराङ्गनायाः ।
रत्नाकरोऽसि तव रत्नपरम्परा सा
स्रष्टुः प्रगल्भवचसोऽपि दवीयसीव ॥ २ ॥

बुन्देलभूदर्शनम् ( वाष्पयानात् )

अद्यापि किं झणिति शब्दमहो करोति,
बुन्देलवीररमणी-करचन्द्रहास-
श्चञ्चद्द्विजिह्व इव किं परितो लिहन्ती,
धारा करोति रिपुभिर्निजशत्रुनिवृत्तिम् ॥ ३ ॥
सिकतामयदेश ! त्वमद्यापि सिकतामयः ।
रमणी-रक्तसेकेन किन्नूनन्नोर्वरीकृतः ॥ ४ ॥
पृथ्वीराज ! रणे केन कारणेन त्वया जितम् !
म्लेच्छं किन्त्याजितं हं हो भारतीया दयार्द्रता ॥ ५ ॥

( अवबोधनम् )

भो ! भो !! भारतवर्ष कुत्र गरिमा बुद्धिः प्रचण्डा च ते,
किं सा सौख्यसमृद्धिरद्य कुरुते क्रीडां वने नन्दने ।
उत्सर्गश्च रणाङ्गणे क्व नु तव स्वातन्त्र्यरक्षाकृते;
हा ! हा !! कुत्र सतीत्वरक्षणविधौ स्त्रीरक्तसन्तर्पणम् ॥ ६ ॥

सहस्रौदीच्यवंशोद्भवो विद्यार्थी शैलेन्द्रसिद्धनाथपाठकः तराणा-( इन्दौर ) स्थः ।

---

## दशविधब्राह्मणानां परस्परं भोजनादिव्यवहारः संमतो न वा स्वधर्मश्च कथं रक्ष्यः ।

लेखकः—विद्वद्वर गणेशशास्त्रितनूजः हलव इत्युपाह्वः ब्रह्माघाट, काशी ।

इह खलु निखिलदुःखनिवृत्तिपूर्वकसर्वकल्याणेच्छुभिर्नरैः स्वधर्मोऽनुष्ठेयः । मनुः—

वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः ।
परधर्मेण जीवन् हि सद्यः पतति जातितः ॥ १ ॥

कः स्वधर्म इति चेद् मनुः—

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥ १ ॥

भिन्नभिन्नधर्माचरणमपि न दोषाय । मनुः—

विद्वेषरागरहिता अनुतिष्ठन्ति यं द्विजाः ।
विद्वांसस्तं सदाचारं धर्ममूलं विदुर्बुधाः ॥ १ ॥

देवलो मरीचिश्च—येषु देशेषु यच्छौचं धर्माचारश्च यादृशः ।
तत्र तं नावमन्येत धर्मस्तत्रैव तादृशः ॥ १ ॥

यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः ।
वर्णानां चैव सर्वेषां स सदाचार उच्यते ॥ २ ॥

यस्मिन्देशे पुरे ग्रामे त्रैविद्ये नगरेऽपि वा ।
यो यत्र विहितो धर्मस्तं धर्मं न विचालयेत् ॥ ३ ॥

अन्यद्विजानुष्ठितपरंपराप्राप्तं धर्मं न निन्देत् । पराशरः-

युगे युगे च ये धर्मास्तत्र तत्र च ये द्विजाः ।
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः ॥ १ ॥

कालदेशानुसारतो धर्मा अपि विभिन्ना भवन्ति । मनुः—

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ।
अन्ये कलियुगे नृणां युगह्रासानुसारतः ॥ १ ॥

पराशरे तु-युगरूपानुसारत इति पाठः । पराशरः=

देशभेदात्कालभेदात्पुंभेदादन्यथाऽन्यथा ।
विपर्यस्यति शास्त्रार्थो धर्मभेदास्ततोऽभवन् ॥ १ ॥

स्वधर्मरक्षकैः सुविचार्य देशकालानुसारेणैव धर्मो विधातव्योऽनुष्ठेयश्च, अन्यथा धर्महानिःस्यात् । मनुः—

केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः।
युक्तिहीनविचारे तु धर्महानिः प्रजायते ॥ १ ॥
बौधायनः—देशं कालं तथा मानं द्रव्यं द्रव्यप्रयोजनम्।
उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत् ॥ १ ॥

इत्यादिप्रमाणैर्देशकालानुसारेणैव धर्मो अनुष्ठेया द्विजैः। मनुजैः सर्वथा धर्मार्थकाममोक्षाः साधनीयाः। तत्राद्यत्रयाणां विशेषतो गार्हस्थ्यमेवानुष्ठानं, गार्हस्थ्येऽपि स्वस्वजातीया शुद्धा कन्या विवाह्या, अन्यथा धर्महानिः स्याद्दोषावाप्तिश्च। मनुः—

सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः ॥ १ ॥
अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा ॥
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत् ॥ २ ॥

आदौ सवर्णां कन्यामुद्वाह्य पश्चादन्यजातीया इष्टा चेदुद्वाह्या, शूद्रा शूद्रेणैवोद्वाह्या नान्यैः। मनुः—

शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते।
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः ॥ १ ॥
न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते ॥ २ ॥
हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्।

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधो गतिम् ॥ शूद्राजन्यसन्तानेन न पित्रुद्धारः स्वजातिवैगुण्यं स्वर्गालाभश्च भवति।

जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते।
नाश्नन्ति पितृदेवास्तत्र स्वर्गं च स गच्छति ॥ १ ॥

तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥ याज्ञवल्क्यः—

यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः।
नैतन्मम मतं यस्मात्तत्रायं जायते स्वयम् ॥
तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम्।
ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः ॥ २ ॥

(अग्नि-पुराण अध्याय १५४)—धर्मकार्याणि सर्वाणि न कार्याण्यसवर्णया ॥ इत्यादि

प्रमाणैरसवर्णाविवाह-निषेधात्सवर्णाविवाह एव कर्तव्य इति सिद्ध्यति। अथापि शूद्रैव समिष्टा चेन्मन्त्रहीनविधिना संग्राह्या । तथा च वसिष्ठः—शूद्रामप्येके मन्त्रवर्जम् । एक इत्युक्त्या शूद्राविवाहो वसिष्ठमतेऽपि नेष्ट इति भाति । सवर्णेभ्यः सवर्णासु जायन्ते हि द्विजातयः ॥ इत्यादिवचनेभ्यश्च सवर्णाविवाह एव शास्त्रीयो नत्वसवर्णाविवाहः । तेनासवर्णाविवाहमिच्छतां मतमशास्त्रीयत्वादुपेक्ष्यम् । द्विजानां भिन्नधर्मत्वं त्वनादिकालादुपरिनिर्दिष्टप्रमाणैर्भिन्नदेशकालत्वादुपपन्नं पुनश्च बौद्धयवनाद्युपद्रवपीडितैर्द्विजैर्यत्र तत्र स्वधर्मरक्षणाय स्थितं स्वधर्मं च तदा प्राकट्येनानुष्ठातुं न ते समर्था बभूवुः, अतो भिन्नदेशीयानां द्विजानामत्यन्तं विभिन्ना धर्मा जाताः, ते तथा नाकरिष्यंस्तर्हि समूल एव सर्वो धर्मो न शिष्येत् । तदा तेषां केचन धर्माश्च्युताः केचन विपरीता यवनभयात् । भिन्नधर्माणोऽपि द्विजातयो नासवर्णा भवन्ति भिन्नधर्मत्वस्य सावर्ण्याविघातकत्वात् । अतो भिन्नधर्माणोऽपि ते स्वस्वजातिषु सवर्णा एवेति तेषां सर्वेषां स्वस्वज्ञातिषु भोजनं विवाहश्च पूर्ववत्कार्यः । केचिन्मुधा दुराग्रहवशान्नोभयं कर्तव्यमिति जल्पन्ति, परंतु ते देशकालशास्त्रतात्पर्यानभिज्ञा विचारशून्याश्चेति ज्ञायन्ते । देशकाल-वस्तुभेदादृषयो भिन्नधर्मान्न प्रतिपादयेयुश्चेत्तर्हि हिन्दुधर्म एवाद्यावधि नावतिष्ठेत । अत इतः परमपि पूर्ववद्देशकालानुरूपेण यथा हिन्दुधर्मः सुरक्षितो भवेत्तथा धर्मपरिवर्तनं (?) कर्तव्यमन्यथा हिन्दुधर्म एव समूलमुच्छिद्येत । पूर्वं दशविधब्राह्मणानां समेषां क्षत्रियाणां विशां च स्वस्वजातिषु भोजनविवाहौ प्रचलितावास्तामिदानीं वृथाऽभिनिवेशान्न तौ तैः क्रियेते। वृथाऽऽग्रहेण समूलधर्मनाशकरणं किं पाण्डित्यमुतान्यदिति त एव निपुणं विचारयन्तु । मम वत्सतरस्य रूप्यकाणां द्वादशैव मूल्यमित्युक्तिरिव तेषामपि तदुक्तिः । अन्यच्च—ये केचिच्चित्तपावनद्विजैः सह न विवाहः कार्यस्तेषामपांक्तेयत्वादिहेतुभिः । तथा च निर्णयसिन्धौ—

त्रिशंकून्बर्बरानान्ध्रांश्चीनद्रविडकौंकणान् ।
कर्णाटकांस्तथाऽभीरान्कालिङ्गांश्च विवर्जयेत् ॥ १ ॥
अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रान्गुर्जरांस्तथा ।
आभीरान्कौङ्कणांश्चैव द्राविडान्दाक्षिणायनान् ॥ २ ॥
आवन्त्यान्मागधांश्चैव ब्राह्मणांस्तु विवर्जयेत् ।
अपत्नीकश्च वर्ज्यः स्यात्सपत्नीकोप्यनग्निकः ॥ ३ ॥

द्विर्नग्नः—इत्यादिवचनादिति वदन्ति तैरिदमवधेयम्—उपरिनिर्दिष्ट प्रमाणैर्यदि चित्तपावनाः श्राद्धेऽपाङ्क्तेयास्तदान्ध्रद्रविडकर्णाटकादयोऽपि स्वस्वजातीया अपत्नीका

अनग्निहोत्राश्चाप्यपाङ्क्तेयाः स्युः, तैश्चापि साकं न विवाहः कर्तव्यः स्यात्, 'तथा कन्या यथा हवि'रिति वचनात्। श्राद्धेऽपि कर्णाटकान्ध्रद्रविडकोङ्कणैः स्वस्वजातीया अपि विप्रा न निमन्त्रणीयाः, परिशेषात्कान्यकुब्जादय एव तत्र भोजनीया इत्यापतेत्, अतः शुद्धब्राह्मणा एव श्राद्धेऽन्वेष्टव्या' इत्यत्रैव तात्पर्यं तद्वचनानाम्। तथा च मनुः—

न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित्।
पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नतः॥ १॥
गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी॥ २॥

इत्यादि, यथा श्राद्धे शुद्धताऽपेक्ष्यते तथा विवाहेप्युभयोर्वंशयोः शुद्धताऽपेक्ष्यते वर्णसंकरदोषश्रवणात्। तथा च शुद्धैर्दशविधैरन्यैर्वर्णैरपि स्वस्वजातीयैः शुद्धैः सह विवाहादि कर्तव्यमेव', केचन दीर्घतमादिमुनिभ्यः प्राग्यथा व्यवहृतिरासीत्तथेदानीमपि कर्तव्येत्याहुस्तत्रेदं सुविचार्यम्। तदानीं प्रायः समेषामिन्द्रियनिग्रह आसीत्तथेदानीं न, अतः सम्प्रति तदङ्गीकारे बाहुलमासिकशुनकानामिव प्रायः समेषां व्यवहारः स्यात्तेन सर्वोऽपि भारतभूः प्रणश्येत्। सुधीभिरीदानीं यथा स्वजाति-स्वधर्मस्वदेशसुरक्षणं भवेत्तथा विधेयं कर्म न विपरीतम्। विशेषतो ब्राह्मणैरेव स्वधर्मरक्षा कर्तव्या, ब्राह्मण्यरक्षणं च ब्राह्मणैस्तदन्यैश्च कर्तव्यम्। तथा च गीताभाष्ये शंकरवाक्यं 'ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मस्तदधीनत्वाद्वर्णाश्रमभेदानामिति विदाङ्कुर्वन्त्वलमतिविस्तृतलेखेन विज्ञेष्विति शम्॥

[ १ श्रूयते च पेशवाराज्यसमये कोंकणस्थादिभिः सह करहाटका-( कऱ्हाडे ) दिब्राह्मणानां परस्परं विवाहादयः प्रचलिता आसन्। ]

[ अत्र विषये विद्वद्भिः शास्त्रप्रमाणपुरस्सरं स्वमतं प्रकाशनीयम्। येन सिद्धान्तनिर्णयो भवेत्। अयं लेखो विचारार्थमेव प्रकाशितः—स० सम्पादकः ]

---

## ❀ हरिहरक्षेत्र-माहात्म्यम्।

सर्वतीर्थस्वरूपं तत् क्षेत्रं हरिहरात्मकम्।
प्रणम्य लिख्यते दिव्यं माहात्म्यं तस्य चाद्भुतम्॥ १॥
समालोच्य पुराणानि श्रुत्वा जनश्रुतीस्तथा।
प्रामाणिकं च प्रत्यक्षं यत्तदेव ब्रवीम्यहम्॥ २॥

कलौ हरिहरक्षेत्रं मुनिभिः परिकीर्त्तितम् ।
लभ्यन्ते यत्र वस्तूनि चेप्सितानि तु कार्तिके ॥ ३ ॥
काशीतः प्राग्भृगुक्षेत्रं ततः पूर्वोत्तरे स्थितम् ।
विहारे शोभते तद्वै क्षेत्रं भुवि सुदुर्लभम् ॥ ४ ॥
गङ्गानारायणीनद्योः सङ्गमो यत्र विद्यते ।
तस्मात्क्रोशयुगेऽदूरे क्षितौ क्षेत्रं प्रतिष्ठितम् ॥ ५ ॥
पाटलीपुत्रपार्श्वे यत् पुरं स्वर्णपुराभिधम् ।
तत्रैतन्मेलकं दिव्यं प्रतिवर्षं भवत्युत ॥ ६ ॥
देवोत्थानात्समारभ्य कार्तिक्यां तु विशेषतः ।
गीताजयन्तिकं यावन्मासैकं 'मेलनं' महत् ॥ ७ ॥
पुण्ये हरिहरक्षेत्रे विशाले शिवमन्दिरे ।
हरेश्चतुर्भुजस्याग्रे हरलिङ्गार्चनं भवेत् ॥ ८ ॥
अत एव समाख्यातं दिव्यं हरिहरात्मकम् ।
तत्स्थानं हरिहरक्षेत्रं विशालं विश्वविश्रुतम् ॥ ९ ॥
कार्तिके यत्र सर्वे हि ब्रह्मविष्णुशिवादयः ।
देवा देव्यश्च नद्यश्च निवसन्ति महर्षयः ॥१०॥
सङ्गमे परमे रम्ये यक्षगन्धर्वकिन्नराः ।
स्नातुं द्रष्टुं समायान्ति मनुष्याः सार्वदेशिकाः ॥११॥
यत्राश्वगजगोमेषा महिषर्क्षवृकास्तथा ।
नकुलाजवराश्चापि कपिमार्जारशूकराः ॥१२॥
श्वानोष्ट्रमूषकाः सिंहा मृगादिपशवस्तथा ।
विक्रयार्थं समायान्ति तस्मै स्थानाय वै नमः ॥१३॥
कोककोकिलकाकाश्च केकीकादम्बकुक्कुटाः ।
कामुकी कलकण्ठाऽऽटी करेटूकलहप्रिया ॥१४॥
कपोतकीरक्रौञ्चाश्च कुशिकोरककुक्कुभाः ।
विक्रयार्थं समायान्ति तस्मै स्थानाय वै नमः ॥१५॥
कुन्दैः कुरवकैर्नागैः कुटजैर्दाडिमैरपि ।
केतकीमल्लिकाजाती - यूथिकाराजिभिस्तथा ॥१६॥
नारिकेलैश्च पूगैश्च चम्पकैर्जम्बुभिर्धवैः ।
खर्जूराशोकबकुलैर्जम्बीरैर्वातलंगकैः ॥१७॥

नारगैर्वदरीभिश्च निचुलैः केसरैरपि।
चूतैश्च कपिचूतैश्च मधुरैराम्लकैस्तथा ॥१८॥
पुन्नागैः पनसैर्विल्वैर्द्राक्षामधुसदाफलैः।
सीताफलकपित्थादिफलैः कम्यैर्विराजितम् ॥१९॥
एवं नानाविधैः पुष्पैः फलैः कम्यैः समन्वितम्।
विद्यते यन्महत्क्षेत्रं तस्यै भूम्यै नमो नमः ॥२०॥
सूक्ष्मातिसूक्ष्मरूपाणि स्थूलात्स्थूलतराणि वा।
ऊष्णे शीतकराण्येव शीते चोष्णकराणि वै ॥२१॥

स्वल्पमूल्यान्यमूल्यानि वस्त्राणि विविधानि च।
विक्रयार्थं विलोक्यन्ते यत्र तस्यै नमो नमः ॥२२॥
काचकाञ्चनताम्राणि लोहपित्तलकानि वा।
रजतादीनि रौप्याणि ह्यष्टधातुमयानि च ॥२३॥
पात्राणि विविधान्येव मृण्मयान्यपि कार्तिके।
विक्रेतुं यत्र दृश्यन्ते तद्देशाय' नमो नमः ॥२४॥
सुमहार्हाणि रत्नानि, नीलपीतसितानि च।
वैदूर्य्यमणिजातानि सन्ति यत्रैव ते नमः ॥२५॥
एवं विधानि यावन्ति लोके लोकान्तरेऽपि वा।
श्रूयमाणानि वस्तूनि तावन्ति सन्ति यत्र वै ॥२६॥
तत्प्रकल्पितमूल्यैस्तु क्रयो वा विक्रयोभवेत्।
तेषां समस्तवस्तूनां यत्र तस्मै नमो नमः ॥२७॥

प्रासादैस्तृणगेहैर्वा पटमण्डपराजिभिः।
कृत्रिमाऽकृत्रिमैः कुञ्जैर्विविधैः सुमनोहरैः ॥२८॥
वेणुवंशैः समाकीर्णं कदलीखण्डमण्डितम्।
पुण्यं हरिहरक्षेत्रं सेवितव्यं बुधैः सदा ॥२९॥
राजानो बहवो वापि श्रेष्ठिनः साधवस्तथा।
व्यापारिणो विराजन्ते कार्तिकोत्तमपर्वणि ॥३०॥
भारतीया नराश्चान्ये दूरतोऽपि विदेशिनः।
स्नातुं द्रष्टुं च क्रेतुं वा विक्रेतुं ये समागताः ॥३१॥
अस्मिन् हरिहरक्षेत्रे पावने लोकभावने।
आगत्य कार्तिके मासे स्नानं कुर्वन्ति ये जनाः ॥३२॥

ते निष्पापा ध्रुवं यान्ति शिवलोकं तथा पुनः ।
विष्णुलोके सुखं भुक्त्वा ब्रह्मलोकं व्रजन्ति ते ॥३३॥

क्रय-विक्रयसंलग्नाः स्नानध्यानपरायणाः ।
यथाकथंचिदपि (?) ते यात्रिणोऽत्र तरन्ति वै ॥३४॥

अत एव नरैः सर्वैर्द्रष्टव्यं तदपूर्वकम् ।
क्षेत्रं हरिहराख्यं यद् विद्यते गण्डकीतटे ॥३५॥

श्रीगंगा-सरयूनदी-सुतटयोर्मध्ये भृगुक्षेत्रतः
प्राग्गव्यूतिमिते स्थिते "दुबहरे" ग्रामेऽथ गर्गान्वये ॥
संजातेन हि ठाकुरात्मजनुषा विज्ञ 'द्विजेन्द्रण वै ।
भक्तानां हितवाञ्छया विरचितं माहात्म्यमेतद्वरम् ॥३६॥

नेत्रग्रहाङ्कचन्द्रेऽब्दे वैक्रमे रविवासरे ।
कार्तिकीपूर्णिमायां वै माहात्म्यं पूर्णतां गतम् ॥३७॥

इति श्री 'कविताकलानिधि' पं० श्रीसरयूप्रसादशास्त्रिणा विरचितं
श्रीहरिहरक्षेत्रमाहात्म्यं सम्पूर्णम् ।

[ * इदं हरिहरक्षेत्रं विहारप्रान्ते सारनमण्डले वर्त्तते । एतद्विषयकमप्रकाशितमपूर्वं पुस्तकमप्येकं माहात्म्यलेखकेन लिखितं विद्यते । यदि कश्चिद्धर्मात्मा पुरुषः प्राकाश्यैतत् लोकसेवायां समुपस्थाप्येत तर्हि महानुपकारः —स० सम्पादक । ]

---

## पूर्णिमा

(रचयिता–मोहोलकरोपाह्वः शंकरशर्मा, काव्यतीर्थः सोलापुरस्थः)

जन्मनः प्रभृति यन्मलिनं हि
दृश्यते भुवि जनेन रजन्याः ।
हन्त ! सोज्ज्वलमिदं सुखरूप-
मक्षिगोचरगते हि शशाङ्के ॥१॥

कृष्णवर्णमपि काङ्क्षति मार्ष्टुं
तामसी सहसमुद्भवरूपम् ।
का निमज्जति न सम्मदसिन्धौ
दृष्टिगोचरगते दयिते तु ॥२॥

महं ददाना भुवि पूर्णिमायां
यथार्थनाम्नो क्षणदा बभूव ।
उदारचेता हि निजोत्सवेषु
प्रकामहृष्टं कुरुतेऽत्र लोकम् ॥३॥

शशिनैव हि शोभते निशा
सति तारागणमण्डले दिवि ।
ननु रत्नविभूषणेष्वपि
प्रमदानां पतिरेव भूषणम् ॥४॥

चिराधिरूढेऽम्बरमिन्दुबिम्बे
राका न तारागणसंयुता वा ।
मन्येऽहमुत्कण्ठितया रजन्या
स्मृतं न कर्तुं निखिलं प्रसाधम् ॥५॥

हिमकरकरसङ्गोद्भूतरागा त्रियामा
समुदितमुखरागं कान्तरक्तोत्पलैश्च ।
कुवलयपरिवासेनास्यगन्धं प्रसार्य
विकचकुमुदकुन्दं मन्दहास्यं तनोति ॥६॥

कुवलयदलकान्तस्निग्धवस्त्रोपवीता
विधुमुखरचकोरश्रेणिमञ्जीरयुक्ता ।
शिशिरकिरणकान्ता प्रेमपूर्णा प्रियेण
गमयति रतिसक्ता दीर्घकालं स्वकीयम् ॥७॥

---

# ब्राह्मणत्व-विवेचनम्

निवेदकः—पं० वंशीधरशर्म्मा "शाण्डिल्यः" शास्त्री
( प्रधानाध्यापकः श्री० स० ध० सं० विद्यालयस्य )

"ब्राह्मणेभ्यः इदं नमः।" ६।१३।३, इत्यथर्ववेदः। किं नाम ब्राह्मणत्वमिति विचिकित्सायामित्थं व्याकर्तुं पारयामः, "ब्राह्मणकुलोत्पन्नत्वे सति तपोविद्याविशिष्टत्वं ब्राह्मणत्वम्" इत्थमनुमोदमानो महर्षिपतञ्जलिरपि व्याहरति—

"त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च।
एतच्छिवे विजानीहि ब्राह्मणाग्र्यस्य लक्षणम् ॥"

समस्तवपुषि मूर्ध्नोऽपराज्यं राज्यमिति न संशीतिलवोऽपि। भुजाभ्यां विहीनः प्राणिति प्राणी, जघनस्थलाभ्यां विना जीवति जीवः, पादवियोगेऽपि जीवने न कापि क्षतिः, परं मूर्ध्नोऽतिरिक्तं न प्राणो न च प्राणी उपलभ्यते। क्षिप्रं यमातिथ्यं गृह्णाति। इत्थं समस्तप्रशस्तहैन्दवजातौ ब्राह्मणस्य मुख्यता। "ब्राह्मणोऽस्य मुखमासीत्" इत्यनया श्रुत्या ब्राह्मणस्य प्रधानता प्रतीयते।

मुखस्यार्थे मुख्यतेति स्वीकृतावपि न काचिद्धानिः। यतः "शरीरावयवाद्यत्" इत्यनेन 'यत्' प्रत्यये कृते मुखे भवो मुख्यः।

"तस्माद्यज्ञात्" ३२—४, "ततो विश्वानि व्यक्रामत्" इत्यादिमन्त्रद्व्या परमकारुणिक-जगदाधारेण कृता वर्णक्रमोत्पत्तिरिति निश्चीयते।

"कौरुपञ्चालो वायं ब्रह्मा ब्रह्मपुत्रः" शतपथश्रुत्या कुरुपाञ्चालदेशीयोद्दालकस्य वर्णनं साक्षात्क्रियते। असन्दिग्धमेतद् यद्धर्मशास्त्रादिभिः प्रतिपादितानि 'विद्याऽध्यापनम्, यज्ञकारणम्, दानग्रहणञ्च त्रीणि कर्माणि ब्राह्मणस्य वित्तार्जने। परमद्यत्वे न विभाव्यते निशाम्यते च तादृशी सत्कृतिः, प्रत्युत यथाशक्यं तान् निन्दितुं बद्धपरिकराः समन्ताद् दरीदृश्यन्ते बुद्धिबहिर्मुखाः। कृषिकर्माऽपि ब्राह्मणस्य न हानिप्रदम्, वेदादौ प्रशस्तत्वात् "अक्षैर्मा दीव्य कृषिमत्कृषस्व वित्ते रमस्व बहुमन्यमानः" इत्थं वसिष्ठपराशरप्रभृतयः स्मृतयोऽपि अनुमोदन्ते। कृष्यादिना स्वीयगार्हस्थं व्यतिगमयितुं न प्रभवेच्चेत्तर्हि "विद्या शिल्पं भृतिः सेवा गोरक्षं विपणिः कृषिः। धृति भैक्ष्यं कुसीदञ्च दश जीवनहेतवः ॥" एभिर्दशोपायैरपि प्राणान् रक्षेद् विप्र इति, मनोराज्ञाप्तिरवश्यमवधेयेति। परं निरूपयामो वयमद्यत्वे, यत् तादृशी

न सत्कारभागभाग् ब्राह्मणजातिः, न वाण्यां काचिच्छक्तिः, स्वान्तेन तादृशी भक्तिश्च, हस्ते गौरवमपि न प्रतीयते । किं निदानं, कश्च हेतुरिति प्रश्ने स्वयं भगवान् वेदव्यास उत्तरति—

"परान्नेन मुखं दग्धं हस्तौ दग्धौ प्रतिग्रहात् ।
परस्त्रीभिर्मनो दग्धं कुतः शापः कलौ युगे ॥"

प्रियभूदेवाः! जाग्रतु, उत्तिष्ठतु, स्वीयामसमञ्जसीमवस्थां निभालयन्तु, विमृशन्तु च किञ्चिद्, मुञ्चन्तु यस्मिन् कस्मिन् सदने भोजनं, निमन्त्रणञ्च, अधियन्तु च पूर्वजानां गौरवम् ।

औदार्ये महर्षिर्दधीचिः, शौर्ये परशुरामः, तपोधने वसिष्ठः, योगविद्यायां पतञ्जलिः, कर्मनिष्ठायां जैमिनिः, तत्त्ववेतृषु व्यासः, धर्मप्रचारकेषु जगद्गुरुः शङ्कराचार्यः, नीतिज्ञेषु चाणक्यश्च सर्वान् अतिशेते । रघुकुलदिवाकरो दाशरथी रामः प्रातरुत्थाय ब्राह्मणपादपङ्कजानि पस्पर्श । राजसूययज्ञे नन्दनन्दनो विप्रचरणकमलप्रक्षालनमेव उररीचकार ।

किं बहुना अत्रत्या ब्राह्मणा "भूदेवा" इत्यभिख्यया आहूयन्तेस्म । किमनल्पजल्पितेन, वेदेऽपि ब्राह्मणस्य अतिशायिनी (?) अतिशायी महिमोपलभ्यते ।

"त्रयो लोकाः स्तम्भिता ब्राह्मणेन द्यौरेवासौ पृथिव्यन्तरिक्षम् ।"

भो भो भूदेवाः! सावधाना भवन्तु । भारतीयाऽभ्युदयविलोपकानां नेतृमानिनां दुराशा दुश्चेष्टाश्च निराकृत्य स्वीयधर्मं नैजञ्जौरवञ्च आद्रियन्तामित्यभ्यर्थ्य विस्तरभयादत्रैव विरम्यते ।

---

## श्रीदीनानाथशर्म्म-शास्त्रि-सारस्वतानां परिचयः ।

ले०—यशोदानन्दशर्मा शास्त्री जयतलः ।

संस्कृतसंसारेऽद्यत्वे मुलतानस्थ—स० ध० संस्कृतमहाविद्यालयाऽध्यापकानां* श्रीदीनानाथशर्म्मशास्त्रिसारस्वतानां महती प्रसिद्धिर्जाता । तत्र कारणं यद्—एषां बहुषु संस्कृतपत्त्रेषु विद्वत्तापूर्णा गवेषणापूर्णाश्च निबन्धाः प्रकाशिताः, प्रकाश्यन्ते च ।

* एतन्नामविषये केचित् पृच्छन्ति । भारतधर्ममहामण्डलीयाः स्वा० दयानन्दमहाराजा अपि मूलत्राणे इमानपृच्छन् । तत्र इमे तु स्वनाम 'दीनश्चाऽसावनाथश्च' इतीत्थं विगृह्णन्ति । 'दीनानां जनानाम् आ (सर्वतः) नाथः' इति विग्रहोऽपि सुवचः । परमात्मपक्षे 'दीनाया द्रौपद्या नाथः दीनानां स्त्रीणां वा नाथः, दीनान् अनाथयति वा विग्रहोऽपि सुग्रहः ।

निःस्वार्थमिमां देवगवीसेवां विदधतामेषां परिचयजिज्ञासासम्बन्धे जनानां प्रवृत्तिः स्वाभाविकी । तज्जिज्ञासाशमनाय अहं प्रसिद्धपत्रं 'सूर्य्योदयं' द्वारीकृत्य निजलेखनीं प्रचालयामि । ईदृक्षोऽवसरः पुनः कदा मम प्राप्स्यति गुरुदक्षिणाप्रदानस्य । जिज्ञासव इतः स्वकृपाकटाक्षं कृत्वा मम प्रवृत्तिं सफलयन्तु ।

अस्मदीयचरितनायकस्य जन्म पञ्चनदप्रान्तान्तर्गत 'मुलतान' मण्डलस्य 'शुजावाद' नामकग्रामे १९६० वैक्रमवत्सरे सौराषाढस्य ९ मितौ कृष्णद्वादश्यां चन्द्रवासरे ( तदनुसारं २२ जून सन् १९०३ ) जातम् । अदसीयं जन्मनाम 'ईश्वरशर्मेति । प्रसिद्धं तु श्रीदीनानाथशर्मा—इति । सारस्वतब्राह्मणवंशे सेतुपालजातौ च जातस्याऽस्य पितृपादानां नाम—पं० शीतललालशर्मा इति एषामायुरद्यत्वे ६०–६५ मध्ये वर्त्तते ।

अस्मदीयचरितनायकोऽष्टवर्षवयस्कोऽक्षरारम्भं कृतवान् शुजावादीय-सनातनधर्मसंस्कृतपाठशालायां पं० रामचन्द्रशास्त्रिसकाशात् । ततोऽनेन १९१५ ईशवीयेऽब्दे प्राज्ञपरीक्षा, १९१७ अब्दे च विशारदश्रेणी मान्य-पं० श्रीहीरानन्दशास्त्रिणामध्यक्षतायां पञ्चनदीयविश्वविद्यालयीया उत्तीर्णीकृता । ततः १९१९ ईशवीयाब्दे च षोडशवर्षदेशीयत्वे पञ्चनदीयविश्वविद्यालयीया शास्त्रिपरीक्षा उत्तीर्णा तत्रैव विद्यालये पं० जगन्नाथशास्त्रिणामध्यक्षतायाम् । अस्मदीय—चरितनायकः प्रथमश्रेणीत आरभ्य शास्त्रिश्रेणीपर्यन्तं कस्यामपि परीक्षायामनुत्तीर्णताकलङ्कं नाऽऽसीषदत्; सदा च विशिष्टाङ्केषु उत्तीर्णतामधिगत्य स्वविद्यालयतः पारितोषिकभाजनमभवत् ।

संस्कृताऽनुरागोऽस्य विशारदश्रेणीत एवाऽऽविरभवत् । तत एव समाचारपत्रपठनानुरागी जातः । संस्कृतसमाचारपत्रं परमप्रेम्णा पठति स्म । शास्त्रिश्रेण्युत्तरणानन्तरममुना एकवर्षपर्यन्तं 'संस्कृत प्रचारिणी पाठशाला' तत्रैव स्वाभिजने उद्घाटिता । कतिचन च विद्यार्थिनः परीक्षात उत्तारिताः । स्वाभिजनस्य सर्वप्रथमः शास्त्री किलाऽयम्–१९२० ईशवीयेऽब्दे लवपुरे प्राच्यमहाविद्यालये आङ्गलभाषाशिक्षायै गतः । परं तत्र प्रबन्धाऽसौष्ठवं दृष्ट्वा ततः परावृत्तः । ततश्च मुलतानमध्युष्य स्वमातामह-पं० कन्हैयालालशर्मतो ज्यौतिषविद्यामशिक्षिष्ट । ततश्च १९२१ ईसाब्दे मुजफ्फरगढान्तर्वर्त्यलीपुरग्रामस्थे स० ध० संस्कृतविद्यालये मुख्याध्यापकत्वेन गतः । तत्राऽयं वर्षत्रयपर्यन्तमध्याप्य पाठनालङ्कर्मीणतया महतीं विश्रुतिमुपेयिवान् । तत्रैव चाऽयं सनातनधर्म्मसाहित्यदर्शनप्रवणोऽजनि ।

ततो निजाभिजनतो दविष्ठत्वकारणात् तत्स्थानं विसृज्य तत्प्रेषणाज्ञामदित्सुभ्योऽपि तत्रत्याधिकारिभ्यः कथं कथञ्चिद् गमनाज्ञां लब्ध्वाऽस्मदीयचरितनायको

मुलताननगरे 'सदाचार्याश्रमविद्यालये' १९२४ ईशवीयेऽब्दे स्वमातुलमहोदय-पण्डित-चूडामणिशास्त्रिविद्यावागीशाध्यक्षतायां पाठनकर्म्म उपक्रान्तवान् तदेकवर्षानन्तरं स्थानीयविद्यालयत्रयं समुदितीकृत्य 'सनातनधर्मसंस्कृतमहाविद्यालयः (कालेज) १९२५ ईशवीयाब्दे प्रावर्त्तिष्ट। अस्मदीयचरितनायकोऽपि तत्रैव स्थानं प्राप। अद्य यावच्च तत्रैव पाठयति। विद्यार्थिभिरस्य पाठनाऽलङ्कर्मीणतया महाँल्लाभो लब्धः। अधुनैतदीया वर्त्तमानाऽवस्था षट्त्रिंशत्तमवर्षस्य।

१९२३ ईसाब्दनिकटे अलीपुरीय स० ध० संस्कृतविद्यालयेऽध्यापयन्नयं स्वैक-प्रशस्यवयस्याऽनुरोधतो जयपुरीय—संस्कृतसाहित्यसम्मेलनस्य सदस्यतामशिश्रियत्। २०।१।२४ तिथौ चाऽस्य पार्श्वे 'संस्कृतरत्नाकरः' पं० चन्द्रशेखरशास्त्रिणः सम्पादकत्वे प्रकाशितः प्राप्तः। आरम्भत एव संस्कृतानुरागी अस्मदीयचरितनायकस्तद्दर्शनेन परमप्रसन्नताऽऽसन्नतां प्राप्तवान्; स्वकीयभविष्यन्निबन्ध-निबन्धनस्य चाऽऽशा अबध्नात् परं संख्याद्वितयाऽऽगमनोत्तरमन्तर्हितं तं ज्ञात्वाऽतिशयितविषादमासीदत्।

ततो मुलतानस्थसदाचार्याश्रमविद्यालयेऽध्यापयन्नसौ १९२४ ईशवीयेऽब्दे 'सुप्रभातं' नाम काशिकमासिकपत्त्रं श्रीविन्ध्येश्वरीप्रसादशास्त्रिसम्पादकत्वे प्रकाशितं प्राप्नोत्। तत्राऽनेन स्वकीयलेखाः प्रकाशयितुमारब्धाः। तस्यैवैकवर्षानन्तरं प्रकाशिते 'सूर्य्योदये' ऽपि अयं स्वकीयविशिष्टनिबन्धान् प्राहिणोत्। पत्त्रेऽत्र अदसीया बहवो निबन्धाः प्रकाशिताः। ततः १९२८–२९ लवपुरप्रकाशितस्य 'उद्योत' नामकसंस्कृत-पत्त्रस्याऽप्ययं नियमितलेखकोऽतिष्ठत्। ततोऽमृतसरनगराद् १९२९ ई० आविर्भूतायाम् 'अमरभारती' पत्त्रिकायाम्, १९३० ई० लवपुरीये 'ओरियण्टल कालेज मेगजीन नामक त्रैमासिकपत्त्रे चाऽस्य लेखाः प्रकाशिताः।

ततः १९३३ वर्षे प्रकाशिते जयपुरीय 'संस्कृतरत्नाकरे'ऽप्यनेन स्वनिबन्धाः प्रकाशयितुमुपक्रान्ताः। ततश्च श्रीनगरस्थ 'श्री' पत्त्रिकायामपि अनेन १९३५ वत्सरतो बहुमूल्यलेखाः प्रकाशयितुं प्रारब्धाः। प्रागन्तर्हितस्य ततः पुनः प्रकटीभूतस्य 'सुप्रभात' स्याऽपि नियमितलेखकः संवृत्तः १९३४ ई० वत्सरे। ततोऽयं १९३५ ई० वत्सरे* वाराणसेय्या 'अमरभारती' पत्त्रिकायाः, १९३५–३६ वत्सरे च 'वल्लरी' पत्त्रिकाया नियमितलेखकोऽभूत्। एवम् अयोध्याप्रकाशितस्य साप्ताहिक-'संस्कृत' पत्त्रस्याऽपि विशिष्टलेखको जातः १९३५ वत्सरे। ततः 'आगरा' प्रकाशित 'कालिन्दी' पत्त्रिकाया अपि सम्मानितलेखको जातः। ततः १९३६–३७ ई० वत्सरतोऽसमचरित-

* वाराणसेय्याः। 'टिड्ढे'ति ङीप्, षष्ठ्या रूपम्।

नायको 'वेलगांव' प्रकाशिताया 'मधुरवाणी' पत्रिकाया अपि च लेखको वर्त्तते। यद् यत् पत्रमेतत्पार्श्वे स्वयमुपतिष्ठते, तत् सादरं स्वीकरोत्ययम्; तत्र निबन्ध-प्रेषणञ्च प्रारभते ।

अस्मदीयचरितनायकस्य पं० श्रीदीनानाथशास्त्रिणः सारस्वतमहोदयस्य अद्य यावत् ( सं० १९८१ तः १९९५ सं० पर्य्यन्तम् ) २५० निबन्धा ऽ प्रकाशिताः। येषां पृष्ठसंख्या १७०० सप्तदशशतमिता स्यात् । बहवश्च निबन्धा अनेन विरचय्य स्वनिकटे स्थापिताः सन्ति, ये खलु प्रकाशयिष्यमाणाः । एभिरेकविंशतितमवर्षा-ऽवस्थातः समाचारपत्रेषु स्वनिबन्धप्रकाशनमारब्धम् । अद्य लेखसातत्यं प्रकाशयता-ममीषां पञ्चदशवर्षाणि जातानि । सर्व्वेषां संस्कृतपत्त्राणां प्रत्येकसङ्ख्याकृते इमे निबन्धं सज्जीकृत्य प्रहिण्वन्ति । प्रकाशका एवाऽन्तरं स्थापयन्ति, प्रकाशने च विलम्बमातन्वते । प्रत्युत केषाञ्चित्पत्त्राणां पार्श्वे तु अदसीया द्वित्रसंख्याका निबन्धाऽ पूर्ववत एव प्राप्ताः सन्ति; केवलं पत्त्रसम्पादकानामेव तत्प्रकाशने विलम्बः; नाऽस्य निबन्धसज्जीकरणे विलम्बः ।

अयं हिन्दीपत्त्रेषु लेखप्रेषणस्य न पक्षपाती । परं सनातनधर्ममहारथिनऽ पं० कालूरामशास्त्रिणो महाऽऽग्रहेण तदीये 'हिन्दु' नामक हिन्दीपत्त्रेऽपि सनातन-धर्मसम्बन्धिलेखप्रेषणमनेन स्वीकृतम् । कतिचन च तत्र हिन्दीनिबन्धा ऽ प्रका-शिता अपि । अधुना तत्स्थगने 'अनुभूतयोगमाला' सम्पादकाग्रहेण तत्रापि स० ध० सम्बन्धिनिबन्धप्रदानमनेन स्वीकृतम् ।

अयं स्वदैनिकवृत्तलिपिमपि संस्कृते लिखति । १९२० ईशवीयाद्वृत्तोऽद्य यावद-नेन संस्कृतज्ञानां पार्श्वे कदापि पत्त्रेषु संस्कृतभाषाऽतिरिक्तभाषा न स्वीकृता। प्रत्युत प्राक् स्वमित्राणां पार्श्वे पद्यबद्धं पत्त्रं प्रेषयति स्म । अद्य यावदेषां पद्यसंख्या एकसहस्रमिता जायेत । तत उत्तरं गद्येऽनुरागो धारितः ।

एभिः 'श्री सनातनधर्माऽऽलोक' नामक * एकसहस्रपृष्ठबद्ध एको ग्रन्थोऽपि सज्जीकृतः संस्कृतगिरि । यदीयाऽ केचिन्निबन्धाः संस्कृतपत्त्रेषु प्रकाशिता विद्वद्भी रुचिविषयमपि नीताः । यः सनातनधर्मप्रेमिपुस्तकालयो वादिनां हृदय-वेपथुजनकं ग्रन्थममुं प्रकाशयितुमिच्छेत्; अस्मदीय-चरित-नायकस्तदीयां विश्वस्ततां † ज्ञात्वा तस्मै प्रकाशनायाऽर्प्पयितुमुद्यतः । यदि वा केचिद् दानवीरा द्वित्र-

* 'वेद पुराणयोरेकवाक्यता' नाम कोऽदसीयनिबन्धोऽप्यत्रैवाऽन्तर्भवति ।

† 'निलोट्' इति वक्तव्ये 'श्रानि लोट्' इत्यनेन 'आगमशास्त्रमनित्यम्' इति परिभाषो-दिता। तेन 'विश्वस्तता' अत्रापीडागमो न ।

सहस्ररूप्यकाणां साहाय्यं वितरेयुः; तदाऽयं सधन्यवादं तत् स्वीकृत्य स्वयमपि प्रकाशयितुमुद्यतोऽमुं ग्रन्थम्। तेषां नामानि च प्रकाश्य, प्रकाशनोत्तरं तेषां सविधे तावन्मूल्यकानि तत्पुस्तकानि प्रेषयितुञ्चेच्छति। अथ च स्वमुद्रितसाहित्योपयोगिनिबन्धानां प्रकाशनेऽप्यस्य विचारो वर्वर्ति यन्नाम भवेद् 'निबन्धालोकः' इति। यत् संस्कृतपत्रं स्वप्रकाशन-विभागतोऽमुं निबन्धसंग्रहं प्रकाशयितुमुद्यच्छेत, शास्त्रिमहोदयास्तस्मै तं दातुं सततमुद्यताः।

अधुना महाविद्यालयाऽध्यापनातिरिक्तकाले तेषां लेखलेखनं स्वाध्यायाभ्यसनं, सनातन-धर्म्म-साहित्यानुशीलनं, वेदस्मृतिगृह्यसूत्र-धर्मसूत्रदर्शनादिदर्शनञ्च कर्तव्यं विद्यते। केचिद् वृत्तिं दत्त्वा विद्यालयभिन्नसमयेऽपि पिपठिषन्त्येभ्यः; परमिमे स्वस्वाध्यायभङ्गभिया तदिच्छापूर्त्यै न प्रभवन्ति। तद्धनार्जनाऽपेक्षयाऽमूल्यसुरभारतीसेवैव एभ्यो रोचते। इमे स्तुतिलोभेनाऽपि एतावन्तं परिश्रमं नाऽऽतन्वते, किन्तु ब्राह्मणस्य निष्कारणं कर्तव्यमेतदिति धिया। सत्यमुक्तं केनाऽपि—

"अद्याऽपि दुर्निवारं स्तुतिकन्या वहति कौमारम्।
सद्भ्यो न रोचते साऽसन्तस्तस्यै न रोचन्ते।"

अस्तु। एषां लेखेऽनुप्रासभासां विलासः, व्याकृतिच्छटा, सनातनधर्म्मप्रेम च पदे पदे प्राप्यते। एषां पार्श्वे देशदेशान्तरेभ्यः—अपरबर्मा, कलकत्ता, बम्बई, मद्रास, बनारस, जयपुर, कश्मीर, बीकानेर, मथुरा, हरद्वार, आगरा, पञ्जाब, प्रभृतिभ्यो बहूनि पत्त्राणि समागच्छन्ति। केषुचिदिमे परिष्टुता भवन्ति। केषुचित् कतिचिद्धार्म्मिकप्रश्नानां निर्णय ✕ पृष्टो भवति। कतिचिच्च पुस्तकानि समालोचनार्थमागच्छन्ति।

स्वर्गीया महामण्डलीय स्वा० दयानन्दमहाराजाः, सूरतवास्तव्या गो० व्रजरत्नलालमहाभागाः, म० म० प० गिरिधरशर्माणः, प० श्रीसूर्यनारायणशास्त्रिव्याकरणाचार्याः (जयपुर), प० श्रीनिवासाचार्याः (बेलगाँव), ऋषिकुलहरिद्वार-भूतपूर्वाचार्याः श्रीघूटरझाशर्माणः, हरिद्वारीय-योगाश्रम-महाविद्यालयाध्यापकाः पं० द्रव्येशझाशर्म्माणः, प० श्रीविद्याधरशास्त्रिणः एम० ए० (बीकानेर) इत्येवमादयोऽन्येऽपि बहवः केचित् साक्षात्कारद्वारा बहवः पत्त्रद्वारा च इमान् प्रशंसितवन्तः, एषामुत्साहं वर्द्धितवन्तः, एभ्यश्चिरायुष्ट्वार्थमाशीर्वादञ्च दत्तवन्तः। (क्रमतः)

—:०:—

# शरणाष्टकम् ।

ले०—पण्डितश्रीप्रसन्नमिश्रः, अध्यापकः

आर्तत्राणपरायणे ! भगवति ! ब्रह्मेन्द्रनारायण-
स्तुत्ये शोणित-सत्कपाणनृशिरोऽभीतिष्टपाणे शिवे ! ।
मातर्मुक्तशिरोरुहे ! नरशिरःस्रग्भूषणे भीषणे !
श्यामे ! त्वच्चरणं व्रजामि शरणं गत्यन्तरं नास्ति मे ॥१॥

आजन्मामरणं च कालहरणं प्रायो ममाकारणं
शुद्धान्तःकरणं कदाचन च ना नाम्नस्तवोच्चारणम् ।
सत्कर्माचरणं च नाहह वृथा प्राणस्य संधारणम्
श्यामे ! त्वच्चरणं व्रजामि शरणं गत्यन्तरं नास्ति मे ॥२॥

नाधीतं विधिवन्न वा हरिहरौ भक्त्या समाराधितौ
तप्तं नैव तपो मनागपि मया मायामयेऽस्मिन् भवे ।
न प्रत्तं न हुतं च सम्यगधुना भीतोऽन्तकालेऽन्तकात्
श्यामे त्वच्चरणं व्रजामि शरणं गत्यन्तरं नास्ति मे ॥३॥

नो तीर्थाण्युपसेवितानि गुरवो भक्त्या न संसेविता
नो श्राद्धैरपि तर्पिताः स्वपितरश्चीर्णं न किञ्चिद् व्रतम् ।
भक्त्या नातिशयोर्चिताः सपदि हा ! हन्तातिचिन्तातुरः
श्यामे त्वच्चरणं व्रजामि शरणं गत्यन्तरं नास्ति मे ॥४॥

नाचारो मम विद्यते न विनयो वैधं न शौचं परम्
न ज्ञानं न विरागता न च पराभक्तिर्भवत्यामपि ।
मातः शासनतोऽव मां पितृपते प्रेताकृती शासने
श्यामे त्वच्चरणं व्रजामि शरणं गत्यन्तरं नास्ति मे ॥५॥

स्वं वर्णोचितमाश्रमोचितमपि प्रायेण नानुष्ठितम्
सत्कृत्यं विधिवन्मया हतधिया शास्त्रोदितं श्रेयसे ।
चेतः सीदति साम्प्रतं जननि ! मे तत् सव्यथं सर्वथा
श्यामे त्वच्चरणं ! व्रजामि शरणं गत्यन्तरं नास्ति मे ॥६॥

नीतं दुर्व्यसनैर्महद्भिरशिवोदर्कैः शिवे ! शैशवम्
तारुण्यञ्च कलत्रपुत्रभरणाद्यर्थेषदर्थेहया ।
कालत्रासवशेन सम्प्रति जडीभूतो जराजर्जरः
श्यामे ! त्वच्चरणं व्रजामि शरणं गत्यन्तरं नास्ति मे ॥७॥

संचिन्त्यान्तकमन्ततोऽन्तिकतमं सन्त्रासपर्याकुलम्
स्वान्तं ध्वान्तमनन्तकं जननि ! मेऽशान्तं समुद्गाहते ।
हन्ताश्वासय साम्प्रतं सकृदपि व्याहृत्य मा भैरिति
श्यामे ! त्वच्चरणं व्रजामि शरणं गत्यन्तरं नास्ति मे ॥८॥

माता रुदितमिदं मे मरणासन्न-प्रसन्नमिश्रस्य ।
शृणु शिवहृदयनिषण्णे बहुदयहृदयेऽवसन्नस्य ॥९॥

## जगदवस्थापरिवर्तनम् ।

( ले०—पण्डितनारायणपतित्रिपाठिमहोदयः, काशीस्थः )

जगतां परिवर्तनं महद्,
द्रुतवेगेन विलोक्यतेऽधुना ।
बहुदूरतराध्वगामिनो
गगने यान्ति विमानयानतः ॥ १ ॥

आसीत्पन्था योऽतिकष्टादगम्यो
यात्रेदानीं तस्य सौख्यप्रदात्री ।
व्याख्यानं वा श्रूयते स्वगृहस्थै-
र्लोके (कैः) दूरात् क्रोशसाहस्रिकं यत् ॥ २ ॥

शोषक-शोषितजनयोः,
शासकशासितयोर्भीमसङ्घर्षः ।
सम्प्रति जगति समस्ते,
लोकप्रलयङ्करो वरीवर्ति ॥ ३ ॥

देशाश्च ये स्वतन्त्राः
अन्ताराष्ट्रियोच्चकलहोद्विग्नाः ।
तेऽपि स्वार्थपरत्वात्,
स्वीयानामेव हन्तारः ॥ ४ ॥

परिवर्तनचक्रतीव्रता,
द्रुतगत्या परिचाल्यते यथा ।
नहि तादृशशेषभूतले,
श्रुतपूर्वा नयनातिथिं गता ॥ ५ ॥

वैज्ञानिका आधुनिकाः समस्ते,
भूमण्डले स्वोच्चविकाशयोगात् ।
स्वयन्त्रनिर्माणबलादशक्य-
कार्याणि चित्राणि विधापयन्ति ॥ ६ ॥

औद्योगिकी या व्यवहारसाध्या,
व्यापारिकाद्या चलति प्रथेह ।
सामाजिकी हानिविधायिनी सा,
हा ! सभ्यता साम्प्रतिकी विभाति ॥ ७ ॥

यत्प्राकृतं मानवताविधान-
निदानमासीच्छुभकर्म लोके ।
सातत्यतस्तत्परिहाय लोकाः,
शोकातुराः सम्प्रति भान्ति भूरि ॥ ८ ॥

सुसभ्यताया इह विश्वमध्ये,
विज्ञानयन्त्रे विहिते द्विदाने ।
परन्तु ते प्राकृतिके नहि स्तः
ततोऽत्र नो लोकहिते समर्थे ॥ ९ ॥

निरुद्यमान्सौख्यविलासमग्नान्,
जनान् विधायात्यलसानयोग्यान् ।
त एव दारिद्र्यविनाशमूले,
विज्ञानयन्त्रे भुवि वर्त-( दृश्य ) माने ॥१०॥

कुर्वन्ति विज्ञानवशादशक्य-
मनेककर्माद्भुतमोजसा ये।
त एव कर्षन्ति दरिद्रलोक-
श्रमार्जितां वृत्तिमथो धनानि ॥११॥
कुर्वन्ति यन्त्राणि निरुद्यमाञ्जनान्,
विस्तारयन्त्येव दरिद्रतां भुवि।
निष्कर्मता हा! वितता ततः स्वय
मुत्पादयन्त्यार्थिकसङ्कटं बहु ॥१२॥

## शोकोद्गारः।

[ १९३९ ईशवीये भाद्रपदशुक्लसप्तम्यां प्रातः स्मरणीयानां विबुधमूर्द्धन्यानां चन्द्रशेखरझामहोदयानां विश्वम्भरसायुज्यावसरे ]

श्रीचन्द्रशेखरपदाम्बुजसेवनेन।
श्रीचन्द्रशेखरसमः समभूत् पृथिव्याम्॥
श्रीचन्द्रशेखरबुधः प्रविहाय लोकान्।
श्रीचन्द्रशेखरपदं समलब्ध भूयः॥ १॥
गङ्गा शोचति सङ्कटा च जननी श्रीरन्नपूर्णेश्वरी।
भक्तो नः क्व गतोऽनपेक्ष्य सुखदं सान्निध्यमात्मप्रियम्॥
ब्राह्मे काल उपागते प्रतिदिनं योऽस्तौत् सपर्योत्तरम्।
हा हा! सोऽद्य न दृश्यते महदिदं शून्यं समस्तं जगत्॥ २॥
अयि सनातनधर्मदिवाकर! त्वयि गते वसुधावसु हा हतम्।
मदनमोहननिर्मितशारदासदनभूषण! शान्तिशिखामणे!॥ ३॥
त्रिस्कन्धदैवज्ञशिरोमणे भोः
साहित्य-सौहित्यकलावतार!
रुदन्ति शिष्यास्तव साश्रुकण्ठा
स्त्वया विना कुत्र गतिं लभन्ताम्॥ ४॥
ज्यौतिषाचार्यसाहित्यादिज्ञश्चन्द्राऽभिधो गुरुः।
प्राज्ञमण्डित* 'माणिक्यचक्र' चूडामणिर्गतः॥ ५॥

—पं० विश्वेश्वरझा भदैनी काशी।

* सम्प्रति मानेचौक इति प्रसिद्धम्, तद् ग्रामनाम।

# विविधाः समाचाराः ।

नवम्बरमासस्य २६ तिथौ रविवासरे प्रयागनगरे महात्मा गान्धी महोदयः स्वर्गीयायाः श्रीमत्याः कमलानेहरू महोदयायाः स्मारकत्वेन 'कमलानेहरू अस्पताल'—आतुरालयस्य शिलान्यासं कृतवान् ।

× × × ×

गोरक्षपुरायुर्वेदमण्डलस्य द्वितीयवैद्य-सम्मेलनं कार्तिककृष्णत्रयोदश्यां प्रयाग-निवासिन—आयुर्वेदपञ्चानन—पण्डितजगन्नाथप्रसादशुक्लमहोदयस्य सभापतित्वे सुसम्पन्नम् ।

सिन्धुप्रान्तीय—शिकारपुरमण्डले हिन्दुमहम्मदानां पारस्परिककलहेन तत्रत्यानां हिन्दूनां महती धन-जन-हानिर्जाता । ततश्च शान्तिस्थापनं जातम् ।

काश्यां ज्ञानवापीस्थले पूज्यपाद करपात्रि-दण्डिस्वामिनां नवम्बरमासस्य २७ तिथौ सोमवासरे सायंकाले 'विश्वकल्याणम्' इति विषयमवलम्ब्य घण्टात्रयं यावत् महत्त्वपूर्णं भाषणमभूत् । अवसरेऽस्मिन् धार्मिकजनताया महती उपस्थितिरासीत् । अवसाने श्रीमतां पण्डित देवनायकाचार्यमहोदयानामपि भाषणं संजातम् ।

## शोकसभा

सुप्रसिद्धदार्शनिक-न्यायाचार्य-गोपालभट्टभट्टमहाशयानां रामघट्टस्थसाङ्गवेद-विद्यालयाध्यापकानाम् असामयिके देहावसाने काशीस्थनागरिकाणां, संस्कृतविदुषां छात्राणां च समुपस्थितौ पण्डिततराचरणभट्टाचार्याणां—टेकमणि विद्यालयाध्यापकानां सभापतित्वे—नवम्बरमासस्य २६ तिथौ शोकसभा समभवत् । शोकसूचकः प्रस्तावश्च स्वीकृतः ।

यूरोपीययुद्धमधुना शनैः प्रचलति । सामुद्रिकजलयुद्धेन जलमार्गगामिनां महा-पोतानां जलमग्नतया महती जनधनहानिर्भवति । कदा कीदृशं युद्धस्वरूपं भविष्यतीति निर्णेतुं न शक्यते ।

प्रायः सर्वत्रैव भारतवर्षस्य प्रतिनगरं खाद्यपदार्थानां वर्तमानयुद्धावसरे आपणे महर्घता दृश्यते । दीनानां विभवविहीनानां जनानां महत् कष्टम् !

विहारप्रान्ते हजारीबागसमीपस्थ-रामगढस्थले राष्ट्रियमहासभायाः ( कांग्रेस-महासभा ) १९४० ईस्वीयाधिवेशनं मार्चमासस्य तृतीयसप्ताहे भविष्यति ।

राष्ट्रियमहासभायाः कार्यकारिणीसमितेरादेशानुसारं प्रान्तीय-शासनसभाः

पञ्चदशो वर्षे १५ ] पौष-पूर्णिमायाः १९९६ जनवरी १९४० [ ७ संख्या

अखिल भारत वर्षीय

संस्कृत विश्व विद्यालयः

तस्य मुखपत्रम्

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—
त्यक्त-महामहोपाध्यायपदवीको
**महामहाध्यापकः श्रीपञ्चानन-तर्करत्न-भट्टाचार्यः ।**

सहकारि-सम्पादकः—
**अवधेशप्रसादशर्मा द्विवेदः**

उद्गम—स्थानम्—
**श्रीभारतधर्ममहामण्डलम्, जगत्गंज, काशी ।**

—:o:—

वार्षिकं मूल्यं मुद्रात्रयम्।

संरक्षकेभ्यः ५) वहिर्भारतम् ६) छात्रेभ्यः पुस्तकालयेभ्यश्च १)

# विषयसूची ।

# सूर्योदयः।

पञ्चदशवर्षे १५ | पौष-पूर्णिमायाः १९९६, जनवरी १९४०। | ७मी संख्या

## शिक्षाया आदर्शः।

( २ )

गताङ्केऽस्माभिः शिक्षादर्शशीर्षकमधिकृत्य शिक्षाविषये विचारः प्रकाशितः। सम्प्रति तदवशिष्टांशो विव्रियते तथाहि—

वर्तमानशिक्षापद्धतौ इंग्लिशशिक्षायाः स्कूलविभागे कालेजविभागे वा तथा संस्कृतशिक्षाया अपि पाठशालासु महापाठशालासु वा यथार्थतो धार्मिकशिक्षाया नास्ति काऽपि समुचिता व्यवस्था। प्राक्तने काले आचार्य्यकुले यादृशश्च शोभनः क्रमः शिक्षायाः प्रचलति स्म, सम्प्रति कामार्थप्रधानेऽस्मिन् युगे तस्या नामापि न श्रूयते। आचार्य्यकुले हि सर्वशास्त्रनिष्णातेनाचार्य्येण स्वान्तेवासिभ्यो न केवलं वेदस्यैव शिक्षा दीयते स्म, अपि तु आदर्शमयजीवनं तेषां यथा स्यात्तथा तेन प्रयत्यते स्म। तस्याः शिक्षायाः कियान् प्रतीकस्तैत्तिरीयसंहितायाः शिक्षाध्याये दृश्यते। तथाहि—

"वेदमनूच्याचार्य्योऽन्तेवासिनमनुशास्ति सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्य्याय प्रियं धनमाहृत्य प्रजातन्तुं माव्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्॥ १॥ देवपितृकार्य्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्य्यदेवो भव, अतिथिदेवो भव। यान्यनवद्यानि कर्म्माणि तानि सेवितव्यानि नो इतराणि। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि। ये के चास्मच्छ्रेयांसो ब्राह्मणास्तेषां त्वया आसनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्मविचित्सा वा वृत्तविचिकित्सा वा स्यात्॥२॥ ये तत्र ब्राह्मणाः संमर्शिनः युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः यथा ते तत्र वर्तेरन्

तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषद् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ॥ ४ ॥" इत्यादि । छान्दोग्येऽप्येवमेव शिक्षायाः फलं संक्षेपेणैव निदर्शितम् । "तद्धैतद् ब्रह्मा प्रजापतये उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः, आचार्य्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेण अभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत् आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य अहिंसन् सर्वभूतानि अन्यत्र तीर्थेभ्यः । स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते । न च पुनरावर्तते न च पुनरावर्तते" इत्यादि शिक्षादर्शं संवीक्ष्य सर्वेषामपि सचेतसां चेतसि प्राक्तन-शिक्षायाः स्वरूपं स्वत एव स्फुरितं जायते । इत्येवं प्राचीना आचार्य्याः स्वान्तेवासिनः केवलं वैखरीविद्यायाः पण्डितान् न कुर्वन्ति स्म, किन्तु तेषां हृदये यथा दैव्याः सम्पदः प्रतिष्ठानं भवेदेवं सर्वथा सर्वतश्च प्रयतन्ते स्म ।

अत एव गुरुकुलाद् विनिर्गताः स्नातका उपर्य्युक्तानुशासनपालनक्षमा यथोक्तमेव गार्हस्थ्यनियमं पालयन्तः सर्वत्रैव समादृताः सच्चरित्राः स्वजीवनं सर्वादर्शं कुर्वन्तः सर्वानेव स्वानुगान् सत्पथे नयन्तः स्वयं निःश्रेयसपदं विन्दन्ते स्म ।

अद्य सर्वोऽप्ययं शिक्षादर्शः स्वाप्निकः संवृत्तः । अद्यत्वे तु सर्वत्रैव केवलमर्थार्जनसाधनीभूता एव विद्याः शिक्ष्यन्ते । अध्यापकाश्च मासिकं पुरस्कारं गृहीत्वा केवलमक्षरज्ञानप्रदाने एव स्वकर्तव्यस्य परिसमाप्तिं मन्यन्ते । तेषां छात्राणां चरित्रसंशोधने नापि जिज्ञासा समुदेति । नापि तेषामिह युगे तत्र किञ्चित् कर्तव्यमेव विद्यते । सम्प्रति तु आचार्य्या यन्त्राणि विद्यन्ते । छात्राश्च ततो निःसृत्यान्यान्यवस्तुवद् आपणे विक्रीयन्ते । घुणाक्षरन्यायत एव दैववशात् केचन चारित्र्ये, आर्य्यमर्य्यादापालने मानवकर्तव्ये च दत्तदृष्टयो जायन्ते ।

मातापितरोऽपि स्वसन्तानशिक्षणेऽधुना भिन्नदृष्टयो दृश्यन्ते । तेषु प्रायशो बहवो बहुधा स्वसन्तानान् यथाकथमपि परीक्षोत्तीर्णानेव कामयन्ते । ते हि नेदमभिलषन्ति यन्नः सन्तानानां कीदृशं चारित्र्यबलं वर्द्धते, कीदृशाश्च ते मानसिक-वाचनिक-शारीरिकोन्नतौ प्रौढा भवन्ति । यतो हि शिक्षाया मौलिको ह्यादर्शो विद्यते कायवाक्चेतसां साध्वी सुदृढा समुन्नतिः । उक्तञ्च केनापि भगवन्तं मर्यादापुरुषोत्तमावतारं श्रीरामचन्द्रमधिकृत्य तद् यथा—

"आचार्य्यान्ते समुष्याकृतिमतिवचसां पोषमाद्ये व्यतानीद्
गार्हस्थ्ये सत्पथे ननयदभिमतैरैकपन्त्यादिधर्म्मैः ।

ब्रह्मस्त्रीकीशदण्डादभिमतमशिषत्स्वीयकर्तव्यमुच्चै-
र्मर्यादापुरुषोऽसावनुजजनकजात्यागकृन्नो निदर्शः ॥

अयं हि भारतीयशिक्षादर्शः प्राचीनः । यदायं भारते शिक्षादर्श आसीत्तदा भारतो भारतोऽभूत् । तदैव मनुनाऽप्यभिहितम्—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥ इति ।

अतोऽधुना उभयत्रापि शिक्षापद्धतौ परिवर्तनमपेक्ष्यते । इंग्लिशशिक्षायां संस्कृत-शिक्षायामपि । याहि प्राथमिकी देशभाषा-शिक्षा दीयते । तत्रापि परिवर्तनम पेक्ष्यते । बालानामपि सर्वप्रथमतो गुरुकुलोपस्थितौ त्रिविधा शुचितैव शिक्षणीया । ततो भाषाज्ञानमक्षरलेखनप्रकारशिक्षणं, तत्र सौष्ठवसम्पादनादि । इत्येवमावश्यक-कृत्यमपि सम्प्रति न शिक्ष्यते, यस्य कृते उक्तम् मनुनैव—

"उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।
आचारमग्निकार्य्यंञ्च सन्ध्यावन्दनमेव च" ॥ इति ।

अतश्चाद्यत्वे भारते प्रचलितायाः शिक्षाया आदर्शः परिवर्तनीयः । भारतीयो हि परम्परागतोऽयमाभाणको विद्यते—

'या लोकद्वयसाधिनी तनुभृतां सा चातुरी चातुरी' ।

अतश्च लोकद्वयसाधको भारतीयः शिक्षादर्शोऽपेक्ष्यते । प्रथमं बुद्धि-विकाश-साधनं शिल्पकलादिज्ञानम् यया विद्यया साध्यते सैवापेक्ष्यते । यस्या विद्यायाः स्वरूपं नारदः सनत्कुमारान्तिके गत्वा स्वाधीतत्वेन प्रख्यापयति—'स होवाचर्ग्वेदम्भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथर्वणमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं वाकोवाक्यमेकायनं ब्रह्मविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पविद्यां देवयजनविद्यामेतद्भगवोऽध्येमि' इत्यादि, सा त्वन्या अध्यात्मविद्या यस्याः कृते अधीतसर्वविद्योऽपि नारदः स्वात्मानम् अल्पज्ञमेव मेने यत् सनत्कुमारं विनीतवदाह 'अधुना कर्मकृदेवास्मि नाध्यात्मविदित्यादि ।'

'सा हि परा यया तदक्षरमधिगम्यते ।' इत्यादि श्रुत्याप्युच्यते । एवं हि सर्वेषामेवाभ्युदयसाधकानां भावानां शिक्षायां प्रवेशोऽपेक्षितः । आधिभौतिकी उन्नति र्यथा स्यात्, यथा चाधिभौतिक्या समुन्नत्या सहैवाध्यात्मिकी अप्युन्नतिः साधिता स्यात् । तादृशः प्रकारः शिक्षादर्शे सम्प्रति सन्निवेशनीय एव । विना हि आध्यात्मिकोन्नतिं शिक्षादर्श एव न सफलितो भवतीति सर्वथा स्मरणीयम् । भारतीयः शिक्षादर्शस्तु एवं विद्यते यस्य कृते नचिकेता यमपार्श्वे गत्वोवाच—

"येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः" इति ।

एष हि शिक्षादर्शो येन साधितं स्यात् स शिक्षादर्शप्रकारो भारते पुनरपि समुद्भावनीय । अतश्च प्राचीनशिक्षणपद्धतिरेव भारतीयानां कल्याणकृद् इत्यत्र नास्ति सन्देहावसरः ।

## द्वारवङ्गेश्वरः सनातनधर्मश्च ।

यावद्धि भारतवर्षोऽयम् औपनिवेशिकस्वराज्येन केषाञ्चिन्मते पूर्णस्वतन्त्रतया वा समन्वितो न भवति तावद्धि यथा राष्ट्रियमहासभायाः ( कांग्रेस ) प्रयोजनमस्ति । तथैव यावद् आर्य्याणां ( हिन्दूनां ) मुहम्मदानाञ्च पारस्परिकं वास्तविकं प्रेमस्थापनं न भवति तावदस्त्येव हिन्दुमहासभाया अपि स्थिरं प्रयोजनमिति । एवं हि इमे महासंस्थे सावधिस्थितिमत्यौ विद्येते । परन्तु श्रीभारतधर्ममहामण्डलसदृश्या धार्मिक्या महासंस्थायास्तु चिरकालं यावत् स्थितेरावश्यकता प्रयोजनञ्च दृश्येते । यतो हि समयेऽस्मिन् सङ्घशक्तिं विना किमपि कार्य्यमेव न सिद्धिमर्हति । उक्तञ्च महर्षिभिरपि "सङ्घे शक्तिः कलौ युगे" इति । जातेः समाजस्य वाऽभ्युदयो देशस्य धर्मस्य वा संरक्षणं सङ्घशक्तिं विना सम्प्रति अणुमात्रमपि नैव सम्भवतीति निष्प्रपञ्चम् ।

तत्र भारतीयानां सर्वेषामेवार्थिकराजनीतिकावस्थामुन्नेतुं राष्ट्रिय-महासभया ( कांग्रेस ) क्रियते सततं प्रयत्नः । तदर्थं सा सर्वथा यथाशक्ति प्रत्यक्षमान्दोलनं कुर्वती अंशतः सफलिताऽपि दृश्यत एव । तस्या नेतृत्वञ्च महात्मानो गान्धिसदृशा नेतारो दृढं सुव्यवस्थितं सततप्रयत्नं साध्यवसायं यथाशक्यं मनोयोगेन बिभ्रति । वीरसावरकर-डाक्टर मुञ्जेमहोदयसदृशा महापुरुषा हिन्दुसभाया भारं स्वशिरसा समुद्वहन्तीति सर्वेऽपि विद्वांसो विदन्ति एव । इह सनातनधर्मक्षेत्रेऽपि स्वर्गीया महाराजाधिराजाः श्रीमन्तो रमेश्वरसिंहमहोदया महता समुद्योगेन सततपरिश्रमेण साधु सनातनधर्मसंरक्षायै प्रयत्नं कृतवन्तः ।

अधुना सनातनधर्मावलम्बिनी जनता वर्तमाने महाराजाधिराजे द्वारवङ्गेश्वरे महतीमाशां बिभर्ति । सा हि सम्मनुते यदिमे महाराजाधिराजाः स्वर्गीयमहाराजतोऽपि समधिकेन धैर्येण अदम्येनोत्साहेन प्रबलेन स्वार्थत्यागेन च स्वधर्मरक्षायै कटिबद्धा भूत्वा सर्वथा सनातनधर्ममुद्धरिष्यन्तीति । यथा हि कौमारावस्थायामेव राजसिंहासनपदमधिरुह्येमे राजनीतिनैपुण्येन परमयोग्यतया राज्यधुरां निर्वहन्ति तथैव धार्म्मिकं सामिजकमपि कृत्यं स्वप्रतिभाबलेन साधु सम्पादयिष्यन्तीति ।

माननीया द्वारवङ्गेश्वरा महाराजाधिराजाः श्रीकामेश्वरसिंहशर्माणो दशविधेषु ब्राह्मणवर्गेषु मैथिलब्राह्मणानां यथा सभापतिपदं सम्प्रति समध्यासते तथैव सर्वेषां सनातनधर्मावलम्बिनां जनानां, स्वतन्त्रनरपतीनां, किम् बहुना समेषामेव धर्मेषु श्रद्धाजुषां जनानां प्रतिनिधिभूतायाः श्रीभारतधर्ममहामण्डलाख्यायाः संस्थायाः सभापतित्वमावहन्तस्ते सर्वेष्वेव राजन्येषु, भारतसम्राट्प्रतिनिधिषु शासकवर्गेषु च महद्गौरवपदं बिभ्रति। सर्वतः सम्मान्यास्ते सम्प्रति सनातनधर्मसंरक्षायै यदि सन्नद्धा भविष्यन्ति तर्हि कियद्भिरेव दिवसैस्ते स्वपितृपादानाम् कार्य्यसरणिमाश्रित्य ततोऽपि समुन्नतां ख्यातिं समधिगच्छन्तो यथा महात्मानो गान्धिमहोदया राजनीतिक्षेत्रे सन्ति तथैव सनातनधर्मजगति महाराजाधिराजाः सर श्रीकामेश्वरसिंहशर्माणोऽपि कार्य्यपाटवाच्छक्तिशालिनो भविष्यन्ति।

एतदपि निश्चितं विद्यते यत् सनातनधर्माणो हि यावत् स्वधर्मरक्षायै कञ्चनाद्भुतप्रभावशालिनं नेतारं पुरस्कृत्य स्वधर्मरक्षायै सर्वप्रथमं सन्नद्धाः सावधना न भविष्यन्ति, यावच्च सर्वप्रथमं सनातनधर्मसंरक्षकाः पश्चाच्च राजनीतिप्रियाःसन्तः सर्वप्रथमं स्वधर्मे विश्वासम् आस्तिक्यं सङ्घशक्तिञ्च न सम्पादयिष्यन्ति तावन्न सनातनधर्मावलम्बिजनतायाः कल्याणम् सर्वतोऽभ्युदयं वा भविष्यतीति सर्ववादिसम्मतः सिद्धान्तः।

(कश्चन धर्मसेवकः काशीस्थः)

---

## अ० भा० संस्कृतविश्वविद्यालयपरीक्षा।

अखिल भारतवर्षीय-धार्मिकाध्यात्मिकसंस्कृतविश्वविद्यालयस्य तदन्तर्गत-काशी-आयुर्वेदसंमिलन्याश्च सर्वा अपि परीक्षा अप्रेलमासस्य १५ पञ्चदशतिथिम् (१५-४-४०) आरभ्य अष्टादशतिथिं (१८-४-४०) यावत् चैत्रशुक्लाष्टमीतः-एकादशीपर्यन्तं सोममंगलबुधगुरुवासरेषु भविष्यन्ति।

मन्त्री—अ० भा० धार्मिकाध्यात्मिक-
संस्कृतविश्वविद्यालय
महामण्डल भवन, बनारस कैण्ट।

## हिन्दुमहासभा।

ऐषमो गतमासे हिन्दुमहासभाया महाधिवेशनं कलिकात्तानगरे महता समारोहेण समजनि। तत्र नयपाल-महाराज्ञोऽपि समुपस्थित आसीत्। हिन्दुमहासभायाः सभापतिपदं विनायकरावसावरकरमहोदयो, अलङ्कृतवान् महासभानेतारश्च डा० मुञ्जे भाई परमानन्दप्रभृतयः समुपस्थिता आसन्। हिन्दुमहासभासदस्यानां चद्देशस्तु श्रेष्ठो विद्यते। तस्याः सदस्यानां संख्यावृद्धिर्दिनन्दिनं जायते। यदि हिन्दुमहासभा स्वकीयं सङ्घटनं सुदृढं कुर्य्यात् राजनीतौ स्वाधिकारसंरक्षणपुरस्सरं सामाजिकमेव कृत्यं सम्पादयेत्, तर्हि तस्या उपयोगः साधीयान् भवेत्। हिन्दुजनतायाः सामाजिकस्यैव कृत्यस्य सुव्यवस्थितत्वे तदीयोऽभ्युदयो निश्चितः। गतकलिकात्ताऽधिवेशने बहवः प्रस्तावाः स्वीकृताः। विशेषतो हिन्दुमहासभायाः साम्प्रतं श्रीसावकरमहोदयस्याध्यक्षत्वे हिन्दुजनतायाः संघटनं समुन्नतिश्च संभाव्येते। हिन्दुमहासभा यदि धर्मानुकूलम् कार्यं सम्पादयेत्, शास्त्रविरुद्धं किमपि न कुर्यात् तदैव सा बलवती भविष्यति।

---

## गौडपादकारिकासमालोचनम्।

लघु पुस्तकमिदं संस्कृतभाषामयम् गोयनकामहाविद्यालयभूतपूर्वाध्यक्षैः श्रीमद्भिः पण्डितशिरोमणिभिः सर्वतन्त्रस्वतन्त्रैः श्रीचण्डीप्रसादशुक्लमहोदयैः विरचितम्। विना मूल्यं वितीर्य्यते। प्राप्तिस्थानम्—मैनेजर—गोयनकामहाविद्यालय, ललिताघाट, काशी।

पुस्तकेऽस्मिन् माण्डूक्योपनिषदि गौडपादकृतकारिकायाञ्च ऐतिहासिकैः कृतानामनर्गलानामन्वेषणानां युक्तिपूर्णं सप्रमाणं गम्भीरमनुशीलनीयं प्रत्युत्तरं विद्यते। वेदान्ताध्ययनशीलैः स्वपार्श्वे रक्षणीयमिदं पुस्तकम्। एवमेव संस्कृतज्ञा विद्वांसो यदि शास्त्रीयविषये गवेषणाबुद्ध्या तन्मर्मप्रकाशने प्रवृत्ताः स्युस्तदा सर्वोऽपि साम्प्रतिकानामैतिहासिकम्मन्यानां व्यामोहो व्यपगतः स्यादिति। नूतनेयमन्वेषणसरणिः संस्कृतज्ञैर्नूनमादरणीया।

---

## युक्तप्रान्तीयराजकीय-संस्कृतपरीक्षासमयः।

मार्चमासस्य १ मतारिकातः १२ तारिकापर्यन्तं युक्तप्रान्तीयसंस्कृतपरीक्षाः भविष्यन्तीति।

---

## "श्रीदुर्गाताण्डवस्तोत्रम्"

प्रणेता—श्रीहरकृष्णदयालुः शास्त्री, विद्याभूषणम्,
दैवज्ञरत्नम्, ज्योतिषाचार्यः (सुन्दरनगरम्, सुकेतस्टेट)

जयत्यहर्निशं नमन्निलिम्प-वृन्दमौलिस-
ल्लसत्किरीटरत्नरश्मिजालचुम्बिताङ्घ्रिभूः।
निरन्तरामराच्छसूक्त-सूक्तसंस्तुतासुर
व्रजार्च्यमौलिमाहिषप्रमर्दिनी सदाम्बिका॥ १॥
सुरारिघोषणाकुलीकृतान्तरिन्द्रियोच्छ्वस-
द्धिरण्यगर्भमध्वरीन्दुशेखरादिनिर्जरैः।
स्तुता नितान्तमुच्चकैर्धराधरेन्द्रनन्दिनी
तनोतु नो मुदं महासुरासुपानपण्डिता॥ २॥
प्रकाण्डयुद्धताण्डवाजिर-प्रचण्डविक्रमो
न्मदान्धचण्डमुण्डघातमण्डितस्विकाभिधे।
दुरन्तचातुरीतुरीखलीकृतास्रपोदये
मनो मुदं विभर्तु चण्डिकाच्छपादपङ्कजे॥ ३॥
अरातिकृत्तकण्ठकन्दलीशिरासुखोच्छल-
न्निकामरक्तनिर्झरीप्रपाकपालखर्परा।
अनल्पमुण्डमालिकावलीविभूषिताकृतिः
कृपां करोतु कालिका कलाकलापमञ्जरी॥ ४॥
यदीयमञ्जुपन्नखेन्दुप्रसूतोस्रधोरणी
तडिज्झणत्कृताहताखिलामरातिवन्दिता।
अमर्त्यमर्त्यकामनाप्रपूर्तिकल्पवल्लरी
नगाधिराजनन्दिनी तनोतु नो मुदं सदा॥ ५॥
बलोल्वणोपबृंहितस्फुरद्भुजावहेलना-
वलिप्ररक्तबीजविन्दुवीरचर्वणोन्मुदा।
अमर्परक्तलोचनानुरक्तलेखमण्डली
कपालिनी समन्ततोऽवतात्सदेहकौशिकी॥ ६॥

सहस्रशोनिलिम्पवास्तुशासिकाविलासिका
कटाक्षिसामरारिचक्रचालनारचातुरी ।
महाहवोत्थितं रजः सपत्नवल्लभाश्रुभिः
प्रसिञ्चयन्त्यहर्निशं पिपर्तु पार्वती परा ॥ ७ ॥

महाजिजग्मिवन्निलिम्पवैरिवृन्दवाहिनी
वने रराज मंक्ष्वपावनेऽवनेच्छया सताम् ।
अदभ्रमभ्रसंभ्रमन्महाभ्रमण्डलेक्षण-
प्रभेव या करोतु सा हृदि स्वपीठमम्बिका ॥ ८ ॥

अनल्पकल्पकण्टकानवाप्तशौर्य्यसीमिनी
महाकवीन्द्रवाकदम्बनिर्झरीविरामभूः ।
अघच्छिदं खलच्छिदं विपच्छिदं भवच्छिदं
दरच्छिदं जनिच्छिदं तमश्छिदं भजेऽनिशम् ॥ ९ ॥

अपास्य यत्पदारविन्दवन्दनं नरोऽबुधो
न शान्तिमेति संसृतौ सुरान्तराश्रितोऽपि ताम् ।
ऋणान्तकां व्यथान्तकां भयान्तकां भवान्तकां
ज्वरान्तकां जरान्तकां धराभरान्तकां भजे ॥१०॥

रणाङ्गणोद्धतप्रचण्ड-कालकेयदुर्मनः-
कुमौर्य्यधूम्रलोचनादिदन्दशूकमर्दिनी ।
अहंयुवर्गगर्वभृन्निशुम्भशुम्भशातिनी
ददातु शर्म नः सदैव शक्तिरत्र शाम्भवी ॥११॥

न्यकारि येन सन्ततं महांसि लेखशेखर-
त्रिविक्रमप्रभृत्यशेषनाकिनां प्रतिक्षणम् ।
अघानि चाप्यघानि मर्त्यकोटिभिः कृतान्यहो
समुल्लसत्वनारतं महोऽत्र शाक्तमात्मनि ॥१२॥

सत्ताएडवं महिषमर्दनमत्तमूर्त्या
हृच्छोकहारि हरकृष्णदयालुनेदम् ।
सङ्कीर्तितं कलयति प्रणिपत्य पुंसां
भक्त्या सदैव पठतां हृदयेप्सितानि ॥१३॥

# शोकाश्रु-बिन्दवः।

[ अग्निहोत्रप्रवराणां पडित श्रीवायुनन्दनमिश्रमहोदयानाम् अन्त्येष्ट्यवसरे पतिताः ]

( १ )

दैवेन दुर्विनीतेन कठोरहृदयेन हा!
अकाण्डे विकृतं काण्डं प्रकाण्डे कर्मकाण्डिनि॥

( २ )

कर्मकाण्डि-कुलकञ्जरञ्जनो
मूढ़ता-तिमिर-पुञ्ज-भञ्जनः।
'जोखु' मिश्रवरसूरिनन्दनो
हा! गतोऽस्तमिह 'वायुनन्दनः'॥

( ३ )

चन्द्रशुभ्रयशसां समुन्नतं
यस्ततान सुवितानमद्भुतम्।
स'द्विजेन्द्र' महितो महामतिः
स्वर्गतोऽद्य किल कस्य हेतवे?॥

( ४ )

यो ह्यशेषविबुधानुकूलतां
कर्मकाण्डकलिकाप्रफुल्लताम्।
सन्ततं वितनुते स्म दीप्तिमान्
वज्रिणा ननु गुरोः पदे कृतः!

( ५ )

कर्मकाण्डबहुला ह्यनेकशो
ग्रन्थरत्ननिचया विनिर्मिताः।
यैर्निरन्तरमहोऽत्र सत्फलं
प्राप्नुवन्ति जनतापुरोहिताः॥

( ६ )

अग्निनारायणस्तुभ्यमग्निनारायणं ददौ।
सुखमिद्धः स बोभूयाद् बुध! निःश्रेयसा यते॥

तदीयेष्वन्यतमः—
पाण्डेय-श्रीसरयूप्रसादशास्त्री "द्विजेन्द्रः"
"काव्यतीर्थः, साहित्यरत्नम्"

---

# महाकविभासस्य कालः।

[ लेखकः—व्रजवल्लभद्विवेदी, काशी ]

अद्यत्वे मिलितेषु रूपकमहाकाव्यादिषु कविताकामिनीहासेन भासेन निर्मितानि रूपकाण्येव प्राचीनतराणि।

यद्यपि भाससमयात्प्रागपि बहूनि रूपकाणि काव्यानि च निबद्धान्यासन्, किन्तु

तानि कालमहाव्यालनिगलितान्यस्माकं मन्दभाग्यतया न प्राप्यन्ते। यथा महामुनिपाणिनिविरचितानि जाम्बवतीजयादीनि काव्यानि। अस्तु, यानि लभ्यन्ते तैरेव वयं "भारतः सर्वविद्यानां जनकः, भाण्डारश्चेति" कथयितुं सगर्वं, समर्थाः स्मः।

एवं सत्यपि निर्लज्जाः केचन पाश्चात्यान वयं भारतस्य शिष्या अपि तु त एवास्माकं बहुषु विषयेषु शिष्याः सन्तीति कथयन्तः प्राचीनान् भासकालिदासप्रभृतीन् महाकवीन् 'बहुनवीना एते' इति सिसाधिषन्ति, कथयन्ति च नाटक-रचनाप्रणाली भारतेऽस्माकं देशादेवागता इति। अतस्तन्मतनिरासपूर्वकं महाकविसमयादिविचारव्याजेन यथाकथञ्चित् सरस्वतीसमाराधनं कर्तुमिच्छामि।

एतत्प्रागुक्तमेव यन्मिलितेषु रूपकादिषु भासस्यैव प्राचीनतराणि रूपकाणि सन्ति, अतः प्राक् तस्यैव महाकवेः समयनिर्णयमत्र लेखे करोमि।

महाकविभासो ब्राह्मणवंश्यः, केरलदेशीयश्चेति निर्विवादम्। समयविषयेऽस्ति मतभेदः। तत्र पाश्चात्येषु केचित् सप्तमशताब्दीभवो महाकविर्भास इति प्रतिपादयन्ति। अन्ये तृतीया चतुर्थी वा शताब्दी भासकाल इति वदन्ति। हेतुरत्र तेषां भाषाविज्ञानमेव। अत्र विचार्य्यते—यद्यन्यानि प्रमाणानि समयनिर्णयकरणे न स्युस्तदैव भाषाविज्ञानेन कार्यं कर्तव्यम्। यदा तु तद्विज्ञानविरुद्धानि प्रबलप्रमाणानि प्राप्यन्ते तर्हि तस्यासम्पूर्णस्य विज्ञानस्य शुद्धकरणोपायः कर्तव्य उत बालकवत् हठं गृहीत्वा "नहि, भाषाविज्ञानेन इदमेव सिध्यति" इति वक्तव्यम्?

तस्मात् भाससमयनिर्धारणे न भाषाविज्ञानेन किञ्चित् प्रयोजनम्। तत्समयनिर्णये तु एषा एव सरणिराश्रयितव्या—द्वादशशताब्दीभवेन प्रसन्नराघवकर्त्रा जयदेवेन—

यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः,
केषां नैषा कथय कविताकामिनी कौतुकाय॥

इति पद्ये स्मृतः कविताकामिनीहासो भासस्तत्प्राग्वर्ती भविष्यत्येव।

एवमेव जयदेवादपि प्राचीनेन नवमशताब्दीभवेन राजशेखरेणापि स्मृतो भासः, यतो हि द्वादशशताब्दीपूर्वभागस्थितजह्लणकृतसूक्तिमुक्तावली—

भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः॥

एष पद्यः राजशेखरनाम्नोद्धृतः, अतस्तस्मादपि प्रत्नो महाकविः भासः।

सप्तमशतकपूर्वार्धस्थितेन महाकविबाणेन हर्षचरितप्रारम्भे—

सूत्रधारकृतारम्भै र्नाटकैर्बहुभूमिकैः ।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥

इत्थं स्तुतस्तस्मात्पुरातन एव महाकविः ।

(एताभ्यां श्लोकाभ्यां "स्वप्नवासवदत्त एव भासनिर्मितः, अन्यानि तु केनचिदपरेण कविना निर्माय भासनाम्ना प्रख्यापितानि" इत्यपि निरस्तम् । यतो हि 'भासनाटकचक्र' इत्यनेन 'नाटकैः' इति बहुवचनेन च भासो बहुनाटकनिर्माता इति सिध्यति )

खिस्ताब्दात्प्राक् प्रथमशतकजातेन कविताकामिनीकान्तेन कालिदासेन स्वविरचित 'मालविकाग्निमित्रभूमिकायां—

"प्रथितयशसां-भास-सौमिल्लक-कविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं बहुमानः ?"

इति प्रथितयशस्त्वेन ख्यापितस्तस्मादपि प्राचीनः ।

कालिदासादपि बहुप्राचीनेन चन्द्रगुप्तगुरुणा खिस्ताब्दात्पूर्वं चतुर्थशतके स्थितेन चाणक्येन स्वकीयेऽर्थशास्त्रे उद्धृत एष श्लोकः—

"नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् ।
तत्तस्य मा भून्नरकं स गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत् ॥"

इदमेव पद्यं प्रतिज्ञायौगन्धरायणेऽपि चतुर्थेऽङ्के विद्यते ।

अत्र संशयः—"किमेष श्लोकश्चाणक्येन निर्मित उत भासेन" इति तत्र चाणक्येन स्वकीये ग्रन्थे—तुल्यवेतनोऽस्मि······इत्याद्युक्त्वा "अपीह श्लोकौ भवतः" इत्यनन्तरं द्वौ श्लोकौ उदाहृतौ ( कौटिल्यार्थ-अधि० १० अध्या० ३ इत्यत्र )। तत्र ग्रन्थकाराः स्वकीयं श्लोकम"पीह श्लोकौ भवतः" इत्युक्त्वा कदापि न लिखन्ति, परकीयमेव श्लोकं तत्र समुद्धरन्ति । यथा—गृह्यसूत्रधर्मसूत्रादिषु उद्धृताः । एवञ्चेदं पद्यं न चाणक्यस्य किन्तु तेनान्यस्य कृतिरुद्धृता इत्यायाते भासस्यैवेयं कृतिरिति सिध्यति । अतः भासपद्यसमुद्धर्ता चाणक्यस्तस्मान्नवीन एवेति खिस्ताब्दात्प्राग् चतुर्थी पञ्चमी वा शताब्दी ( २३०० वर्षपूर्वं ) भासकाल इति सिद्धम् ।

अत्र पाश्चात्याः स्वमतरक्षणार्थम्—"महाकविना भासेनापीदं पद्यमन्यस्माद्ग्रन्थादुद्धृतं 'य इदानीं न लभ्यते' तथा चोभयोर्मध्ये न कस्यापि कृतिरपि तु अन्यस्यैव कस्यचित्तथा च भासश्चाणक्यात्प्राचीनो नास्तीति" वदन्ति । अहो ! धाष्टर्यम् तेषाम् । यदा अत्रत्या साधारणकवयोऽपि—

कविरनुहरतिच्छायां पदमेकं पादमेकमर्द्धं वा।
सकलप्रबन्धहर्त्रे साहसकर्त्रे नमस्तस्मै ॥

इत्यनुसारेणाऽन्यनिर्मितं पद्यं स्वकीये कल्पनाग्रन्थे स्थानं न ददति किन्तु यदि भवेदावश्यकता तादृशस्य पद्यस्य, तर्हि तस्य छायामात्रमेव स्वीये ग्रन्थे समुद्धरन्ति, तदा कविताकाननकण्ठीरवेण महाकविभासेन कथमन्यस्य पद्यमुद्धृतम् भवेत्? कथन्न लज्जन्ते परकीयगौरवमपहर्तुं प्रवृत्ताः पाश्चात्याः शुद्धसात्त्विकवृत्तीन् महाकवीन् चौरा इति कथयन्तः। अहो! चरितार्थोऽत्र 'उल्टा चोर साहूकार को डाटे' इति लौकिकन्यायः।

एषा प्रणालिस्तेषामेव देशे सुखं लभताम्। अत्र तु न केचिदपि परकीयं श्लोकं स्वनाम्ना स्वकीये ग्रन्थ उद्धरन्ति। तस्माद्भासप्रणीत एवायं श्लोकः।

ख्रिस्ताब्दात्प्राक् षष्ठशतकभवस्य वत्सराज-उदयनस्य चरितमनेन कीर्तितं 'प्रतिज्ञायोगन्धरायणे, स्वप्नवासवदत्ते' च अतः ख्रिस्ताब्दात्प्राक् षष्ठशतकमारभ्य चतुर्थशतकं यावत् भाससमय इति सिद्धम्।

भासनाटकचक्रप्रकाशकाः गणपतिशास्त्रिमहोदयाः पाणिनेरपि प्राचीनं भासं मन्यन्ते तत्तु पाश्चात्यनिर्धारितपाणिनिसमये विश्वासकरणमूलकम्। पाश्चात्या हि पाणिनेः प्रादुर्भावमुपरिनिर्दिष्टभाससमय एव मन्यन्ते। वस्तुतो महामुनिभगवत्पाणिनेः प्रादुर्भावस्तु कलियुगारम्भाद् द्वित्रिशतकानन्तरमेव जात इति। सप्रमाणमत्राऽप्रकृतत्वात्तन्नोच्यते।

एवञ्च प्राचीनतरात् पाणिनिराचार्यान्न कथमपि भासः प्राचीनो भवितुमर्हति। भगवतः पाणिनेरतिप्रसिद्धिश्च महाभाष्यकारपतञ्जलिकालानन्तरं जाता। अतः भगवत्पतञ्जलिपूर्वभवस्य भासस्य नाटकचक्रे यद्यार्षप्रयोगाः स्युस्तत्स्वाभाविकमेव। अपरञ्च—भासनाटकचक्रदर्शनादिदमायाति यत्तेन रामायणमहाभारतयोः सुचारुरीत्याऽभ्यासः कृत इति। एवञ्च तत्प्रभावादपि आर्षप्रयोगाधिक्यं भवितुमर्हति। एवञ्च सिद्धं न पाणिनेः प्राचीनो भास इति। एतावता प्रबन्धेन इतस्त्रयोविंशतिशतकपूर्वं भासस्थितिरासीदिति सिद्धम्।

इत्थमत्र महाकवेः भासस्य कालनिर्णयमेव कृत्वा विरमामि। अन्यदपि बहुवक्तव्यमस्ति नाटकविषये रचनादिविषये च तत्तु अग्रिमलेखे निवेदयिष्यामि।

---

# शक्तिभाष्य-पुष्पाञ्जलिः ।

श्रीशङ्करः शङ्कररूपधारी
यः स्वीयतत्त्वं प्रकटीचकार ।
व्यक्तीकृतं तत्त्वमिदं हि शक्ते-
स्तेनैव पञ्चाननहृद्गतेन ॥ १ ॥

यैरेव सूत्रैर्भगवत्प्रणीतै-
र्व्यक्तीकृतं श्रीशिवतत्त्वमाद्यम् ।
तदात्मिकाया अपि तत्त्वमेत-
त्तैरेव शक्तेः प्रकटं व्यधायि ॥ २ ॥

शास्त्रानुगार्थान्तरसूचनार्थं
वाक्येष्वृषीणाममितार्थवत्सु ।
तपस्विना पाणिनिना हि साक्षा-
द्धलन्त्यमित्येतदकारि सूत्रम् ॥ ३ ॥

देवं त्रिनेत्रं प्रवदन्ति धीराः
पञ्चाननं प्रेम परं तदीयम् ।
शक्तौ प्रसिद्धं सह तेन नाम
पञ्चाननं नूनमयं बिभर्ति ॥ ४ ॥

तप्तं तपस्तीव्रतरं पुरा यत्
पुरातनै स्तापसमौलिरत्नैः ।
तदेवं भाष्याकृतिकं हिताय
पुंसां पृथिव्यामिदमाविरासीत् ॥ ५ ॥

उपासनायां जगतो जनन्या
विधाय साहाय्यमुपासकानाम् ।
भविष्यतीदं भुवि भाष्यमेव
प्रसाधनं वर्गचतुष्टयस्य ॥ ६ ॥

यच्छक्तितत्त्वं परमं पवित्रं
तदस्ति सर्वं निहितं यदत्र ।

अस्यास्ति नामाप्यघनाशनाय
तस्मादवश्यं पठनीयमेतत् ॥ ७ ॥
प्रमथ्य यच्छास्त्रवचःपयोध
मह्यामतीन्द्रो मतिमन्दरेण ।
भाष्यामृतं यच्छति दुर्लभं त-
द्विना प्रयासं न निपीयते किम् ॥ ८ ॥
भाष्यं शक्त्यात्मकं मत्वा
तारादत्तः कृताञ्जलिः ।
पुष्पाष्टकमिदं पद्या—
त्मकं भक्त्या न्यवेदयत् ॥ ९ ॥

[ जुब्बलेश्वर राजकुमारगुरुणा ज्योतिर्भूषणेन तारादत्तराजज्योतिर्विदा शक्तिभाष्यदर्शनमात्रातिहृष्टचित्तेन समर्पितः पुष्पाञ्जलिः सम्पूर्णः । ]

---

## अश्रु-विन्दो !

( लेखकः—श्रीनरसिंह पाण्डेयः 'पथिकः' शास्त्री )

तदाननाच्चेत्पतितोऽश्रुविन्दो !
कदापि शोकं न वृथा कृथा स्त्वम् ।
सुधा सुधांशोरपि तत्समक्षं,
न वासयोग्या त्वमसिक्व तत्र ॥

---

## व्रजाङ्गना ।

जले निमग्नाः शिशिराभितप्ताः
सीदन्ति गाढं परिधान-हेतोः ।
धर्मार्थकामादिविधातरीशे
व्रजाङ्गनाः स्युः पुनरीदृशो हा ॥

---

# भारतश्रीः।

[ लेखकः—पं० केदारनाथत्रिपाठी न्यायशास्त्री 'छपरा' ]

( १ )

इह भुवि बहुहानिं यातु धर्मस्तदानीम्
धृतजनिरहमेनञ्चोद्धरिष्येऽप्यजन्मा
तव वचनमिदं सा द्रौपदीप! स्मरन्ती
दृढ़निगडनिबद्धा वीक्षते भारतश्रीः।

( २ )

क्वनु सुत इत ईश! प्रेषितो मे प्रतापो
भुवि जवनकरैर्माम्रुद्धाराहवे यः
इति चिरपरतन्त्रा साश्रुनेत्रे क्षिपन्ती
दृढ़निगडनिबद्धा वीक्षते भारतश्रीः।

( ३ )

जनभुवनकथा का देवलोकेऽपि नापि
धनजनबहुविद्याशौर्ययान्या समा सा
गतदयविधिना स्वां भावितामन्यतन्त्रां
दृढ़निगडनिबद्धा वीक्षते भारतश्रीः।

( ४ )

अतिशयित-शयालुत्वेन येनाहितेन
ह्यनुभवसि परेषां तन्त्रताधिं परंत्वम्
स्वपिषि तदनुसारं भारतीयोऽधुनापि
दृढ़निगडनिबद्धा वीक्षते भारतश्रीः।

—०—

## श्रीमत्परमहंस-परिव्राजकाचार्य-श्रोत्रियब्रह्मनिष्ठस्वामि-श्रीजयेन्द्रपुरी-महाराजमहामण्डलेश्वरमहोदयानां

# सदुपदेशाः

[ संग्रहकर्त्ता—स्वामी महेश्वरानन्दः ]

भो मुमुक्षो ! विचार्यताम् भगवतो वेदस्य 'ईशावास्यमिद९ सर्वम्' इत्याद्यं लोकोत्तरं सदुपदेशमिमम्। ईशा ईशित्रा सर्वजन्तूनां प्रत्यगात्मभूतेन परमेश्वरेण जगदिदं सर्वं वास्यमाच्छादनीयं, ओतञ्च प्रोतम्। तद्भिन्नं न किमप्यस्ति, अत एव 'तेन त्यक्तेन भुञ्जीथाः' अस्तिभातिप्रियात्मकं सर्वं जगत् ईश्वर एवेति परमार्थसत्यात्मभावनया स्वात्मन्यध्यस्तमविद्यया कर्तृत्वभोक्तृत्वादिलक्षणं नामरूपकर्माख्यं विकारजातं द्वैतरूपं जगत् त्यक्तं स्यात् तेन त्यक्तेन त्यागेन सर्वमात्मैवेदमिति परमार्थसत्यात्मभावनाप्रचुरां बुद्धिं भुञ्जीथाः अदम्योत्साहेन पालयेथाः। अत एव 'मा गृधः' गृधिमाकाङ्क्षां मा कार्षीः। यदा च, ईश्वरव्यतिरिक्तस्य धनादिपदार्थजातस्य वास्तविकमस्तित्वमेव विचार्यमाणे न सिद्ध्यति, तदा तत्तुच्छपदार्थविषया लालसा कथं कर्तव्या भवेत् ? न कथमपि। 'कस्यचिद्धनं ? आक्षेपोऽयं, न कस्यचिद्धनमस्ति, यतस्तत्काल्पनिकं दृष्टनष्टमेवास्ति, यत् गृध्येत। अतो मिथ्यापदार्थविषयामभिलाषां मा कार्षीः, प्रारब्धवशादप्रार्थितोपनतेन लाभेन शरीरनिर्वाहमात्रं विधेहि, संजातालंप्रत्ययः सन्तुष्टो भव, जीवनेऽपि निःस्पृहः सन् पर्यट।

× × × ×

सर्वप्रकारयाः समुन्नतेर्मूलकारणं मनश्चेन्द्रियाणामैकाग्र्यमेवास्ति, अत एव तत् समस्तशक्तिसमवाप्तिकेन्द्रं जेगीयते विद्वद्भिः। तदन्तरा न कोऽपि मनुजो महानात्मा भवितुं शक्नोति। अनुत्तमधारणा, ध्रुवास्मृतिः सर्वतोगामिनी प्रतिभा च तल्लाभेनैव सम्पादिता भवन्ति। विधीयमानस्तत्पूर्वको विचारो 'बन्दूकगोलकमिव' लक्ष्यभेदने, अव्यभिचरिताबाधितगत्या पर्याप्तो भवति।

× × × ×

प्रलपन्ति लोकाः, हा ! हा ! संसाराकाशेऽस्मिन्निःसारे यत्र कुत्रापि पश्यन्तु भवन्तस्तत्र सर्वत्र दुःखशोकसन्तापाशान्तिमया गर्जन्तो घना एव दरीदृश्यन्ते। न कस्यापि सुखलेशमस्ति, न धनिनः सुखिनो न निर्धनाः सुखिनः। न राजानः सुखिनो न प्रजाः सुखसम्पन्नाः सन्ति। सकलोऽयं संसारसागरो विविधविपत्तिप्रचुरतरङ्गसमाकुलदुःखजलैः परिपूर्णोऽनुभूयते। वरीवृतीति च चिन्तापरम्परामयी

ज्वालामुखी सततं प्रज्वलन्ती सर्वमनुजानां हृदयमन्दिरे। सौभाग्यवशादेकस्याश्चिन्ताया विनिवृत्तावपि द्वितीयस्यास्तस्याः प्रादुर्भावो बोभूयते। एवं तृतीयस्याश्चतुर्थ्याश्च, एवमनया चिन्ताज्वालापरम्परया समस्तं जीवनं निःसारमशान्तञ्चानुभूयते। अत एवास्मात्संसारान्मन उद्विजते उपरमते च। परन्तु दुर्दैववशात्संसारबन्धमोचकः सदुपायोऽपि न लभ्यते। किं कुर्मः क्व गच्छामः। अखण्डानन्दान्वेषणाय सर्वेऽपि वयमजस्रं भ्रमामः। तथापि तादृश आनन्दोऽस्माभिर्नैवासाद्यते।

सत्यम्। लोकानामीदृशं जल्पनं समुचितमेव। परन्तु विश्वस्तव्यम्, संसारोपद्रवनिरासक अखण्डानन्दप्रापकः सदुपायो विद्यत एवेति। स्वतः प्रमाणभूता भगवती श्रुतिः तमनुकम्पया मातृवन्निर्दिशति—यमाश्रित्य भूयांसः पूर्वजा महान्तो मनुष्याः ऋषयश्च कृतार्था अभवन्।

उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत।

अनाद्यविद्याप्रसुप्ताः संसारस्वप्नद्रष्टारो हे जन्तवः! उत्तिष्ठत सदुपायात्मज्ञानाभिमुखा भवत, जाग्रत=अज्ञाननिद्राया घोररूपायाः सर्वानर्थबीजभूतायाः क्षयं कुरुत, कथम्? वरान्=प्रकृष्टानार्यान् श्रोत्रियब्रह्मनिष्ठान् प्राप्य=उपगम्य, तदुपदिष्टं सर्वान्तरमानन्दमसारसंसारातीतमात्मानमहमस्मीति निबोधत=अवगच्छत, नहीदमुपेक्षितव्यमपि तु परमया श्रद्धया समादर्तव्यमिति।

'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः।'

हे मुमुक्षव आत्मतत्त्वबुभुत्सवः! तमेव सच्चिद्रूपमानन्दनिधिमेकमद्वितीयमखिलाधिष्ठानमात्मानं प्रत्यक्स्वरूपं जानथ=जानीत। अन्या वाचोऽनात्मविषया विमुञ्चथ=विमुञ्चत=परित्यजत। यतोऽमृतस्यैष सेतुः, एतदात्मज्ञानममृतस्य मोक्षस्य प्राप्तये सेतुरिव सेतुः संसारमहोदधेरुत्तरणहेतुत्वात्।

'ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्।'

'ओं' इत्यनेन प्रणवमन्त्रेणालम्बनीभूतेनाभ्यस्यमानेनात्मानं ध्यायथ चिन्तयत। आचार्यभूता श्रुतिः शिष्येभ्यः शुभाशीर्वादं वितरति—वः=युष्माकं कल्याणपथपथिकानां स्वस्ति अस्तु, निर्विघ्नमनात्मप्रत्ययतिरस्करणेनाक्षरब्रह्मावाप्तिप्रयोजनमासादयन्तु। संसारमहोदधेः पाराय अविद्यारहितब्रह्मात्मस्वरूपगमनाय प्रभवन्तु।

अत एव ब्रह्मचर्यव्रतमनुतिष्ठन्तो भवन्तः प्रतिश्वासं सविश्वासं 'ओं' मन्त्रस्य मानसिकंजपाभ्यासं विदधतु, तदर्थभावनञ्च। 'ओमित्येतत्सर्वम्' यत्किमपि दृश्यते श्रूयते चिन्त्यते च, तत्सर्वमोम्मयमेवेत्यजस्रं भावयन्तु। सर्वास्पदत्वात्सर्वाभिन्नत्वादोङ्कारस्य ब्रह्मणश्च तथात्वादेकलक्षणत्वादुभयोरनन्यत्वासिद्धेः ॐकारो ब्रह्म एवेति

निश्चित्य सानन्दामद्वैतदृष्टिमासादयन्तु। इयमेव समस्तानर्थव्रातनिवारकममोघं साधनम्। विमलाखण्डानन्दसमवाप्तये अयमेव निष्कण्टकः पन्थाः।

'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।'

ॐकारालम्बनमात्मज्ञानं विहायान्यः पन्थाः कल्याणाय नास्ति।

विषयवैराग्यमन्तरेण भगवद्भजनं न सम्भवति, तत्र प्रधानं विघ्नं देहासक्तिः। तत्त्यागोपायश्च सततमात्मविचारः। नाहं शरीरं न मे शरीरम्, तद् दृश्यमस्ति, तद्द्रष्टाऽहमस्मि, अत एव रागद्वेष-मानापमान-निन्दास्तुत्यादिभिर्निखिलद्वन्द्वैः पृथग्भूतो निर्द्वन्द्वोऽहमस्मि, असङ्गनिर्विकारोऽहमस्मीत्यजस्रं परिभावनीयम्।

अनात्मार्थस्य वैरस्यं बुद्ध्वाऽपि यः पुमान् तद्गोचरां वासनां न परित्यजति, अपि तु भूयो भूयः तां बध्नाति, नासौ नरपदेनाभिधातुं योग्यः किन्तु स गर्दभकल्प एव वेदितव्यः।

वैराग्यमेवाभयं वैराग्यान्नापरं सुखस्य जनकं किञ्चनास्ति, तदवाप्तिसाधनं विषयदोषदर्शनम्। तथा चोक्तं भगवता--

'जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्'

गर्भवासयोनिद्वारनिःसरणं जन्म, सर्वमर्मच्छेदनरूपो मृत्युः, बुद्धिबलतेजोनाशसर्वपरिभवरूपा जरा, ज्वरादयो व्याधयः, अनिष्टवियोगेष्टवियोगजन्याध्यात्मिकादीनि दुःखानि, शरीरस्य वातपित्तश्लेष्माणो मलमूत्रदुर्गन्धरूपाः, स्त्रीपुत्रधनादेश्च मोहशोकादिरूपा दोषाः। तेषामनुदर्शनं पुनः पुनरालोचनमेव वैराग्यबीजम्।

अत एवाभिधीयते गीतासु--

## अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्।

अनित्यं क्षणभङ्गुरं सुखरहितं मनुष्यलोकमिमं प्राप्य मां भगवन्तं परमात्मानं भजस्व। अस्य क्षणभङ्गुरत्वादेव भगवद्भजने विलम्बो न विधातव्यः। अस्य सुखरहितत्वाच्च भजनादन्यः पुरुषार्थो नास्तीति निश्चेतव्यम्। अनित्यस्यासुखस्याप्यस्य लोकस्य परमपुरुषार्थसाधनानुकूलो भगवद्भजनरूप एवायमेको गुणः, अतो महता प्रयत्नेन स सम्पादनीयः। अनेन मानुष्यं जन्म सफलम् अन्यथा तद्व्यर्थं स्यादेव।

(क्रमशः)

# अपौरुषेया वेदाः।

( ले० पण्डित श्रीवेणीरामशर्मा गौडः, वेदाचार्यः महाध्यापको, गोयनका-
संस्कृतमहाविद्यालयस्थ, काशीस्थस्य )

वेदानामार्यैः साकं सामान्यतः संसर्गे सत्यपि त्रैवर्णिकैः सह विशेषतः संबन्धस्तथापि सांप्रतं प्रचुरास्त्रैवर्णिकाः सर्वथा वेदशून्या एव। "वेदेषु किमुल्लिखितमि"ति ज्ञानं तु दूरे आस्तां नाम, तदीयं पुस्तकं बृहत्त्वे कियदित्यपि बहवो न जानन्ति। कियतां च न महतां संस्कृतज्ञानामप्ययं व्यामोहो यद्वेदेषु कोटितोऽप्यधिकश्लोका भवेयुः। अस्तु—



पण्डित श्रीवेणीरामशर्मा गौड़ः, वेदाचार्यः

वेदशब्दो हि ज्ञानार्थकविद्धातुकरणार्थकघञ्प्रत्ययसम्पर्कगृहीतरूपः। वेदशब्दनिर्वचनं कृष्णयजुर्वेदीयभाष्यभूमिकायामैतरेय्याञ्च सायणेनेत्थमकारि—

"वेद्यन्ते ज्ञाप्यन्ते धर्मादिपुरुषार्थचतुष्टयोपाया अनेन स वेदः।"

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥

इत्यपि तत्रैव प्रकटीकृतम्।

श्रुतौ तु अकारान्तो वेदशब्दो द्विप्रकारः समुपलभ्यते—आद्युदात्तः अन्तोदात्तश्च। तस्य अर्थोऽपि द्विविधः। एकः शब्दराशिः, अपरो दर्भमुष्टिरिति। तत्र ग्रन्थराशिवाचकः सर्वोऽप्याद्युदात्त एव (१) कुशमुष्टिवाचकस्तु अन्तोदात्तः (२) अनयोर्द्वयोर्वेदशब्दयोराद्युदात्तान्तोदात्तयोः सिद्ध्यर्थमेव भगवता पाणिनिनाऽपि उञ्छादिगणे (पा० ६।१।१६०) वृषादिगणे (पा० ६।१।२०१) च वेदशब्दद्वयं पठितम्।

भगवान् पाणिनिः शब्दमिमं रूढं योगरूढं च मन्यते। तत्रान्तोदात्तो वेदशब्दः कुशमुष्टिवाचको रूढः (३) आद्युदात्तो वेदशब्दो ग्रन्थराशिवाचको योगरूढः (४) तस्मात्सिद्धमिदं यद्वेदशब्दो रूढः, योगरूढश्चेति द्विप्रकारः।

विचारसरणिमधिरोहणीयमधुना यद्वेदानामपौरुषेयत्वं पौरुषेयत्वं वा? तत्रेमा विप्रतिपत्तयः—वेदा मनुष्यनिर्मिताः? सर्वज्ञसर्वशक्तिमदीश्वरप्रणीताः? कालाकाशादितुल्याः प्रवाहनित्यतया नित्याः? नित्यशब्दराशयः? इति।

पाश्चात्यशिक्षादीक्षिता आधुनिका भारतीया वैदेशिकाश्चार्यावर्त्तनिवासिभिर्महामुनिभिर्निर्मिता वेदा इति सङ्गिरन्ते। वेदनिर्माणकाले यान् यान् देवानस्मरन् तेषां तेषां स्तुतिमकुर्वन्। येषु येषु देशेषु न्यवसन् तेषां तेषां देशानां तत्रत्यानां नदीनां पर्वतानाञ्च चर्चामप्यकुर्वन्। इदमपि तैः साधितं यत् पञ्चसहस्रहायनेभ्यः पूर्वं वेदा नासन्, मध्य एव महर्षिभिर्निर्मिताः, निर्माय च जनतायाः पुरस्तादुपस्थापिताः।

परन्तु विचारधारेयं सर्वथा विपरीता। तदातनेतिवृत्तानवबोधविजृम्भिता चेति प्रकटीकुर्वतो न मनागपि विस्मयलेश उपतिष्ठते। कारणञ्चात्र तैरभिहितमेव श्रोतव्यम् त एव कथयन्ति निश्चाययन्ति च "द्विसहस्रमितहायनपूर्वं पतञ्जलिरभूत्। पाणिनेश्चात्यधिकपूर्वं मीमांसाचार्यस्य काशकृत्स्नेर्जन्म। पतञ्जलिः स्वीये महाभाष्ये काशकृत्स्नेराचार्यस्य वर्णनमकार्षीत् तैरभिहितम्—'काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी' (पा० ४।१।१) पाणिनेश्च समयः खैष्टाब्दारम्भतः सप्तशतवर्षपूर्वम्। इदमपि तन्निर्णीतमेव" ईदृशपरिस्थितौ यदि महर्षीणामेतेषां समये वेदनिर्माणं, तदा ते महर्षयो वेदकर्तृत्वविषये कस्मान्नोदलिखन्।

(१) अथर्व० ४।३।५८ द्रष्टव्यम्।

(२) अथर्व० ७।३६।१ द्रष्टव्यम्।

(३) यः प्रकृतिप्रत्ययावुपेक्ष्य केवलसमुदायशक्त्या स्वार्थमभिधत्ते स रूढ इत्युच्यते।

(४) यः प्रकृतिप्रत्ययावपेक्ष्य समुदायशक्त्याऽर्थमभिधत्ते स योगरूढः।

साम्प्रतिका अल्पबुद्धयोऽपि जना यदा पौर्वकालिकमितिवृत्तमन्विष्यन्ति, तदा किमिति महर्षयो वेदकर्तृ णामैतिह्यं न प्रकटीचक्रुर्वेदानपौरुषेयानङ्गीचक्रुश्च।

महर्षिणा जैमिनिना "उक्तं तु शब्दपूर्वत्वम्" (१।१।२९) इति सूचितम्। अस्यायमभिप्रायः इदानीं ये वेदानधीयते ते गुरुमुखेभ्यो, गुरवश्चापि स्वगुरुमुखेभ्य इत्येवं वेदाध्ययनपरम्परा महता कालेन निरवच्छिन्ना चलतीति भावाविष्कारपरमिदं सूत्रम्। कुमारिलभट्टचरणा अपि श्लोकवार्तिके—

वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा॥

इति वदन्तो वेदानां सार्वकालिकीं स्थितिं निरवच्छिन्नां च वेदाध्ययनपरम्परामङ्गीकृतवन्तः। वेदानां पठनं पाठनं च सर्वथैकरूपेणैव प्रचलति। तदध्ययने मात्रयाऽपि न भिन्नरूपया भूयते। इदमेव कारणं यद् वेदेषु नाद्यावधि पाठभेदो दृश्यते। शतद्विशतवर्षपूर्वनिर्मितदेवस्तोत्रादिषु सुमहान् पाठभेदः समीक्ष्यते। किन्तु वेदेषु नाद्यावधि पाठभेदो दृश्यते।

दाक्षिणात्य-वङ्गीय—गौडादिब्राह्मणान् दूर-दूरदेशादेकीकृत्य यदि पाठः कारितः स्याद्वेदानाम्, तदा तन्मन्त्रेषु न कश्चनापि भेदलेशश्चक्षुर्विषयतामुपगच्छेत् नोच्चारणे भेदो न वा स्वरप्रदर्शने।

एवं परमपूज्यानामीश्वरकल्पानां वेदानां यदि कश्चिदस्ति कर्ता स क इति विस्मृतोऽस्माभिः।

केचिदविदितवेदितव्याः प्रलपन्ति वेदानां पौरुषेयाणां गौरवविवृद्धये कर्तुः स्मरणं नाकार्षुर्मुनयोऽत एवाधुनातना जानन्ति भ्रमाच्चापौरुषेयानवधारयन्ति। आक्षेपमिमं नितान्तमानुचित्यपूर्वकमविवेकसंकलितञ्चावधारये।

ननु ये धार्मिकाः सन्ति, ते स्मरन्तोऽपि कर्तॄन् महाभारतभागवत—वाल्मीकीयादिग्रन्थान् मन्यन्त एव, समाद्रियन्त एव च, तदा तादृशैस्तदधिकबुद्धिवैभवशालिभिरेव वा निर्मितान् वेदान् कथं न ते समाद्रियेरन्। ईदृशः को नाम धार्मिकोऽधार्मिकमण्डलीमण्डनो भवेत् यो नादरं कुर्यादेतेषां सकर्तृकत्वे।

ये चाधार्मिकास्ते श्रुत्वाऽपि न स्वीकुर्वन्त्यपौरुषेयताम्। एवं स्थिते केषां कृते कर्तृविलोपनमिति न शतकृत्वोऽपि विचारयन् निश्चेतुं पारयामि। तस्मान्न वेदानां कश्चित्कर्ता अपि तु वेदानामपौरुषेयतेत्येव सुस्थितः पन्थाः।

कर्तुरुच्छेदो वेदाध्येतृजनसर्वनाशत एव सम्भावयितुं शक्यः। स च सर्वथा युक्तिशून्य एव। यामक्षरराशिमात्रया, बिन्दुनाऽपि च न विपरीतां कुर्वन्तोऽधीयते

सैव श्रुतिः विस्मृतकर्तृका, समुच्छिन्नकर्तृका च सञ्जातेति सुमहत्याश्चर्यपरम्परा। तस्मात्सर्वज्ञ ईश्वरः कल्पान्तरीयं वेदं सुप्तप्रबुद्धन्यायेन स्मृत्वा कल्पान्तरे समुपदिशति हिरण्यगर्भायेति मीमांसकोक्तिरेव प्रमाणसिद्धा ।

अनादिनिधना नित्या, वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी नित्या यतः सर्वाः प्रवृत्तयः ॥
नित्याः वेदाः समस्ताश्च, शाश्वता विष्णुबुद्धिगाः ।
सर्गे सर्गेऽमुनैवैते, उद्गीर्यन्ते तथैव च ॥

अयमभिप्रायो निम्नस्थमन्त्रेणापि बोध्यते तथाहि—

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयञ्च जिन्व ।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥
(ऋ० प० ३४।५८)

विस्पष्टं चैतच्छ्वेताश्वतरोपनिषच्छ्रुत्या प्रतिपादितम्—

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

वेदेषु च नदीनां राज्ञां पर्वतानाञ्च येषां नामानि दृष्टिपथमायान्ति, तानि नित्यवैदिकव्यवहारविषयाणि प्ररोचनार्थानि च । वेदस्थितानां नाम्नां पवित्रत्वात्परवर्त्तिनः स्वपुत्रादिनामानि तैरेव शब्दैः कृतवन्तः । सर्वेभ्यः प्रथमं प्रजापतिर्नामाकार्षीत्तदनन्तरमितरेऽपि तत्पथपथिका बभूवुः । तदुक्तं विष्णुपुराणे (५।६२)—

सर्वेषां स तु नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥

इत्थं वेदानामपौरुषेयत्वमत (१) एव पुरुषसहचरितभ्रमप्रमादविप्रलिप्साकरणापाटवादिदोषसहस्रशून्यत्वं सर्वात्मना प्रमाणीभूतञ्चेति शिवम् ।❀

———•———

(१) सर्वतन्त्रस्वतन्त्रः सर्वदर्शनव्याख्याकारः श्रीमान् वाचस्पतिमिश्रः सांख्याचार्यस्येश्वरकृष्णस्य "दृष्टवदानुश्रविकः" इति द्वितीयकारिकायाः व्याख्यानावसरे सांख्यतत्त्वकौमुद्यामाह—"गुरुपाठादनुश्रूयत इत्यनुश्रवो वेदः । एतदुक्तं भवति—श्रूयत एव परं न केनापि क्रियत इति ।" एतैः शब्दैः स्पष्टीभूतं यद्वेदा अनादयोऽपौरुषेयाश्च ।

❀ लेखकस्य 'वेद-विज्ञान-मीमांसा' पुस्तकस्यायं लेखः । स० सम्पादकः—

## श्रीदीनानाथशर्म्म-शास्त्रि-सारस्वतानां परिचयः।

[ ले०—यशोनन्दशर्मा शास्त्री जयतलः ]

( क्रमागतः )

केचिदेषां लेखैः स्वयोग्यतावृद्धिमाकलयन्। केचिच्च स्वसंस्कृतानुरागे एषां निबन्धान् कारणीभूतान् आख्यन्* पत्रद्वारा। केचिदद्सीयलेखानां सुन्दरसुन्दर-पदानि सङ्गृह्य तेषामुपयोगं कृत्वा स्वनिबन्धान् पर्यष्कार्षुः। एभिः सर्व्वतः प्राक् समाचारपत्रसंसारे जिह्वामूलीयोपध्मानीयविसर्गाणां संस्कृतसमाजेन चिराद् विस्मृतानां प्रचारः प्रारब्धः एतान् दृष्ट्वाऽधुना बहवः पण्डिता अपि तान् प्रयुञ्जते। एभिर्बहूनां विदुषां कृते पद्यबद्धान्यभिनन्दनपत्राण्यपि दत्तानि।

अन्ते वयं परमेशानं रमारमणं पौनःपुन्येन प्रार्थयामहे यद् एषां चिरायुष्ट्वं स्याद्, येनेमे संस्कृतसेवाप्रवणाः, सनातनधर्मस्य प्रचारणपराः, संस्कृतस्य राष्ट्रभाषात्वसाधनपराश्च, संस्कृतानुरागिणां लाभप्रदाः, संस्कृतभाषायास्समुपबृंहकाः, सनातन-धर्म्मस्य च प्रसारका भवेयुः। अथ च धनिकमण्डलमपि प्रार्थयामहे यद्—एषां "श्रीसनातनधर्म्माऽऽलोक" 'निबन्धालोक' प्रभृति ग्रन्थप्रकाशनार्थं धनं विनियुज्य सनातनधर्म्मस्य प्रचारे दक्षिणहस्तायिता भवेयुः। परत्र च फलभाजो भवेयुः।

वयमेषां निबन्धमहत्त्वविषये सनातनधर्म्माऽभिज्ञताविषये च स्वयं विशेषतो न लिखित्वाऽन्येषां विदुषां समाचारपत्रेषु प्रकाशिताः† सम्मतीस्ततोऽविकलमुद्धरामः। पाठकाः स्वयमेव दृष्ट्वाऽस्मत्कथनं परीक्षन्ताम्। तथाहि—

(१) "दीनानाथ सहायं वचनपथातीतमहिमानम्।
अतिदुर्लभ 'सारस्वत' वैभव'सूर्योदयं' वन्दे" ॥ ८ ॥

इति 'सूर्य्योदय'-पत्रवर्णनाऽवसरे काशिकाः श्रीमदनन्तरामशास्त्रिवेतालाः साहित्याचार्याः 'सूर्योदये' १।१६ पृ० १।

(२) 'मूलत्राणस्थसंस्कृतविद्यालयाध्यापकाः श्रीमन्तः पण्डितदीनानाथशर्म-शास्त्रिणः सारस्वतमहोदयाः सूर्योदयपाठकानां नूनमेव परिचिताः सन्ति। सचेतस

---

* आख्यन्। लुङि ख्याञादेशे अङि आतो लोपे रूपमिदम्।

† सम्मतीः। शसि रूपमिदम्।

एते ग्राहकसंख्यावर्द्धनेन स्वीयसमुत्कृष्टप्रबन्धप्रदानेन च सूर्योदयमुपकुर्वन्ति समनु गृह्णन्तीति न तन्महोपकारं विस्मर्तुं शक्नुमः'। सूर्योदये ४।४ पृ० ४ सम्पादकाः श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः।

(३) 'लेखलेखनकलाकुशलेन अलीपुरस्थसनातनधर्मसत्सङ्गि-पाठशालाभूतपूर्व-प्रधानाध्यापकेन सम्प्रति च मूलत्राणस्थ-सनातनधर्मकालेजमहाध्यापकान्यतमेन श्रीपण्डितदीनानाथशर्मशास्त्रिमहाभागेन संस्कृतभाषा जननी जननीव सादर-मसेवि। भवल्लेखैः संस्कृतसंसारे ख्यातिप्राचुर्यमवेदि। यत् सत्यं श्रीमता संस्कृत-विद्यार्थिनो बहूपाकृषत। भवतां स्वेष्टदेवं चिरायुष्ट्वं याचे। संस्कृतस्य सर्वेषु पत्रेषु 'पीयूषपत्रिकां' विहाय तत्रभवता भवता लेखाः प्राहीयन्त।' सूर्योदये १०।८ अङ्के-२१९ पृष्ठे अलीपुर-(मुजफ्फरगढ़) स्थ—राजकीयविद्यालयसंस्कृताध्यापकाः श्रीगङ्गाविष्णुशर्मशास्त्रिणः ओ० टी०।

(४) 'भोः सुप्रभातसम्पादकाः! व्यतीताङ्केषु 'संस्कृतशिक्षादुरवस्था, इति शीर्षकलेखः पञ्चहायनेभ्यः पूर्वं 'सुप्रभाते' विद्वत्तल्लजैर्मूलत्राणवास्तव्यैः श्रीदीनानाथ-शास्त्रिभिः प्रकाशितान्निबन्धात् तस्य प्रकृतोपयोगितां समालक्ष्य मया संगृह्य लिखित आसीत्। अतस्तान् अहं सप्रश्रयं सानुतापञ्च प्रार्थये क्षन्तुम्' सुप्रभाते ११।१० पृ० १७४। श्रीगोपाललाल गोस्वामी।

(५) वेदेषु देवतावर्णनम् श्रीयुत पं० बुद्धदेवविद्यालङ्कारस्य 'श्रियाः' गत-सञ्चिकायां शीर्षकेणाऽनेन प्रथमो लेखः प्रकाशितोऽभूत्। विदुषा श्री पं० दीनानाथ शास्त्रिणा मुलताननगरस्य सनातनधर्मसंस्कृतकालेजाध्यापकेन अस्मिन्नेव विषये (तत्खण्डनात्मकः) समीचीनो लेखः प्रेषितोऽस्ति। निबन्धस्य चाऽस्य रसं पाठकाः श्रियोऽङ्केऽस्मिन्नेवाऽऽस्वादयेयुः। सहर्षं प्रथमस्थाने एव प्रबन्धोऽयं प्रकाशितः' श्रीनगरप्रकाश्यमान 'श्री' पत्रिकायाः ४।१ अङ्के ३४ पृष्ठे सम्पादकाः डा० कुलभूषण-डी० पी० एच (लण्डन) महाभागाः।

(६) 'पं० दीनानाथमहाभागस्य लेखा यद्यपि विद्वत्तापूर्वका वेदशास्त्र-प्रमाणयुक्ता भवन्ति; तथापि अतिदीर्घत्वाल्लेखानां न वयं श्रियः पृष्ठेषु सर्वेषां प्रकाशने क्षमाः। संमाताय महाभागस्य अस्माभिः प्राप्तो लेखः प्रकाश्यते' 'श्री'पत्रिकायाः ५।२ अङ्के १६ पृष्ठे तत्सम्पादकाः डा० कुलभूषणमहोदयाः। इमा ^ पङ्क्तयः सम्पादकमहोदयेन स्नातकधर्मदेवलेखस्य अस्मच्चरितनायकद्वारा खण्डनात्मके दीर्घ-

निबन्धे प्रेषिते लिखिताः। परं पुनः पत्रव्यवहारे जाते शास्त्रिमहोदयानां १०० पृष्ठ-निबन्धप्रकाशनं सम्पादकेन स्वीकृतम्। अधुना स लेखः प्रकाशित प्राय एव।

(७) 'पं० विश्वदेवशास्त्रिणाऽन्त्यजानां मन्दिरादिप्रवेशो लेखः प्रकाशित आसीत् यद्यपि तस्योत्तरं नाऽपेक्ष्यतेऽस्माभिः, तथापि सम्मानार्थं श्रीपण्डितदीनानाथस्य ३८ पृष्ठात्मको बृहल्लेखस्तस्य विरुद्धेऽस्माभिः प्रकाशितः। तस्योत्तरं श्रीमता विश्वदेवेन न प्रेषितम्'। 'श्री' पत्रिकायां ५।२ पृ० १८ सम्पादकाः पं० कुलभूषणाः।

(८) "'संस्कृत'स्य राष्ट्रभाषाङ्के बहवः शोभना लेखाः.........( श्रीदीनानाथशास्त्रिलिखित ) 'गीर्वाण्यावाण्या विषये विविधविचारधारा' इत्यादयः सन्ति" श्रीपत्रिकायां ५।३ पृ० ८ पत्रिकाप्रधानसम्पादकाः श्रीकुलभूषणमहाभागाः।

(९) 'श्रीमतः पण्डितदीनानाथस्य दीर्घो लेखो मुद्रणालये सर्वेभ्यः प्रथममेव प्रेषितः, तदनन्तरमन्ये लेखाः' 'श्रीः' ६।१-२ पृ० २२ सम्पादकाः।

(१०) 'अमरभारत्या लेखकेषु.....मुलतानस्थ-सनातनधर्मसंस्कृतकालेजाध्यापक पं० श्रीदीनानाथशर्माणः सारस्वतमहोदया अपि अमूल्यैर्दुर्लभैः स्वलेखैरवसरेऽवसरेऽमरभारतीमभूषयन्-इति तेभ्योऽमितान् धन्यवादान् प्रदाय सर्वदेत्थमेव तैरमरभारती निध्यातव्येति तान् साञ्जलि प्रार्थयामहे' अमरभारती पत्रिकायाः २।१-२-३-४, संयुक्ताङ्के ५ पृष्ठे तत्सम्पादकाः काशिकराजकीय-सरस्वतीभवनपुस्तकालयोपाध्यक्षसाहित्याचार्यसाहित्यवारिधि खिस्ते-इत्युपाह्व पं० नारायणशास्त्रिणः।

(११) 'प० दीनानाथशास्त्रिसारस्वत प्रभृतीनां सुलेखकानां महनीयेन लेखसाहाय्येन सुचिरमुपकृता वयमग्रेऽपि तेषामितोऽप्यधिकां कृपादृष्टिं कामयामहे' अमरभारती २।१२ पृ० ६ सम्पादकाः साहित्यवारिधि-श्रीनारायणशास्त्रिणः खिस्ते।

(१२) 'राष्ट्रभाषाङ्कस्य विषयसूच्या निर्माणे संस्कृतभाषा सुप्रसिद्धसेवकैः सर्वविषयलब्धोत्कृष्टवैदुष्यैः श्रीमद्भिः पं० दीनानाथशास्त्रिभिर्मुलतानसंस्कृतकालेजाध्यापकैर्या मदीया सहायता कृता; तदर्थं केवलं कृतज्ञतावनतमस्तकस्तान् धन्यवादपरम्पराभिः सम्मानयामि' साप्ताहिक-'संस्कृत' पत्त्रस्य राष्ट्रभाषाङ्के तत्सम्पादकाः प० कालीप्रसादशास्त्रिणः ७।१ पृ० ४।

(१३) 'राष्ट्रभाषाङ्कपरिशिष्टाङ्कप्रकाशनावसरे विषयसूचीनिर्माणे या मदीया सहायता......सनातनधर्मकालेजमुलतानाध्यापकैः प० दीनानाथशास्त्रिभिः कृता; तदर्थं तेषामग्रे केवलं कृतज्ञतावनतमस्तक एव तिष्ठामि' 'संस्कृतम्' पत्त्रस्य राष्ट्रभाषापरिशिष्टाङ्के सम्पादकाः प० कालीप्रसादशास्त्रिणः ८।११ पृ० ३६।

(१४) 'आगरानगरस्य कश्चित् सप्ततीर्थः श्रीशङ्कराचार्यभारतीकृष्णतीर्थमहाराजं पृच्छति, किमार्यसमाजो नास्तिकः ? भङ्गाभट्टस्य मते वेदान्ताचार्येणाऽयं प्रश्नो दयानन्दकुण्डलीद्रष्टुर्मुलतानीय पं० दीनानाथस्याऽन्तिके कर्तव्यः' 'संस्कृतम्' पत्रे ७।७ पृ० भङ्गाभट्टः।

(१५) 'मया प्रायः सम्पूर्ण एव 'संस्कृत'स्य 'राष्ट्रभाषाङ्कः' समवलोकितः पर्यालोचितश्च। अक्षिलक्ष्यीभवन्ति चाऽत्र विशेषशेमुषीजुषां विदुषां सोपपत्तिकाः सारगर्भाः संस्कृतप्रचुरप्रचारचतुरा भूयांसोऽतिसरलाः सुलेखाः। यश्च तत्रभवता प० दीनानाथशास्त्रिणा मुलतानसं०कालेजाध्यापकेनोपनिबद्धो निबन्धः, स चाऽतीव विलक्षणो मृतप्रायानप्युज्जीवयति; तस्याऽहं पुस्तकाकारेण प्रचारं समीहे। इतरेऽपि सन्ति सर्व एव लेखाः साधवः। अयमपि जनः प्रथमं विनष्टोत्साहसन्नाहः पुनः ( पं० दीनानाथशास्त्रिप्रणीत ) 'गैर्वाण्यावाण्या विषये विविधविचारधारा'ऽवसेकाऽसिक्ततनुर्नव इव समजनि। अयमपि जनस्तेष्वात्माऽवमानिष्वन्यतमो 'गैर्वाण्यावाण्या विषये विविधविचारधारया' (पं० दीनानाथशास्त्रिनिबद्धया) पुनरुज्जीवितः" साप्ताहिक 'संस्कृत' पत्रे ८।९ पृ० ७ श्रीमदुदासीन-कविकान्ता निगमानन्द परमहंसाः।

(१६) 'मुलतानसंस्कृतकालेजाध्यापकस्य श्रीदीनानाथशर्मशास्त्रिणो 'गैर्वाण्या वाण्या विषये विविधविचारधारा' शीर्षके लेखे संस्कृतभाषेतिहासस्य सिंहाऽवलोकनं विद्यते; तथा संस्कृतस्य राष्ट्रभाषात्वनिर्माणोपायः'। लखनऊस्थे अर्द्धसाप्ताहिके 'आनन्द' पत्रे २७२ संख्यायां तत्सम्पादकाः।

(१७) प्रायः शतपृष्ठावकाशाकाशव्यापिनि अस्मिन् संस्कृतस्य राष्ट्रभाषाङ्के चत्वारिंशदवराः संस्कृतभाषाविषयकगुरुलघुभूता उत्तमोत्तमा लेखा विराजन्ते। ते सर्वेऽपि स्वस्वाभिधेयप्रकटने कामं समर्था इति निश्चप्रचम्। उदाहरणत्वेन (श्रीदीनानाथशास्त्रिणो) 'गैर्वाण्या वाण्या विषये विविधविचारधारा' अयमेक एव प्रभवेदस्मदभिप्रायं संवदितुम्" 'मीमांसाप्रकाश' पत्रे पूना, पञ्चमाङ्के तत्सम्पादकाः।

(१८) 'प्रतापचरित' नामकाव्यस्याऽस्य भूमिका भारतप्रसिद्धवैदुष्यैरनवद्यगद्यलेखकैः श्रीदीनानाथशास्त्रिभिर्लिखिता—इति कृतज्ञा वयं तेषाम्' जयपुरस्थ-'संस्कृतरत्नाकरे' ४।३ पृ० ७७ श्रीमहावीरप्रसादजोशीकविरत्नकाव्यतीर्थाः।

(१९) 'सूर्योदय'स्य समालोचनावसरे 'संस्कृतरत्नाकर' सम्पादकाः— "मुलतानस्थ पं० श्रीदीनानाथशास्त्रि—निबद्धो वेदपुराणैकवाक्यताविषयको लेखोऽपि

बहुपाण्डित्यगवेषणापूर्णो भूयसीं प्रतिष्ठामर्हति' ४।११ अङ्के, ३३३-३४ पृष्ठे पं० श्रीसूर्यनारायणशास्त्रिव्याकरणाचार्याः।

(२०) 'सनातनधर्मपताकापत्रे' 'ब्राह्मणसर्वस्व' पत्रत उद्धृतस्य पं० दीनानाथशास्त्रि-लेखस्य समालोचनावसरे माननीयै 'रत्नाकर' सम्पादकैः पं० श्रीसूर्यनारायणशास्त्रिव्याकरणाचार्य्यमहोदयैर्निजहार्दिकभावा इत्थं प्रकटिताः—



पण्डित दीनानाथशर्मा शास्त्री सारस्वतः
सनातनधर्म संस्कृतकालेजाध्यापकः

"स्वामिनो दयानन्दस्य मतखण्डने परमकुशलस्य, पौराणिकाख्यानोपपत्तिसाधनदृढव्रतस्य, चतुर्ष्वपि वेदेषु कृतश्रमस्य, तन्द्रालस्यादिवैदुष्यविघातकदोषसम्पर्केण सर्वथा विवर्जितस्य, निरन्तरस्वाध्यायशीलस्य, संस्कृतनागर्युभयभाषालेखपद्धतिनिष्णातस्य, मूलत्राणनगरस्थसनातनधर्मकालेजोपाध्यक्षस्य, महापण्डितस्य, श्रीदीना-

नाथशर्मशास्त्रिणः 'अगस्त्य ऋषि का समुद्रपान' इति शीर्षकयुक्तो युक्तिप्रमाणोपपत्तिसमर्थितो लेखोऽपि लेखकमहोदयस्य गम्भीरं ज्ञानमात्यन्तिकं सनातनधर्मश्रद्धालुत्वं च प्रमाणयति। एतस्य बुधवरस्य लेखा 'रत्नाकरे'ऽपि प्रतिमासं प्रकाश्यमानाः परितोषयन्त्येव पाठकानां चेतांसि। अस्मिन्नेव तु मासे केनाऽपि कारणेन न प्रहितोऽनेन महात्मना 'रत्नाकरे' लेखः [ एभिस्तु प्रेषित आसीत्; परं पत्त्रवाहकानामुपेक्षया क्वचित् *प्रनष्टो भवेत्। एतत्सूचनापठनोत्तरमस्मच्चरितनायकेन स पुनः प्रेषितः] परं भविष्यति न स्यादेवंविधा त्रुटिरिति मन्यामहे श्रीदीनानाथानुकम्पाबद्धश्रद्धाः" ५।७ अङ्के २२२ पृष्ठे 'रत्नाकर' सम्पादकमहाभागाः।

(२१) 'श्री'पत्त्रिकासमालोचनाऽवसरे 'रत्नाकर' सम्पादकमहोदयैर्लिखितम्—"विवाहवयोविवेचनाविषयक 'आर्यसमाजवनविहरणशीलहरिणकुलमर्दनकेसरिणः श्रीदीनानाथशास्त्रिणः सुदीर्घो लेखोऽत्राऽपि विराजते' 'संस्कृतरत्नाकरे' ५ ७ पृ० २२३ पं० श्रीसूर्यनारायणशास्त्रिणो व्याकरणाचार्याः।

(२२) "अस्मद्विधाने यदि संशयस्तर्हि चाऽस्मिन्नेवाऽङ्केऽन्यत्र प्रकटिते विद्वदग्रेसराणां सकलशास्त्रसागरालोडनचतुराणां श्रीदीनानाथशास्त्रिणां, प्रतिवादिमुखमर्दनक्षमः, सकलसंशयविच्छेदकः, प्रमाणपरिबृंहितः, प्रबलयुक्तिपराहतदुराक्षेपः, सरसतरोऽन्त्यजानां देवमन्दिराऽप्रवेशाऽस्पृश्यताविषयकलेखोऽनुवाच्यतां सादरं मननगोचरीकरणीयश्च, येन दुराग्रहमूलका दुरालापा विलीयेरन्" बेलगामस्थ 'मधुरवाण्यां' तत्सम्पादकाः श्रीरामाचार्य श्रीनिवासाचार्यमहोदयाः ३।९ अङ्के ७ पृष्ठे।

(२३) "इदं च पुनः सानन्दं सपर्यते यत् सारस्वतकुलपयोधिचन्द्रिराणां सकलकलामन्दिराणां श्रीदीनानाथशास्त्रिशर्मणां लेखनकलाचातुर्यं नाम, येन किल सनातनधर्मविद्वेषकलुषितान्तःकरणानाम् आपातरमणीयविषयविवेचनप्रमुषितपामरजनमनोवृत्तीनां धर्मसुधारक-धौरेयाणां लोकवञ्चनचातुरी न खलु स्थिरपदं तिष्ठति। न वा फलति तेषां मनसि ये पुनः शास्त्रिमहाशयानां लेखान् सोपपत्तिकं सप्रमाणोपन्यासं च सनातनधर्मसमर्थनपरान् सविमर्शमावर्तयन्ति। अतिरोहितमेवैतद् यच्छास्त्रिमहाशयानां 'मधुरवाणी' प्रकाशितान् अष्टौ लेखान् हृदि विभावयतां प्रज्ञानामिति"। 'मधुरवाण्याः' ३।११ अङ्के पृ० १८ पं० एम. वेंकटाचलस्वामिशास्त्रिणो विपणिपुरस्थाः।

* प्रनष्टः। 'नशेः षान्तस्य' इति णत्वनिषेधः।

इमे मुद्रिता उद्वारा उक्तमहानुभावैः स्वयमेव प्रकटिताः स्वान्तर्हृदयप्रेरणया। अन्ये लिखितपत्त्रलिखिता अप्यस्मच्चरितनायकपार्श्वे समागताः सन्ति। तान् वयमवसरान्तरे प्रकाशयितास्मः। एषां निबन्धा एकस्मिन् पत्रे मुद्रिता पत्रान्तरेऽपि तत्सम्पादकैरुद्ध्रियन्ते। केषाञ्चित् संस्कृत-हिन्दीपत्रसम्पादकानाञ्च, एषां पार्श्वे निबन्धप्रेषणार्थमाग्रहपूर्णपत्राण्यपि समायान्ति। अस्माभिरेषां परिचयप्रदानाऽवसरे लेशतोऽप्यत्युक्तिर्न स्थापिता; यत्सत्यं तन्निवेदितम्। अयं जनस्तदीयशिष्येषु अन्यतमः। अत्रैव च स्वनिबन्धं विरमयति। शम्।

---

## प्रयागे 'नाटकम्'

कार्त्तिकमासस्य शुक्लपक्षे शुक्रवासरे षष्ठीतिथौ तदनुसारतः नवम्बरमासस्य १७ तारिकायाम् अहियापुरप्रयागीय-श्रीधर्मज्ञानोपदेशसंस्कृतपाठशालीयच्छात्रैर्महामहोपाध्याय श्रीमथुराप्रसाददीक्षितप्रणीतन्नूतनं "विजयप्रतापनाम नाटक" मभिनीतम्—अभिनयदर्शनाय बहवः प्रयागीयाः पण्डिता नागरिकाश्च समागता आसन्। तेषु प्रसिद्धतमास्संयुक्तप्रान्तीय "धारासभा" सभापति माननीय-श्रीपुरुषोत्तमदासटण्डन' 'डा० बाबूरामसक्सेना' 'डा० उमेशमिश्र' 'डा० धीरेन्द्रवर्म्म, आयुर्वेदपञ्चानन पं० जगन्नाथप्रसादशुक्ल, रायबहादुर पं० सदायतनपाण्डेय श्रीसङ्गमलाल एम० ए० एल्० एल्० बी० 'पं० कमलाकान्तमिश्रव्याकरणवेदान्ताचार्य' साहित्यशास्त्रि पं० शेषमणिमिश्रव्याकरणाचार्य "साहित्याचार्य पं० कटेश्वरप्रसाद त्रिपाठिप्रभृतयस्सज्जना आसन्। नाटकस्याऽभिनयस्सर्वथा हृद्यतमः प्रशंसनीयश्चाऽऽसीत्। नाटके कियद्भ्यः—अभिनेतृभ्यः तदभिनयोपरि मुग्धीभूय समागतसज्जनै रजतपदकानि प्रदत्तानि। तेषु नाटकस्य प्रधाननायक 'महाराणाप्रताप' अभिनयकारकाणां काव्यतीर्थ पं० भूपेन्द्रपतित्रिपाठि व्याकरणाचार्य्याणां कृते प्रयाग-वैदिकसंस्कृतपाठशालीय-प्रधानाध्यापक पं० सोमेश्वरदत्तपाठकमहोदयैः स्वर्णपदकमपि प्रदत्तम्। बहुभिर्महोदयैस्सहानुभूतिसूचकपत्रमपि प्रहितम्। तत्रोल्लेखनीयम्—"लीडर' पत्रप्रधानसम्पादक सर् सी० वाई० चिन्तामणि "व्याकरणाचार्य पं० त्रिभुवननाथ उपाध्याय एम० ए०" 'नाटक प्रणेतृ-महामहोपाध्याय पं० मथुराप्रसाददीक्षित' काशी हिन्दुविश्वविद्यालयीय व्याकरणाचार्य पं० कालीप्रसादमिश्रमहोदयानाम्।

नाटकाऽन्ते माननीय-श्रीपुरुषोत्तमदासटण्डनमहोदयैस्स्वकीये व्याख्याने कथि-

तम्—"यद् संस्कृताध्यायिभिः प्रगत्यनुकूलं विश्वतोमुखमध्ययनं केवलमनुपेक्षणीयमपि तु अग्रेसरैरेव सर्वकर्म्मसु प्रधानत्वेनाऽभिमुखं वर्त्तनीयम्। येन मिथ्या सत्यं वा शिरोवेष्टितं तल्लाञ्छनं विलीयोज्ज्वलतामभिविशेत्।

डा० बाबूरामसक्सेनामहोदयैस्स्वकीये व्याख्याने जल्पितम्—यद्—भवन्तः वीररसपरिपूर्णसमयाऽनुकूलं संस्कृतनाटकम्—अभिनीय 'मृतभाषेयम्' इति साम्प्रतिकजनानां प्रवादं दूरीकुर्वन्तु। भवदुत्साहश्च सर्वदैव सर्वथैव प्रशंसनीयः।

प्रभातमिश्रः—प्रयागस्थः।

---

## सामयिक-समाचार-धारा।

अयोध्या—गतदिसम्बरमासस्य १० मतारिकायां रविवासरे प्रातर्दशवादनवेलायामयोध्यास्थतोताद्रिमठमहान्तानामद्वितीयवैदुष्यजुषां श्रीस्वामिरामप्रपन्नाचार्यशास्त्रिमहाराजानां परमपदप्राप्तिरभूत्। तदुद्दिश्य वैष्णवानामनेकाः शोकसभा अनुष्ठिताः। इदानीं तत्कार्यभारं दिवङ्गतस्वामिमहाभागैरादिष्टाः श्रीस्वामिसुदर्शनाचार्यमहाराजाः सञ्चालयिष्यन्ति।

× × × ×

सिन्ध—सिन्धप्रान्ते सैनिकशिक्षाया महाविद्यालयस्य निर्माणार्थं कराचीनगरस्थ श्रीनरमदासमहोदयेन एकलक्षरूप्यकाणां प्रदानं प्रतिज्ञातम्। कराचीस्थ हिन्दूमहासभायाः सभापतिः श्रीशामदास पी० गड़वानी, डा० मुञ्जे प्रभृतीन् हिन्दुनेतॄन् निमन्त्रितवान् शीघ्रातिशीघ्रं महाविद्यालयस्योद्घाटनाय।

× × × ×

कलकत्ता—श्रीयुगलकिशोरविडलामहोदयो वंगप्रान्तीयहिन्दूनां व्यवसायिकशिक्षायै औद्योगिकशिक्षायै च प्रतिवर्षं ३६००० रूप्यकाणां प्रदानाय वचनं दत्तवान्।

× × × ×

काशी—काशीवैदिकसाहित्यस्य भारतप्रसिद्धविदुषां स्वर्गीयश्रीमधुसूदनझाविद्यावाचस्पतिमहोदयानां प्रधानशिष्याः श्रीमोतीलालशास्त्रिणो वेदवाचस्पतयः सार्द्धैकमासात् काश्यां वैदिकवाङ्मयस्य विभिन्नविषयेषु वैज्ञानिकव्याख्यानमकुर्वन्। काश्याः पण्डितसभा-नागरीप्रचारिणीसभा-स्याद्वादमहाविद्यालय-प्रभुदत्तवेदविद्यालय-मारवाड़ीसंस्कृतकालेज-दयानन्द-इण्टर-मीजियेटकालेज-दरभङ्गाराजकीयराममन्दिर-

प्रभृतिषु विशिष्टस्थानेषु नैकवारं सनातनधर्मसिद्धान्तानामुपरि चमत्कारपूर्णां वैज्ञानिकव्याख्यामवकर्ण्य साधारणजनता विशिष्टविद्वांसश्च नितरां मुग्धमानसाः श्रद्धालवश्च सम्पन्नाः । शास्त्रिमहोदया महामनसां मालवीयमहोदयानामतिथिरूपेण हिन्दूविश्वविद्यालये निवसन्ति ।

× × × ×

कर्णपुरम्—जनवरीमासस्य षष्ठतारिकायां कर्णपुरस्थानां चतुर्णां महाविद्यालयानां २००० विद्यार्थिनो मिलित्वाऽसहयोगं कृतवन्तः । अन्तिम-( फाइनल ) परीक्षायां सम्मिलितुं काश्चिन् छात्रानधिकारिणः सम्मतिं न दद्युरिति तैरस्य विरोधे विद्यालयेभ्योऽसहयोगः कृतः ।

× × × ×

कलकत्ता—दिसम्बरमासस्य २८-२९-३० तारिकासु सर्वभारतीयहिन्दुमहासभाया एकविंशतितममधिवेशनं वीरश्रीविनायकदामोदरसावरकरमहोदयानां साभापत्ये सुमहता समारोहेण सम्पन्नम् । अत्र स्वागताध्यक्षपदं धर्मालङ्कार सर मन्मथनाथमुकर्जीमहाशयेन स्वीकृतमासीत् । बहुसंख्यकदर्शकजनातिरिक्ताः प्रतिनिधयः ५००० संख्यका आगच्छन् । बङ्गप्रान्तीयमिदमधिवेशनं गतसर्वाधिवेशनापेक्षया व्यापकं सुसङ्घटितं सफलञ्चाऽभूत् ।

× × × ×

कलकत्ता—दिसम्बमासस्यान्तिमे सप्त हे नेपालमहाराजानां श्रीयुद्धशमसेरजङ्गबहादुरराणामहोदयानां शुभागमनेनात्र सप्ताहं यावत् महान् हर्षसमारोह आसीत् । कलकत्ताकारपोरेशनद्वारा विविधाभिरन्यसंस्थाभिश्च महाराजेभ्योऽभिनन्दनपत्राणि सादरं सश्रद्धं समर्पितानि । जनवरीमासस्य तृतीयतारिकायां महाराजाः कालिकातातः जसीडीहं प्रति प्रस्थिताः । धूमशकटारोहणावसरे २१ शतघ्नीभि ( तोप ) स्तेषां प्रास्थानिकं सम्पादितम् ।

× × × ×

काशी—जनवरीमासस्य १९ तारिकायाः प्रातःकाले अग्रगामिदलनेतारः श्रीसुभासचन्द्रबोसमहोदयाः समागताः । महता समारोहेण तेषां स्वागतं संवृत्तम् । सायंकाले नगरभवने ( टाउनहाल ) व्याख्यानं दत्तवन्तः ।

× × × ×

नागपुरम्—अखिलभारतवर्षीय-वर्णाश्रमस्वराज्यसङ्घस्य आगामिवार्षिकमधिवेशनं मार्चमासस्य २८-२९-३० तारिकासु नागपुरे भविष्यतीति गत १७ तारि-

कायां कलिकात्तायामधिविष्टा कार्यकारिणीसमितिर्घोषितवती । अन्येऽपि कतिपय-
ःस्तावाः स्वीकृताः ।

× × × ×

काशी—जनवरीमासस्य मत १३ तारिकायां महामण्डलीयमन्त्रिसभाया एकम-धिवेशनं महामण्डलभवने धर्मालङ्कार-सर मन्मथनाथमुकर्जीमहोदयस्य ( भूतपूर्व-कालिकाताप्रधानन्यायालयाध्यक्षस्य ) सभापतित्वे सम्पन्नम् । यस्मिन् स्थानीया वाह्याश्च वहवः प्रतिष्ठितसज्जनाः समभिलन् । अनेके नवीना अपि सदस्या निर्वाचिताः। एकाऽपराऽपि समितिर्निर्मिता या वर्तमानदेशकालौ दृष्टिकोणे निधाय महामण्डलीय-नियमेषु समुचितपरिवर्तनपरिवर्द्धने विधास्यति । आयव्ययनिरीक्षणार्थमपि अर्थ-समितिरेका नियुक्ता ।

× × × ×

मुजफ्फरपुरम्—अ० भा० मैथिलमहासभाया वार्षिकमधिवेशनमागामि फरवरी-मासस्य २५-२६ तारिकयोः सम्पत्स्यते । यत्र महाराजाधिराजदरभङ्गानरेश्वरः सभा-पतिपदमलङ्करिष्यति ।

× × × ×

रामगढ़—अखिलभारतीयराष्ट्रियमहासभाया वार्षिकमधिवेशनं मार्चमासस्य १९-२०-२१ तारिकासु विहारप्रान्ते हजारीबागसमीपस्थे रामगढे भविष्यति । सभा-पतिपदे मौलाना अबुलकलाम आजादमहोदयाः स्थास्यन्तीति अनुमीयते ।

—०—

## सूक्तिसुधा ।

मनोभूमौ जाता प्रकृतिचपलायां विधिवशात्,
सखे संवर्द्धव्या प्रचुरगुणपुष्पप्रसविनी ।
यथा नेयं ग्लानिं व्रजति सहसा स्नेहलतिका,
तथा संसेक्तव्या स्मरणसलिलेनानुदिवसम् ॥

"श्री उभयवेदान्ताचार्यसिंहासनाधिपतिविद्वान्" अभिनवसरस्वती विद्वच्छिरो-मणिपण्डितराजनाडदुर कृष्णमाचार्यस्वामिगल महोदयस्य ।

लक्ष्मीमन्दिरम् ( मद्रास )

पञ्चदशे वर्षे १५ ] माघ-पूर्णिमायाः १९९६ फरवरी १९४० [ ८ संख्या

अखिल भारत वर्षीय

संस्कृत विश्व विद्यालयः

तस्य मुखपत्रम्

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—
त्यक्त-महामहोपाध्यायपदवीको
महामहाध्यापकः श्रीपञ्चानन-तर्करत्न-भट्टाचार्यः।

सहकारि-सम्पादकः—
अवधेशप्रसादशर्मा द्विवेदः

उद्गम—स्थानम्—
श्रीभारतधर्ममहामण्डलम्, जगत्‌गंज, काशी।

—:०:—

वार्षिकं मूल्यं मुद्रात्रयम्।
संरक्षकेभ्यः ५) वहिर्भारतम् ६) छात्रेभ्यः पुस्तकालयेभ्यश्च १)

# विषय-सूची ।

—०—



—०—

---

[ २०८ पृष्ठविशिष्टोशः ]

एवं स्त्रीरत्नेषु, तिर्यग्जन्तुषु च भक्तिभरिताः भगवन्तमर्चयामासुः परां काष्ठां श्रेयसः प्राप्नुवन्तिस्म इति च श्रूयते। लोकेऽस्मिन्नपि भगवद्भक्तिभावितान्तःकरणा महान्तस्तत्र तत्र विलसन्ति। येऽप्यन्यमतावलंबिनः, निरीश्वरवादिनः तेऽपि भगवद्ध्यानेनैव पूता भवन्ति। येन केनापि वा कारणेन, कार्येण वा, इच्छयाऽनिच्छया वा सर्वे प्राणिनः कदाचिदपि वा भगवन्तं स्मरन्त्येव। भगवद्भक्तेः न देशकालावस्थावयोरूपादि निर्दिश्यते। भगवद्भक्तिमार्गोपदेष्टारो महान्तस्तत्रतत्रोपदिशन्ति। तेषामुपदेशश्रवणेन भगवद्भक्तिवर्धनशीलैर्ग्रन्थजालावलोकनेन च सर्वेऽपि भगवति भक्तवत्सले सर्वलोकशरण्ये परां भक्तिमवश्यं कृत्वा सर्वानन्दानामुपरि वर्तेरन्निति सत्संप्रदायमार्गोपदेशिनामाचार्यवर्याणामाशयः।

—०—

# सूर्योदयः ।

पञ्चदशवर्षे १५ } माघ-पूर्णिमायाः १९९६, फरवरी १९४० । { ८ मी संख्या


## पुनर्जन्मवादः ।

सम्प्रति भारते पाश्चात्य-शिक्षाप्रभावेणैवं विकृत-मस्तिका नरा जायन्ते, येषां कुबुद्धिपरिवर्तनं ब्रह्मणाऽपि कर्तुं न पार्य्यते । तेषां कृते भर्तृहरिणोक्तं पद्यमेव समीचीनं विद्यते तथाहि—

"अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञान-लवदुर्विदग्धं ब्रह्माऽपि तं नरं न रञ्जयति ॥

ते हि सम्प्रति पाश्चात्य-मनोविज्ञान-विद्याविभूषिता आत्मानं कृतकृत्यम्मन्यमानाः सर्वानपि पूर्वान् प्राचीनान् महर्षीन् मुनीन् मनीषिणोऽतिशय्यात्मानं पण्डितं मन्यन्ते । ते हि पुनश्चार्वाकमतमिह सर्वश्रेष्ठं मन्यमानाः—

"न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः ।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥"
"यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिवेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥"

इति तत्सिद्धान्तानुरूपमेव स्वयं व्यवहरन्ति, अन्यांश्चोपदिशन्ति । अतश्च तान् संस्कर्तुं बोधयितुमन्यथा वा कर्तुं के वयम् ? यत्र भर्तृहरेरनुभवेन ब्रह्मणोऽप्यसामर्थ्यम् उद्घोषितम् तत्र मानवानां प्रयासकरणन्तु महदनुचितम्, तत्तु तेनैवाग्रे स्वयं तीक्ष्ण-शब्दैर्निषिद्धमेव—तथाहि—

"लभेत सिकतासु तैलमपि यत्नतः पीडयन् ।
पिवेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ॥
कदाचिदपि पर्य्यटन् शशविषाणमासादये-
न्न तु प्रति निविष्टमूर्खजनचित्तमाराधयेत् ।"

इत्थञ्च ते हि सांसारिकं घातप्रतिघातं सहमानाः कदाचित् स्वकर्मवशादेव महात्मना केनापि सङ्गताः—

कालः स्वभावो नियति र्यदृच्छा। ( श्वेताश्वतरोपनिषद् )

इत्यादि चिन्तापरायणा मार्गमारूढाः 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति नियमात् पुनर्जन्मवादं विश्वसन्तः श्रद्धाजुषः सन्मार्गप्रवृत्ता भविष्यन्तीति।

इह तु तान्निमित्तीकृत्यास्तिकानां वेदशास्त्रपद्धतौ श्रद्धाजुषां महात्मनामवगत्यै पुनर्जन्मविषये वेदोपनिषद्दर्शनादिषु कीदृगैकमत्यं विद्यत इति विवेचयामः। तत्र सर्वेषामैतिहासिकानामपि मान्यतमे ऋग्वेदे पुनर्जन्मविषये एवं श्रूयन्ते मन्त्रास्तथाहि-

पुनर्नो असुं पृथिवी ददातु पुनर्द्यौर्देवी पुनरन्तरिक्षम्।
पुनर्नः सोमस्तन्वं ददातु पुनः पूषा पथ्यां या स्वस्ति॥

ऋ० अ० ८, १, व० २३, म० ६, ७।

अनेन मन्त्रेण ऋषिः प्रार्थनां करोति यन्मम जन्मान्तरे पुनर्यथाऽस्मिन् जन्मनि पृथिव्यादिभिः प्राणादिरक्षा भवति तथा स्यादिति। एवञ्च

"अवसृजत पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः।
आयुर्वसान उपवेतु शेषः सङ्गच्छतां तन्वा जातवेदः स्वाहा"

ऋ० म० १० सू० १६ मं० ५

अनेन मन्त्रेण मरणानन्तरं पञ्चभूतानां स्वप्रकृतौ लयो जायते, जीवात्मैको देहान्तरमाविश्य पुनः पुनरिमं लोकमायाति याति इति सूच्यते। अन्यच्च—

"आत एतु मनः पुनः क्रत्वे दक्षाय जीवसे ज्योक् च सूर्य्यं दृशे
पुनर्नः पितरो मनो ददातु दैव्यो जनः जीवं व्रातं सचेमहि।"

अनेन मन्त्रेण मरणानन्तरं जीवात्मनः पुनर्जन्मनि पुनर्मनसा संयोगो भवतीति सूच्यते। अथर्ववेदेऽपि बहवो मन्त्रा एतदभिप्रायकाः सन्ति। तथाहि—

"पुनर्मैत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणञ्च।
पुनरग्नयो धिष्ण्या यथा स्थाम कल्पन्तामिहैव।"

( अथर्व० का० ७ अनु० ६ वर्ग ६७ मं० १)

अनेन मन्त्रेण प्रेतस्य जन्मान्तरे पुनर्दृढेन्द्रियद्रविणादिकृते याञ्चा प्रतीयते तथा—

आयो धर्माणि प्रथमः ससाद ततो वपूंषि कृणुषे पुरूणि।
धास्युर्योनिं प्रथम आविवेश यो वाचमनुदितां चिकेत॥

( अथर्व० का० ५ अ० १ मं० २)

अनेन मन्त्रेण सूच्यते यदिह जन्मनि यथा पुण्यं वा पापमनुष्ठीयते तथैव जन्मान्तरे पुण्यैरुन्नतशरीरं पापैः पश्वादिशरीरमुपलभ्यते । अन्यच्च—

अन्तर्गर्भश्चरति देवतास्वाभूतो भूतः स उ जायते पुनः ।
स भूतो भव्यं भविष्यत् पिता पुत्रं प्रविवेश शचीभिः ॥

( अथर्व० का० ११ सू० ४ मं० २० )

अनेन मन्त्रेण जीवात्मनो जलादिवेष्टितस्य कर्मप्रेरणया पितुर्द्वारेण गर्भे प्रवेशः सूच्यते । अपरञ्च—

"प्रथमेन प्रमारेण त्रेधा विष्वङ् विगच्छति ।
अद एकेन गच्छत्यद एकेन गच्छतीहैवैकेन निषेवते ।"

एतेन मन्त्रेण सूच्यते यन्मरणानन्तरं मनुष्यकायस्य भागत्रयं जायते । तत्रैकोंऽशो भस्मतां गच्छति द्वितीयोंऽशो वायुसूर्ययोर्निलीयते । तृतीयो हि अंशो जीव उच्यते यश्चेहैव लोके कर्मफलानुरूपं पुनर्जन्मासाद्य तत्फलमश्नुते । यस्य कृते यजुर्वेदेऽप्येवमाह—

"पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आगन् पुनश्चक्षुः पुनः श्रोत्रं म आगन् । वैश्वानरो अदब्धस्तनूपा अग्नि र्नः पातु दुरितादवद्यात् ॥ ( यजु० अ० ४ मं० १५ )

द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरञ्च । ( यजु० अ० १९ मं० ४७ )

आभ्यां मन्त्राभ्यां सूच्यते यत्कर्मानुसारं मनुष्याणां योनिरापाद्यते । तत्र द्विधा गतिर्भवति । एका पुनः पुनरत्रैव लोके गतागतरूपा, द्वितीया ज्ञानिनां अपुनरावर्तनरूपेति । गतागतानां क्रमोऽपि उपनिषत्सु प्रतिपादितो विद्यते । इहास्माभिः केवलं मन्त्रसंहिताया एव प्रामाण्यमिदानीमुपन्यस्तम् । पुनरग्रे उपनिषदां दार्शनिकानां प्रामाण्यं युक्तयश्च दर्शयिष्यन्ते । इत्यवशिष्टं यजुर्वेदीयं किञ्चनापरमपि प्रमाणमुपन्यस्यते—तथाहि—यजुर्वेदे—

पुनरासद्य सदनमपश्च पृथिवीमग्ने ।
शेषे मातुर्यथोपस्थेऽन्तरस्यां शिवतमः ( यजु० अ० १२ मं० ३९ )

इत्यादि मन्त्रै जीवात्मनो जलादिमार्गेषु प्रवेशं कुर्वतः पुनर्जन्मान्तरग्रहणमाम्नायते—अत्र च चत्वारिंशत्तमेऽध्याये

"वायुरनिलममृतमथेदं भस्मान्त ँ शरीरम्
ॐ क्रतो स्मर कृतं ँ स्मर कृत ँ स्मर"

इत्यादिना सूचितं विद्यते यदिदं शरीरमन्यत्, अन्यो हि इतो जीवात्मा यो हि इतो बहिर्निर्गत्य पुनः पुनः स्वकृतकर्मानुरूपं जन्मान्तरं गृह्णाति। मन्त्रोऽयमेतदेव विवृणोति यद् "अये कर्मकर्तः जीव! ते शरीरं विनष्टम् इदानीमात्मकृतं कर्म स्मर तत्कर्मानुकूलमेवाग्रे लोकेषु गमनं भविष्यति इत्यादि। इत्येतस्यैव भावस्य निदर्शनं केनापि आधुनिकेनापि कविना साधु कृतं विद्यते तथाहि—

धनानि भूमौ पशवश्च गोष्ठे भार्य्या गृहद्वारि जनाः श्मशाने।
देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एषः।

इत्यादि पुनर्जन्मविषये पदे पदे भारतीयार्य्यमर्यादायां विस्तृतं विवेचनं विद्यते पुनरग्रे कदाचित् प्रसङ्गेनावशिष्टं विवेचयिष्यामः।

---

## हा! वैयाकरणकेशरिणः!

पण्डित गयादत्तत्रिपाठिमहोदयः छपरामण्डलं जन्मनाऽलङ्कृतवान्, पं० नकच्छेदरामशर्म्मणां पार्श्वे काश्यामिहैव व्याकरणशास्त्रशिक्षां समाप्य महापण्डितो भूत्वा अयोध्यायां संस्कृतविद्यालयेऽध्यापकतां लब्ध्वा पाठयितुं प्रारब्धवान्। ततश्चान्तिमे वयसि स्वजन्मभुवोऽभ्यासे छपरामण्डले एव मारवाड़ीभारतीयसंस्कृतविद्यालये तत्रत्याधिकारिणामनुरोधतः प्रधानाध्यापकपदमधिगत्याध्यापयन्नासीत्। कियतो दिवसा गता यदयं रोगार्तो भूत्वा स्वान्तिमं समयं विदित्वा वाराणसीमागतवान्। इहागत्यानुपदमेव वाराणसीलाभप्रमुदितमनाः स्वीयं नश्वरकलेवरं परित्यज्य शिवसायुज्यं गतः, इति हिन्दुसंस्कृतिसम्वर्द्धितमानवानां पुरतस्तु सर्वमेवास्य विदुषः समीचीनम् जन्मतः समारभ्य मरणावधि सम्पन्नम्। ब्राह्मणकुले जन्म। सर्वाभ्युदयप्रदायाः संस्कृतविद्याया अभ्युपगमः। 'यथाकथं पाठयेत स ह्यस्य कृतकृत्यता' इति मानवीयादेशानुसारतोऽध्यापकानां प्रधानपदाधिगमश्च अन्ते काश्याम् इहागत्य शिवत्वपदमधितिष्ठतो विदुषोऽस्य किमैहलौकिकमवशिष्टमिति। रुदतः समागतस्यापि विहसतो दिवं प्रस्थितस्यास्य कृते कः शोकावसरः! किन्तु एतादृशस्य सुप्रसिद्धविदुषो वैदुष्यबलादेव सर्वाभ्यर्हितादस्मात् भारतीयसनातनधर्मप्रतिनिधिभूतात् श्रीभारतधर्म्ममहामण्डलात् 'वैयाकरणकेशरी' इत्युपाधि-सम्मानं लब्धवतो विद्वद्धौरेयस्य महाप्रयाणात् संस्कृतज्ञसमाजस्य महती हानिर्जाता। तदीयवियोगशोकसन्तप्तस्य कुटुम्बवर्गस्य दुःखेन सह स्वीयां समवेदनां प्रकटयन्तश्चिरं शिव-सायुज्यमेवैतस्य तेन सह सुस्थिरं स्यादिति काशीश्वरं प्रार्थयामहे। (स० सम्पादकः)

---

# सूर्योदयाभिनन्दनम्।

[ लेखमालास्तम्भ-वृद्ध्युपलक्ष्ये ]

लेखकः—पं० माधवप्रसाद उपाध्यायः पालपा-नेपाल।

के नाम भारतेऽस्मिन् न विदन्त्यार्य्या अमात्सर्य्याः ?।
विलसति धर्म-विमानं चिरेण सूर्योदयाभिधानमिति ॥ १ ॥

विश्वस्यैव हि जगतः सत्यं धर्मः प्रतिष्ठेति।
विष्वक् प्रचारयत्तं विश्वजनीनं न किं विमानमिदम् ? ॥ २ ॥

यद्यप्याविरभूवन् संस्कृत-साहित्य-धर्म-संसारे ।
पत्राणि किन्त्वभूवन् कुचोपमा बाल-विधवानाम् ॥ ३ ॥

अव्याहतगति सुचिरात् भारत-धर्मं प्रचारयत्परितः।
चलतीत्यदो विमानं को वा धन्यं न मन्येत ? ॥ ४ ॥

सञ्चालको यदीयः साक्षात्पञ्चाननोऽस्ति लोकाढ्यः।
यो लोकोत्तर-कर्मा प्रदर्शयति शक्ति-महिमानम् ॥ ५ ॥

सहकारि-रूपमञ्चन् बिभ्रत्पञ्चाननेऽपि संमानम्।
संचालयति च सुचिरान्मर्यादापूरुषोऽवधेशोऽपि ॥ ६ ॥

प्रत्नं विमानमेतद् दृढतायै किंच सुषमायै ।
हृत-यानान्तर-दम्भान् नवाननेकानपेक्षते स्तम्भान् ॥ ७ ॥

दार्शनिक-तत्त्वमुख्यक-विविधविषय-लेखमालाख्याः ।
विद्वच्छिल्पि-प्रवरैस्तेऽवश्यकं पूरयिष्यन्ते ॥ ८ ॥

न भवन्ति के सहाया विबुधपथे विचरतोऽस्य यानस्य ?।
दीनानाथा अपि खलु सज्जा यस्योपयोगिता-वृद्ध्यै ॥ ९ ॥

आसुरविलासमार्गे चरतां केषां नु दुश्चरित्राणाम् ।
पत्राणां सोत्साहा दीनानाथाः सहायका दृष्टाः ॥ १० ॥

धर्मं नयद् दिगन्तान् विमान ! सूर्योदयाभिधान ! त्वम्।
धर्म-गतीनपि नेष्यद् विष्णुपदं, चल चिराय निर्बाधम् ॥ ११ ॥

राजन्य-कुल-कमल-दिवाकराणाम्, सेन-वंशावतंसानाम्, भारतधर्म-भूषण-सनातधर्म-मार्त्तण्डादि-विविधोपाधि-समलङ्कृतानाम्, स्वतन्त्र-हिन्दू नरपतीनाम्, राजर्षि-प्रवरमहाराज-लक्ष्मणसेन-वर्ममहोदयानाम् सुकेतनरेश्वराणाम्

## सादरमभिनन्दनम्।

योऽयं पुरो लसति संस्तुत-साधु-धर्मा,
सौजन्यभूः कृतपरश्शतदीनशर्मा।
आजन्मपालित-सनातनवीरकर्मा,
राजेश्वरो जयतु लक्ष्मणसेनवर्मा॥ १॥

अन्तर्दुरूहतमभीमतमस्समूहो,
विघ्नश्च शाश्वतिकसाधुविधाननिघ्नः।
देवस्य यस्य महसा सहसाऽस्तमेति,
धीनायकस्तव सदैव विनायकोऽस्तु॥ २॥

प्रत्येकसाधुजनमानसपुण्डरीक-
माघ्राय सद्गुणरसं सततं विचिन्वन्।
लोकोपकारमधुकोषविधानदक्षो,
जीयादयं सुजनतार्चितचञ्चरीकः॥ ३॥

वल्मीकजं पुलिनजं बुध! कालिदास-
मन्यांश्च भर्त्तृहरि-भोज-नृपालवर्य्यान्।
मोमुद्यते स्म समवाप्य सरस्वती या,
रोरुद्यतेऽद्य भवता परिरक्षणीया॥ ४॥

वाराणसीजनित-सुप्रभसुप्रभात-
भास्वत्प्रभापटलदृष्टदिगन्तकीर्त्तिः।
राजन्! भवन्तमभिनन्दति संस्कृतश्रीः,
साहित्य-सेवन-समिद्ध-समाज एषः॥ ५॥

[अभिनन्दनमिदं श्रीमतां राज्ञामिह वाराणसीसमागमने श्रीभारतधर्ममहामण्डल-सदस्यानां, संस्कृतसाहित्य-समाजसदस्यानां, काशीपण्डितसभासदस्यानाञ्च समवायैः जनवरीमासस्य त्रयोदश्यां तिथौ समर्पितमभूत्।]

—०—

श्रीमद्भिश्चम्पारण्याभिजनैः सम्प्रति काशीवास्तव्यैर्भारतप्रसिद्धवैद्यैर्भिषग्गलाकरैश्चिकित्सकचूड़ामणिभिः वैद्यरत्नकवीन्द्रेत्यादि-विविधविरुदावलीविभूषितैः, उदुम्बरसारप्रभृतिनूतनौषधिगुणाविष्कर्तृभिः पं० श्रीचन्द्रशेखरधरमिश्रमहोदयैः श्रीयुत डाक्टर भगवान् दासजी महोदयानां संस्कृतांग्लभाषादिपारावारपारीणानाम् वर्षग्रन्थिपर्वविधौ ।

## शुभाशंसनम् ।

श्रियमदभ्र-हितार्थ—विधायिनीम् ।
सुलभतां लभता—मनिशं भवान् ॥
सफलतां फलतां भगवान् सदा ।
सुभगवान् भगवान् भगवान् भवन् ॥१॥
सुखमयं समयं समयन्नयन् ।
शुभसमीहितदं हितदं भवान् ॥
विभवतां भवतां भवतां सदा ।
परिजनोऽरिजनोऽपि सुखप्रदः ॥२॥
इयं वर्षग्रन्थिस्तव सुहितवर्षं वितनुताम् ।
यथा वर्षं वर्षं भुवि भरतवर्षं सुखयताम् ॥
सदा हर्षन्दद्यात् त्रिजगति प्रकर्षं तव धियाम् ।
समुद्यत्सर्वश्रीर्भवतु भगवानेव हि भवान् ॥३॥

आशीर्वादकाणाम् श्रीचन्द्रशेखरधरशर्मणाम् ।
वैद्यरत्नायुर्वेदाचार्याणाम् बगहा चम्पारनमण्डलस्थानाम् ।

---

## समालोचनासारः ।

### धर्म्मशिक्षा ।

हिन्दुधर्मोपदेशिकाऽपरपर्य्यायोऽयं 'सनातनधर्मोपदेशिका' नामको धर्म्मशिक्षाग्रन्थो हिन्दीभाषायां लिखितः । पराशरब्रह्मचर्य्याश्रमाद् हल्दी पो० जि० बलियातः प्रकाशितोऽस्ति । पुस्तकमिदं संक्षेपेणैव वेदादारभ्य स्मृतिपुराणधर्मनिबन्धावधि सर्वेषामेव धर्मग्रन्थानां सारमर्मरहस्यं संगृह्य निर्मितमल्पप्रयासेनाल्पकालेनैवावश्यकधर्मज्ञानं कारयति । सम्प्रति अनीश्वरवादोन्मुखेऽस्मिन् युगे पुस्तकस्यास्याध्ययनं नितान्तमावश्यकम् अत्युपयोगि चावलोक्यते । धर्मरहस्यजिज्ञासुभिरन्तेवासिभिश्चावश्यं संग्राह्यम् । यू० पी० प्रान्तीय-ग्राम-शिक्षाप्रसार-समित्यापि स्वीकृतमिदं

विद्यते । मू० ।=) आणकषट्कं । प्राप्तिस्थानम् स० सम्पादक, C/o सूर्योदय कार्यालय, श्रीभारतधर्ममहामण्डल भवन, जगत्गञ्ज, बनारस ।

## हिन्दीदीपिका ।

हिन्दीभाषायाः सरलपद्धत्याऽल्पप्रयासेनाल्पेनैव कालेन संस्कृतच्छात्राणां हिन्दीभाषाज्ञानं कारयितुं किमपि पुस्तकं नासीत् । तदिदं पुस्तकं सम्प्रति हिन्दीव्याकरणज्ञानस्य कृते अद्यावधिलिखितेभ्यः सर्वेभ्योऽपि पुस्तकेभ्यः समीचीनं, संस्कृतच्छात्रपरिशीलनक्षमं, सरलभाषया संक्षेपेण लिखितम्, अत्युपयोगि तथावश्यसंग्रहणीयं विद्यते । संप्रति हिन्दीभाषाया ज्ञानं संस्कृतच्छात्राणां कृते परमावश्यकं विद्यते । सर्वत्रैव परीक्षासु हिन्दीभाषाज्ञानं समपेक्षितमिति परीक्षोत्तरणार्थिभिः संग्रहणीयम् । उभयोरप्यनयोः पुस्तकयो र्लेखकाः परमप्रसिद्धा विद्वांसो महामहाध्यापकाः पं० श्रीगोपालशास्त्रिणो दर्शनकेशरिणः सन्ति । सम्मतयश्च बहूनां हिन्दीभाषाया महारथिनां विदुषां विद्यन्ते । मू० ॥) आणकाष्टकम् प्राप्तिस्थानम् सूर्य्योदय कार्य्यालय एव ।

## नीतिसंग्रहः ।

संक्षिप्तहितोपदेशापरपर्य्यायमिदं पुस्तकं सरलसंस्कृतभाषायां लिखितं संस्कृतज्ञानार्थं यतमानानां छात्राणां कृतेऽत्युपयोगि विद्यते । हितोपदेशेऽश्लील-कठिनानि कथापद्यानि बहूनि सन्ति, यदध्ययनं विद्यार्थिनां कृते विशेषतो बालिकानां कृते बहुदोषावहमस्ति, तद्दोषं दूरीकृत्य पं० श्रीशिवकुमारशास्त्रिमहोदयेन साहित्याचार्य्येण व्याख्यानविशारदेन संस्कृतच्छात्राणां विशेषतश्च स्त्रीसमाजस्य महानुपकारः कृतः । यतोहि संस्कृतसाहित्ये सम्प्रति स्त्रीणामध्ययनक्षमसंस्कृतगद्यपुस्तकानां नितरामभाव एवास्ति पुस्तकमिदम् बाला बालिका अपि अनायासेनाधीत्य संस्कृतज्ञानं नीतिज्ञानं हिन्दुसंस्कृतिज्ञानञ्चाल्पीयसैव कालेनाल्पीयसैव प्रयासेन सरलया च पद्धत्या कर्तुमर्हन्ति । इति पुस्तकस्थपद्यादेव ज्ञायते—

भारतीयार्य्यमर्य्यादां देवभाषाञ्च वेदितुम् ।
कुमार्य्यश्च कुमाराश्च पठेयु र्नीतिसंग्रहम् ॥

अस्यापि प्राप्तिस्थानम्—सूर्य्योदय कार्य्यालय एव मू० ।) आणकचतुष्टयम्—

## माघमेलायां धर्मप्रचारः ।

प्रयागः । अत्र माघमेलाऽवसरे श्रीभारतधर्ममहामण्डलस्य सनातनधर्मप्रचारमन्त्रिणो महामहोपदेशकस्य श्री धूमावतीप्रसादपाण्डेयमहोदयस्याध्यक्षतायां प्रचारकमण्डलमेकमगमत् । मण्डले महामहोपदेशकाः पण्डित गङ्गाविष्णु शास्त्रिणस्तथाऽन्ये च कतिपये प्रवक्तार आसन् । सनातनधर्मस्य विविधविषयेषु व्याख्यानं जातम् ।

# वाणी-मणिमाला।

—०—

[ लेखकः—श्रीकपिलदेवझाः, व्या० साहि० आ०, ती०, ]
( मुजफ्फरपुर-धर्मसमाज-संस्कृतमहाविद्यालयस्थः )

कल्याणमूर्त्तिमनवद्यविभूतिमाद्याम्
आराध्यपादकमलां जगदेकवन्द्याम्।
यामाश्रयन्ति विबुधा दिवि वन्दमाना-
स्तत्स्वागतं विजयतां शरणं बुधानाम् ॥१॥

पिङ्गारुणाक्षि कुरुते यदि कालदोषात्
कश्चित्समीक्ष्य सुर-संस्कृतभारतीशम्।
तज्जन्यदुःखमधुना नहि यत्प्रसादात्
तत्स्वागतं विजयतां शरणं बुधानाम् ॥२॥

लक्ष्मीप्रसादमपि यच्चरणारविन्द-
श्रीमानहं नहि कदापि विचिन्तयामि।
यन्नाम शश्वदभयेन च घोषयामि
तत्स्वागतं विजयतां शरणं बुधानाम् ॥३॥

देशान्तरेऽपि सुधियो यदनुग्रहेण
तन्वन्ति कीर्त्तिमचलामतुलां स्वकीयाम्।
यत्स्वागतं वितनुते विशदं वसन्त-
स्तत्स्वागतं विजयतां शरणं बुधानाम् ॥४॥

वक्तुं प्रभुर्भवति संसदि बालकोऽपि
सद्गद्य-पद्य-मयचारुनिवेशकल्पैः।
मूकोऽप्यमूक इव यच्चरणप्रसादात्
तत्स्वागतं विजयतां शरणं बुधानाम् ॥५॥

रङ्कोऽपि पण्डितजनो नितरामशङ्को
नाशङ्कते वसुमतीपतिवक्रभावम्।
साम्राज्यमेतदमलं यदनुग्रहस्य
तत्स्वागतं विजयतां शरणं बुधानाम् ॥६॥

चिन्वन्त्यलं किल कलङ्कमशङ्कमत्या
ये यद्विभतिसदने सुरगीर्विहीनाः ।
मन्ये तदीयमदमन्थनपूर्वरूपं
तत्स्वागतं विजयतां शरणं बुधानाम् ॥७॥

तन्त्रीसमन्वितलयैकमनःस्वतन्त्रा
दृष्टिं समर्पयति सम्प्रति या हसन्ती ।
मच्छात्रसङ्घसमितेर्विपुलोदयाय
तत्स्वागतं विजयतां शरणं बुधानाम् ॥८॥

---

## केयं दशा ।

ले०—विद्यार्थी हरिद्वारशर्मा ।

अयि ! आर्यवीर-मातः ! केयं दशा त्वदीया !
नहि दृश्यतेऽधुना ते, शोभा पुरातनीया !
या सर्वतस्ततासीत्ते भाग्यदीप्तिरम्ब !
हा हन्त ! साम्प्रतं किं, शोच्या दशा त्वदीया !

स्वाधीनतास्वरूपं, प्रविहाय हाद्य दीना !
प्राप्तासि बन्दनीये ! केयं दशा त्वदीया !!
यस्याः सुवीरपुत्राः, पूर्वे सदैव आसन् !
येषां बलेन जाता, शस्ता दशा त्वदीया !

धिक् तान्तवैव पुत्रान्, धनशालिनोऽपि मातः !
धृति-साहसादिहीना, वंशावली यदीया ।
वीरा भवन्तु पुत्रा जननीवसुन्धरायाः ।
एतादृशी कृपालो ! करुणाभवेत्त्वदीया ॥

---

# राष्ट्रियेतिहासस्य महत्यावश्यकता।

( लेखकः—डाक्टर श्रीदेवसहायत्रिवेदः M. A. ph. D.
इतिहासशिरोमणिः पटनाकालेज, पटना )

सर्वेषु देशेषु जनाः स्वदेशस्येतिहासस्य राष्ट्रियरूपं ददति, यथाशक्ति सततं सुधारयितुं कठिनश्रमं कुर्वन्ति च। किन्तु भारत एव प्रायेण श्रूयते मृतोत्खादनात् को लाभः। नूनमाधुनिककाले केचिद् भारतीयाः स्वेतिवृत्तस्य साधुरूपं दातुं कञ्चित् श्रमं कृतवन्तः। तथापि वयं निःशंकाः कथयितुं पारयामो यद् विगतसहस्रवर्षाभ्यन्तरे भारतीया निजसाहित्यमितिहासं चोपेक्षादृष्ट्यावलोकितवन्तः।



किन्तु मानवजीवनस्य प्रधानाङ्गेषु इतिहास एव एकम् प्रधानमङ्गम्। अस्योपेक्षा केनापि प्रकारेण नोचिता। इतिहासशास्त्रं खलु महच्छास्त्रमध्ययनस्य सुशोभनशाखा च अनुभूतानां ज्ञानोद्गमस्थानत्वाद् विज्ञानां विवेकिनां चानुभवस्रोतस्त्वाच्च। यदि स्वानुभूतिरेव सर्वेषामाधारस्तदा महासङ्कटस्यापत्तिरद्यावधि समुपार्जितानुभवाश्च वृथैव स्युः।

इतिहासः सजीवदर्शनशास्त्रम्। यथा दर्शनशास्त्रमन्तर्बाह्यजगतः सूक्ष्मविशालरूपमस्माकं संमुखे प्रदर्शयति तथैवेतिहासोऽस्मान् भूतं वर्तमानं भविष्यं च द्रष्टुं साहाय्यं करोति। यथा दर्शनशास्त्रं स्वधर्माचरणं श्रद्धया देशसेवां च शिक्षयति तथैव इतिहासोऽपि सुखजीवनप्राणमूल्येऽपि धर्माचरणं देशस्य निःस्वार्थसेवां च शिक्षयति।

इतरदेशेष्वितिहासोऽनेन प्रकारेण शिक्ष्यते यथा बाला राष्ट्रियमार्गे समुन्नता भवन्ति। किन्त्वस्माकं देशे कोमलबुद्धिबालानां मस्तिष्कं पल्यङ्के एवाराष्ट्रियभावनया कलुषीक्रियते। अन्यदेशेषु इतिहासपुस्तके तस्य देशस्य महत्ता वर्तते। किन्तु भारते विपरीतप्रथा दृश्यते। यदि इतिहासः भूतकालस्य राजनीतिस्तदापि अस्याध्ययनस्य

महत्यावश्यकता। अस्य निरादरः स्वदेशस्य धर्मस्य संस्कृतेश्च निरादरः। केनापि विशेषविषयस्याध्ययनाद् राष्ट्रियमनसः चरितस्योत्थानं न भवति यथा भूतकालस्य सम्यग्विचारविवेचनेतिहासपठनात्। अस्यैवाध्ययनाद् भूतकालविषये निस्तर्कान्धविश्वासमहत्तास्थाने तार्किकपौरुषेयश्रद्धा प्रस्थाप्यते।

देशभक्तः सत्येतिहासकारो भवितुं नार्हति, इतिहासकारस्य निष्पक्षत्वं महान् धर्मः, देशभक्तश्च स्वदेशीयविचारधारामेव केवलं साधु मन्यते। अन्यदेशवासिनां सुगुणमपि तुच्छीकरोतीति केषाञ्चिद् विदुषां मतिः। किन्तु इतिहासकारस्यास्मादपि महत्तरो धर्मः। यथा शिशवे पिता तथैव देशायेतिहासकारः। अतः साध्वसाधुगुणान् प्रदर्श्य साधुमार्गे उपदेश एव इतिहासकाराणां महत्तमो धर्मः। यदि इतिहासकारो भूतघटनां संमुखे प्रदर्श्य समीपवर्तिभयाद् देशरक्षां न करोति स इतिहासकारनाम नार्हति। अतो वयं कथयितुं पारयामो येषां विद्वद्वराणां रक्तमज्जावसामांसेषु देशभक्तेः रक्तं प्रसरति ये च तस्य संस्कृतेः मुख्यप्रतिनिधयस्ते एव देशस्य इतिहासं लिखितुं पारयन्ति।

इतिहासो यथास्माकं बालेभ्यः पाठ्यतेऽराष्ट्रियविचारवार्तापूर्णः। पाश्चात्यविद्वद्भिरस्माकं इतिहासः संस्कृतिश्च धूसरीकृता युरोपीयदृष्ट्यावलोकनादपि संस्कृतेरारम्भाद् विदेशीय-शासनभावनिवेशनाच्च यथा वयं सर्वदा दासार्गलव्यूढाः स्याम। आर्याणां भारताक्रमणं[1] सिकन्दरचन्द्रगुप्तमौर्यसमकालीनत्वं च[2] इतिहासपुस्तकानां भित्तिरेव जायते। वयं भारतीयाः सुदूरदेशस्थविद्वद्भिर्जातिधर्मविभिन्नैर्विगतभारतप्रेमभिर्लिखितं स्वदेशस्य पुण्यभूमेर्भारतस्येतिहासं पठामः। किमस्मादपि महान् शोकविषयोऽन्यः?

यदि भारतीयदृष्ट्यास्माकं प्रामाणिकसांस्कृतिकसामाजिकराजनीतिकेतिहासस्य रचना सत्याधारेषु भवेत्तदा भारतस्य महानुपकारो भवेत्। अतो वयं सुलभे दृढमनसो भूतकालमध्येतुं कटिबद्धाः स्याम। पण्डितजनेषु जगति तद्रक्षार्थं सश्रद्धा भारतीयदृष्टिकोणेन उपतिष्ठामहे इत्येव महत्यावश्यकतेति दिक्।

---

1 मम लेखं पश्यत—The original Home of the Aryans, Annals of the Bhandarkar Oriental Research Institute, Vol. XX. PP. 4968.

2 Did slexamade Indade India in the time of the Manyas? Hindustan Times, Delhi, 29th June 1937.

---

❀ कर्म्मणा वर्णव्यवस्थायाम् प्रत्यालोचना ❀

( डाक्टर-भगवान्दासीय-सिद्धान्तस्य प्रतिवादः )

# निबन्धा—श्रीदीनानाथशर्म्माशास्त्रि-सारस्वतः ।

( स० ध० कालेजोपाध्यायः, मुलतानसिटी )

काशिकस्य 'आज' पत्रस्य १६ मार्गशीर्ष सं० १९९६ अङ्के 'हिन्दूधर्म और हिन्दू समाजका ह्रास और उसका प्रतीकार' इति शीर्षको निबन्धः 'श्रद्धेय भगवान्दास' नाम्ना प्रकाशितो दृष्टः । तत्र 'सूर्य्योदये' १४।६–७ अङ्कप्रकाशितस्वकीयवर्णव्यवस्था-निबन्धस्य विषयेऽपि आलोचना दृष्टा, अन्येषां पण्डितानामपि । अन्येषां पण्डितानां पूर्व्वप्रश्नोत्तरादिपरिचयाऽभावात् तद्विषये उपेक्ष्य अपेक्षिते स्वविषये एव 'सूर्योदय' पाठकानां समक्षं किञ्चिदुपन्यस्यते ।

'सूर्योदय' पाठकानां विदितमेव यद्—वर्णव्यवस्थाविषयको मम निबन्धः 'सूर्योदये' तदीयचतुर्दशवर्षस्य आरम्भिकसङ्ख्यात उपक्रान्तीभूय, पञ्चदशवर्षस्य पञ्चमसङ्ख्यापर्य्यन्तम् । अधिकपञ्चाशेषु❀ पृष्ठेषु समाप्तः । श्रीयुत डाक्टरभगवान् दासमहाशयेन तु तत् सर्व्वमनालोच्य केवलमेकाङ्कस्यापि प्रथमपृष्ठम्, तस्यापि पङ्क्तिद्वयमात्रं, तदपि न सम्पूर्णमवलम्ब्य, तत्र आलोचना स्वीकृता । नतन्नाम उत्तरं भवितुमर्हति । अत्र तु तादृश एव उपन्यास उदाहर्तव्यतामर्हति यद्—मौहम्मदानामेकस्यां बृहत्यां 'नमाजपरिषदि एकेन मौहम्मदेन 'मत पढ़ो नमाज, जब हो नापाक' इति कस्यचित्' प्रसिद्ध-'मौलवीमहाशयस्य समाचारपत्त्रप्रकाशिता घोषणा 'जब हो नापाक' इत्युत्तरांशम् अपलप्य श्राविता । सर्व्वा परिषद् विसिष्मिये यद्—ईदृश आप्तो 'मौलवी' 'मत पढ़ो नमाज' इत्येवं 'निमाज़'-पठनं कथं निषेधेत् ? । अन्तत एकेन मौहम्मदेन श्रावकस्य हस्तात् तत्समाचारपत्त्रमाकृष्टम् । यदा च उत्तरोंऽशः—'जब हो नापाक' इति दृष्टः श्रावितश्च, तदा सर्व्वा सभा प्राक्तनं श्रावकं बलवत् तर्जयामास । एषैव दशा डाक्टरमहाशयस्य । अत एव अस्मिन सम्बन्धे किञ्चिल्लेखनमावश्यकं मत्वा तत्र † द्वित्रशब्दान् उपन्यस्यामः । तथाहि—

उक्तमहाशयस्य सन्दर्भोऽयम्—"काशीसे 'सूर्योदय' नामकी मासिकपत्रिका, संस्कृत भाषामें, निकलती है । उसके मार्गशीर्ष पौष १९९५ के अंकमें 'ब्राह्मणानां

❀ अधिक पञ्चाशेषु—पञ्चाशतोऽधिकेषु । समासन्तो डच्, टेर्लोपः ।

† द्वित्रान् । अत्रापि पूर्ववत् ।

श्रेष्ठत्वं जन्मना वर्णव्यवस्था च' इस शीर्षकका एक निबन्ध 'पंडित दीनानाथशास्त्री सारस्वतः मुलतान' के नामसे छपा देख पड़ा। उक्त सज्जन निश्चयेन बहुत विद्वान् जान पड़ते हैं। लेखमें विविध ग्रन्थोंके वाक्योंका उद्धरण इन्होंने किया है। आशय भी उनका अच्छा ही होगा। पर निबन्धकी दूसरी ही पंक्तिमें महाभारत आदिपर्व १९०।१३ का पता देकर यह श्लोकार्ध उद्धृत किया है—'ब्राह्मणो नावमन्तव्यः सदसद्वा समाचरन्' और आठवीं पंक्तिमें मनुस्मृतिसे यह 'न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम्' [श्लोक उद्धृत किया है]। परमग्रे अस्यैव श्लोकस्य उत्तरार्ध भागः 'राष्ट्रादेनं बहिष्कुर्यात्' मनु० ८।३८० इति यो मया तस्मिन्नेवाङ्के तत्रैव उल्लिखितः, स डाक्टरमहोदयेन नोद्धृतः। अत्र स एव उपन्यस्तपूर्वो मौहम्मद-दृष्टान्तः सर्वांशे सङ्गतोऽभूत्।

अग्रे स एव महाशयो लिखति—'मनुस्मृतिका जैसा आदर मेरे हृदयमें है, और उसके पीछे महाभारतका, वैसा स्यात् और किसी एक ग्रन्थका नहीं है'। न ज्ञायते—वेदविषये डाक्टरमहोदयस्य किं मतं स्यात्?। अस्तु। एतदपि यदमुना लिखितं तदपि सर्वांशे न घटते। एषां हृदि महाभारतस्य मनुस्मृतेर्वा तावदेव आदरः स्तिष्ठति, यावत् तत्र एभिः स्वीकृतसिद्धान्तस्य भङ्गो नाऽऽपतति। यदा च स आपतति तदा क मनुः, क वा महाभारतकारः?।

अस्यैकमुदाहरणमादीयताम्—'त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्। त्र्यष्टवर्षोऽष्टवर्षां वा' ९।९४ अयं मनोः प्रसिद्धः श्लोकः। सर्वत्र अनेनैव च रूपेण उद्धृतः। परं मनुसम्मानयिता अयमेव 'डाक्टर' महोदयस्तत्र मनोर्मूर्खतां विभाव्य 'द्वादश (१२) वार्षिकीम्' इत्यत्र 'द्विदश (२०) वार्षिकीम्' इति पाठं समीचीनं मन्यते; 'अष्ट-(८) वर्षां वा' इत्यत्र च 'अष्टि (१६) वर्षां वा' इति पाठं समीचीनं मन्यते। हन्त! दृष्टा अमूदृक्षाणां लीला!। यदि मनोः 'द्वादशवार्षिकीम्' इति १२ वर्षीयाः पाठोऽभीष्टो नाऽभविष्यत्, किन्तु 'द्विदशवार्षिकीम्' इति; अर्थात्—डाक्टरमहोदयानुसारं मनोर्विंशतिवर्षीया एव विवाहोऽभीष्टोऽभविष्यत्; तर्हि किं स 'हृद्यां विंशतिवार्षिकीम्' इति असन्दिग्धं पाठं लेखितुं न समर्थ आसीत्, यत्र छन्दोभङ्गोऽस्पष्टतापि च नासीत्?। 'अष्टवर्षाम्' इत्यत्र 'अष्टिवर्षाम्' इत्यत्र 'अष्टि-वर्षाम्' इति पाठं मनोराचक्षाणेन 'डाक्टर' महोदयेन किं कदापि चिन्तितं यद्—मनुना किं क्वापि संख्यायाम् एकदेशीय (छन्दोजातीय) प्रयोगं कृत्वा अप्रतीतदोषः कृतः। तस्मात् सिद्धमेव यद्—एषां कपोलकल्पना तु एषां मते मानवी, मानवी रचना च प्रक्षिप्ता भवति। हन्त !!!

यत्र एषां सिद्धान्तः स्पष्टतया भज्यते; तत्र एषाम् असमीचीनता वा, प्रक्षिप्तता वा, परिवर्तितता वा प्रतिभाति। यत्र च ऐकदेशिककाचित्कवचने एषामानुकूल्यं भासते; तत्र ते सार्वदेशिकतां वा मन्वते। एतदस्ति एषां मन्वादौ श्रद्धारहस्यम्।

अग्रे स लिखति—'पर यह भी मुझे निश्चय है कि मनुस्मृति के वर्तमान रूपमें कितने ही श्लोक प्रक्षिप्त हैं, कितने परिवर्तित हैं। कितने ही प्राचीन परम उपयोगी श्लोक लुप्त कर दिये गये हैं।' परमेवमाचक्षाणोऽसौ किमपि प्रमाणं न ददाति। किं यत्र भवत्सिद्धान्तस्य स्पष्टतया खण्डनम्; तत्रैव प्रक्षिप्तता?। यत्र च भवत्सिद्धान्ताद् भेदः, तत्रैव परिवर्तनं किम्?। यस्य च भवत्सिद्धान्तस्य प्रदर्शनधृष्टता मन्वादिभिर्न कृता श्लोकेषु; ते एव श्लोका ॅ किं परमोपयोगिनः?। हन्त! दृष्टिकोण! धन्योऽसि। हन्त पक्षपात! समृद्धोऽसि।

पुनरग्रे स वक्ति—'महाभारतका तो कहना ही क्या है—अस्सी पचासी सहस्र श्लोकोंसे एक लाख दस बारह सहस्र तक श्लोकों की लिखित, और अब मुद्रित प्रतियाँ मिलती हैं'। अत्र प्रष्टव्यं यद्—डाक्टर महाभाग ॅ कियत्सङ्ख्याकपद्यवद् महाभारतं वास्तविकमाचष्टे। किम् अशीतिसहस्रपद्यात्मकम्? दशसहस्राधिकैक-लक्षपरिमितपद्यवद् महाभारतं वा?। आद्ये—तत्पार्श्वे किं प्रमाणं महाभारतस्य। अथ च तस्मिन्नपि प्रक्षिप्तता मन्यते नो वा?। अन्त्ये भवान् प्रष्टव्यो यत्—तत्र भवत ॅ कथमविश्वासः?। यदि कथ्येत—'एकं शतसहस्रं तु मानुषेषु प्रतिष्ठितम्' आदिपर्व १।१०७ इति प्रमाणान्महाभारतं शतसहस्र-(एकलक्ष) श्लोकात्मकमेव वास्तविकम्, ततोऽधिकाः श्लोका ॅ कुत आगता इति?। तत्रोच्यते—महाभारते उक्तम्—'एकं शतसहस्रं तु मानुषेषु प्रतिष्ठितम्' १।१०७ अस्मिंस्तु मानुषे लोके वैशम्पायन उक्तवान्। शिष्यो व्यासस्य धर्म्मात्मा सर्ववेदविदां वरः' १।१०८ आदिपर्वणि। अत्र पूर्वापरं न विविच्य भवादृशा जना भ्राम्यन्ति।

अत्र स्पष्टं निर्दिष्टं यत्—श्रीव्यासेन महाभारतम् एकलक्षात्मकं प्रोक्तं मनुष्य-लोककृते। ततस्तदेव एकलक्षात्मकं महाभारतं व्यासशिष्यो वैशम्पायनोऽपि श्रावितवान्। ततो वैशम्पायनश्रावितं तदेव सूतः सौतिर्वापि श्रावितवान्। अत्र डा० महोदयः सावधानं विचारयतु यद्—यदि अहं भवदीयं कञ्चित् संस्कृत्रिमलेखं 'सूर्योदये' उद्धरेयम्; तर्हि तत्र मया आदौ भूमिका, अन्ते उपसंहारश्चापि दर्शनीयः स्यात्। ततः स एव भवदीयलेखस्तावानपि मत्प्रणीतभूमिकोपसंहारादिभिरीषत्-परिबृंहितो भविष्यति। एवं सत्यपि तत्र यदीयभूमिकोपसंहारादिकं कोपि प्रक्षिप्तं न मत्वा, तदीयपूर्वापरस्फुटतायै साधनमात्रं मंस्यते। एवं पुनरन्योऽपि तमेव भवदीय-

लेखं मद्भूमिकोपसंहारान्वितम् उद्धरेत्; तेनापि स्वकीयानां मनोरञ्जनाय तत्र स्वशब्दैः पूर्वापरमपि प्रदर्शनीयम्। तत्र कोपि प्रक्षिप्तारोपं प्रदर्शयति।

इयमेव अवस्था महाभारतस्य। एकलक्षश्लोकात्मकं महाभारतं व्यासप्रणीतम्। तस्यैव पूर्वापरप्रदर्शनाय कदाचिद् वैशम्पायनोऽपि वदति स्वश्लोकैः--अयि ऋषयः! तदिदं श्रीव्यासप्रणीतं बहुगुणसंवलितं महाभारतं शृणुत--इत्यादि। एकलक्षश्लोकात्मके एकस्मिन् पुस्तके प्रत्यध्यायमादावन्ते च एकैकोऽपि श्लोकः प्रसङ्गसङ्गत्यर्थं दर्श्येत; ततश्च जनमेजयादिश्रोतृकृतं कमपि प्रश्नमपि समादध्याद् वाचकः; एवं वैशम्पायन जनमेजयादिश्लोकवृद्ध्या, तस्य श्लोकसंख्या एकलक्षतः कतिपयसहस्रसंख्यायां स्वत एव संवर्द्धिष्यते। एवमपरः सौतिः पुनस्तदेव वैशम्पायनश्रावितं वैशम्पायनीयपूर्वापरप्रसङ्ग निर्देशकं महाभारतम् ऋषिभ्यः श्रावयेत्; तर्हि तेन सौतिनाऽपि कथनीयं यद्-एवं वैशम्पायनेन एतद् जनमेजयं प्रति श्रावितम्, जनमेजयेन च तदा अमुकप्रश्नः कृतः, वैशम्पायनेन च तस्य इत्थमुत्तरं दत्तम्—इत्यादि। एतदादयः श्लोका अपि स्वयं वर्द्धिष्यन्ते। तत ऋषीणां सौतिमपि प्रति कश्चित् प्रश्नो जागृयात्, ततस्तेनापि उत्तरं स्वश्लोकबद्धं श्रावणीयम्। एवमेतादृशबृहत्पुस्तके मूलश्लोकसङ्ख्यातः स्वयमेव वृद्धिः स्यात्। परं तत्र न कोऽपि प्रक्षिप्ताऽपदेशं करोति। तादृशाः श्लोका यदि पृथक् क्रियेरन्; तदा अवशिष्टा मूलसङ्ख्यैवाऽवशिष्येत।

एवमेव कश्चित् कथाश्रावयिता तावदेव महाभारतं मूलरूपं श्रावयेत्; तर्हि यावान् समयस्तस्य समाप्तौ व्यतिगच्छेत्; तस्यैव पुनस्तद्व्याख्याने तत्स्पष्टतार्थं प्रमाणान्तरश्रावणे च तन्नियतसमयतोऽधिक एव समयः स्वत एव लगति। परं न कश्चित् तत्र इदमपदेक्ष्यति यद् अयं महाभारतं श्रावयति तु; परं तत्र स्वप्रक्षिप्तवचनान्यपि अस्मभ्यं श्रावयतीति। सर्वे स्वयमेव अवगच्छन्ति यद्—ग्रन्थस्पष्टतार्थमेव स स्ववचनानि श्रावयति, न खल्वयं प्रक्षिप्तं वदतीति। एतदेव उत्तरं ज्ञेयमेकलक्षाधिकश्लोकवन्महाभारतोपलब्धौ। न्यूनतायां तु स्पष्टं तत्पाठस्य कारणविशेषाद् विनष्टीभावः। यथा ११३१ वेदशाखासु अद्यत्वे * उपदशाः शाखाः प्राप्यन्ते। किं डाक्टरमहोदयोऽत्र अवधास्यति। (क्रमतः)

* उपदशाः—दशासन्नाः, अत्र समासान्तो डच, टेर्लोपः।

# वसन्तागमः ।

( लेखकः—पण्डित श्याप्रसादचतुर्वेदी बालकविः )

अनुसृतपृषदश्वानेकराजीव-रेणु-
विरचितविशदाभस्वर्णवर्णातपत्रः ।
गगनविलसदश्वच्छुभ्रशीतांशुकेतु-
र्विलसति विपिनान्ते भूमिपालो वसन्तः ॥ १ ॥
परिणतिनतशस्यालङ्कृतिद्योतमाना;
नवकिसलयशाटीम्पाटलामादधाना ।
असितमधुपमालामेखलाक्काणरम्या;
प्रकृतिरियमुदाराऽऽयाति कान्ते वसन्ते ॥ २ ॥
विदधति विटपीशाः पीतपालाशशय्यां;
विकिरति कुसुमानामञ्जलिम्मालिनो भूः ।
अवतरति वसन्ते हर्षसंश्लिष्टचित्ता;
विविधविहगवृन्दाः स्वागतं व्याहरन्ति ॥ ३ ॥
विरलतुहिनजालस्वच्छकाष्ठावदाता-
मथ नलिननिलीनैर्नील नीलाम्मिलिन्दैः ।
तदनु सुमपरागैः पीतपार्श्वा मधुश्रीः,
प्रथिततरपताकां राष्ट्रियामादधाति ॥ ४ ॥
मधुमधुरमरुद्भिर्मन्दमान्दोल्यमानं,
किशलय-कमनीयं वल्लरीणां वितानम् ।
सरल-तरलकान्तापाणि-पद्मानुकारि,
व्यथयति पथिकानाम्मारसञ्चारिचेतः ॥ ५ ॥
प्रोत्फुल्ल-लोहितपलाशविलोचनाढ्यो
झञ्झोष्ण-निःश्वसित-कम्पितभूमिभागः ।
सोऽयं सुषीम-परिपीडितमीक्ष्य विश्वं-
विभ्राजते सुरभिरूर्जितरौद्ररूपः ॥ ६ ॥

———

# ब्रह्मचर्यं हि जीवनम् ।

निबन्धा—पण्डित वंशीधरशर्म्मा "शाण्डिल्यः" शास्त्री
श्री० स० ध० संस्कृतविद्यालयप्रधानाध्यापकः सध्याना

ब्रह्माधिगन्तुं वेदाध्ययनमेव ब्रह्मचर्यस्य यौगिकोऽर्थः। पुरा किल उपगुरु वीर्यरक्षणं विदधतः सश्रद्धं वेदान् अधीयते स्म अन्तेवासिनो विद्यार्थिनः। अतः वीर्यत्राणार्थे ब्रह्मचर्यशब्दो रूढ़िमगात्। वीर्यरक्षणमभिलक्ष्य किञ्चिद् वक्तुमुत्सहे—वीर्यरक्षणमेव जीवनम्, वीर्यनाशनं कीनाशाह्वानमिति निश्चप्रचम्। वीर्यप्रभावादेव प्राक्तना जनिजुषो धीमन्तः श्रीमन्तः, हृष्टपुष्टाङ्गका दृढ़सङ्कल्पकाश्च अवर्तिषत। वीर्यसत्वादेव-शीताऽऽतपादीन् सोढ्वा अत्युग्रं तपस्तप्तुं पारयन्तिस्म, ब्रह्मचर्यप्रभावात् प्राणवायु-मवरुध्य, वपुषः शारीरिकमानसिकवृत्तीः संशोध्य, विविधयोगसाधनेषु साफल्य-मधिगत्य उच्चकोटिमाटीकन्तेस्म अस्मदीयवयोवृद्धाः। अल्पीयस्येव वयसि सकलकला-कलापान् अधीत्य ज्ञानेन ऐहलौकिक-पारलौकिकशर्म हस्तयितुम् आसन् प्रभविष्णवः।

अनुमोदितमिदं वैदुष्यवृद्धर्यंज्जीवनमोजसो धातोर्बलमाश्रितम्। यत्किञ्चिद् अस्माभिर्भक्ष्यते, लेह्यते, चोष्यते, पीयते च, तैः सञ्जायते रसादीनां सप्तधातूनां निर्माणम्, सप्तधातूनां तेजः "ओज" इति नाम्ना व्यवह्रियते। ओज एव वपुषः पौष्टिकं वस्तु, यथोक्तं पाण्डित्यवरिष्ठेन शार्ङ्गधरेण—

"ओजः सर्वशरीरस्थं स्निग्धं शीतं स्थिरं सितम्।
सोमात्मकं शरीरस्य बलपुष्टिकरं मतम्॥"

पद्येनानेन स्पष्टं परिचीयते, यद् ओजो वीर्याद् उद्भवति, वीर्यस्योत्पत्तिरपि तेनैव श्लोकान्तरेण उपदिष्टा यथा—

"रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते।
मेदसोऽस्थि ततो मज्जा मज्जः शुक्रस्य सम्भवः॥"

आयुर्वेदस्य आदिमे सन्दर्भे सुश्रुते इत्थं निर्णीतं वर्तते, यद् भक्षितस्यान्नस्य मासा-नन्तरं वीर्यं जायते, तस्य निर्मितिक्रमोऽयम्, चत्वारिंशत्सेटकभोजनाद् एकसेटकं रक्तं जायते, ततः "तोला" द्वयी वीर्यमुत्पद्यते। कामिन्याः सम्भोगावसरेऽस्मान्यूनं न व्ययो भवति वीर्यस्येत्यपि आयुर्वेदशास्त्रविपश्चिद्भिः सम्मतं मतम्। अतः एता-दृशस्य महार्घ्यवस्तुनः सर्वतो भावेन रक्षणं परमावश्यकम्। वीर्यं विलीयते मैथुनेन, मैथुनस्य वर्जनमेव ब्रह्मचर्यम्। तन्मैथुनमष्टधा प्रकीर्तितं पण्डितप्रकाण्डकाण्डै यथा-

"स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः॥"

प्राकृतिको नियमोऽयम्, नेत्रे यद् वस्तु निरीक्षतः, हस्तौ च गृह्णीतः, स्वान्तफलके तस्य चित्रं चित्र्यते, चित्तं पौनः पुन्येन तच्चिन्तति। अनुमीयताम्, यदृच्छया केनापि पुंसा काचित् कामुका कामिनी अक्षिलक्ष्यीकृता, रहसि तस्या लावण्यं, तदीय-मुग्धताञ्च ध्यास्यत्यसौ, मुहुर्मुहुः ध्यानेन "ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते" इत्यादि—वासुदेववचनात् तस्य नाशः, लक्ष्याद् विध्वंसो वा सुगम इति नास्ति संशीतिलवोऽपि। अतः समस्तस्य जनस्य विशेषतया ब्रह्मचारिणः कृते त्वेतच्चिन्तनं ग्लानिप्रदम्, ब्रह्मचर्यत्वे च स्खलितिः नैसर्गिकी। अतः स्त्रीविषयकं स्मरणं सर्वदा सर्वथा हेयम्, इत्थं स्त्रिया सार्धं विजने भाषणम्, क्रीडनम्, स्त्रीप्राप्तिसङ्कल्पाद्यष्ट-विधस्य मैथुनस्य इच्छाविघातकमेव ब्रह्मचर्यं पालयितुं क्षमम्।

सुगन्धिद्रव्याणि, विदेशीयचमत्कृतिभाञ्जि वस्तूनि, सिनेमा-थियेटर प्रभृतीनि आचारभ्रंशकराणि नाटकीयदृश्यानि, आचारविलोपकगद्यपद्यमयानि पुस्तकान्यपि ब्रह्मचर्याचरणे प्रत्यूहं जनयन्ति। अत इमानि निखिलानि दूरतो नमस्करणीयानीति।

शरीरत्राणार्थे खादिवस्त्रम्, शरीरपुष्टये सात्त्विकभोजनम्, मनो द्रढयितुं साधु-सङ्गश्च ब्रह्मचर्यस्य साहाय्यं कर्तुं पारयन्तीमानि साधनानि, यथोक्तमाङ्गलभाषायामपि-

"Simple living and high thinking"

ब्रह्मचर्यरक्षणाद् वपुषि एधते शौर्यम्, शीतोष्णादिमर्षणे शक्तिर्नवोनतामेति, प्रतिक्षणम् आधिभौतिकाऽऽधिदैविकाऽऽध्यात्मिकशक्तयः पुष्यन्ति। ब्रह्मचारिसका-शाद् बिभेति वार्धक्यम्, आलिङ्गति तं प्रसत्तिः, उपसीदति नैपुण्यम्, स्निह्यति दीर्घायुष्यम्, ब्रह्मचारी एव हठादियोगान् सोढुम्, मनसः चापल्यमवरोद्धुम्, सूक्ष्मतमान् विषयान् अवबोद्धुं क्षमो नेतरः। "नायमात्मा बलहीनेन लभ्यः" इति प्रमाणाद् आत्मनः साक्षात्कर्तुमपि स एवोत्सहते, "ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत" श्रुत्यानया "मृत्युञ्जेतुमपि स एव प्रभवती"ति ज्ञायते। "यदिच्छन्तो ब्रह्मचर्यं चरन्ती"ति वासुदेवोक्त्या स्पष्टं प्रतीयते, यद् ब्रह्मचर्यमन्तरेण न सम्भा-व्यते जगदाधारस्य साक्षात्कार इति।

किं बहुना रोगविमुक्तये, स्वास्थ्यप्रतिपादनाय, अन्तःकरणनैर्मल्याय, मस्तिष्क-विकासाय, योगाभ्यासाय च परमावश्यकं ब्रह्मचर्यम्। केसरिकिशोरैः सह क्रीडित्वा पादप्रहारैः पार्वतीयप्रस्तरान् खण्डशः कृत्वा एकाकी सहस्रयोद्धृभिर्युद्ध्वा ब्रह्मचर्य-

प्रभावः सम्यक् प्रादर्शि अस्मदीयैः पूर्वजैः । केन विस्मृतं राजन्यवंशावतंसस्य देवव्रतस्य पवित्रतमं नाम । यो जामदग्नेः परशुरामस्य अखर्वं गर्वं व्यनाशयत्, वासुदेवञ्च प्रतिज्ञातोऽपि परिच्यावयामास । अद्यापि तदीययशःपताका नभसि दोधूयते । पञ्चभीष्मकव्रतमपि तदीयपुण्यस्मृतिरेव, अद्यत्वे भारतीयैर्ब्रह्मचारित्वेनैव गीयते, स्मर्यते, अर्च्यते चेति । किमनल्पजल्पितेन निखिलतत्त्वानुशीलनलब्धविमलशेमुषीकैर्नाविदितचरम् आञ्जनेयहनुमतो नाम । यो ब्रह्मचर्यप्रभावाद् असम्भवं कृत्यमपि सम्पादयन् दिगन्तव्यापनीं कीर्तिं विस्तारयन् उन्ननाम निजनाम। अणिमादीन् सिद्धीन् अभ्यस्य दविष्ठस्थिताद् भूधरात् सञ्जीवन्यौषधानयने, अनायासं शतयोजनपरिमितमम्भोधेरुल्लङ्घने, लङ्काया भस्मसात्करणे, उपरामं सशयनीयं सुषेणवैद्यस्य उपस्थापने, ब्रह्मचर्यस्य प्राज्यं राज्यं परिचाययामास सदाचाराचारगुम्फित आञ्जनेयः । यस्योपरि नितरां प्रसद्य अचकथत् जगज्जननी जानकीजानि दाशरथी रामः—

"प्रत्युपकार करौं का तोरा । सन्मुख होइ न सकत मन मोरा ।।"

अलं पल्लवितेन, क्रियासमभिहारेण सूक्ष्मेक्षिकया अवलोकनेन वयमित्थं निश्चिनुमो, यद् ब्रह्मचारिणः कृते नास्ति किञ्चिद् असम्भवम्, प्राणन् यशोभाग् भवति, उपरते तस्मिन् सती योषिदिव कीर्तिर्न तं विजहाति ।

परन्तु ब्रह्मचर्यराहित्येन काजीवनं जनस्य, ब्रह्मचर्याभावाद् रसातलादपि अधस्ताद्गतो वर्ततेऽस्मदीयः समस्तः प्रशस्तदेशः । क्व गतं विप्राणां वर्चस्त्वम्, राजन्यानां निर्मलसत्त्वम् ? शौर्यम्, गाम्भीर्यम्, आत्मसन्मानञ्च विस्मृत्य पारतन्त्र्यपाशे निबिड़बद्धा वयम् । आसीत् कदाचिद् अयं देशो विश्वस्य विश्वस्याग्रणीः, सभ्यतायाञ्च सर्वातिशायी चेति । परमद्यत्वे वीर्यमनादृत्य, क्रमशः वपुस्तेजोबुद्धिधनादीन् विनाश्य, देवैरपि दुष्प्राप्यं मानवीयं वपुरुपेक्ष्य, अनाकर्णिताधिव्याधिषु च निपत्य प्रत्यहम् । अनासादितयौवनामन्दानन्दा यमसदनमभ्युपैमो वयम्। तथ्यं गदितं केनापि विदुषा जनिजुषा, यद्विषयिणं रुग्णता सुहृदिव स्निह्यति, दारिद्र्यं गाढ़मालिङ्गति, क्लैव्यं चिरपरिचितमिव आश्लिष्यति । जीवन् स नितान्तं क्लिश्यन्, मरणावसरे स्मृतिरूपेणाविनश्वरमपकीर्तेरैश्वर्यं जहाति । अत उभयत्र पथ्यमिच्छतां मनुतनुजनुषां सर्वदा-सर्वथा "ब्रह्मचर्यं हि जीवनम्" इत्युद्देश्यं निजजीवने आदरणीयमिति ।

---

# भक्तिः।

ले०—श्रीउभयवेदान्ताचार्यसिंहासनाधिपतिः, अभिनवसरस्वती वाङ्मुखरत्नकोशः विद्वच्छिरोमणिः पण्डितराज नडादूर्स्वामीकृष्ण-महाचार्यः लक्ष्मीमन्दिरम् नाच्चियार्कोयिल्।

अयि भोः! आस्तिकसार्वभौमाः!! विदितमेवेदं हि तत्र भवतां यद्दिने दिने प्रवर्धमानेऽस्मिन् कलिकालचक्रे ज्ञानयोगकर्मयोगादीनि मुक्तिसाधनानि दुस्साधानीति निस्सारितानि आस्तिकमणिभिरखिलैरपि भगवद्भक्तिरेकैव मोक्षसाधनत्वेन साध्यत इति। धर्मार्थकाममोक्षाख्य-चतुर्विधपुरुषार्थाभिलाषिणस्सर्वेऽपि भगवद्भक्त्या ईश्वरसेवया भजनेन वा स्वेप्सितं प्राप्नुयुरिति समे आचार्यवर्याश्च मुक्तकण्ठमुद्घोषयन्ति तत्र तत्र।

मान्याः! वयमपि भक्तिमधिकृत्य किञ्चिदिव विचारयामः। अथ का नाम भक्तिः, सा च कीदृशी? कथं सा सम्पादनीया? कथं वर्धितव्या? भक्तिमन्तः कथं स्युः, भक्तिमतां लक्षणानि कानीत्यादीनि विचारणीयत्वेनोपादीयन्ते। भज सेवायामिति धातोः क्तिनि भक्तिरिति पदं निष्पन्नम्। भक्तिः भजनं एकाग्रचित्तवृत्तिरेव भक्तिः। एकाग्रचित्तीभूय पूज्यसेवनं वा भक्तिः। सेव्यश्चेतरापेक्षया सर्वेश्वर एव भवति। यदाह भक्ताग्रणी स्सप्तर्षिस्तोत्रे—"सेव्यः श्रीपति रेक एव जगताम्" इति। श्रीपतिरेव सेव्य इत्यत्र साक्षिणः एते च षडिति सोपपत्तिकं दृढयति च महाकविः—

"वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणादौदार्यादघशोषणादगणितश्रेयः पदप्रापणात्। सेव्यः श्रीपतिरेक एव जगतामेते च षट्साक्षिणः। प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः।" साक्षिभूतानां भक्तानामैतिहासिक्यः कथास्सर्वसंवेद्या एव भवन्ति। भक्तिमीमांसायां च शाण्डिल्यः—'सा परानुरक्तिरीश्वरे इति स्पष्टयन् भगवति परा अनुरक्तिरेव भक्तिरिति विवृणोति। वात्सल्यं, अनुरागः विश्वासः, इतीमानि पदानि समानार्थाभिव्यञ्जकानि भवन्ति भक्तिशब्दस्य। परा प्रीतिरपि भक्तिशब्देन व्यवह्रियते। अपत्यादिविषयिणी प्रीतिः वात्सल्यमिति कान्ताद्यवलम्बिनी प्रीतिरनुराग इति, भृत्यनिष्ठा प्रभुविषयिणी प्रीतिर्विश्वास इति चोदीर्यते। एवमन्यानि प्रीत्यभिधायकानि पदानि तत्तत्स्थानभेदेनार्थद्योतकानि भवन्ति। एवमेव सैव प्रीतिः मातरि पितरि गुरौ, राजनि, स्वदेशे

च निर्धीयमाना क्रमेण मातृभक्तिः पितृभक्तिः, गुरुभक्तिः, राजभक्तिः, स्वदेशभक्तिरिति निर्दिश्यते । निरुपपदा भक्तिः भगवद्भक्तिवाचिकैव भवति । पूर्वोक्तदिशा नानारूपिणीमिमां जननमारभ्य आन्तं क्रमेण सर्वेऽपि संवर्धयेयुरिति शास्त्राणि शंसन्ति ।

शिवानन्द लहर्यां श्रीमच्छङ्करभगवत्पादाचार्या भक्तिमेवमुपवर्णयन्ति—

"अङ्कोलं निजबीजसन्ततिरयस्कान्तोपलं सूचिका
साध्वी नैजविभुं लता क्षितिरुहं सिन्धुस्सरिद्वल्लभम् ।
प्राप्नोतीह यथा तथा पशुपतेः पादारविन्दद्वयं
चेतोवृत्तिरुपेत्य तिष्ठति सदा सा भक्तिरित्युच्यते ।"

सर्वकामफलप्रदं सर्वेश्वरं भगवन्तं साक्षात्कृत्य पुराणेतिहासादिष्वुपवर्णितचरित्रा भक्तास्सर्वेऽपि परमां भक्तिमेव सानन्दं सप्रश्रयञ्चायाचन्त न त्वैहिकमामुष्मिकं वा फलजातं—हिरण्यकशिपो स्संहारानन्तरं प्रह्लादकृतस्तोत्रेण तुष्टः श्रीनृसिंह उवाच—

"प्रह्लाद! भद्र! भद्रं ते प्रीतोऽहं तेऽसुरोत्तम!
वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम् ॥ इति ।

तदा बालः परमभक्तशिखामणिः प्रह्लादस्तु वरमेनमयाचत—

"यदि रासीश! मे काम्यान् वरांस्त्वं पुरुषर्षभ!
त्वत्पादपद्मयोर्नाथ! भक्तिस्स्यादनपायिनी ॥ (श्रीभागवते)

भगवान्नरहरिरपि तस्मै तमेव वरं ददौ । हरिभक्तिसुधोदयाख्यपुराणरत्ने भक्तमहिमादिकं सम्यङ्निरूपितं दृश्यते ।

एवमेव बालभक्तशिरोमणेः ध्रुवस्य वचनान्यपि भक्तिभरितानि आवर्जयन्ति रसिकमनांसि—

"ततो वरं राजशिशुर्ययाचे विष्णुं परं संस्तवशक्तिमेव ।
तं मूर्तविज्ञाननिभेन देवः पस्पर्श शंखेन मुखेऽमलेन ॥
"अतो हि याचे वरमीश युष्मत्पदाब्जभक्तिस्सततं ममास्तु ।
इमं परं देव वरं प्रयच्छ पुनः पुनस्त्वामिदमेव याचे ॥"

(हरिभक्तिसुधोदये)

भक्तस्यार्जुनस्य कृते हि भगवती गीता अवततार । या सर्वलोकवन्द्या, सर्वजनस्तुत्या च परिपोषिताऽभिवर्धते इदानीमपि । भगवद्गीता समग्रा परमाद्भुतं भक्तियोगमेव

प्रतिपादयति । "श्रीमद्रामानुजीयगीताभाष्यटीकायां—गीतावतरणं प्रतिपाण्डुतनयं युद्धप्रोत्साहनव्याजेन परमपुरुषार्थलक्षणमोक्ष-साधनतया वेदान्तोदितं स्वविषयं ज्ञानकर्मानुगृहीतं भक्तियोगमवतारयामास इति व्याकुर्वन्तोऽऽचार्यवर्याः गीतायाः भक्तियोगशास्त्रत्वं निर्धारयन्ति । एवमेवान्येचाचार्यवरेण्याः ।

मधुसूदनसरस्वतीस्वगूढार्थदीपिकाख्यायां गीताव्याख्यायां मध्यमषट्के भगवद्भक्तिनिष्ठव समीरतेति श्रीमद्यामुनमुनिवद्देव अभिप्रति । एवमेवान्ये भाष्यकर्त्तारो व्याख्यातारश्च व्याकुर्वन्ति ।

"द्व्यक्षरं तु भवेन्मृत्युः त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति च भवेन्मृत्युः न ममेति च शाश्वतम् ।"

इति भारते व्यासोक्तेः । साष्टाङ्गप्रणामं कुर्य्यात् । "वैकुण्ठं खण्डपरशुं भगवन्तं भवच्छिदं। प्रणिपत्य यथा न्यायं न संसारे पुनर्भवेत् ।" इति प्रणाममाहात्म्यं वामने प्रह्लादेनोक्तम् । वैष्णवधर्मे च—"नम इत्येव यो ब्रूयात् मद्भक्तः श्रद्धयान्वितः । तस्याक्षयो भवेल्लोकः श्वपाकस्यापि नारद ।।" इति ।

"जन्मान्तर सहस्रेषु तपोदानसमाधिभिः ।
नाराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते । इति च प्राचीनवचनम् ।

भगवानपि सवव्यापकः भक्तकामकल्पद्रुमः भक्तेच्छारूप-सहकारि-कारणेनास्यां भूमौ साधु परित्राणादि कार्यं कर्तुं मत्स्याद्यवतारेण प्रादुर्बभूव प्रादुर्भविष्यति च । तत् प्रमाणं च—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं ।।"
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ।।"

इति गीतायामेव गोपकन्याभुजंगेन सङ्गीतम् ।

"वासुदेवस्स्वभक्तेषु वात्सल्याचत्तदीप्सितम् ।
अधिकार्यानुगुण्येन प्रयच्छति फलं बहु ।। "इति
उपासकानुगुण्येन भजते मूर्तिपञ्चकम् ।
तदर्चा विभवव्यूहसूक्ष्मान्तर्यामिसंज्ञकम् ।। इति च

सवदर्शनसंग्रहीय-रामानुजदर्शने भगवतो नानात्वं वर्णितम् ।

"चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ।।" इति राम तापनीयो-

पनिषदि ॥ यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥" इति च गीतायां । उपासनासौलभ्यार्थं रामकृष्णाद्यवताररूपेण वा शिलादारुलोहादिमयदिव्यमङ्गलविग्रहादिरूपेण वा भगवान् विश्वमूर्तिः परमात्मा तावत् तत्तदुपासकधारणाशक्त्यनुसारेणोपासनीयो भवति। एवं भगवद्वाचकादीनामपि नाम्नां अनेकोपायसाध्यपापनाशादिरूपं कार्यं तन्नामोच्चारणमात्रेण भवति । भगवन्नामग्रहणेन पापोऽप्यजामिलाख्यधरणिदेवो विमुक्तिं गतः । भक्तिरेवैनं वर्धयति, भक्तिरेवैनं दर्शयति, भक्तिवशः पुरुषो भक्तिरेव भूयसी" इति श्रुतिश्च श्रूयते । भक्त्या केवलं श्रीकृष्णः कुचेलमुनये धानामुष्टिमुचे दत्तेसमवित्तेशतां । इत्याहुः श्रीमदभिगमान्तदेशिकवर्याः—

"देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा ।
धानामुष्टिमुचे कुचेलमुनये दत्तेस्म वित्तेशताम् ॥" इति ।
"कामाद्गोप्यो भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद् वृष्णयस्स्नेहाद्यूयं भक्त्या वयं नृप ॥"

( धर्मसूनुं प्रति नारदः ) इत्यादि वचनानुसारेण भगवद्विषयकसकलभावानामपि मोक्षसाधकत्वमवगम्य पुष्टिमार्गेण च तत्तद्भोगाननुभवन्तो वासुदेवस्सर्वमिति सर्वत्र कृष्णमेव भावयन्तो नित्यानन्दमनुभवन्ति भक्ताः । किं बहुना—वेदशास्त्रपुराणेतिहासकाव्यादीन्यखिलान्यपि भगवद्भक्तिमेव व्यञ्जयन्तीति सर्वे भावुका जानन्ति । यादवचक्रवर्ती चाह "वेदैश्च सर्वैरहमेव वेद्यः" इति । वासुदेवपरा वेदाः वासुदेवपरा मखाः । वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च हरिस्सर्वत्र गीयते ॥" इति । श्रीमद्रामानुजमुनयः श्रीमति वेदार्थसंग्रहे "अनवधिकातिशयासंख्येय-कल्याण-गुणालयं स्वसंकल्पप्रवृत्त-चिदचिद्वस्तुजाततया सर्वस्यात्मभूतं प्रतिपाद्य, तदुपासनं साङ्गं तत्प्रापकं प्रतिपादयन्ति शास्त्राणि" इति । "प्रह्लाद-नारद-पराशर-पुण्डरीक-व्यासांबरीष-शुकशौनकभीष्म-दाल्भ्य-रुक्माङ्गदार्जुनप्रभृतयः परमभागवता असंख्येयाः श्रूयन्ते भगवद्भक्तियुक्ताः । कुलशेखर, रामदास-जयदेव-नामदेवादीनां भक्तानां चरितानि भक्तमालादिग्रन्थरत्नेषु द्रष्टव्याणि । दाक्षिणात्येषु च वैष्णवा भूतयोगि-सरोयोगि-महदाह्वय-भट्टनाथ-श्रीभक्तिसार-कुलशेखर-भर्क्ताङ्घ्रिरेणु-परकालयतीन्द्रमिश्र.-श्रीवात्स्यनडादूर-म्माल-वरददेशिक-वेदान्तदेशिकादयः श्रीमत्परांकुशभक्ताः श्रीवागीशाद्याः शैव भक्ताश्चासंख्येयाः तदा तदा भगवदंशैरवतीर्य भक्तिरसनिष्यन्दिनीभिः श्रोत्रसुखाभिः स्तुतिभिः भगवन्तं संस्तुत्य कलिदूषितानखिलानन्वगृह्णन्निति च श्रूयते ।

# सूर्योदयः।

## त्रैभाषिको विशेषाङ्कः।

पञ्चदशवर्षे १५ | फाल्गुन-पूर्णिमायाः १९९६, मार्च १९४०। | ९ मी संख्या

नमो नमो ब्रह्मसदाशिवाय नमो नमः कारणकारणाय।
नमो नमो वेदजगद्धिताय नमो नमो धर्मसनातनाय॥

---

## निवेदनम्।

श्रीभारतधर्ममहामण्डलस्य मन्त्रिसभया सुनिश्चितमिदं यत् 'सूर्योदय' प्रचार-बाहुल्यार्थं सनातनधर्म-भारतीयशिक्षासिद्धान्तानां च समेधनार्थं प्रतिवर्षं चत्वारो विशेषाङ्कास्त्रैमासिकास्त्रैभाषिकाश्च सूर्योदयस्य प्रकाशनीयाः, यैः संस्कृताङ्गल हिन्दीभाषात्मक गद्यपद्यमयशिक्षाविषयक-विविधनिबन्धप्रकाशनद्वारा श्रीमहामण्डलो नैजानां सदुद्देश्यानां साफल्यं भारतीयादर्शभूतशिक्षा-विस्तारसाहाय्यादिकं च विदध्यादिति। तत्र हिन्दीभाषाङ्गलभाषयोः प्रबन्ध-लेखनादि सम्पादकीयं कार्यं श्रीमहामण्डलमन्त्रि-महोदयाः करिष्यन्ति। प्रत्येकमपि विशेषाङ्कः समधिकसंख्यया प्राकट्यमधिगमिष्यन् समस्तस्यापि भारतखण्डस्य तेषु तेषु प्रान्तेषु निवसद्भिः सर्वविधैरपि श्रीमहा-मण्डलसदस्यैः तत्सम्बद्ध-संस्थानकैश्च विनैव मूल्यं समासादितो भविष्यति इति।

---

## प्राचीनः शिक्षादर्शः।

अधुनातनसभ्यजगतः पुरातनभारतस्य च शिक्षापद्धतौ तदुद्देशेषु आकाश-पातालवद् महदन्तरं निभाल्यते।

"विद्याऽविद्येति तस्या द्वे रूपे जानीहि पार्थिव !
विद्यया मुच्यते जन्तुर्बध्यतेऽविद्यया पुनः" इति।

महर्षिवेदव्याससिद्धान्तमनुसृत्य सर्वव्यापकस्य सर्वजीवहितकारिणोऽचिन्त्य-

स्याखिलशक्तिकेन्द्रभूतस्य परमात्मनो द्वे अपि विद्याऽविद्ये स्वीयशक्तिभूते वेदितव्ये । तत्र ज्ञानजननी विद्या, अज्ञानजनयित्री अविद्या च । विद्या किल ज्ञानं प्रसूय ऐहलौकिकं पारलौकिकं चाभ्युदयं साधयन्ती मनुष्येभ्यो नैःश्रेयसिकमलौकिकमात्मज्ञानं प्रदाय तान्निखिलेभ्योऽपि बन्धनेभ्यो विमोचयति । अविद्या तु विपरीतज्ञानमज्ञानं वा प्रकटयन्ती ज्ञानमाच्छादयन्ती जीवान् बन्धने पातयति । मौलिकमिमं सिद्धान्तमनुसृत्यैव पूज्यपादैस्त्रिकालदर्शिभिर्महर्षिभिः शिक्षालक्ष्यं स्थिरीकृतमास्ते । प्रकृतिं संस्कृतिं च लक्ष्यीकृत्य शिक्षापथसंचालनेनैव तत्पथिकानां सर्वविधमपि कल्याणं सेत्स्यति । स्त्रीणां पुरुषाणां च पारस्परिको मौलिकः किल सांस्कृतिकप्राकृतिकभेदः । कारणेनैतेन शिक्षापद्धतौ भेदः स्वाभाविक एव । बीजक्षेत्रवत् पुरुषाणां स्त्रीणां च प्रकृतिसंस्कृतिप्रभृतिषु भूयान् भेदो विभाव्यते । अतो वैतेषां तासां च शिक्षापद्धतौ भेदो नितरामावश्यकः । तत्रापि च तपःस्वाध्यायनिरत-विषयरागरहित–जगद्गुरुब्राह्मणानां, धर्मरक्षकक्षत्रियाणां, कृषिगोरक्षणपरायणवैश्यानां, परमगहनसेवाधर्मकलाकौशलसमुन्नतिकारिणां शूद्राणामन्येषां च मनुतनुजनुषां शिक्षादर्शे महर्षिभिः सुमहान् भेदः प्रदर्शितो विद्यते । साम्प्रतं हि नराणां नारीणां वा सर्वेषां वर्णाश्रमधर्मावलम्बिनां तद्व्यतिरिक्तानां च एकस्मिन्नेव शिक्षामार्गे परिचालनार्थं, योऽयमुद्योगः समुज्जृम्भते, स नितरां भयमावहति । किन्तु दुरत्ययः कलिकालप्रभावः ।

"राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
राजानमनुवर्त्तन्ते यथा राजा तथा प्रजाः" ॥

इति धर्मशास्त्रवचनं साधु सङ्गच्छते । साम्प्रतमापद्धर्ममवगत्य देशकालपात्रभेदेन यथासम्भवं सर्वेषां मङ्गलमनुष्ठातुं श्रेयस्करीं वासनामवलम्बमानेन श्रीमता भारतधर्ममहामण्डलेन काशीक्षेत्रे धार्मिकाध्यात्मिक-संस्कृतविश्वविद्यालयः संस्थापितो वर्तते, तत्र तादृशी नियमपद्धतिः स्थिरीकृता यया सर्वैरपि सनातनवर्णाश्रमधर्मावलम्बिभिः स्वीयं समीहितं साधयितुं शक्यते ।

---

## धर्मस्य दार्शनिकी व्याख्या ।

पौरस्त्यदर्शनशास्त्राणि भगवद्गीताप्रभृतयो वेदसारप्रतिपादयितारो यावन्तः सद्ग्रन्थाः सन्ति, तेषां सर्वेषामैकमत्यमत्र यत् सर्वशक्तिमतः परमात्मनः शक्तिरेव प्रकृतिरित्युच्यते, "सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः" इति श्रीमद्भगवद्गीतामनुसृत्य सत्त्वं, रजः, तम इति प्रकृतेस्त्रयो गुणाः सन्ति । तेषु सत्त्वगुणो ज्ञानप्रका-

शकः, शान्तिदाता आकर्षणविकर्षणशक्त्योः रागद्वेषयोश्च समन्वयकर्त्ता सृष्टिधारकश्च विद्यते। रजोगुणो हि इच्छा प्रवृत्तिप्रभृतीनां वर्द्धयिता, अशान्तिचाञ्चल्यदुःखरागाकर्षणादीनामुत्पादयिता सृष्टिकर्त्ता च वर्त्तते, तमोगुणश्च प्रमादमालस्यमज्ञानं द्वेषं विकर्षणं च जनयन् सृष्टिं विनाश्य प्रलयमनुतिष्ठति। सत्त्वगुणरूपिण्या जगद्धारिकया धर्मशक्त्यैव निखिलोऽपि ब्रह्माण्डप्रपञ्चो यथास्थानं संस्थितो विद्यते। धर्मो हि सत्त्ववृद्धिकरः। स्मर्य्यते चात्र—

सत्त्ववृद्धिकरो योऽत्र पुरुषार्थोऽस्ति केवलः।
धर्मशीले तमेवाहुर्धर्मं केचिन्महर्षयः॥ इति।

शारीरिकं, वाचनिकं मानसिकं बौद्धिकं तत् कर्मैव धर्मो येन रजस्तमसो ह्रासः, सत्त्वस्य च समृद्धिः स्यात्। निखिलमपि जगत्प्रपञ्चं त्रिगुणात्मकमित्यतो न कोऽपि पदार्थः त्रिगुणमतिवर्त्तते। जीवा अपि त्रैगुण्यविषयाः, मानवा अपि न सन्ति त्रिगुणविकारशून्याः। यथा हि जीवसुषुप्तावालस्यदशायां वा तमसः, कार्यकाले रजसः, सद्विचारोपासनाद्यवसरे सत्त्वस्य चाभ्युदयस्तथैव मानवकर्मकलापोऽपि त्रिगुणात्मकोऽवगन्तव्यः। निरवच्छिन्नप्रवाहेण सत्त्वगुणसमेधकं कर्मैव धर्म इति निर्गलितार्थः। महीयसामपि चन्द्रसूर्यादिग्रहनक्षत्राणां मण्डलमिदमाकर्षणविकर्षणस्वरूपयोः रजस्तमसोः समन्वयेन ( Equilibrium ) एव स्वस्वकक्षायां बम्भ्रम्यमाणं सुसंरक्षितं, नवैकेनाकृष्यमाणं विकृष्यमाणं वा नश्यतीति धर्ममाहात्म्यम्, समन्वयकारिणीयं शक्तिः प्रकृतेः सत्त्वगुण एव समुपलभ्यते। प्रस्तरत्वं किलाणीयसामपि परमाणूनामन्योन्याकर्षणशक्त्या समुत्पद्यते, तेषामेव विकर्षणशक्त्या विनश्यति, तयोः समन्वयरूपसत्त्वगुणमूलकधर्मस्य धारिकया शक्त्या सुरक्षितं तिष्ठति। जडपदार्थेष्वपि धर्मशक्तिः कथं व्याप्नोतीत्युदाहृतम्। चेतनराज्येऽपि धर्मशक्तिरेव जीवसमूहमुद्भिज्ज (Vegetable kingdom) स्वेदजा- (Germ kingdom) अण्डज ( Eggborn kingdom ) जरायुज ( Sackborn kingdom ) मनुष्यादियोनिषु क्रमश उन्नमयन्ती स्वतो दृष्टप्रभावा सर्वोत्कर्षेण वर्त्तमाना विराजते। उद्भिज्जादिमानवान्ता क्रमोन्नतिरियं सत्त्वगुणं द्वारीकृत्यैव प्रवर्त्तत इति पौरस्त्यदर्शनशास्त्रपर्यालोचनया सिध्यति। क्रमविकासोऽयं ( Evolution ) ज्ञानराज्यस्य चतुर्विधजीवसङ्घस्यावस्थापर्य्यालोचनया स्वत एवावगन्तुं शक्यते। मानवशरीरे जीवत्वपूर्णविकाशहेतो धर्माधर्माचरणे स्वाच्छन्द्यं स्वतः समुत्पद्यते। अधर्मस्तु मानवानधो नयति। धर्म एव क्रमशः तानुन्नमयन् परमात्मपारावारं प्रापयन् बन्धनान्मोच

यति। धर्मसाधनेनैव जीववर्गो नैजामैहलौकिकीं पारलौकिकीं च समुन्नतिमधिगच्छन्नन्ते कैवल्यपदमासादयति। उक्तं च वैशेषिकदर्शने—

'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः'। इति

सर्वजीवहितकारिणीयं धर्मशक्तिः समस्तानपि तत्तन्मतधर्माधिकारिणो मनुस्तनुजनुषः कथमिव समुन्नयति समुन्नतिपथे इति विविच्यते—

शारीरिक-वाचनिक-मानसिक-बौद्धिकभेदेन मानवकर्माणि चतुर्धा विभक्तानि, करौ सम्पुटीकृत्य मूर्धानमवनमय्य करशिरःसंयोगानुकूलव्यापारः प्रणामो हि शारीरिकं सत् कर्म। एकं करमप्युत्थाप्य शिरः किञ्चिदाकुञ्च्य सन्मानव्यापारोऽपि प्रणामान्नास्ति भिन्नः। तादृशकायिकसत्कर्मपरिपालनेन जाड्याहङ्काररूपे तमोरजसी ह्रसिमानमासादयतः, तेन भवति समुन्नतिस्तद्व्यापारवतो मानवस्येति निर्विवादम्। स च व्यापारो हिन्दूनां वा माहम्मदानां कल्याणकरो भवति। अभ्यर्णमुपागतं परधर्मावलम्बिनं वा स्वधर्मावलम्बिनं वा पूज्यमपूज्यं वा पुरुषमालोक्य पारुष्यरहितेन मधुरमधुरेण प्रीतिपरिपूर्णेन वचसा संलापेन रजस्तमसोरभावात् सत्त्वजनितशान्तिसुखसंवर्द्धनाच्च वाचनिकं तदिदं सत् कर्म हिन्दूनां, माहम्मदानां, खिस्तानां, पारसीकानां, तत्तद्धर्मावलम्बिनामन्येषामपि मानवानां धर्मवृद्धिकरं कल्याणदायकं विद्यते। यदि कोऽपि मनुष्यो नैजं वा परकीयं वा धर्ममतावलम्बिनं पुमांसं मनसि हिंसति पीडयति वा तर्हि तदीयं तन्मानसिकं कृत्यं सुखकारि-सत्त्वगुणनाशकत्वादधर्मरूपं भवति। यद्यसौ तमुद्दिश्य तद्धितं चिन्तयति तदा तस्य मानसिकं तत् कर्म सत्त्वगुणवर्द्धकत्वाद्धार्मिकं भवितुमर्हति। विज्ञानशास्त्रविज्ञाता धीधनः कश्चिद् यदि संसारनाशकं नरसंहारकरं विचारमाश्रित्य तादृशं शस्त्रास्त्रमाविष्कुर्यात् विषदिग्धवायुसम्पादनक्षमं वाष्पं वा जनयेत्, तर्हि तदीयमिदं बौद्धिकं कर्म धर्मविरुद्धं भवेत्। यद्यसावेव जनसमाजरक्षाकल्याणकामनया महोपकारिणां बहुविधौषधानामाविष्कारं विदध्यात्तदा बौद्धिकं कृत्यं तदीयं तत् धार्मिकं भवेत्। अतो हि शारीरिक-वाचनिक-मानसिक-बौद्धिककर्माणि सत्त्वगुणस्वरूपधर्ममाश्रितानि जानतामजानतामखिलानामपि विभिन्नधर्ममतावलम्बिनां धर्मं परिवर्द्धयन्ति, हितपरम्परामप्यनुतिष्ठन्तीति पांशुलपादोऽप्यवगन्तुं प्रभुः। दार्शनिकयाऽनया व्याख्यया सत्त्वगुणवर्द्धिनी धर्मशक्तिः समेषामपि भूमण्डलस्य तत्तद्धर्ममतावलम्बिनां समानहिताधायिकेति नात्राणीयानपि संशीतिलेशः।

यथाहि बहुपुत्रवतः स्नेहमयस्य पितुः शक्ता अशक्ता वा, लघवो गुरवो वा, ज्ञानिनोऽज्ञानिनो वा सर्वेऽपि पुत्रा भवन्ति, तांश्च दयालुः स्नेहवान् पिता हितदृष्ट्या

पश्यति, पुत्रा अपि तादृशं पितरं श्रद्दधते समाद्रियन्ते परस्परं च परमेण प्रेम्णा सम्मिलन्तो व्यवहरन्तः स्वकीये परिवारे परमां शान्तिं समधिकं सुखं च समुपस्थापयन्ति, तथैव परमकारुणिकः सर्वशक्तिमानेकोऽद्वितीयः परमपिता परमात्मा सकलेष्वपि भूमण्डलधर्ममतमार्गेषु कृपादृष्टिवृष्टिमातनुते । तत्तद्धर्ममतमार्गावलम्बिनामपि परमात्मचरणप्राप्तिरूपैकलक्ष्यतया प्रधानमिदं कर्त्तव्यं यत् ते परस्परं भ्रातृभावं समेधयन्तो व्यवहरन्तु, येन विश्वमेतत् शान्तिसुखस्थानं सम्भवेदिति ।

## श्रीमहामण्डलस्य प्रयोजनम् ।

'संघे शक्तिः कलौ युगे' इति भगवतो व्यासस्य वचनमनुसृत्य सनातनधर्मावलम्बिन आध्यात्मिकसमुन्नतिशीलशालिनो मानवसमाजस्य संरक्षणार्थमेकस्या अखिलभारतवर्षीय-धर्ममहासभायाः प्रयोजनं त्रिकालाबाधितम् । स्वाधीनताप्राप्तिपर्यन्ता राष्ट्रियसभायाः ( कांग्रेस ), राजनीतिक्रमङ्गलमुद्दिश्य हिन्दुमाहम्मदेषु भ्रातृभावस्थापनपर्यन्ता हिन्दुमहासभाया अपि प्रयोजनीयता विद्यते । किन्तु श्रीभारतधर्ममहामण्डलस्वरूपाया धार्मिकमहासभायाः सर्वदैवावश्यकत्वमिति न विस्मरणीयं सनातनधर्मावलम्बिभिः । धर्मशिक्षा—धर्मप्रचार-भारतद्वीपव्यापिशृङ्खलास्थापनधर्मालयसंस्कार-मानदान प्रभृतीन् अनेकान् विभागान् द्वारीकृत्य व्यतीतामर्द्धशताब्दीमारभ्य महासभयानया यानि लोकहितकरकार्याणि विस्तार्य्यन्ते, तदिदं यथासमयं हिन्दुभिः स्मृतिगोचरीकरणीयमिति सप्रश्रयं निवेद्यते ।

## सप्तदर्शनविज्ञानम् ।

वैदिकदर्शनानि सप्त वर्तन्ते । षड्दर्शनशब्दस्तु जैनसम्प्रदायादागतो यतस्तत्र सम्प्रदाये षड्दर्शनानि सन्ति । सप्तज्ञानभूमिकानुसारं वैदिकदर्शनानां सप्तसंख्याकत्वं सुतरां स्वाभाविकं वर्तते । न चात्र कस्यापि वैमत्यं सम्भवति । एषु च सप्तसु वैदिकदर्शनेषु न्यायो वैशेषिकञ्चेति दर्शनद्वयं पदार्थवाददर्शननाम्ना जगत्प्रसिद्धमेवास्ति । योगदर्शनं सांख्यदर्शनञ्चेति द्वे दर्शने सर्ववादिसम्मते एव तयोः श्रुति-स्मृति-पुराणादिप्रतिपादित-सिद्धान्तप्रतिपादकत्वात् । अथापरं मीमांसादर्शनं वेदानां काण्डत्रयविभक्ततया त्रिविधं वर्तते । वेदोक्तानां कर्मोपासनाज्ञानकाण्डानां मध्ये एकैकस्य काण्डस्य एकैकस्मिन् दर्शने मीमांसितत्वान्मीमांसादर्शनस्य त्रैविध्यं स्वतः सिद्धमेवास्ति । एवं वैदिकदर्शनानि सप्तधा विभक्तानि वर्तन्ते ।

अथैतेषु योगसाधनस्य, मन्त्रयोगसंहिता-हठयोगसंहिता-राजयोगसंहिताभेदेन चतस्रः संहिताः सन्ति । तत्रेमासु चतसृषु संहितासु राजयोगसंहिता एकप्रकारेण दार्शनिकग्रन्थो विद्यते । तत्र हि एवमुल्लेखोऽस्ति—

सप्तदर्शनविज्ञानं विज्ञेयं विधिपूर्वकम् ।
समीक्षणार्थकत्वाद्धि दर्शनं वै हितप्रदम् ॥
सप्तज्ञानात्मकभुवः परं तत्त्वावलोकनम् ।
कथं भवति वेदैश्च शास्त्राद्यैरधिगम्यताम् ॥
निमित्तकारणीभूतं सृष्टेर्ब्रह्मेति बोधनम् ।
षोडशानां पदार्थानां तत्त्वाप्तिर्ज्ञानतः स्फुटम् ॥
परमाणोश्च नित्यत्वं प्रथमं भूमिदर्शनम् ।
धर्माधर्मौ विनिर्णीय षट्पदार्थं विचार्य वै ॥
परतत्त्वोऽपलब्धिश्च द्वितीयं भूमिदर्शनम् ।
वृत्तयो जगतो मूलं रुद्ध्वा ता यत्नपूर्वकम् ॥
परतत्त्वोपलब्धिर्हि तृतीया भूमिका मता ।
विदित्वा प्रकृतिं सम्यक् परतत्त्वावबोधनम् ॥
कथयन्ति बुधा एतत्तुरीयं भूमिदर्शनम् ।
प्राधान्यात्कर्मणो ब्रह्म जगदेवेति निश्चयः ॥
पञ्चमी भूमिका सेयं निर्दिष्टा तत्त्ववेदिभिः ।
भक्तेः प्रधानता हेतोर्ब्रह्मत्वे निखिलं जगत् ॥
येयं बुद्धिर्विनिर्दिष्टा सा षष्ठी भूमिका मता ।
ज्ञानाधिक्यादहं ब्रह्मास्मीति धीः सप्तमी भवेत् ॥
अधमाऽज्ञानभूमिर्वै तमोमुख्या विजृम्भते ।
तमोरजःप्रधाना च मध्यमाऽसौ प्रकीर्तिता ॥
उत्तमाऽज्ञानभूमिश्च रजःसत्वप्रधानिका ।
शुद्धसत्वविकाशस्य स्थले नूनं यथाक्रमम् ॥
पुण्यभाजां मनुष्याणां चित्ताकाशे यतो ध्रुवम् ।
सप्तानां ज्ञानभूमीनामधिकाराः क्रमेण हि ॥
समुद्यन्ति ध्रुवं देवदुर्लभानां स्वभावतः ।
ज्ञानभूम्यश्च सप्तैताः साधकान्तर्हृदि क्रमात् ॥
शुद्धं सत्त्वगुणं सम्यग् वर्धयन्त्यो निरन्तरम् ।

निःश्रेयसपदं नित्यं गुणातीतं नयन्त्यलम् ॥
यत् किञ्चिदासीज् ज्ञातव्यं ज्ञातं सर्वं मयेति धीः ।
आद्याया भूमिकायाश्चानुभवः परिकीर्तितः ॥
त्याज्यं त्यक्तं मयेत्येवं द्वितीयोऽनुभवो मतः ।
प्राप्ता शक्तिर्मया लब्धोऽनुभवो हि तृतीयकः ॥
मायाविलसितं चैतत् दृश्यते सर्वमेव हि ।
न तत्र मेऽभिलाषोऽस्ति चतुर्थोऽनुभवो मतः ॥
जगद् ब्रह्मेत्यनुभवः पञ्चमः परिकीर्तितः ।
ब्रह्मैवेदं जगत् सर्वं षष्ठोऽनुभव उच्यते ॥
अद्वितीयं निर्विकारं सच्चिदानन्दरूपकम् ।
ब्रह्माऽहमस्मीति मतिः सप्तमोऽनुभवो मतः ॥
इमां भूमिं प्रपद्यैव ब्रह्मसारूप्यमाप्यते ।

---

## आर्य्यमहिलामहाविद्यालयस्य वार्षिकोत्सवः ।

(ले०—प्रत्यक्षदर्शी धर्मनाथशास्त्री आयुर्वेदाचार्य्यः साहित्यशास्त्री काशी)

पुण्यक्षेत्रेऽस्मिन् विश्वेश्वरनगरे काशीक्षेत्रे आर्यमहिलाहितकारिणी-महापरिषद् द्वारा संचालित आर्यमहिलामहाविद्यालयो विद्यते। यो हि सम्प्रति आर्यसंस्कृति-संरक्षणपुरःसरं राजकीयभाषायाः शिक्षां प्रवेशिकावधिं बालिकाभ्यो वितरति। अस्मिन् विद्यालये भारतीयसंस्कृते धर्मशिक्षायाश्च प्राधान्यं वरिवर्ति। यया शिक्षया अल्पवयस्का बालिका अपि आर्यसंस्कृतिसाहित्यमवगाह्य यावन्ति भारतीयानां निगूढानि ऋषिप्रणीतानि स्त्रीशिक्षारत्नानि संस्कृतशास्त्रे सन्ति, तानि सर्वाणि राष्ट्र-भाषामुखेन ज्ञात्वा आर्यगौरवं न विस्मरन्ति, तथा मदालसासीतासावित्रीप्रभृतीनां साध्वीनां स्त्रीणां चारित्र्यमूल्यं नावहेलयन्ति। अतोऽप्यधिकम् अस्मिन् विद्यालये अधीत्य बालिकाः संसारजीवनयात्रायां स्वोदरपूरणमेव स्वकर्तव्यं नावगच्छन्ति। किन्तु सदाचार पूर्वकं स्वकौलीन्यं दर्शयन्ती ऋषीप्रणीताम् आर्यपद्धतिमेवानुगच्छन्ति

एषमो माघकृष्णचतुर्थ्याम् उक्तमहाविद्यालयस्य श्रेष्ठिवर्य्यश्रीरामकृष्णडाल-मियामहोदयस्य साभापत्ये सम्पन्न-सप्तमवार्षिकोत्सवावसरे विद्यालयस्य सप्तवार्षिकीभ्याम् बालिकाभ्याम् अभिनीतं लघुलवकुशनाटकाभिनयं सदस्यानां हृदि अपूर्वं भारतगौरवं प्राख्यापयत्। तत्रैव जनकनन्दिन्या स्वबालकाभ्यां दत्त उप-

देशश्चैवमभूत्। यत् भारतमातॄणां किं कर्तव्यम् प्रागासीत्? कीदृश्यो वीरमातरः सावित्रीतुल्याः पातिव्रतधर्मपरायणाश्चाभूवन्। तथा स्वधर्मवृत्त्या तासां सुताश्च वीर-चरित्रयुक्ता मातृपितृभक्ताश्चासन् इति।

ये च मान्या नरनार्य्यः तत्र नोपस्थितास्तेषां हृत्पटलेषु अयम्भावः समेयात् एतदर्थमभिनयवाक्यानि अधो लिख्यन्ते। अभिनयकलाप्रदर्शनं तु लेखनीपक्षे सम्यग् नायाति। तत्तु प्रत्यक्षतो दर्शका दर्शिका एव यथायथं हृदयस्थं कर्तुम-पारयन्। अनुपस्थितास्तु एतदलभ्यलाभात् वञ्चिता एवेति। ते ताश्च स्वानुपस्थिति-मेव गर्हयन्तः संतुष्यन्तु इति। तथाहि—लघुनाटकस्वरूपमधोनिर्दिश्यते।

(तल्लेखका विद्यालयस्य संस्कृत-धर्माध्यापकाः पं० श्रीशिवकुमारशास्त्रिणः साहि-त्याचार्य्या व्याख्यानविशारदाः सन्ति।)

अथाश्रमीयरङ्गस्थले प्रविशतः लव-कुशौ आश्वमेधिकाश्वसहितौ।

लवः—(सतर्कम्) अश्वमेधयज्ञस्यायम् अश्वः। भ्रातः! अश्वमेधयज्ञस्यायमश्वः।

कुशः—कथं जानासि हे भ्रातः! अश्वोऽयम् आश्वमेधिकः।
न किञ्चिद्दृश्यते चास्मिन् चिह्नं वै चाश्वमेधिकम्॥

लवः— ज्ञातव्यं तत्र किं भ्रातः त्वयाऽपि पठितं ध्रुवम्।
धन्विनः खड्गिनश्चान्ये तथा कवचिनोऽपरे॥
रक्षिणो यत्र गच्छन्ति परितोऽश्वं पदातिनः।
स कथं न भवेत्तात! अश्वोऽयमाश्वमेधिकः।
जयघोषोऽपि सैन्यानां महानुच्चैः श्रुतो मया।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः।
सोऽयमश्वः पताकेयमित्यादि जयघोषणा॥

कुशः—अहो! सत्यमयमश्वोऽश्वमेधस्यैव यतो योद्धारोऽनुधावन्ति क्रूरां वाचश्च वदन्ति—

अहो! सन्दीपनं वाक्यं रक्तोष्मा जायते ध्रुवम्।
अङ्गानि दीप्तिमायान्ति भुजोऽयं स्पन्दते द्रुतम्।
खड्गं ग्रहीतुं हस्तोऽयं बलाद्धावत्यतर्कितम्।
निःक्षत्रिया धराः किं भो यदेवं सैनिका इमे।
भाषन्ते भीषणं वाक्यं क्षात्रतेजोऽवमर्दकम्।
व्रजामः शीघ्रं संयुध्य सर्वं सैन्यं विनाश्य च।
अश्वं ग्रहीतुं सर्वांस्तान् बध्नीमो मुख्यसैनिकान्॥

लवः— अनुमोदेऽप्यहं वत्स ! त्वया यद् वच उच्यते।
मातुराज्ञाऽत्र संग्राह्या माता वै दैवतं परम्॥
श्रुतिस्मृतिपुराणेषु माता सर्वत्र पूजिता।
पितृतः श्रेयसी मातेत्याहुः सर्वे महर्षयः॥
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।
कल्याणीं वत गाथां तां को न जानाति निश्चिताम्॥

कुशः—साधु भ्रातः ! साधु। साधु उक्तं त्वया।
साधु संस्मारितं तात गच्छावो मातृमन्दिरम्।
माताऽपि ध्याननिष्ठा सा पश्यास्मान् सम्प्रतीक्षते॥

(पटाक्षेपः)

(ततः प्रविशति म्लानमुखी शोचन्ती सीता। तपस्विनी चैका)

(तपस्विनी—सर्वतो विलोक्य साश्चर्य्यम्)

जनकनन्दिनि ! सीते ! किं शोचसि ! संध्या संजाता सुकुमारौ कुमारौ ते न दृश्येते ? किं ताभ्यां विना दुःखिताऽसि ? क गतौ तौ ?

सीता—महाभागे तपस्विनि !

मम प्राणप्रियौ वत्सौ नाधुनाऽपि समागतौ।
कथं क्रीडापरौ नैवं विलम्बं कुरुतः कचित्॥
आश्रमे श्रूयते कस्मान्महाकोलाहलोऽधुना।
यद्यप्यद्भुतकर्माणौ महावीरौ सुकर्मठौ॥
वज्रसंहननौ नित्यं व्यायामपरिपालकौ।
निर्भीकौ तिष्ठतो ह्यस्मिन्नाश्रमे मुनिसेविते॥
स्वतन्त्रवातावरणे गृहीतो ज्ञानमुत्तमम्।
तथाऽपि कम्पते हृन्मे मातृस्नेहो महाबली॥

तपस्विनी—(आगच्छन्तौ कुशलवौ दृष्ट्वा)

अहो ! उभौ ते सम्प्राप्तौ सुतौ कुशलवौ यमौ।
याभ्यां विरहितं शून्यं भवनं ते न रोचते॥

(सुतौ मातरं वन्देते)

सीता—
कथं विलम्बितौ प्राणप्रियौ ब्रूत सुतौ मम।
युष्मत्स्नेहो नितान्तं मां यदुद्वेजयतेऽनिशम्॥

लवः—प्रणम्य बद्धाञ्जलि भूत्वा—

मातः ! क्षमस्व नौ कश्चिदपराधो न विद्यते।
आश्रमेऽस्मिन् समायात एषोऽश्व आश्वमेधिकः ॥
गृहीत्वेमं कुशो गच्छन् योद्धुं सम्प्रति सैनिकैः।
मया निरुध्य त्वत्पार्श्वे समानीतो हठादिह ॥
आदेशार्थं हि युद्धस्य यथेच्छसि तथा कुरु।

कुशः— अनुजानीहि वै मातः ! योद्धुं सम्प्रति सैनिकैः।
विलम्बं कुरु नो मातः ! बाहुर्मे स्पन्दतेऽधुना।
बद्धोऽयमश्वः तान् योधान् शीघ्रं बद्धुं व्रजामि वै ॥

सीता—कुशलवयोर्हस्तौ गृहीत्वा—

अहो ! वां नैव कालोऽयं युद्धस्यास्ति सुतौ मम।
अयमध्ययनस्यैवावसरो विद्यते ध्रुवम् ॥

कुशः—हस्तं विमोच्य—

मात स्त्वयैव तत् प्रोक्तम् मर्य्यादां पालयेत् सदा।
परन्तु देशधर्मार्थं स्वात्मार्थं तां परित्यजेत् ॥
आपत्काले न मर्यादा विद्यते प्रोच्यते बुधैः।
ध्रुवो बाल्ये तपस्तेपे बाल्ये रामो वनं गतः ॥
प्रह्लादो बाल्यकाले हि भेजे विष्णुं स्वभक्तितः।
न विचारय मातस्त्वं युद्धायाज्ञां प्रदेहि नः ॥

सीता—( सर्वतो दृष्ट्वा ) तपस्विनीं प्रति लक्ष्यं कृत्वा

कथं न्याय्यमनुष्ठानं वीरमाता निषेधतु।
कथं वाप्यनुजानातु साहसैकपरां क्रियाम् ॥

तपस्विनी—सीतां प्रति—

साहसं न निरोधव्यं बालानां मातृभिः क्वचित्।
साहसस्य निरोधेन बालाः स्युर्भीरवः सदा।
अतो युद्धाय वै देया त्वयाज्ञा सांप्रतं ध्रुवम्।
यथा साहसवृद्धिः स्यात् सुतयोस्ते न संशयः ॥

सीता— तपस्विनि ! त्वं यद् ब्रूषे तन्मह्यमपि रोचते।
आज्ञा युद्धाय दातव्या पुत्रसाहसवर्द्धिका ॥

( ततः पुत्रावबलोक्य संबोध्य च ) ।

अहो ! प्राणप्रियौ वत्सौ ममाज्ञावशवर्तिनौ ।
सत्यमुक्तं युवाभ्यां यत् तत्तथैव न चान्यथा ॥
एष सांग्रामिको न्यायः एष धर्मः सनातनः ।
एषा हि रघुसिंहानां वीरचारित्र्यपद्धतिः ॥
अतो युवां योद्धुकामौ गच्छतं संगरेऽधुना ।
गत्वा शत्रून् पराजित्य दर्शयेथां स्वपौरुषम् ॥
वीरमातेति जगति यशो मे संप्रसार्यताम् ।
जीत्वा शत्रून् समागत्य भूषयेथां गृहं मम ।
शिवा भवन्तु पन्थानो युवयोः सांप्रतं सुतौ ॥

( गच्छन्तौ कुशलवौ मातरं प्रति— )

कुशः लवश्च—इदानीमेव तान् सैन्यान् हत्वा सेनापतिं तथा ।
बध्वा तमानये मातः वन्दे ते चरणाम्बुजे ॥

तपस्विनी, सीता चाशीर्वादं दत्तः—

जनन्यो वीरसंताना भूयासु र्भारते सदा ।
मर्य्यादारक्षणायैव यासां साहसिकाः सुताः ॥
यथेमौ बालकौ वीरौ न सहेतेऽवमाननाम् ।
तथाऽन्ये वालका वीरा न सहन्तां विमाननाम् ॥ (इति पटाक्षेपः)

---

## श्रीमताम्महामहिम-शालिनां मैथिलभूसुरसूरिसत्तमानां-"विद्यावाचस्पति" पं० मधुसूदनझाजीमहानुभावा-नामपवर्गमुपलब्ध्य—वियोगप्रकाशः ।

रचयिता—श्रीसत्यदेवमिश्रः "काव्यतीर्थः" व्याकरणशास्त्री ।

मैथिल भुसुर-सूरे ! प्रोद्यत्पाण्डित्यताण्डवस्वान्त !
विद्यावाचस्पतितान्निराश्रयीकृत्य किं यातः ? ॥ १ ॥
वाचस्पतिदेशीयो वाचस्पतिना सहैव संरन्तुम् ।
स्वर्गङ्गतोऽसि विद्वन् ! भूतलमपहाय दुर्दैवात् ॥ २ ॥
नष्टङ्गौरवमिह नोऽदिष्टवशादेव सूरिनिकराणाम् ! ।
शीतलवचनैः शमयतु कोऽत्र बुधानामिमामाधिम् ? ॥ ३ ॥

अध्यापनपरिपाटीं वेदान्तानां तावकीं श्रुत्वा ।
पूतश्रोत्रः कोऽन्नत्यो नात्र क्लेशमाप्नुयादनिशम् ? ॥ ४ ॥
दर्शनसम्भाषणवल्लोकगणाः किन्न दूयन्ताम् ! ।
केवलनामश्रवणेनैव वयं यत्र खिद्यामः ? ॥ ५ ॥
महामहिमशालिनां वत ! महाभयाणुम्भवेत् !!
विधे ! किमिव तावको नयनिधे ! मुधायन्नयः ?
तवेदृशविधातृता ननु मता परास्ता यदा—
भुवोऽमरनरा मृता वद तदा कथन्तेऽमराः ? ॥ ६ ॥
याते दिवं त्वयि बुधे सुधियो विपन्ना-
स्त्वन्नामधाममहिमानमनुस्मरन्तः ।
हा ! हन्त ! हन्त ! वत ! कम्प्रति यान्तु वेदाः ?
विद्यानिधे ! कथय सम्प्रति किं विधेयम् ? ॥ ७ ॥
किङ्कार्यमूढमनसो विलपन्ति सन्तः
न्यक्कारमुद्गिरदतिक्रुधमाश्रयन्तः ।
निन्दन्ति वैधनयमार्यहरप्रदिग्धं
स्निग्धन्दहन्ति हृदयं दयनीयभावाः !!! ॥ ८ ॥

—०—

## वार्षिकोत्सवः ।

आर्यमहिलाविद्यालयस्य वार्षिकोत्सवः सुमहता समारोहेण जनवरीमासस्य २८ दिवसे दानवीर-श्रीसेठ रामकृष्णडालमियामहोदयस्य सभापतित्वे संजातः ।

——

पञ्चदशो वर्षे १५ ] चैत्रवैशाख-पूर्णिमयोः १९९७ अप्रैल मई १९४० [ १०-११ संख्या




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वल्लोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—
त्यक्त-महामहोपाध्यायपदवीको
**महामहाध्यापकः श्रीपञ्चानन-तर्करत्न-भट्टाचार्यः।**

सहकारि-सम्पादकः—
**अवधेशप्रसादशर्मा द्विवेदः**

उद्गम—स्थानम्—
**श्रीभारतधर्ममहामण्डलम्, जगतगंज, काशी।**

—:०:—

वार्षिकं मूल्यं मुद्रात्रयम्।
संरक्षकेभ्यः ५) वहिर्भारतम् ६) छात्रेभ्यः पुस्तकालयेभ्यश्च २)

## विषय-सूची ।



## श्रीरामदेव्या अलोकचमत्कृतिः ।

तदीयभाषणसंकीर्त्तनयोर्महत्ता समादरेण प्रतिगृहं चर्चा चलतिस्म । इयं साक्षाद् दैवी विभूतिरिति सर्वेऽपि वाराणसेया जना विश्वसन्ति । अत्र विविधस्थानेषु श्रीरामदेव्याः सदुपदेशाः सङ्कीर्त्तनानि चाभवन् । श्रीमहामण्डलभवने एप्रिलमासस्य १२ तारिकातो दिनद्वयं श्रीरामदेव्या व्याख्यानं सङ्कीर्त्तनञ्चाद्भुतमभूत् । प्रतिदिनं सहस्राधिका जना आबालवृद्धाः सम्मिलिता अभवन् । भूयो भूयस्तस्या भाषणं श्रोतुमुत्कण्ठिता परमं ललायिता च दरीदृश्यते ।

सप्तदशतारिकायामेप्रिलमासस्य प्रभाते प्रसिद्ध आर्यमहिलामहाविद्यालयेऽपि श्रीरामदेव्या भाषणं सङ्कीर्त्तनमपि समपादि । तदाकर्ण्य निखिलमपि समुपस्थितं सहस्राधिकं महिलामण्डलं सातिशयं प्रसीदतिस्म । सर्वत्रैव यशोराशिरस्याः प्रतिपलं प्रतिगृहं च प्रसरति ।

# सूर्योदयः ।

पञ्चदशवर्षे १५ } चैत्रवैशाख-पूर्णिमयोः १९९७, अप्रैल मई १९४०। { १०-११ मी संख्या

## पुनर्जन्मवादः ।

गताङ्केऽस्माभिः पुनर्जन्मविषये वैदिकान्येव प्रमाणानि समुपन्यस्तानि। सम्प्रति उपनिषद्दर्शनाद्यन्यशास्त्रेभ्यस्तत्र प्रमाणानि संगृह्यन्ते। तथाहि—छान्दोग्योपनिषदि—

'तद्य इत्थं विदुः। ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिभवन्ति अर्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद् यान् षडुदङ्ङेति मासान् तान्। मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति। एष देवयानः पन्था इति। अनया छान्दोग्यश्रुत्या पञ्चाग्निविद्याविदां गृहस्थानां वानप्रस्थानां परिव्राजकानां नैष्ठिकब्रह्मचारिणाञ्च अर्चिरादिमार्गेण लोकान्तरगत्या सत्यलोकावसानम् पुनर्जन्माभिधानम्। इति उत्तरायणमार्ग उच्यते। इष्टापूर्तजुषां गृहस्थानान्तु धूमादिमार्गेण लोकान्तरगत्या पुनर्जन्माभिधानम् मर्त्यलोकावसानम्। तथाहि—

'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद् यान् षड्दक्षिणैति मासान् तान्नैते संवत्सरमभिप्राप्नुवन्ति। मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति। तस्मिन् यावत्सम्पातमुषित्वाऽथनमेवाध्वानं पुनर्निवर्तन्ते। यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति। धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति। इह व्रीहियवा ओषधिवनस्पतयः तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो योह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति। इति दक्षिणायनमार्गोऽभिधीयते। इत्येवं छान्दोग्ये उत्तर-दक्षिण—गत्यादिश्रुत्या मर्त्यलोकावसानं पुनर्जननमरणे उक्त्वा कर्मानुसारेण योनिप्रवेशमाह। तथाहि—"तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्

ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चण्डालयोनिं वा ।"

ये हि न श्रद्धातपोभागिनो नापि इष्टापूर्त्तसेविनस्ते हि भूयो भूयो निरन्तरं जननमरणे एवाप्नुवन्ति इति तेषां कृते तृतीयां गतिमाह ।

"अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राणि असकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्य्यते तस्माज्जुगुप्सेत।

इति छान्दोग्योपनिषदि बहुशः पुनर्जन्मप्रामाण्यमुपलभ्यते इह विस्तरभयान्नोपनिबध्यते ।

तत्र जन्मनि पूर्वसंस्कार एव हेतुर्भवति इत्यपि—

"तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च"

इत्युपनिषदैव समर्थ्यते । निरुक्तेऽपि स्फुटं जन्मान्तरव्यवस्था समुद्घोषिता दृश्यते । तथाहि—

"आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ।
अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः" (निरु० प्र० १३। ख० १९)

पतञ्जलिनापि मुनिना एवमेव संस्कारकारणका एव जात्यायुर्भोगा अभिधीयन्ते । तथाहि—

"सति मूले तद्विपाको जात्यायुर्भोगाः ।"

"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ।"

बहूनां मानवानामध्ययनधनार्जनादिकर्म्मणि प्रवृत्तानां फलपरिणामभेदे व्यासेन मुनिनाभिहितम् "समानमीहमानानाञ्चाधीयानानाञ्च केचिदर्थेन संयुज्यन्तेऽपरे न" इत्यादिना पूर्वार्जितसंस्कारभेदादेव फलभेदो भवतीति स्पष्टं मुनेरभिमतं प्रतीयते। अत्र बहुवक्तव्यस्यावकाश एव न विद्यते । आर्य्यमर्य्यादायान्तु पुनर्जन्मवादस्य डिण्डिमघोषो विद्यते । कठोपनिषदि नचिकेतोयमराजसंवादे महताऽऽडम्बरेण सर्वानेव लौकिकान् कामान्न्यक्कुर्वन्ती स्वयं श्रुतिर्भगवती—

येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥

इति नचिकेतोमुखेन प्रश्नमुत्थाप्य सविस्तरं सभूमिकं जीवात्मनो मरणानन्तरमपि सत्तां समर्थयन्ती पुनर्जन्मविषये जागरूका दृश्यते । तथाहि 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् यथा च मरणं प्राप्य आत्मा भवति गौतम "योनिमन्ये प्रपद्यन्ते

शरीरत्वाय देहिनः स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम्" अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ईशानं भूतभव्यस्य न ततो विजुगुप्सते एतद्वैतत्" इत्यादि।

तदेवमाप्तप्रामाण्यं स्वीकुर्वतां धीराणां कृते प्रमाणानीमानि। ये हि आप्तप्रमाणमनाद्रियन्ते तेषु अपि बौद्धजैनदर्शनेषु पुनर्जन्मनः समर्थनं विद्यते। बौद्धा हि वासनया जन्मान्तरं स्वीकुर्वन्तो वासनाक्षयेन निर्वाणमिच्छन्ति। कर्मबन्धनं तेऽपि समाद्रियन्ते। तथाहि—"कम्मना वत्तती लोको कम्मनावत्तती पजा कम्मनिबद्धना सत्तां रथस्साऽणीव यायतो।"

"कर्मणावर्तते लोको कर्मणा वर्तते प्रजा।
कर्मनिबन्धा सत्ता रथस्यास्थीव जायते॥"

इति स्फुटमेव जन्मान्तरसत्तास्वीकृतिः बौद्धनये। जैननयेऽप्येवमेव जन्मान्तराङ्गीकृतिर्विद्यते। ते हि अलाबुदृष्टान्तेनात्मन ऊर्ध्वगमनमेव मुक्तिं मन्यन्ते। यथाहि मृल्लिप्तमलाबुफलं जले निमग्नमधस्तिष्ठति तदेव बिगलितमृत्तिकं सत् पुनर्जलोपरि आयाति तथैवात्मा कर्मबन्धनबद्धो देहादिप्रविष्टः संसरति। यदा च भोगेन कर्मभारं क्षपयित्वा लघुर्भवति तदा उपरि गत्वा आकाशलोकमाश्रित्य तिष्ठति। यस्य कृते त एवमाहुः।

गत्वा गत्वा निवर्तन्ते चन्द्रसूर्य्यादयो ग्रहाः।
अद्यापि न निवर्तन्ते त्वालोकाकाशमागताः॥

इत्थमवैदिकदर्शनेषु केवलं चार्वाकदर्शनं विहाय सर्वत्रैव पुनर्जन्मस्वीकृतिरस्ति। वैदिकदर्शनेषु तु सर्वत्रैव पुनर्जन्मसमर्थनं विद्यते। तत्र वैशेषिका नैयायिकाश्च सपरिकरं पुनर्जन्मवादं समर्थयन्ति। तथाहि "पुनरुत्पत्तिः प्रेत्यभावः" इति गौतमीयं सूत्रम्। अग्रेऽपि 'वीतराग जन्मादर्शनाद् इत्यादिना सविस्तरं प्रपञ्चितम् पुनर्जन्मनिरूपणम्। योगदर्शनेऽपि "संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्" "अपरिग्रहस्थैर्य्ये जन्मकथन्तासम्बोधः" "स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः।" इत्यादि प्रत्यक्षत एव समर्थितं पुनर्जननम्। सांख्या अपि—

"पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्॥"

इत्यादिना लिङ्गशरीरानुगतस्यात्मनः संसरणं समर्थयन्ति। पूर्वमीमांसका हि यागादिकर्मणोऽपूर्वद्वारा फलदातृत्वं समर्थयन्त आत्मनि संस्कारकल्पनयैव तत्फलभोक्तृत्वमापादयन्तीति स्फुटं जन्मान्तरस्वीकारस्तन्नये। वेदान्तिनस्तु अत्र विषये सर्वोऽर्यर्हितं स्थानमाश्रयन्ति। यतो हि तेषां वेदान्तदर्शने चतुर्थाध्याये सर्वाणि

सूत्राणि साक्षात् परम्परया वा आत्मनो जन्मान्तरसाधकान्येव सन्ति। तेषामेव प्रस्थानत्रयान्तर्गतानामुपनिषदां प्रमाणम् पूर्वं निदर्शितमेव । वेदान्तसूत्राणि च प्राधान्येन तत्रैव समन्वितान्येव। श्रीमद्भगवद्गीताया अपि प्रमाणान्यत्रोपन्यस्यन्ते। तथाहि—

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवेति कौन्तेय सदा तद्भावभावितः॥"
"बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप॥"
"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।" इत्यादि।

महाभारतेऽपि युधिष्ठिरादिजन्मवृत्तान्ते बहुधा वर्णितं जन्मान्तरवादमुपलभामहे। तथाहि इन्द्रस्यैवात्मनो युधिष्ठिरार्जुनभीमनकुलसहदेवात्मनाऽविर्भावः। शच्याश्च द्रौपदीरूपेण पुनर्जन्म। अन्येषाञ्च बहूनां राज्ञां पूर्वजन्मकथा तत्र तत्र प्रसङ्गतो वर्णिता विद्यते। काव्यादिषु च सर्वत्रैव जन्मान्तरीयमितिवृत्तं वर्णितं दृश्यते। पुराणानि च जन्मान्तरकथासम्भृतान्येवेति तेषां प्रमाणानामुपन्यासेन तु महापुराणमेवान्यत् वर्णितं स्यादिति कियतां महाकवीनां वाक्यानि प्रमाणत्वेनोपस्थाप्यन्ते। तथाहि—

कालिदासः कुमारसम्भवे—

सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे।

रघुवंशे सीतामुखेन स एव—

साऽहं, तपः सूर्य्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः।

भारविः किरातार्जुनीये—

अभितस्तं पृथासूनुः स्नेहेन परितस्तरे,
अविज्ञातेऽपि बन्धौ हि बलात् प्रह्लादते मनः।

माघोऽपि शिशुपालवधकाव्ये—

सती च योषित् प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि।

हर्षः नागानन्दे—

भवे भवे तेन ममैव भूयात् परार्थहेतोः खलु धर्मलाभः।

अन्ते च तत्रैव---

"समुत्पत्स्यामहे मातयस्यां यस्यां तनौ वयम्
तस्यां तस्यां प्रियसुते ! माता भूयास्त्वमेव नः ।"

इत्येवं सर्वाण्येव संस्कृतवाङ्मयानि पुनर्जन्मवादसिद्धान्तसम्भृतानि सन्ति, यस्य नास्ति विश्वासस्तं कोऽपि न बोधयितुमर्हति । उक्तञ्च मया पूर्वाङ्के 'ज्ञानलव-दुर्विदग्धमित्यादि । अस्तु यदि पुनर्जन्मश्रद्धाजुषोऽनेनात्मज्ञानं दृढीकुर्वन्तो यथार्थ-मानवकर्मणि प्रवृत्ता लोकात्मकल्याणपरा मनागपि स्युस्तर्हि स्वानुरोधसाफल्यं मन्य-माना वयमपि कृतकृत्यमात्मानं मन्यामहे । पुनरपि कदाचित् प्रसङ्गतः किञ्चि-दभिधास्यामः ।

---

## राष्ट्रियमहासभा ।

---

अस्मिन् वर्षे विहारप्रान्तीयप्रसिद्धनगर्य्याः पुष्पपुर्य्याः पार्श्वे 'रामगढ' नाम्नि ग्रामे गतमार्चमासस्य" ऊनविंशतितमतारिकातो दिनद्वयं यावत् राष्ट्रियमहासभायाः (कांग्रेस) विशालमधिवेशनञ्जातम् । तत्र विषयसमित्यां बहिर्विस्तृताधिवेशने चोभयत्रापि श्रीमतो गान्धिमहात्मन एव विजयः सञ्जातः । अन्येषां प्रतिवादिनां मध्ये पक्षद्वयमासीद् । एम० एन० रायमहोदयस्य पक्षीया यथाकथं वा भारतीय-पूर्णस्वतन्त्रताभिलाषिण आसन् । हिंसया वा अहिंसया वा स्यात् भारतीया पूर्ण-स्वतन्त्रता प्राप्नोति । द्वितीयस्य साम्यवादिपक्षस्यायमभिप्राय आसीत् यद् झटित्येव सत्याग्रहप्रारम्भो विधेयो नात्र विलम्बावश्यकतेति ।

अनयोरुभयोरपि पक्षयोः महान् पराजयो जातः । अङ्गुलिगण्यान्येव मतानि एषां पक्षे समागतानि । वस्तुतस्तु अनयोः पक्षयोः केऽपि समर्थयितारो नासन्नित्येव वक्तुमुचितम् । गान्धिमहात्मना च स्वीयं हृदयप्रकाशं मतमुदीरितम् । यद् "यदि अहिंसायां सूत्रकर्तने च येषां विश्वासो नास्ति ते बहिर्भूत्वा स्वयं सत्याग्रहान्दोलनं चालयन्तु नाहं तेषां नेतृत्वं कर्तुं पारये । यदि मम नेतृत्वमपेक्षितं चेत् तर्कुयन्त्रं गृहीत्वा मामनुसरन्तु । विनात्मसन्तोषमहं सत्याग्रहं न चालयिष्यामि । यदाहं देशं सत्याग्रहान्दोलनक्षमं द्रक्ष्यामि तदैव चालयिष्यामि नाहं केषाञ्चनानुरोधेना-ग्रहेण भीत्या त्वरया वा सत्याग्रहं चालयिष्यामि इति" इति स्वमतमुदीरयतो गान्धि-

महात्मनोऽभिप्रायोऽस्माकं दृष्टौ साधु प्रतिभाति । सत्यपि दोषे मतभेदे च सेनापतेराज्ञापालनमेव सैन्यानां प्रधानं कर्म । यदा सैन्येषु सेनापतेरनुशासनपालनं सुव्यवस्थितं न भवति तदा कथम् सेनापतेर्विजयाशंसा स्यात् ? । कांग्रेस-सञ्चालकानां सदस्यानां महान् विजयः सम्प्रति सञ्जातो दृश्यते । सर्वतः प्रथमम् श्रीमतः मौलाना अबुलकलाम आजादमहोदयस्य राष्ट्रपतिनिर्वाचनेनैव दक्षिणपक्षीयानां विजयः । द्वितीयोऽयं विजयः सत्याग्रहसञ्चालननियमस्वीकृत्या सञ्जात इति परमप्रमोदास्पदमस्माकं देशस्य च विद्यते । इदानीं गान्धिवादानुयायिनामिदं प्रधानं कर्तव्यं विद्यते, यत् ते प्रतिग्रामं प्रतिनगरं तर्कुयन्त्रसञ्चालनविश्वस्तान् सत्याग्रहिणस्सैन्यसङ्घान् संगृह्णन्तु । स्वीयं संघटनं दृढतरं कृत्वा गान्धिमहोदयादेशानुसारं कार्यं कुर्वन्तु । ईश्वरे धर्म्मे च विश्वासेनैव सर्वं सिध्यती तिइत्यलं बहूक्त्येति विरम्यते ।

---

## श्रेष्ठिनां श्रीनिवासमहाभागानां वैकुण्ठलाभः ।

गतमार्चमासस्योनविंशतितमतारिकायां द्वादशवादनावसरे बम्बईनगरस्य प्रसिद्धश्रेष्ठिनः श्रीवेङ्कटेश्वरस्टीमयन्त्रालयाधिपतेः श्रेष्ठिप्रवर-क्षेमराजात्मजस्य श्रेष्ठिवर्य्यश्रीरङ्गनाथकनिष्ठभ्रातुः श्रीनिवासश्रेष्ठिनो लोकान्तरयात्राऽभूदिति वज्राघातश्रावं श्रुतमस्माभिः । के हि संस्कृतप्रणयिनः सन्ति ये स्वर्गीयश्रेष्ठिवर्यश्रीनिवासकुलपरिचिता न भवेयुः । इह भारते, नहि, नहि, अखिलेऽपि भूमण्डले संस्कृतज्ञानां गेहे श्रेष्ठिवर्यप्रतिष्ठापितश्रीवेङ्कटेश्वर-स्टीम-यन्त्रालयप्रकाशितसंस्कृतपुस्तकरत्नानि भविष्यन्ति । महोदारैरेभिः श्रेष्ठिभिः संस्कृतभाषाया हिन्दीभाषायामनुवादं विधाय समूलानुवादप्रकाशनादि विविधप्रकारम् आबालवृद्धं संस्कृतग्रन्थानां प्रचारं कृत्वा हिन्दुसंस्कृतिसंरक्षणं सनातनधर्मसंरक्षणञ्च यादृशमेभिः सम्पादितं तादृशं को वाऽन्यो विधास्यति विदधाति वेति नाधुना वयं पश्यामः । एषां महोदयानां हृदि संस्कृतज्ञपण्डितानां कियानादरः श्रद्धा वा आसीदिति तदीयसंस्कृतग्रन्थप्रकाशनप्रचारादिकृत्यैरेवानुमीयते । कोऽपि संस्कृतज्ञो विद्वान् किमपि संस्कृतग्रन्थरत्नं नूतनं निर्माय प्राक्तनं वा हिन्दीभाषयाऽनूद्य प्रकाशयितुं स्वर्गीयश्रेष्ठिवर्याणां पुरतो विज्ञापयति स्म चेत्तर्हि तदानीमेव ते तस्योत्साहवर्द्धनाय स्वीयां लाभहानिमविचार्य्यैव तदीयं ग्रन्थरत्नं स्वीययन्त्रालये स्वमूल्येन प्रकाशयन्तिस्म । इत्थमेव सहस्रशो ग्रन्थरत्नानि संस्कृतहिन्दीभाषयोरेभिः श्रेष्ठिभिः प्रकाशितानि सन्ति । किमेषां

श्रेष्ठिवर्य्याणां यशोगानं लेखिन्या भवितुमर्हति ? अहो ! श्रेष्ठिनामेषां संस्कृतहिन्दी-भाषाप्रचारप्रेम स्मारं स्मारमस्माकमात्मा सम्प्रति तदीयवियोग-दुःख-समुद्विग्नो नाग्रे लिखितुं किञ्चिच्छक्नोतीति । अधुना तद्वियोगदुःखिताः सर्वेऽपि वयं श्रीभारतधर्म-महामण्डलीयाः तदीयशोकसन्तप्तकुटुम्बेभ्यो हार्दिकीं समवेदनां प्रकटयन्तस्तदीयात्म-नश्चिरशान्त्यै श्रीकाशीविश्वनाथमेवाभ्यर्थयामहे । [ स० सम्पादकः ]

---

## संगृहीत-समाचाराः ।

मुम्बई—गतमार्चमासस्य २-३-तिथौ माधवबागनामकस्थाने वैदिकराष्ट्र-शासनसंघस्य प्रथमं वार्षिकमधिवेशनं महता समारोहेण सह सम्पन्नम् । धर्म-राजनीति-समाजसम्बन्धिनो विविधाः प्रस्तावाः प्रस्तुता गृहीताश्च ।

× × × × ×

खगड़ियायां गतफरवरीमासस्य २६-२७-२८-२९ तिथिषु खगड़ियास्थ सनातन-धर्मसभाया वार्षिकोत्सवोऽभूत् । अस्मिन् महोत्सवे म० म० श्रीगिरिधरशर्मचतु-र्वेदाः श्रीमाधवाचार्यशास्त्रिणस्तथा अन्ये च व्याख्यातार उपस्थिता बभूवुः ।

× × × × ×

हरिद्वारे । अप्रेलमासस्य १४ तारिकायां संयुक्तप्रान्तीयसनातनधर्मसभायाः वैशाखमेलावसरे वृहत् सनातनधर्मसम्मेलनमभूत् । प्रायशः सर्वेषां प्रान्तीय-प्रतिनिधीनां साधूनां सन्यासिनामुदासीनानाञ्च समुपस्थितिरासीत् । सभा-पतिपदं श्रीमहन्त श्रीलक्ष्मणदासमहोदयैः सुशोभितमभूत् । सम्मेलने पाकिस्तान-योजनाया विरोधार्थं दृढनिश्चयः कृतः । सिन्धुस्थितहिन्दूनामुपरि कृतस्य चात्या-चारस्य घोरनिन्दा कृता ।

× × × × ×

नागपुरे विगतमार्चमासस्य २७-२८-२९-३०-३१ तारिकासु अ० भा० वर्णा-श्रमस्वराज्यसंघस्य द्वादशं वार्षिक-महाधिवेशनं महता समारोहेण सह सम्पन्नता-मगात् । एतेनैव सह सनातननिनेतृसम्मेलनं, गोरक्षणसम्मेलनं, अ० भा० स० ध० मारवाड़ीयुवकसम्मेलनं चेति बहूनि सम्मेलनानि बभूवुः । वर्णाश्रमस्वराज्य-सङ्घस्य प्रगतिशीलतासम्पादनाय विचारो जातः । सम्मेलनानां निम्नलिखिताः सभापतय आसन् ।

वर्णाश्रम स्वराज्यसंघस्य श्रीवैजनाथ वाजोरिया एम० एल० ए० (केन्द्रिय) गोरक्षणसम्मेलनस्य, मारवाड़ी युवक सम्मेलनस्य च श्रीचिरञ्जीलाल लोयलका महाशयः। अग्रिमवर्षस्य कृते अमृतसर ( पञ्जाब ) नगरात् कलिकात्तातश्च निमन्त्रणं लब्धम्।

× × × × ×

गुना, ग्वालियरराज्ये अप्रेलमासस्य ७-८-९-१०-११ तारिकासु श्रीसनातनधर्मसभाया वार्षिकमधिवेशनं सुसम्पन्नम्। काशीस्थ-श्रीभारतधर्ममहामण्डलस्य महामहोपदेशकाः पण्डितगङ्गाविष्णुशास्त्रिणः श्रीमती पण्डिता श्रीमनोरमा बाई ( रतलाम ) तथान्ये च वहवः प्रवक्तारो निजधार्मिकप्रवचनैर्जनताया हृदयपटलेऽपूर्वं प्रभावं समुत्पादयामासुः। सनातनधर्मस्य सर्वेष्वपि प्रमुखविषयेषु व्याख्यानानि बभूवुः।

× × × × ×

वम्बई नगरे। गतमार्चमासस्य १६-१७ तारिकयोः माधववागनामके स्थाने जगद्गुरु-स्वामिश्रीदेवनाकाचार्यमहोदयानामध्यक्षत्वे सनातनधर्मरक्षकमण्डलस्य प्रथमवार्षिकमधिवेशनं सम्पन्नम्। हिन्दुस्तानीभाषाया मद्रासमन्दिर प्रवेशव्यवस्थायाश्च विरोधे प्रस्तावा उपस्थापिता गृहीताश्च।

× × × × ×

रामगढ़े। गतमार्चमासस्य द्वितीयसप्ताहे मौलाना अब्दुलकलामआजादमहोदयानां सभापतित्वे राष्ट्रियमहासभायाः ( कांग्रेस ) वार्षिकमधिवेशनं विविधसम्मेलनैः सह साधु सम्पन्नतामगात्। खादी प्रदर्शिनी समुद्घाटनं महात्मना गान्धिमहोदयेन सम्पादितम्।

अस्मिन्नेवावसरे रामगढ़ एव स्वागताध्यक्षश्रीस्वामिसहजानन्दसमायोजितं "समझौताविरोधिसम्मेलनं" श्रीसुभाषचन्द्रबोसमहोदयानामध्यक्षतायां सम्पन्नम्।

× × × × ×

काश्याम्। अप्रेलमासस्य २६ तारिकायां प्रसिद्धहिन्दुनेतॄणां डा० मुञ्जे महोदयानामागमने महती सभा जाता। मुञ्जेमहोदयस्य हिन्दूहितरक्षासम्बन्धे ओजस्वितापूर्णं भाषणमभूत् हिन्दूमहासभायाः सदस्यतास्वीकाराय च सर्वे हिन्दवो निवेदिताः।

समुन्नतिविधायिनं सततमुद्यमं कुर्वतां
चकास्तु धिषणावतामुदयदायि सम्मेलनम् ।
प्रकाशितदिगन्तरा भवतु वैद्यविद्या पुन-
स्तथा जगदनामयं सततमङ्गलं जायताम् ॥७॥
विधाय करसम्पुटं प्रणिनमय्य शीर्षं बुधाः
क्षमागुणविभूषितान्सविनयं प्रयाचे च वः ।
असारमतिविस्तरोऽथ बलवन्तशर्मा स्वयं
क्षमध्वमिह चापलं भवतु संश्रुतं स्वागतम् ॥८॥

---

[ विहार प्रान्तीयच्छपरासंस्कृत-महाविद्यालय प्रधानाध्यापक-वैयाकरणकेसरि-गुरुवर श्रीमत्पण्डितगयादत्तत्रिपाठिनां परलोकप्राप्तौ ]

## शोकोच्छ्वासः ।

ले० श्रीराधाकृष्णओझा, डी० एल्० संस्कृतकालेज मुजफ्फरपुर ।

द्वादश्यां बहुले पक्षे फाल्गुने मासि मङ्गले ।
काशीक्षेत्रेऽभवद्मुक्ति र्गयादत्तत्रिपाठिनः ॥ १ ॥
हा हा ! ! गुरो ! भवदपूर्ववचोऽमृतानां
धाराधरेण सततं परिवर्द्धिताः स्मः ।
अद्यैवमेव विनिपातविपत्तिभीतौ
हा ! को भविष्यति पुनः परिपालको नः ॥ २ ॥
अखिले भुवने प्रकाशितं सुयशो यस्य शुभ-प्रभास्वितम् ।
स विहाय जनान् महामतिः स्वरुपेतः खलु कस्य हेतवे ॥ ३ ॥
फणिनाथनिधिं यथार्थतः क उपेत्याद्य समन्वयिष्यति ।
तिसुबर्थविचारनिर्णयं क इदानीं पुनराकरिष्यति ॥ ४ ॥
निगमः कमुपाश्रयेत् क ते स सदाचार इहाव्रजेद् वद ।
जनताप्रिय! प्राच्यसंस्कृतिर्ननु हीना व्रतिनं कमाश्रयेत् ॥ ५ ॥
जनतागण ! किम्न भाषसे क्व गतो मेऽद्य गुरुस्स विश्रुतः ।
करुणार्द्रमना व्यधत्त यः खलु "धात्वर्थसुबर्थनिर्णयम्" ॥ ६ ॥

धृतरूपपतञ्जलिगुरुः कपिलो व्यास उताद्य जैमिनिः।
कणभुङ्मुनिगौतमोऽथवा क इहासीद्भवद् त्वां विना भुवि ॥ ७॥

रुदन्तं गृहिणं पुत्रं शिष्यानपि च विह्वलान्।
विहाय क्व गतोऽसि त्वमुत्थाय पुनराह्वय ॥ ८॥

प्रार्थये जगदानन्ददायिनं सर्वसाक्षिणम्।
असीमकृपया यस्य शान्तिर्भूयात्तदात्मनः ॥ ९॥

---

# श्रीशारदागीतिका।

[ १९९६ विक्रमाब्दीयवसन्तपञ्चम्यां श्री शारदापूजोपलक्ष्ये मटिहानी विद्यालये छात्रवृन्दैर्गीता ]

अयि शारदे! मदीये हृदि मन्दिरे स्वकीये।
कमनीयपादपद्मे कृपया त्वया निधेये ॥ १॥

श्रुतसाधनेन हीनाः शिशवस्तवाऽतिदीनाः।
इह सन्ति तापलीना विविधाऽऽपदामधीनाः ॥ २॥

महदे! शुभागमन्ते विदधामहे निशान्ते।
कथनं त्विदं तवान्ते दययेहि दिव्यकान्ते! ॥ ३॥

करुणाकटाक्षदाने दुरितोदधौ निमग्नान्।
कथमीक्षसे न बालान् जगदम्ब! पादलग्नान् ॥ ४॥

वसनं न चाऽशनन्ते सकलाः सुता लभन्ते।
अत एव चास्थिशेषा विकलाः क्षुधा म्रियन्ते ॥ ५॥

पददर्शने कृताऽऽशा इह पुत्रकास्त्वदीयाः।
त्वरया दयस्व मातः! विलपन्ति भारतीयाः ॥ ६॥

भवजालमालयाऽलं तव लङ्घिताऽङ्घ्रिकार्य्ये।
शिवशङ्करेऽतिदीने कलुषं न धार्यमार्ये! ॥ ७॥

---

श्रीमद्राजकुमार-कुमारात्मज-सुप्रदीप्तमान्यवर-नेपालतारा सुविख्यात-त्रिशक्तिपट्ट-सुप्रसिद्ध-प्रवल-गोरखा दक्षिणबाहु कमाण्डर इन्‌चीफ जनरल श्रीपद्मसंशेर-जङ्गबहादुरराणा जी० वी० ई० के० सी० एस० आई के० सी० आई० ई० एस० टी० आर० के० नेपालप्रतापवर्धकमहोदयानां करकमलयोः ६–३–४० दिने सादरं जनकपुरधाम्नि पं० श्रीशिवशङ्करझाशर्म्मणा 'सटिहानीस्थ' नेपालराज-संस्कृतमहाविद्यालयाध्यापकेन समर्पितमिदम्—

## शुभाभिनन्दनपत्रम् ।

श्रीमद्रामपदारविन्दमधुपानानन्दसन्दोहवान्,
प्रोद्यद्दीनदयाऽर्थिसार्थमथित-प्रोद्दामदैन्यद्विपः ।
श्रीमद्राजकुमारकार्त्तिकनिभप्रत्यर्थिपोथक्षमः
क्षोणीमण्डलमण्डनो विजयतां श्रीपद्मदेवः प्रभुः ॥१॥

तीक्ष्णां यद्धिषणां निरीक्ष्य सहसा शम्पा सकम्पाघने,
भूयोऽलीयत मृन्मयीयमभवद्वीक्ष्य क्षमा यत्क्षमाम् ।
गाम्भीर्य्यं जलधिर्न्निभाल्य जलधीर्जातो यदीयं जलम्
नेपाल-क्षितिपाल-वंशतिलकः सोऽयं प्रभूराजताम् ॥२॥

श्रीमँस्त्वद्यशसा सितीकृतदिशा श्वेताद्वयादेशनात्
कैलाशं गिरीशः पयोधिशयनं विष्णु र्वृषैरावतम् ।
मार्गं मार्गमभीष्टमार्गमधुना व्यग्राः सयत्ना इव
काष्ठाऽन्तं श्रितया विधातुमभितो लक्ष्माऽपकीर्त्या द्विषः ॥३॥

दोर्दण्डोर्ज्जदसंख्य-संख्यजगतीभीमाभहस्तोल्लसत्-
खड्गत्रस्तसमस्तशत्रुनिकरा मत्वा गरं सङ्गरम् ।
स्मारं स्मारमहो रहोऽपि च गृहे यौद्धं चरित्रं तव
स्वच्छन्दं रदनच्छदं सुमधुरं नेच्छन्ति प्रैयं सुखम् ॥४॥

साम्प्रतिक वक्तव्यम्—

प्राणैः स्वं निपुणं पणैरिह महाराणा प्रतोपः पणन्,
प्रारक्षीद्यवनापदः प्रतिपदं यामाय्र्यजातिं त्विमाम् ।

दीनां तां कलिना प्रपन्नशरणां दद्याः प्रतिष्ठां न चेत्
कोऽन्यो मान्य ! भवेद्वदान्य ! नितरां रक्षा प्रतीक्षाक्षमः ॥५॥
चातुर्वेदशिफाऽपवर्गफलदा विज्ञानपुष्पोत्करा
विद्याकल्पलता तता लसति या पत्रैः पुराणैर्वृता ।
तामुत्पाटयितुं मतङ्गजपदं याते वृषाऽरौ द्विषां-
दोष्णां खण्डनपण्डितस्य भवतात् "शार्दूलविक्रीडितम्" ॥६॥

आशंसनम्-

शक्यार्चा वचसा न चेद् गुणनिधेर्वार्तानिधेः कीदृशी,
नानासाधनहीनतामुपगतास्त्वत्स्वागतोल्लासिताः ।
ब्रूमः श्रीरघुनन्दनं जनकजा-प्राणेश्वरं सादरम्
श्रीमन्तं चिरजीविनं सुतयुतं श्रीशं विदध्यादिति ॥७॥

—०—

## कर्त्तव्यम् किम् आर्ययुवकाः !

( लेखकः—श्रीतुरन्तलालपाठकदेवः व्याकरणाचार्य्यः श्री ग० सं० वि०
नउलागढ़ प्रधानाध्यापकः )

नाविदितमस्ति समेषां सकलाभ्युदयमूलभूतेषु सत्यसनातनधर्म्मशास्त्रेषु कृतश्रमाणान्तत्रभवतां यदैहिकानां जनानामाध्यात्मिकी आधिदैविकी आधिभौतिकी च तिस्रः प्रवृत्तयः स्वभावतो भवन्तीति, तत्रैष निश्चितप्रायो यद् प्रोक्तप्रवृत्तित्रयेषु प्रवृत्तास्त एव जनाः स्वधर्म्मप्रतिपादकशास्त्रमननशीलाः सन्तः स्वाभ्युदयप्रदर्शकं पन्थानमनुसरन्तोऽत्रत्याखिलं सुखमुपभुज्य पारलौकिकमप्यानन्दमनुभवितुं शक्नुवन्ति । ये खलु सर्वतन्त्रस्वतन्त्राः सन्तोऽनिवार्य्यं स्वीयपुरातनार्य्यप्रणीतशास्त्राणामपौरुषेयवेदानाञ्चाध्ययनप्रवृत्तमनसः प्रकृतिप्रदत्तस्वदेशाविर्भूतपूतवस्तुसाधनः स्वीयं समुचितकर्त्तव्यकृत्यं सम्पादयितुम्प्रभवन्ति, अर्थात् सकलाभ्युदयश्रेयःसाधनार्थं सर्वं प्रियं स्वतन्त्रत्वं सर्वेषां कृते सततमपेक्ष्यते—किन्त्वहो ! दुःखम् यद् कियद्भ्यो वर्षेभ्यो मदीयोऽयं भारतवर्षः पराधीनो मदीयेयं मातृभूमिः जननी परायत्ता मामभिकातरदृष्ट्याऽहर्निशमवलोकयतीति—एतच्चाद्य यत् किञ्चित् पूजास्तवादिकं देवताप्रीतये क्रियतेऽस्माभिस्तत् सर्वं तावदिषत्करमस्माकम् यावन्न वयं स्वाधीनाः ताः समा अपि याञ्चा घृणितप्राया याभ्यः पूर्वं स्वदेशस्वतन्त्रत्वं स्वेष्टदेवं देवीम्वा न

याचयामहे । अहो ! स्वतन्त्रते ! कोऽपराध एतद्देशनिवासिनाम् यत्त्वमद्यैतान् विहाय प्रच्छन्ना क्वास्तीति नैव जानीमहे । अहो ! क्व गतः सप्तदशशताब्दीयः कालो मदीयो यदाऽत्रत्या स्वैरं स्वशास्त्रानुष्ठानशीलाः सात्त्विकवृत्तौ प्रवृत्ताः यज्ञादिकं नित्य-नैमित्तिककृत्यं सम्पादयन्तोऽध्ययनाध्यापनादि सुव्यवस्थितसमुचितकर्म नैजं कुर्वन्तः स्वान्तरात्मनि वास्तविकं सुखमनुभवन्त आसन्, अद्य तु सर्वं सुखमीहमाना अपि वयं कुर्म्मश्चेत्तदा किङ्कुर्म्मः ? कथञ्च कुर्म्मः ? वयमद्य विदेशीयजात्यायत्ताः समस्तसाधनविहीना जीवन्तोऽपि मृतप्रायाः । जागृता अपि प्रसुप्तप्रायाः, स्वं स्वं पन्थानामपहृत्येतस्ततः परिभ्रमन्तो विकलमनस्को मौनाः स्मः ।

अयि ! मातृभूम्युद्धरणयोग्यताशीला मदीया युवजनाः ! विशेषतः संस्कृतशास्त्रा-ध्येतारोऽध्यापकाश्च उत्तिष्ठत, स्वनिद्रां परित्यजत, अनिवार्य्यंमातृणोद्धरणक्रियां विदधत स्मरत स्वीयगौरवम् उत्थापयत च स्वस्मिन्निहिताभिमानम् । विहसन्त्यद्य त्वदीयां कापुरुषतामवलोक्य विदेशीयाः प्रलपन्ति च "बुद्धिविहीना भारतीयाः" इत्येवं सर्वे—किमद्यापि स्वकर्त्तव्यं स्थिरीकर्त्तुमक्षमा एव सन्ति भवन्तः । सप्तत्रिं-शत्कोटिसंख्यकेषु भारतीयेषु चतुःकोटिसंख्यापरिमितानां विदेशीयानां स्वेच्छ-मशिष्टशासनङ्केषां कातरतां द्योतयति ? स्वदेशो-( इङ्गलैण्ड ) द्भुत वस्तुजातैर्मासचतु-ष्टयमात्रमेव जीवननिर्वाहशीलानाम् विदेशीयजातीयानामस्मद्देशसमुत्पन्नोत्तमो-त्तमपदार्थैर्नानाभोगविलासं कुर्वतां तेषां सुखित्वम् केषां दुर्बोधत्वम्प्रबोधयति ? भाग्यवशाद्देशेऽस्मिन् अद्य राष्ट्रियमहासभा ( काँग्रेस ) स्वदेशस्वाधीनतामात्र लक्ष्यम्पुरस्कृत्याहर्निशं प्रयत्नशीला त्याग॥पस्या।मूर्तिमताम् महात्मनां गान्धिमहो-दयानां नेतृत्वेऽस्माकं सौभाग्यपरिचयं ददाति । किन्तु अहो ! दुःखम् अस्यामपि संस्थायामेतदन्तर्गता एव कियन्तो महान्तो जना राष्ट्रियमहासभाया वास्तविकं लक्ष्यं दूरीकृत्य स्वनामप्रतिष्ठाप्रभावप्रवर्द्धनकामुकाः—स्वस्वसिद्धान्तानुकूलं वि-भिन्नदलर्न्निर्माय प्रोक्तमहासभामिमामल्पशक्तिकां कुर्वन्तीति । इतश्च हिन्दुमहा-सभा पृथगेव स्वीयं सिद्धान्तम्परिचालयति । मिस्टर जिन्नामहोदयोऽपि देशाधःपतन-रूपपुण्यकर्म्मणोऽवञ्चित एव । अयि ! महान्तो नेतारः ! देशोऽयं धर्म्मप्रधानः अतोऽस्य समुद्धारो धार्मिकप्रवृत्त्यैव स्यात् यथा खलु यत्किञ्चिदंशैर्महात्मना गान्धि-महोदयेन सत्याहिंसारूपधर्म्मद्वारेणैव स्वराज्यप्राप्तिमार्गोऽनुसृतः—भवतामुद्दण्डता-द्योतकं सर्वं हिंसात्मकं कृत्यं निष्फलमेव न, अपितु हानिप्रदमपि स्यादिति निश्चितम् ।

निकटभूते समुद्धृतस्य भारतसचिव-( लार्डजैटलैंड ) महोदयवक्तव्यस्य निःसार मभिप्रायमभिज्ञाय महद्दुःखम् हास्यञ्च समायाति । ज्ञायतां नाम तेन महानुभावेन

यद् यद्यपि न सप्तदशशताब्दीयो भारतवर्षोऽधुना तथाऽपि एकोनविंशतितमशताब्दीयोऽपि नास्त्येव । अनेन खलु विंशतिसमशताब्दीयेन कालेन जनसमूहे तथाभूता चेतना समुद्भाविता ययाऽद्य भवादृशानाम् (लार्डजैटलैण्ड प्रभृतीनाम्) निष्ठुरस्परम् कौटिल्यमतः परं नैव गन्तुं शक्नुयात् । किमद्यैतन्न जानन्ति भवन्तो यद् १९३४ (?) तमे ई० वर्षे जर्म्मनदेशभवद्देशयोः समुद्भूते युद्धे भारतवासिनां साहाय्येनैव समुपलब्धे च भवद्विजये पूर्वमाश्वासितेन महात्मना (गान्धिना) सम्प्रार्थितोऽपि भारतशासकः (वायसराय औफइण्डिया) औपनिवेशिकस्वराज्यरूपान्तदीय याचनां सर्वथाऽपेक्ष्याधुना स एव महानुभावः परितश्चिन्तितो व्याकुल इव प्रतिभाति किमर्थम् केवलमेतदर्थमेव यद् यथा कथञ्चिन्महात्मानो गान्धिमहोदयास्तद्वैवौपनिवेशिकस्वराज्यं यथाकथञ्चित् स्वीकुर्य्युः यच्च देशवासिभिः पूर्णस्वराज्यमेव स्वीयं लक्ष्यमभिज्ञाय समुपेक्ष्यत एवेति । किमद्यात्रापि किञ्चिद्वैमत्यम्—यदद्य सतर्काः सावधानाः स्वतन्त्रताप्राप्तिलक्ष्यपरायणा एतद्देशीया दृढाः सन्ति निकटभूतकालापेक्षयेति । किन्तु आवश्यकताऽस्ति मदीययुवकसमाजानाम् स्वान्तर्निहितनैसर्गिकवीरत्ववताम् यदिदानीं शान्ति पूर्वकं ते स्वार्थविहीनाः सन्तः स्वदेशसेवामात्रमेव लक्ष्यीकृत्य परितोदेशान् पर्य्यटन्तो देशगतान् सकलानपि वैमत्यादिप्रतिबन्धकान् स्वोद्योमेन विनाश्य सर्वेषां हृदि धार्म्मिकरूपेण विचारैक्यद्वारेणाखिलान् भारतवासिजनसमूहान् अग्रेसरान् कृत्वा स्वजन्मसार्थक्यं कुर्व्वन्तः पुण्यभागिनो भवन्तु, कुर्व्वन्तु च स्वजनानीबन्धनमुक्ताम् । किमिहाल्पज्ञानाम्मादृशानामधिकम् वक्तव्यम् ।

---

❀ कर्म्मणा वर्णव्यवस्थायाः प्रत्यालोचना ❀

(डाक्टर—भगवान्दासीय सिद्धान्तस्य प्रतिवादः)

## निबन्धा—श्रीदीनानाथशर्म्मा शास्त्रि-सारस्वतः ।

(स० ध० कालेजोपाध्यायः, मुलतानसिटी)

[ अष्टमाङ्कप्रकाशितपृष्ठा २०० दग्रे । ]

वयमेतदपि नाभिदध्मो यद्-महाभारते प्रक्षिप्तता वर्त्तते एव न । नहि, तत्र प्रक्षिप्तता सम्भविनी एव । यदा पर्य्याप्तं सुरक्षितेष्वपि वेदेषु भवतां केचित् सहवर्गिणः प्रक्षिप्ततामामनन्ति तर्हि अत्रैव कथं तदसम्भवः ? परं यत्र भवत्सिद्धान्तभङ्गः, सैव तत्र प्रक्षिप्तता भवेत्; यत्र च अस्मत्सिद्धान्तभङ्गाभासः; तत्र भव-

न्मतानुसारम् उपयोगिता भवेत्—अत्र विनिगमनाविरहवशाद् भवन्मतं न मान्यम्। एवं तु वयमपि कथयितुं शक्ष्यामो यद्—ये श्लोका भवता उपयोगित्वेन स्वमत-साधकत्वेन वा उपन्यस्ताः, ते एव प्रक्षिप्ताः; अस्मदीयमतसाधकाश्च ग्रन्थकर्तुरिति।

यदि 'डाक्टर' महाशय ~ कथयेद् यद्—विनिगमनाविरहवशाद् भवन्मतमपि न मान्यम्; ग्रन्थकर्त्तुरत्र हृदयं वा, मुख्याभिप्रायो वा, उत्तरपक्षो वा एवं प्रक्षिप्त-ताऽप्रक्षिप्ततापरीक्षणे निकषो भवति; तर्हि वयमपि कथयिष्यामो यद्-यदि भवान् महाभारतं मनोरनन्तरमादरणीयं वक्ति; तर्हि तत्कर्त्तु र्हृदयं वा, मुख्याभिप्रायो वा, उत्तरपक्षो वा जन्मनैव वर्ण्णव्यवस्थापनायां वर्त्तते, न गुणकर्म्मणा। गुणकर्म्मणा तु तस्य प्रतिष्ठातारतम्यमेव अभिप्रेतम्, न खलु वर्ण्णानां परिवर्त्तनं व्यवस्थापनादिकं वा। एतद् इत्थमवसेयम्—

क्षात्रकर्म्म स्वीकृतवन्तावपि द्रोणाचार्य्यकृपाचार्य्यौ महाभारतं ब्राह्मणावेव आचष्टे न क्षत्रियौ। तौ जन्मतो ब्राह्मणत्वादेव ब्राह्मणौ उक्तौ। अश्वत्थाम्नि तु न ब्राह्मणोचिता गुणा आसन्, न च ब्राह्मणसदृशानि तदीयकर्म्माणि अविद्यन्त। क्षात्रकर्म्माण्येव तेन स्वीकृतान्यासन्। यदि तदीयानां गुणानां कर्मणां वा आलोचना क्रियेत, तर्हि तदीयः स्वभाव एव इयत्क्रूर आसीद् यत्—तेन शयाना एव द्रौपदीपुत्रा व्यापादिताः। पाण्डवाँश्च निर्वंशान् कर्त्तुम् उत्तरागर्भेऽपि अस्त्रं क्षिप्तम्। अतोऽपि निष्ठुरं किं भवेत् कर्म्म ?। तथापि स महाभारतेन ब्राह्मण आख्यातः। प्रत्युत असत्कर्म्मापि आचरन्तं तं राजा युधिष्ठिरो न घातितवान्, 'राष्ट्रादेनं बहिष्कुर्यात्' ८।३८० इति महाभारतसम्मतमनूक्तिमेव पालितवान्। किमधुनाऽपि डाक्टरमहाशयः 'कर्मणा वर्णव्यवस्थां' महाभारतोत्तरपक्षभूतां, 'जन्मना वर्ण-व्यवस्थां च प्रक्षिप्तां वा अभिधातुं साहसमवलम्बेत।

अन्यदपि दृश्यताम्—पाण्डवा महाभारतस्य मुख्यपात्राणि। तत्र युधिष्ठिरस्य गुणकर्म्माण्येव द्रष्टव्यानि। किं ब्राह्मणयोग्यानि न आसन् तदीयगुणकर्म्माणि ?। परन्तु भीमस्तु वार्तावार्तासु अल्पेऽपि प्रातिकूल्ये चोकुप्यते स्म; तस्य कर्म्माणि तु विश्वविश्रुतान्येव। तथापि भिन्न-भिन्न गुणकर्म्माणावपि तौ उभावेव महाभारत-कारेण क्षत्रियसन्ततित्वाद् जन्मनैव क्षत्रियौ मतौ। भगवान् श्रीकृष्ण एव द्रष्टव्यो यो महाभारतस्य आराध्यदेवः; महाभारतं तं परमात्मावतारमाचष्टे, तस्य च उत्तमगुणकर्म्माणि आमनति। किं डाक्टरमहाशयस्तस्मिन् ब्राह्मणविरुद्धगुणकर्माणि साधयितुं क्षमः ?। तथापि स महाभारतेन ब्राह्मणो न मतः; किन्तु क्षत्रियपुत्रत्वात् क्षत्रिय आख्यातः। तस्य पिता वसुदेव एव द्रष्टव्यः। केन तदीयानि क्षत्रिय-

योग्यकर्म्माणि श्रुतानि ? तथापि स क्षत्रियो मतः। तर्हि कया दिशा डाक्टरमहोदयो महाभारते सिद्धान्तितां 'जन्मना वर्णव्यवस्थां' प्रक्षिप्तां साधयितुमीशीत ?

अन्यद् दृश्यताम्—महाभारतीयधर्म्मव्याधे ब्राह्मणोचिता गुणाः कर्म्माणि वा आसन्, व्याधोऽपि स हिंसारहितकर्म्मवान् आसीत। कौशिकनामकब्राह्मणेन तु स ब्राह्मणसदृशोऽपि निर्दिष्टः। तथापि सोऽतिष्ठत् शूद्र एव। ब्राह्मणत्वाय तेन एतच्छरीरावसानमपेक्षितम्, ततो द्वितीयजन्मन्येव तस्य ब्राह्मणवर्णता जाता। एवं कर्णस्य वृत्तं ज्ञायते एव डाक्टरमहोदयेन यत्—क्षत्त्रियकर्म्माऽपि, वस्तुतः क्षत्त्रियोऽपि, सूतपितृसन्तानमात्रता प्रसिद्ध्या स सूत एव मतः। किं नाऽत्र स्पष्टं यद्—महाभारतकारस्य 'जन्मनैव वर्णव्यवस्था' उत्तरपक्षः ?। क्वचित्कानि तदीयानि कर्मणा वर्णव्यवस्थाभासप्रतिपादकानि वचनानि कर्म्मप्रशंसामात्रपर्य्यवसायीनि—इति। आशासे डाक्टरमहोदय इतः प्रणिदध्यात्।

भवल्लेखानुसारम् 'अध्यात्ममय्याः' महाभारतस्य शिरोरत्नायितायाश्च भगवद्गीताया एव मुख्यप्रतिपाद्यस्य आधारो जन्मना वर्णव्यवस्था अस्ति। यदा अर्जुनो युद्धान्निविवृत्सुरभवत्, भिक्षावृत्त्या * च जीवनं निर्वोढुं प्रस्तुतो बभूव, तदा श्रीकृष्णेन स उक्तो यद्—एवंकरणात् तव पापं भविष्यति-इति। यदि वर्णव्यवस्था कर्म्मानुसारिणी अभविष्यत्; तर्हि अर्जुनस्य युद्धतो निवर्तनात् कुतोऽभविष्यत् पापम् ?। यावत् सोऽयोत्स्यत † तावदेव क्षत्त्रियोऽकथयिष्यत †। भिक्षादिशान्तवृत्तिस्वीकारे च स ब्राह्मणोऽभ्यधास्यत †। जन्मना वर्णं व्यवस्थायाँ सत्याँ तु काचिद् वृत्तिः कस्यचित् तज्जातीयव्यक्तिविशेषस्य कृते उचिता भवितुमर्हति, तद्वृत्तेश्च त्यागस्तत्कृते पापत्वेनापि भवितुमर्हति। कर्म्मणा वर्ण्णव्यवस्थापने तु नैकस्य वर्णान्तरकर्म्मपरिग्रहणे निन्दनाऽऽवश्यकता। एतद् वर्तते महाभारतहृदयम्। यदि तत एव अस्माभिर्जन्मना वर्ण्णव्यवस्थासूचकं पद्यमुद्धृतम्; तर्हि तत्र प्रक्षिप्तता कथं भवेत् ?। किं वयोवृद्धो भगवान्दासमहोदय एतद् अवबोधयितुं कष्टं स्वीकरिष्यति ?। महाभारतस्य एतद्विषयकाणि बहूनि प्रमाणानि; परं विस्तरभिया नोपस्थाप्यन्तेऽस्माभिः। अस्मदीयो वर्णव्यवस्थानिबन्ध एव 'सूर्योदये' द्रष्टव्यः।

---

* वृत्त्या। अत्र तकारद्वयम्। मुद्रका एतदादिकस्थले एकतकारं मुद्रयन्ति, एवं 'पत्त्र' प्रभृतिशब्देषु।

† अत्र तकारो न हलन्तः।

अथवा उपेक्ष्यतां महाभारतम्। स्थूलबुद्ध्यापि एतदेव ज्ञायते यद्—गुणकर्म्मभ्यां जातिनिर्णयोऽसम्भवी। कस्मिंश्चिन्मनुष्ये ब्राह्मणोचिता गुणाः सम्भविनः, परन्तु तदीयकर्म्माणि क्षत्रियस्य भवितुं शक्यानि। तदा तदीयवर्णस्य किंविधो निर्णयो भवेत्?। अथ च कस्यचिन्मनुष्यस्य गुणानामेव निर्णयः कथं भवितुमर्हेत्?। किं वयं कथयितुं शक्नुमो यद्—अमुकपुरुषस्य गुणा ब्राह्मणसदृशाः क्षत्रियसदृशा वा, वैश्यसदृशाः शूद्रसदृशा वा?। यदि विषयेऽस्मिन् वयं स्वकीयसम्मतिं दातुं साहसमनुतिष्ठेम; तर्हि किं सर्वेषामत्र ऐकमत्यं स्यात्?। गुणानां द्वारा वर्णनिर्णयः किं बहुमतेन करिष्यते?। पुनरेकस्यैव मनुष्यस्य गुणाः कर्म्माणि वा, काले काले परिवर्तितुमपि शक्यानि। ईदृग्दशायां किं तदीयवर्णः पुनः पुनः परिवर्त्तयिष्यते?। एवं सति किं घोरा अव्यवस्था नाऽऽपतिष्यति?।

समानमातापितृभ्यामुत्पन्नानां बालकानामपि गुणकर्म्मसु अत्यन्तविभिन्नता दृश्यते। एक एव मनुष्यः सर्वाहं कदाचिद् ब्राह्मणसदृशं कदाचिच्च शूद्रसदृशं कर्म्म करोति। एवं सति वर्णविनिश्चयः कथं स्यात्?। एवं सत्यपि शूद्रो नीचो वा को बुभूषिष्यति?। खादनपानव्यवस्थायां, विवाहादौ, दायभागविभागादौ वा तदा प्रतिबन्धा आपतेयुः। फलतः कर्म्मणा वर्णव्यवस्था वर्णविप्लवो नाम। ईदृशवर्णव्यवस्थायां महत्यो बाधा उपतिष्ठेरन्। अधिकमेतद्विषये यदि डाक्टरमहोदयस्य दिदृक्षा स्यात्; तर्हि अमुना योऽङ्को दृष्टः 'सूर्योदय' स्य; तस्यैव अग्रिमाङ्कत उपक्रान्तः 'कर्मणा वर्णव्यवस्थायां हानिः' इति मामकीनो निबन्ध आमूलचूडं द्रष्टव्यः। तदा च तदीयालोचनापि कर्तव्या। यत्र पत्रे आलोचना तेन कार्य्या; तत्पत्रं मत्पार्श्वेऽपि प्रहेयम्। काशिकम् 'आज' पत्रं यस्मिन् भवदीयोऽयं लेखः प्रकाशितः—मूलत्राणे नाऽऽयाति। एकेन सज्जनेन तत्—पत्रस्य अयमङ्को मत्पार्श्वे प्रेषितः। अत एव तदीया प्रत्यालोचनापि प्रकाश्यते एवाऽस्माभिः।

जन्मनैव वर्णव्यवस्थामन्तृणि* तस्मिन्नेव महाभारते यदि 'ब्राह्मणो नावमन्तव्यः सद् असद् वा समाचरन्' इति पद्यं लिखितम्; तर्हि कथं तत्र प्रक्षिप्तता?। अनेन महाभारतं ब्राह्मणकृते न किल सदाचरणं व्युदस्यति, न किल असदाचरणमनुशास्ति। प्रत्युत उभयोरेव अवस्थयोस्तस्य ब्राह्मणत्वमुपदिश्य, कर्म्मणा वर्णव्यवस्थासिद्धान्तं समूलमुच्छिद्य, स्वकीयं परमोद्देश्यं, सङ्केतितपूर्व्वं जन्मना वर्णव्यवस्थासिद्धान्तं विशदयति। तर्हि कथमत्र तत्प्रक्षिप्ततावकाशः?। कथं वा ग्रन्थकार-

---

* मन्तृणि, क्लीवविशेषणान्तुम्, पुंवद्भावपक्षे गुणे 'मन्तरि' इति।

हृदयभिन्नं स्यात् पद्यमिदम्? । अवशिष्टोऽयं प्रश्नो यद्—'नावमन्तव्यः' इति कथम्? । तत्रोच्यते यद्—इदमन्यद् न किञ्चित्; केवलं जन्मना स्वयमभिप्रेताया वर्णव्यवस्थायाः सम्मानः †। स्वयमुक्तमतया स्वीकृतस्य जन्म ब्राह्मणस्य वर्णान्तरापेक्षया दण्डादिविधाने तारतम्यमात्रम्। न खलु वस्तुत एव असदाचरणस्य विधिरिति डाक्टरमहोदयोऽवदध्यात्। अस्य पूर्वार्धमेतत् स्पष्टं विशदयति—'दुर्बला अपि विप्रा हि बलीयांसः स्वतेजसा' आदिपर्व० १९०।१३ केवलं महाभारतेऽत्रव न, किन्तु अन्यत्राऽप्युक्तम्—'दुर्वेदा वा सुवेदा वा प्राकृताः संस्कृतास्तथा। ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाऽग्नयः' वनपर्वणि २००।८८ 'यथा श्मशाने दीप्तौजाः पावको नैव दुष्यति। एवं विद्वान् अविद्वान् वा ब्राह्मणो दैवतं महत्' २००।८९। ईदृशा बहव एव श्लोकाः, श्लोका ~ किमु, ईदृशा अध्याया अपि महाभारते सम्भृता एव। किं सर्व्वत्र प्रक्षिप्ततैव? बत !!!

अधुना मनुस्मृतिश्लोको द्रष्टव्यः—'न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम्। राष्ट्रादेनं बहिष्कुर्यात् समग्रधनमक्षतम्। मनु० ८।३८० एतेन, पूर्वमहाभारतश्लोकेन च मया जन्मना वर्णव्यवस्थामण्डनं, कर्मणा वर्णव्यवस्थाखण्डनं च विहितम्। परन्तु डाक्टरमहाशयोऽत्र निरुत्तरः सन्, स्वपक्षत्राणाय एतयोः श्लोकयोः प्रक्षिप्ततार्थं प्रयत्य स्वपक्षस्य शैथिल्यमसूचयत्। मया च 'राष्ट्रादेनं बहिष्कुर्यात्' इति उत्तरार्धं लिखितम्, परं डाक्टमहोदयेन तत् त्यक्तम्। कदाचिदेतेन तेन अग्रिमलिखितस्वसर्वलेखस्य खण्डनमाशङ्कितं स्यात्।

अयि डाक्टरमहाशय! मनुना 'न ब्राह्मणो हिंसितव्यः' अथर्व० ५।१८।६, ५।१९।८ एतदादिवेदमन्त्रानुकूल्येन ब्राह्मणहिंसा निषिद्धा। परं स सर्व्वथा दण्डाय विमोचितोऽपि न। किन्तु राष्ट्राद् बहिष्कृतेरेव दण्डस्तस्मै दत्तः। इदं वर्णान्तरापेक्षया दण्डे तारतम्यम्; न तु महति पापे दण्डस्य सर्व्वथा अभावः, पापाय प्रोत्साहनं वा। यदा खलु मनुस्मृतिर्ब्राह्मणं वर्णान्तरापेक्षया श्रेष्ठं मन्यते; तर्हि तया स्पष्टं तस्मै दण्डस्य तारतम्यमपि स्थापनीयम्। परमनेन मनुर्ब्राह्मणेभ्यः सर्व्वपापकरणस्य विधिं तु नाचष्टे, प्रत्युत सर्वपापेष्वपि अवस्थितस्य ब्राह्मणत्वमाख्याय, तस्मै च वर्णान्तराऽपेक्षया लघुदण्डं च समादिश्य जन्मना वर्णव्यवस्थापयति। यदा खलु मनुना सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु। आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते' मनु० १०।५ इति श्लोके, एवमन्यान्यश्लोकेषु (ये मया 'सूर्योदये'

† सम्मानः पुंसि।

उक्तनिबन्धे उद्धृताः ) स्वकीय उत्तरपक्षो जन्मना वर्णव्यवस्थायाः स्थिरीकृतः; तर्हि तस्यैव जन्मना वर्णव्यवस्थासाधकोऽयं श्लोकः कथं प्रक्षिप्तः स्याद् ? ग्रन्थकर्तुरभिप्रेताद् वा विरुद्धः स्यात् ? । एतादृश एव अन्यस्तदीयश्लोको दृश्यताम्— 'एवं यद्यप्यनिष्टेषु वर्तन्ते सर्वकर्मसु । सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तत्' मनु० ९।३१९। एवमन्येऽपि श्लोकाः सन्ति ।

एतदुक्तं भवति—मनुर्ब्राह्मणस्य, क्षत्रियस्य, वैश्यस्य दानाध्यायनयज्ञकर्म्माणि तु समानानि निर्दिशति; परं वृत्तिभेदमात्रमाचष्टे । यदि कर्म्मणा वर्णव्यवस्था तदीयः सिद्धान्तः स्यात्; तर्हि समाने एव त्रयाणां कर्मविभागे, कथं स वर्णानां त्रितयं निर्दिशतीति ? । अथ च स वर्णान् प्राग् ( जन्मतः ) आचष्टे; ततस्तेषां कर्म्माणि । परं भवन्तस्तदभिप्रेतविरुद्धं प्राक् कर्म्माणि आचक्षते; ततो वर्णान् । तेन यद्—मनुमते कर्म्मणा वर्णव्यवस्था न; किन्तु जन्मनैव । यदि एवम्, तर्हि अस्माभिरुद्धृतं तदुत्तरपक्षपोषकमेव पद्यं कथं प्रक्षिप्तं परिवर्त्तितं वा स्यात् ?

( क्रमशः )

---

# अभिभाषणम् ।

[ संयुक्त प्रान्तीय संस्कृतछात्रसम्मेलनस्य श्रीमथुरापुर्यां द्वितीयाधिवेशने समाध्यक्षस्य डाक्टर श्रीमङ्गलदेव शास्त्रि, एम्० ए० डी० फिल० ( आक्सन ) महोदयस्य ( प्रिंसिपल गवर्नमेंण्टसंस्कृतकालेज, बनारस ) ]

मान्या विद्वद्वर्याः प्रियच्छात्रगणाश्च,

महतः प्रमोदस्यायमवसरो यदद्य सर्वेऽपि वयं नानाप्रदेशेभ्यः समागत्य अस्माकं माननीयाया विश्ववन्द्याया देववाण्याः समुन्नतिं कामयमाना आनन्दकन्दस्य नन्दनन्दनस्य भगवतः श्रीकृष्णस्य जन्मभूम्यां पुण्यपुर्यां मथुरायामिह संसदि समवेताः स्मः ।

एषा हि खलु देववाणी शैवशाक्तवैष्णवजैनबौद्धादिनानासंप्रदायेषु विभक्तानां विभिन्नमतिजुषाम् आपाततः परस्परविरुद्धत्वेन प्रतीयमानानामपि, तेषु तेषु संप्रदायेषु तेषु तेषु मतेषु च ।

एको रसः करुण एव निमित्तभेदाद्
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान् ।
आवर्तबुद्बुदतरङ्गमयान् विकारान्
अम्भो यथा सलिलमेव हि तत्समस्तम् ॥

इत्याद्यनुरूपमेकसूत्ररूपेण ओतप्रोतया एकयैव व्यापिन्या भारतीयमौलिकसंस्कृत्या परस्परं सम्बद्धानां सर्वेषामप्यस्माकं भारतीयसंस्कृत्यभिमानिनामतीव माननीया। संस्कृतभाषा हि भारतीयार्यधर्म इव सर्वेषामप्यस्माकमार्यधर्मावलम्बिनां वरिष्ठः शेवधिर्गर्वस्य च विषयः। एको हि आर्यधर्मवृक्षोऽसंख्यशाखाप्रशाखारूपेणातिविस्तृतः,

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिꣳ सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥

इत्यादिश्रुतिभिर्गीयमानविराट्पुरुष इव, नानारूपैः पल्लवितः पुष्पितः फलितश्च साम्प्रतं समन्ताद्भारतभूमिमलंकरोति। एतद्दृष्ट्या तु सोऽपि "एकोऽश्वत्थः सनातनः" इत्येवं वर्णयितुं शक्यते। शैववैष्णवप्रभृतयः सर्वेऽपि भारतीयधर्मास्तस्यैव शाखाप्रशाखारूपाः। भारतीयसंस्कृतीत्यपरनामा एक एव जीवनरसस्तान् सर्वानाप्याययति परिपोषयति च। तेषां सर्वेषामन्यधर्मेभ्यः किञ्चिदनिर्वचनीयं वैशिष्ट्यं च संपादयति। तस्य खलु भारतीयसंस्कृतीत्यपरनामधेयस्य भारतीयजीवनायामृतकल्पस्य जीवनरसस्य सर्वकामदुधा दोग्ध्रीवेयमस्माकं मातृरूपा देववाणी। अत एव तस्याः परिपोषणेनैव भारतीयसंस्कृतेः परिपुष्टिस्तदनुयायिनां सर्वेषामार्यधर्मावलम्बिनामस्माकं सर्वाङ्गीणा समुन्नतिश्च संभवति।

कस्यैतदविदितं यत्प्रायः सर्वेषामप्यार्यधर्मावलम्बिनां धार्मिकं साहित्यं प्राचुर्येण देववाण्यामेव विद्यते। सर्वेषामपि आर्यधर्माणामनुयायिभिः आजीवनं तपांसि तपद्भिराचार्यैः संग्रथितानि ग्रन्थरत्नानि देववाण्याः साहित्यसमृद्धिं सम्पादयन्ति। प्रायेण सर्वासामेव भारतीयभाषाणामुद्गमस्थानभूता चैषा देववाणी। एतद्द्वारैव विभिन्नदेशेषु लैटिन, ग्रीक, इंग्लिश, जर्मन, फ्रेंच—इत्यादिरूपैरुपलभ्यमानया आर्यभाषयास्माकं संबन्धः भुवि सर्वत्र विश्रुतः। अस्यामेव सभ्यजगतः प्राचीनतमं साहित्यं समुपलभ्यते। तदेतादृशैरनन्यसाधारणैरुपलक्षिता इयमस्माकं देववाणी कस्य नाम नाभिवन्दिता स्यात्।

## देववाण्याः प्राचीनकाले समुन्नतिः।

आसीत्स समयो यदा खलु साभ्युदयसीमामनुभवन्ती अभ्युन्नतिशिखरे संस्थिता सर्वत्रापि स्वप्रभावमहिम्ना सर्वेषां समादरभाजनं बभूव, नानादेशेषु च विस्तृता भारतवर्षस्य यशः समन्तात्पृथिव्यां प्रसारयति स्म।

कस्याविदितं यन्न केवलं भारतवर्ष एव किन्तु भारतेतरदेशदेशान्तरेष्वपि तस्याः प्रचार आसीत् प्राचीनकाले। केनेतिहासविदा न श्रुतो भवेत्सुदूरवर्त्तिनि 'एशिया

माइनर' प्रदेशेऽपि परः सहस्रवर्षेभ्यः प्रागपि 'बोगाज़कोई' (Boghaskoi) स्थाने समुपलब्धप्राचीनलेखेपूल्लिखितैः 'इन्द्र', 'वरुण', 'मित्र' इत्यादिभिर्वैदिकदेवतावाचिशब्दैः स्पष्टमनुमीयमानस्तस्याः प्रचारः। एशियामध्यप्रदेशेषु इण्डोचाइनाप्रभृतिदेशेषु महासमुद्रान्तःसंस्थितेषु सुदूरवर्त्तिषु 'बालि' प्रभृतिद्वीपेषु च अद्यत्वेऽपि समुपलभ्यमानैः प्राचीनैर्भारतीयैः संस्कृतग्रन्थरत्नैर्देवालयखण्डैः संस्कृतशिलालेखैर्वापि तस्या एव प्रचारातिशयस्तेषु तेषु स्थानेषूद्घोष्यते। भारते विप्लुतानां परःशतानां ग्रन्थरत्नानामद्याप्यनुवादरूपेण चीनतिब्बतादिदेशेष्ववस्थितिरपि देववाण्या एव प्राचीनकालिकं भुवि विश्रुतं यशः प्रख्यापयति। किं बहुना, "शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति। विकार एवैनमार्या भाषन्ते शव इति", "महान् हि शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती, त्रयो लोकाः...... ।" महाभाष्यादिग्रन्थेपूपलभ्यमानैरेतादृशैः प्रमाणैरपि तस्याः प्राक्कालिकः प्रायेण सार्वदेशिकः प्रचारातिशय एव स्पष्टमनूद्यते।

भारतवर्षे तु प्राचीनकाले तस्या अत्युत्कृष्टप्रभावस्य प्रचारातिशयस्य च विषये किमु नाम वक्तव्यम्। आबालवृद्धमाराजरङ्कमापामरप्राज्ञं च तस्याः सार्वजनीनप्रचारविषये नहि कस्यापि सन्देहलेशस्याप्यवकाशः। साम्प्रतिकहिन्दीप्रभृतिभाषाणामिव प्राचीनकाले 'अन्वध्यायं भाषायाम्' (निरुक्ते), 'भाषायां सदवसश्रुवः' (अ० ३।२।१०८), 'प्रथमायाश्च द्विवचने भाषायाम्' (अष्टा० ७।२।८८), 'सख्यशिश्वीति भाषायाम्' (अष्टा० ४।१।६२) इत्यादिप्रमाणैर्भाषात्वेन व्यवहार एव तस्याः सार्वजनीनं प्रचारं द्योतयति। 'प्रत्यभिवादेऽशूद्रे' इतिपाणिनिसूत्रेऽशूद्रग्रहणेन, नाटकेषु संस्कृतभाषाभाषिभिः संस्कृतज्ञपात्रैः सहासंस्कृतभाषिणामपि नीचपात्राणां वार्त्तालापेन, "उद्दारि भगिनि या त्वं कुम्भं हरसि शिरसानड्वाहं साचीनमभिधावन्तमद्राक्षीरिति" (महाभाष्ये १।१।५८) इत्यादिप्रमाणैश्च तस्याः प्रचारो न केवलं शिक्षितेष्वेव किन्तु प्राकृतजनेष्वपि अविहतगतिरासीदिति स्पष्टमेवोद्घोष्यते।

वैदिकेषु ऋषिषु त्रसदस्युप्रभृतीनां राजन्यानां वसुकर्णादिवैश्यानां विश्ववाराप्रभृतीनां स्त्रीणामुपलब्धिः, उपनिषत्सु राज्ञामृषिभ्यो ब्रह्मज्ञानोपदेष्टृत्वेन प्रसिद्धिः महाभारते भीष्मपितामहादेर्नीतिशास्त्रप्रवक्तृत्वेन वर्णनमित्यादि सर्वमपि तस्याः प्रचारस्य व्यापकत्वमेवानुमापयति।

तस्मिन् हि प्राचीने प्राचीनतमे च समये जीवनयात्रायाः प्रत्येकविभागे देववाण्या एवाप्रतिहतं साम्राज्यं सुस्थितमासीत्।

सेनापत्यं च राज्यं च दण्डनेतृत्वमेव च।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति॥ ( मनु० १२।१०० )
दशावरा वा परिषत् यं धर्मं परिकल्पयेत्।
त्र्यवरा वापि वृत्तस्था तं धर्मं न विचालयेत्॥
त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः।
त्रयश्चाश्रमिणः पूर्वं परिषत् स्याद्दशावरा॥
ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च।
त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये॥ ( मनु० १२।११०-११२ )

इत्यादिप्रमाणैरयमेवार्थः स्पष्टीक्रियते।

छान्दोग्योपनिषदादिगतैः "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद् भगवोऽध्येमि" ( छान्दोग्योपनिषद् ७।१ ) इत्यादिप्रमाणैः, शुक्रनीत्यादौ:—

आन्वीक्षिकी त्रयी वार्त्ता दण्डनितिश्च शाश्वती।
विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः।
वर्णाः सर्वाश्रमाश्चैव विद्यास्वासु प्रतिष्ठिताः।

इत्येवं सर्वेषां वर्णानामाश्रमाणां च कृते तत्तदुपयोगितामाकलय्य चतसृणां विद्यानां प्रतिपादनेन,

यद्यत्स्याद्वाचिकं सम्यक् कर्म विद्याभिसंज्ञकम्।
शक्तो मूकोऽपि यत्कर्तुं कलासंज्ञं तु तत्स्मृतम्॥

इत्येवं लक्षितानां द्वात्रिंशद्विद्यानां चतुःषष्टिकलानां च भेदानुपक्रम्य विभिन्नप्रस्थानैस्तत्तद्वेदसंबद्धैर्धनुर्वेदायुर्वेदार्थवेदादिभिः सह संबन्धविधया विभज्य तत्तत्कलानां प्रदर्शनेन च न केवलं प्राचीनकाले देववाण्या वाङ्मयस्य तत्तद्विद्यानां कलानां च भेदेनातिविस्तृतत्वं किन्तु सर्वस्यापि लोकव्यवहारस्य जीवनयात्रायाश्च कार्यनिर्वहणक्षमत्वमखिलपुरुषार्थसाधनोपयोगित्वं च सुस्पष्टं प्रतीयते।

तदेवं प्राचीनकाले न केवलं भारतवर्ष एव किन्तु भारताद् बहिरपि विभिन्नदेशेषु प्रचारातिशयमुपभुञ्जाना सर्वासामपि जीवनयात्रानिर्वाहिकाणां विद्यानामाश्रयीभूता अखिलपुरुषार्थसाधनोपयोगिविस्तृतवाङ्मयेन च समेता समुन्नतिशिखरमधिष्ठिता आसीदेषास्माकं देववाणी।

## देववाण्या अद्यत्वेऽवनतिः।

परं हा हन्त! सैव देववाणी अद्यत्वे सर्वथा संकुचितगात्रा जीर्णा शीर्णा च दृश्यते। चिरादेव स्वकीयप्राचीनोत्कृष्टपदाद् भ्रष्टा सा शनैः शनैर्वर्तमानामधोगतिमनुप्राप्ता। साम्प्रतिकजगति जीवनयात्रायां या तस्याः, संस्कृतज्ञानां वाऽवस्थितिः, कस्य खलु न सा खेदावहा भवेत्। नहि तस्याः पुरातनसमय इव सामान्यजनतायां प्रचारः, उपयोगो वा सामान्यलोकव्यवहारे। नहि जीवनयात्रायां राष्ट्रस्य वा विभिन्नविभागेषु संस्कृतज्ञानस्य काचिद्विशेषापेक्षा। विलुप्तप्रायमेव तस्या नानाविधविद्यानामाश्रयीभूतमनल्पमनवधि च प्राचीनं साहित्यम्। नहि संस्कृतज्ञानां प्राचीनकाल इव सर्वथा सुखेनैव जीवननिर्वाहः। नापि जनतायाः पुरोयायित्वं नेतृत्वं वा। न चापि तेषां विशिष्टविधया किञ्चिदपि स्थानं राज्यव्यवस्थापिकासु संसत्सु। आस्तां पुनर्दूरे तेषां पुरातनं लोकनायकत्वं, राष्ट्रकर्णधारत्वं, सेनापतित्वं, प्रधानामात्यत्वं, सान्धिविग्रहिकत्वं, प्राड्विवाकत्वं, कुलपतित्वं, पृथिव्यां सर्वेषां मानवानां सदाचारोपदेष्टृत्वं, नानाविधानां विद्यानामुपज्ञातृत्वं, सम्राजां पुरोहितत्वं, दूरवर्त्तिदेशदेशान्तरेषु महासमुद्रान्तर्वर्तिद्वीपपरम्परासु च भारतीयसभ्यताया भारतीयसदाचारस्य भारतीयसाहित्यस्य भारतीयपौराणिकगाथानां भारतीयानां नदीनां नगराणां च नाम्नां संस्थापकत्वम्। परमेतादृशैः पुनरावृत्तोद्गारैरलम्। पर्याप्तमेतावद्वर्णनं तस्या वर्तमानामसाधारणीमवनतिमस्माकं हृद्गतां कर्तुम्।

## देववाण्या अवनतेः कारणानि।

कानि पुनर्देववाण्या अवनतेः कारणानि? प्रायेणैष विचार एतादृशस्थलेषु बहुभिरुपस्थाप्यते यद्राजशक्तेः स्वसंस्कृतेः पोषिकाया अभाव एवास्माकं देववाण्या वा उत्तरोत्तरमभिवर्धमानाया अवनतेः कारणमिति। 'राजा कालस्य कारणम्' इत्यादिवचनान्यप्यत्र विषये प्रमाणीक्रियन्ते। परं वस्तुतो विचारणायां तु कार्यकारणभावस्य वैपरीत्यमेवात्र नः प्रतिभाति। कस्यापि देशस्य राजशक्ती राजनैतिकावस्था वा न स्वयमकारणत एव समुत्पद्यते। वस्तुतः सापि तत्तद्देशवासिनां शिष्टानां शिक्षितानां वा जननायकानां जनतायाः प्रतिनिधिरूपाणां पुरोयायिनां पुरोहितानां वा प्रजाः प्रति स्वकर्त्तव्यस्य पालनापालनमूलिकैव। एवञ्च तत्तत्काले संदृश्यमाना भारते या राजनैतिकी दुरवस्था नैषास्माकं दुरवस्थायाः कारणम्, प्रत्युत वयमेव स्वकर्तव्यपालनाद्विमुखा जनतायाः पुरोयायिपदाद् भ्रष्टास्तस्याः कारणतामुपगताः। एतादृशमेव तत्तद्विषयककार्यकारणभावे मतिवैपरीत्यमन्येष्वपि विषयेषु प्रायेणास्माकमुपदृश्यते। तदाधारे व च जनताया वास्तविकलाभालाभ-

विचारमुपेक्ष्य तास्ता दृष्टीः प्रजासु प्रचारयन्तो वस्तुतः स्वात्मवञ्चनामेव बहवो जनाः कुर्वन्ति ।

## लोकप्रगतेर्लोकस्थितेश्चोपेक्षा ।

ततश्च न हि राजशक्तेर्हानिः राजनैतिकदुरवस्था वा संस्कृतभाषाया अवनतेर्मूलकारणम्, किन्तु यन्मूलकारणं तत्कृतैव राजशक्तेर्हानिरपि । तच्च लोकप्रगतेः, लोकव्यवहाराद्, लोकावस्थितेश्च संस्कृतज्ञानां विराग उपरतिः, तेषामुपेक्षा च ।

लोकप्रगतिर्हि नदीव सततमग्रगामिनी न जातु एकावस्थायामेव संतिष्ठते । ऋतूनामिव तस्या अपि आनुरूप्येण वर्तनं जीवनस्य सफलजीवनयात्राया वा प्रथमं लक्षणम् । लोकप्रगतिमनुरुध्यैव प्रवर्तमानास्तत्तद्देशनिवासिन्यो जातयो जगति स्वयशः समन्तात् प्रसारयन्ति । अन्यास्तु कालकवलतामापद्यन्ते ।

सर्वेष्वपि देशेषु सर्वेष्वपि च कालेषु सर्वेऽपि कर्ममार्गाः सर्वमेव कर्मकाण्डं च लोकप्रगतिमनुरुध्यैव वस्तुतः प्रजाहितदृष्ट्यैव च प्रचारितं सत् साफल्यं लभते । लोक एव याथार्थ्येन ।

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्याꣳ शूद्रो अजायत ॥

इत्येवं गीयमानस्य भगवतो विराट्पुरुषस्य प्रत्यक्षमूर्त्तिरिव सर्वेषामेव मार्गाणां धर्माणां कर्मणां वा सत्यत्वासत्यत्वयोरुपयोगित्वयोर्वा परीक्षणाय सत्यं तत्त्वनिकषग्रावेव वर्तते ।

ततश्चास्माकं देववाण्याः संस्कृतज्ञानां वा विदुषां चिरादेव क्रमशो ह्रासमुपगच्छन्त्या अवस्थाया वास्तविकं मूलकारणं लोकप्रगतेर्लोकावस्थितेश्च अथवा प्रजायाः सामान्यजीवनस्योपेक्षैव, ततस्तेषां पार्थक्यं च । लोकस्य लोकयात्रायाश्च आत्यहिकीनामावश्यकतानामुपेक्षयैवास्माकं जीवनोपयोगिनीनां विद्यानां कलानां च नानाविधानां तिरोभावः समजनि । लोकप्रगतेरुपेक्षणेन सर्वैरुपेक्षिता इव शनैः शनैः संस्कृतज्ञा दृश्यन्ते । जनताया नेतृत्वं च शनैः शनैस्तेषां हस्तात्प्रस्खलितमिव प्रतिभाति ।

स्वाभ्युदयकाले पुनर्देववाण्या वाङ्मयस्य जीवनयात्राया विभिन्नविभागानामानुरूप्येणैव नैके विभागा विभिन्नाः शाखाश्चावर्तन्त । सभ्यसमाजस्य प्रत्येकावश्यकतानुसारमेव तास्ता विद्याः कलाश्च समुद्दिश्य संस्कृतवाङ्मयं तदा प्रवृत्तमासीत् । आसीच्च समाजस्य राष्ट्रस्य वा सर्वेष्वप्यङ्गेषु समाना कल्याणबुद्धिः प्राचीनानामाचार्याणां शिष्टानां जनतायाः पुरोयायिनाम् । अत एव च तत्र तत्र पुराणादिषु—

पठन्द्विजो वागृषभत्वमीयात्
स्यात्क्षत्रियो भूमिपतित्वमीयात्
वणिग्जनः पण्यफलत्वमीयाज्
जनश्च शूद्रोऽपि महत्त्वमीयात् ॥ (वा० रा० १।१।१००)

शृण्वन्विप्रो वेदवित्स्यात्क्षत्रियः पृथिवीपतिः ।
ऋद्धिं प्राप्नोति वैश्यश्च शूद्रश्चारोग्यमृच्छति ॥
( अग्निपुराणे ३८३।२३ )

इत्येवं राष्ट्रस्य सर्वेष्वप्यङ्गेषु अङ्गाङ्गिभावरूपो घनिष्ठः संबन्धोऽत एव चैकस्यापि दुरवस्थयोपेक्षया वा सर्वेषामपि हानिर्नियतेति च सिद्धान्तानुरूपं सर्वेषामप्यङ्गानां कल्याणकामना श्रूयते । अत एव च प्रजाया विभिन्नानामङ्गानामावश्यकतानुरूपम् "आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती" इत्येवं विद्यानां चातुर्विध्यमाम्नायते ।

"चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति । आगमकालेन स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेनेति" ( महाभाष्ये ), "आचार्यः सर्वचेष्टासु लोक एव हि धीमतः", "कृत्स्नो हि लोको बुद्धिमतामाचार्यः । शत्रुश्चाबुद्धिमताम्" ( चरके ), "बुद्धिहीना विनश्यन्ति यथा ते मूर्खपण्डिताः" ( पञ्चतन्त्रे ) इत्याद्यभियुक्तोक्तिभिः, महाभाष्यादिप्राचीनग्रन्थेषु पदे पदे "तद्यथा लोके" इत्येवं लोकव्यवहारस्य समादरेण, सांख्यादिषु नानाविधलौकिकदृष्टान्तसाहाय्येन च शास्त्रार्थप्रतिपादनेन प्राचीनानां विदुषां दृष्टौ लोकबुद्धेर्लोकप्रगतेर्व्यवहारज्ञानस्य च महत्त्वमेव स्पष्टीक्रियते ।

प्राधान्येन सामान्यजनतायाः शिक्षणार्थं विनिर्मितेषु सर्वेषां माननीयेषु विभिन्नपुराणेषु राजशास्त्रस्य, भुवनकोशस्य, महाद्वीपादेः, वास्तुलक्षणस्य, रत्नादिपरीक्षायाः, वृक्षायुर्वेदस्य, नैकेषां राजवंशानाम् अश्वचिकित्साया गजचिकित्साया अन्येषां चैवंविधानां लोकोपयोगिविषयाणां सप्रपञ्चं वर्णनादिकमपि 'लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि' इति भगवदाज्ञानुरूपं न केवलं प्राचीनाचार्याणां लोकसंग्रहचेष्टाया लोककल्याणबुद्धेश्चैव निदर्शकं किन्तु तेषां स्वयमपि लोकोपयोगिविद्यासु परमप्रावीण्यस्य ख्यापकं स्पष्टतः प्रतीयते ।

परमद्यत्वे संस्कृतज्ञा भीता इव समुद्विग्ना इव दूरतः परित्यजन्ति व्यवहारोपयोगिनीनां लोकप्रगतेश्च परिचायिकानां भूगोलेतिहासगणितराजशास्त्रादिविद्यानामध्ययनम् । हन्तैतादृक्प्रवृत्तिमूलिकैव संस्कृतभाषायाः संस्कृतज्ञानां च जीवनयात्रासंबन्धिषु विभिन्नव्यापारेषु राष्ट्रस्य तत्तदावश्यकविभागेषु चानिशं संवर्द्धमानानुपयोगिता ।

तदेवं प्रपञ्चितमस्माभिरस्मन्मतानुसारेण देववाण्या अवनतेर्मूलकारणम्। अन्यानि कारणानि वस्तुतोऽस्यैव मूलकारणस्य व्याख्यारूपाणि। तथापि वैशद्यार्थं तान्यपि कानिचिदग्रे प्रतिपाद्यन्ते।

## भारतीयमौलिकसंस्कृतेरपरिज्ञानम्।

आपाततः परस्परं विरुद्धत्वेन प्रतीयमानेष्वपि शैवशाक्तवैष्णवजैनबौद्धप्रभृतिषु नानासंप्रदायेषु एकसूत्ररूपेण व्याप्ताया भारतीयमौलिकसंस्कृत्याः संक्षेपेण स्वरूपमुपवर्णितमेव पुरस्तादस्माभिः। तस्या एतस्याः संस्कृतेरपरिज्ञानमननुभवश्चापि एकतमं कारणं देववाण्याः साम्प्रतिक्या अवनतेः। एतदपरिज्ञानमूलकमेव संस्कृतज्ञेषु तद्द्वारा साधारणजनेषु च समुपलभ्यमानं परस्परासहिष्णुत्वं परस्परं कलहश्च दृश्यते।

वर्तमाने काले तेषु तेषु समुन्नतदेशेषु तत्तत्सङ्कीर्णसाम्प्रदायिकभावनासु प्रतिदिनमुपक्षीयमाणासु, 'जर्मन', 'इटैलियन', 'अरैबिक' प्रभृतिरूपेण तत्तद्देशीयमौलिकसंस्कृतिभावनासु पुष्टिं नीयमानासु तद्द्वारा च तत्तज्जातिषु संघशक्तिसम्पादनपुरःसरं स्वस्वोत्कर्षसाधनतत्परास्वपि एष जातिभ्रंशकरोऽसहिष्णुताया भावोऽस्मासु कस्य नाम देशहितैषिण आर्यधर्माभिमानिनो मनस्तापं न तनुते।

इतिहासविदामतिरोहितं यत्कालक्रमेण तत्तदवस्थावश्यकतानुरूपं प्राकृतिकनियमानुसारेण नूतना नूतनाः सम्प्रदायाः सर्वेषु देशेषु प्रवर्तन्ते। परम्परागतमर्यादाया विरोधित्वभावना तेषु किञ्चित्कालपर्यन्तमेव जनताया जायते। किञ्चित्कालातिपाते पुनस्तेषां तस्यामेव मर्यादायामन्तर्भावः समावेशश्च प्रायः सर्वत्र क्रियते। ततश्च साम्प्रदायिकी असहिष्णुता सर्वथा अविचारमूला। अत एव तत्त्वविदो विचारशीला विद्वांसः 'परोक्षप्रिया हि देवाः प्रत्यक्षद्विषः', "ये तत्र ब्राह्मणाः सम्मर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्त्तेरन् तथा तत्र वर्त्तेथाः" इति श्रुत्यादेशमनुसरन्तस्तेषु तेषु सम्प्रदायेषु व्यापिन्या एकस्या भारतीयसंस्कृत्या भावनयैव भावितचित्ता उदारहृदयाः परस्परं सहिष्णुताभावस्यैव प्रचारं कुर्वन्ति।

ईश्वरानीश्वरवाद - वेदपौरुषेयत्वापौरुषेयत्ववाद - वाममार्ग-दक्षिणमार्गादिभेदेन नानारूपायाः शैवशाक्तवैष्णवादिसंप्रदायबहुलायाः सांख्यवेदान्तजैनबौद्धप्रभृतिनैकदर्शनपद्धतीरनुसरन्त्या भारतीयार्यजातेर्वाचकस्य 'हिन्दुजातिः, इति पदस्य व्यवहारः सर्वैरप्यस्माभिः प्रतिदिनं क्रियते। सर्वेऽपि तस्या अन्यधर्मानुवर्त्तिभ्यो विवेकं पार्थक्यं च कर्तुमनायासेनैव क्षमाः। परं विद्वांसोऽपि तस्याः कस्मिन्नेकस्मिन्नेव लक्षणेऽन्तर्भावप्रदर्शनेस्खलितपदा दृश्यन्ते। भारतीयसंस्कृतिरेव वेदान्तिनां मायेव स्वयमनिर्वचनीयापि सती व्यवहारतः प्रत्यक्षं सर्वैरनुभूयमाना तस्या एक-

मात्रं लक्षणम्। सैषा संस्कृतिर्हि राजनीतिसंघ इव वस्तुतो भारतीयानां संप्रदायानां संघः। स्वसंप्रदायेऽनुरागः परसंप्रदायेषु च समादरबुद्धिरित्येव खलु तस्या मुख्यो नियमः। न चात्र कश्चिद्विरोधः। नहि स्वमातापित्रोरनुरागातिशयः स्वप्रतिवेशिनो मातापितरौ प्रति समादरबुद्ध्या कदाचिद्विरुध्यते।

## वस्तुतत्त्वज्ञानस्योपेक्षा।

कस्याविदितमेतद् यदद्यत्वे जगति येयमभूतपूर्वा नानाविधा समुन्नतिर्दृश्यते, नानारूपा आविष्काराश्चानवरतं क्रियमाणाः सर्वानाश्चर्यचकितान् कुर्वन्ति, विविध-विद्यासम्बन्धिविज्ञानानां च यः समुत्कर्षो दृष्टिपथमायाति तस्य सर्वस्य मूलकारणं तत्त्वज्ञानदृष्ट्या तत्तत्प्रमेयाणां वास्तविकी जिज्ञासा, 'मूढः परप्रत्ययनेयबुद्धिः' इत्यभियुक्तोक्त्यनुसारं परम्परागतानां तत्तद्विषयकविश्वासानां स्वयमनुभवेन प्रायो-गिकपरीक्षापुरःसरं विनिर्णयस्य च प्रवृत्तिरेव विद्यते। सैषा प्रवृत्तिः सुतरामासीद-स्मद्देशेऽपि प्राचीनाचार्येषु। स्वानुभवेन प्रयोगपूर्वकं च वस्तुस्वरूपविनिर्णयप्रवृत्ति-कारणादेव प्राभवंस्ते नानाविधपदार्थविषयकपरिज्ञानपूर्णान् भारतीयनदीदेशनगर-ग्रामकूपारण्यप्रभृतिभूगोलेतिहासादिविशिष्टज्ञानपुरःसरं कौटिल्यार्थशास्त्रपाणिनीया-ष्टाध्यायीसदृशान्यसाधारणानि लोकविदितानि ग्रन्थरत्नानि निर्मातुम्। वैशेषिके, आयुर्वेदे, ज्यौतिषे, गणिते, अन्येषु चैवंविधेषु प्रायोगिकपरीक्षणसापेक्षेषु शास्त्रेषु स्वानुभवेन वस्तुतत्त्वपरीक्षणपुरःसरं या तेषां समुन्नतिरद्यापि सास्माकं भारती-यानां गर्वस्यास्पदम्।

'परीक्ष्यकारिणो हि कुशला भवन्ति,' 'नापरीक्षितमभिनिविशेत,' 'सम्यक् प्रयोगनिमित्ता हि सर्वकर्मणां सिद्धिरिष्टा। व्यापच्चासम्यक्प्रयोगनिमित्ता' (इत्यादि चरके), 'आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उप-देष्टा। साक्षात्करणमर्थस्याप्तिस्तया प्रवर्तत इत्याप्तः। ऋष्यार्यम्लेच्छानां समानं लक्षणम्। तथा च सर्वेषां व्यवहाराः प्रवर्तन्ते' (इति न्यायसूत्रवात्स्यायनभाष्ये शब्दलक्षणप्रकरणे), 'मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्य-तीति। तेभ्य एतं तर्कमृषिं प्रायच्छन्' (इति निरुक्ते) सर्वाणि चैतानि प्रमाणानि तमेव पूर्वोक्तमर्थं द्रढयन्ति। किं बहुना, धर्मविषयेऽपि तेषामासीदियं धारणा यत्—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥......

वर्तमानकाले संस्कृतपठनपाठनपद्धतेरयमेको महान् दोषो यत्प्रथमं तु छात्रेषु

कस्मिन्नपि विषये स्वाभाविकविशिष्टजिज्ञासाबुद्धेरनुदय एव। उदयेऽपि अभ्यस्यमानग्रन्थप्रमाणबलादेव सबलात्कारं तस्या उपशमः क्रियते। अभ्यस्यमानग्रन्थोक्ताः पदार्थास्तत्तद्ग्रन्थे यथा प्रतिपादितास्तथैव वस्तुतत्त्वज्ञाननिरपेक्षया ग्राह्यन्ते। व्याकरणे उदाहरणरूपेणान्यथा वा समागतानां शब्दानां केऽर्थाः, काव्यादिषूपवर्णितानां तत्तत्पदार्थानां वा वस्तुतो लोके किं स्वरूपम्, पुराणेतिहासादिषु वर्णितानां पर्वतानां देशानां नद्यादीनां च वस्तुतः कुत्र स्थितिः, कानि च तन्नामानि इदानीन्तने भारतेऽन्येषु वा देशेषु, ज्यौतिषे वा सविस्तरमुपवर्णितानां नक्षत्राणां वस्तुतः खगोले कुत्र कीदृशी स्थितिरित्येवंविधानां जिज्ञासानामनुदय एवाद्यत्वे संस्कृतज्ञेषु। उदयेऽपि कति नाम ताः समाधातुं प्रयत्नपरा दृश्यन्ते। दर्शनशास्त्रेषु अंशतोऽनूदितान् दर्शनान्तरपदार्थान् यथाकथञ्चित्पठित्वैव सन्तुष्टा नहि चेष्टन्ते केऽपि प्रायेण वस्तुतस्तत्तद्दर्शनान्तरपदार्थैस्तान् सम्वादयितुम्।......

प्रायेण उपरिनिर्दिष्टकारणव्रातवशादेव शनैः शनैश्चिरायावनतिमुखी देववाणी साम्प्रतिकीं खेदावहां दशां वहति। एतन्मूलक एव देववाण्याः स्वाभ्युदयकाले विनिर्मितेषु प्राचीनग्रन्थेषु नूतनग्रन्थेषु च महान् प्रभेदः। केन खलु विदुषा न स्वीक्रियेत प्रायेण प्रत्येकस्मिन् साहित्यविभागे प्राचीननवीनग्रन्थयोर्भेदः। अयमेव खलु प्राचीनाचार्यग्रन्थेषु नवीनग्रन्थेषु च महान् भेदो यत्प्राचीनाचार्यास्तु लोकप्रवृत्तिं लोकप्रगतिं वस्तुतत्त्वं चावगत्य प्रजाकल्याणकामनयैव प्रेरिताः स्वग्रन्थान् प्रणयन्ति स्म। महाभाष्यादिषु पदे पदे लोकव्यवहारचर्चा, चरकादिषु प्रयोगपूर्वकं वस्तुतत्त्वपरीक्षणाय प्रोद्बोधनम्, भूतदयामुद्दिश्यैव ग्रन्थप्रथने प्रवृत्तिश्चात्र स्पष्टं प्रमाणम्। तथा च वात्स्यायनभाष्ये "किं पुनराप्तानां प्रामाण्यम्? साक्षात्कृतधर्मता भूतदया यथाभूतार्थचिख्यापयिषेति। आप्ताः खलु साक्षात्कृतधर्माणः भूतदया यथाभूतार्थचिख्यापयिषेति। आप्ताः खलु साक्षात्कृतधर्माण इदं हातव्यमिदमस्य हानिहेतुरिदमस्याधिगन्तव्यमिदमस्याधिगमहेतुरिति भूतान्यनुकम्पन्ते।" (न्यायभाष्ये २।१।६८)। नूतनग्रन्थकारेषु तु पुनः प्रायेण तद्विपरीतैव प्रवृत्तिः। आप्तलक्षणस्य वस्तुतत्त्वानुभवमूलकत्वमुपेक्ष्य प्राधान्येन शब्दप्रमाणतत्परत्वम्, वास्तविकीं प्रजाहितप्रवृत्तिमनादृत्य अहमहमिकाभावेन अज्ञानां विवेकरहितानां लक्ष्मीपतीनां राजादीनां परितोषपूर्वकं वाग्वितण्डया वा निःसारशब्दावल्या वा स्वविपक्षानधःकृत्य स्वार्थसाधनमित्येव प्रायेण नूतनग्रन्थप्रणयनपरिपाट्या रहस्यं वृत्तञ्च।

इत्यन्येतानि देववाण्याः संस्कृतज्ञानां चावनतेः संक्षेपेणास्मन्मतेन कतिचित् कारणानि। देववाण्याः संस्कृतज्ञानां च तीव्रः समुन्नत्यभिलाष एव नः प्रेरयति अत्र

विषय आत्मपरीक्षणाय । आत्मपरीक्षणं हि नाम मिथ्याभिनिवेशरहितेन निश्छद्मना च मनसा विहितं समुन्नतेः प्रथमं साधनमिति समामनन्ति सन्तः ।

## अस्माकं कर्तव्यम् ।

परं प्रसन्नताया विषयो यत्पुनरपि देववाण्यास्तद्द्वारा च भारतीयसंस्कृतेरभ्युत्थानाय सप्रयत्ना वयम् । उदयाचलमारूढो भगवान् ज्ञानभास्वान् भुवनमाभासयितुं प्रवृत्तः । अविद्यातमिस्रापगमे सर्वेऽपि मोहनिद्रामुन्मुच्य स्वसमुन्नत्यै चेष्टापरा इतस्ततो दृश्यन्ते । एषा संसदपि तस्या एव प्रत्यक्षं प्रमाणम् । प्रतिवर्षं परःसहस्राणां छात्राणां संस्कृतपरीक्षासु प्रवेशः, परःशतानां पाठशालानां च यत्र तत्र स्थापनम्—सर्वमेतदाशावहम् । संस्कृतच्छात्रेषु तु एतादृशो नूतन एव जागरः परमसन्तोषावहः ।

वस्तुतो न हि कथञ्चिदप्यस्माकं निराशाया अवसरः । अद्यत्वेऽपि संस्कृतच्छात्रेषु संस्कृतविद्वत्सु चान्यत्राश्रुतचरा नैके विशिष्टा गुणा दृश्यन्ते । तपस्या, कष्टसहिष्णुता, गुरुशिष्यभावः, 'अस्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारङ्गतास्तत्रभवन्तः शिष्टाः' ( महाभाष्ये ६।३।१०९ ) इत्यादर्शानुसारमनन्यभावेन निष्कामभावनया च विद्यायाः पाठनम्, वस्तुतोऽकृत्रिमः स्वदेशप्रेमा, भारतीयसंस्कृतेरभिमानः, स्वधर्मपरायणता कर्मनिष्ठता, आस्तिक्यबुद्धिः, देवभक्तिः, शुचिता भारतीयशीलसदाचारानुवर्तित्वम्, विशेषतश्च देववाणीं प्रत्यनन्यप्रेमभावना—सत्सु एतादृशेषु अद्यत्वेऽपि अन्येषु सभ्यताभिमानिदेशेष्वपि प्रायेणादृश्यमानेषु गुणेषु निश्चितं देववाण्या भविष्याभ्युदयविषये न हि कस्याप्यनास्थया भवितव्यम् ।

नूनं स समयः पुरस्तात्समुपस्थित इव दृश्यते यदा संस्कृतभाषा भूयोऽपि सर्वेषामादरास्पदमुन्नतिशिखरारूढा च भविष्यति । साम्प्रतिकी खल्ववस्थितिः सर्वथा अस्वाभाविकी । अन्यदेशेषु यथा स्वदेशसम्बन्धिप्राचीनोत्कृष्टभाषाणां समादरः संदृश्यते, तथैवास्मद्देशेऽपि अस्मिन्नभ्युत्थानयुगे देववाण्याः समुत्कर्षेण समादरेण च नूनं भाव्यम् । सत्यं संस्कृतज्ञा असामयिकत्वेन आधुनिकशिक्षितानां दृष्ट्या न तथा समादरार्हा मन्यन्ते यथा तैर्भवितव्यम् । वस्तुतस्तु आधुनिकशिक्षादीक्षितसमाजस्य संस्कृतज्ञसमाजस्य च शिक्षिताशिक्षितत्वदृष्ट्या नहि कश्चिन्मौलिको भेदः । आधुनिकशिक्षिता जानन्तोऽपि साम्प्रतिकीमवस्थितिमितिहासं राजनीतिं च भारतीयप्राचीनसंस्कृतिज्ञानापेक्षया अज्ञा एव । तच्चैतदन्यथा संस्कृतज्ञेषु । तेऽपि भारतीयप्राचीनसंस्कृत्या परिचिता अपि साम्प्रतिकावस्थाज्ञानापेक्षयैव अज्ञाः । ततश्चाधुनिकशिक्षितैः

सह समानेऽपि तेषां दोषे संस्कृतज्ञानामयमेव गुरुतरो दोषो यत्तेऽसामयिकाः। नात्यत्र संदेहलवोऽपि यत्समयोपयोगिज्ञानोपार्जनेन संस्कृतोत्कृष्टपाण्डित्यस्य प्राचीनमर्यादायाः संरक्षणेन सम्पोषणेन च पूर्वमेव पूर्णरूपेण भारतीयभावभाविताते वस्तुतः समुत्कृष्टपदं लप्स्यन्ते। एतादृशगुणगणालङ्कृताः संस्कृतज्ञा एव वस्तुतो भारतीयजनताया नेतृत्वधुरां वोढुमर्हाः।

तदेतद्यथा नातिचिरेण संपद्यते तथैवास्माभिः सर्वैः सर्वथा प्रयतनीयम्। सर्वेषां छात्राणां गुरूणामन्येषां च भारतीयसंस्कृत्यनुरागिणां सहयोगेनैवैतत्सम्भाव्यते। छात्रैश्च विशेषतः प्रयतितव्यम्। कस्यापि देशस्य भविष्यं युवस्वेव तिष्ठति। यूनामेवोद्योगेन कर्तव्यपरायणतया आशावादितया सोत्साहेन कर्मणा च तत्तद्देशाः समुन्नताः स्वयशःपताका जगति प्रसारयितुं प्राभवन् प्रभवन्ति च। तेषामेवास्मद्देशेऽपि विशेषत एतत्कर्तव्यं यत्पूर्वोक्तानां दोषाणां परिमार्जनं विधाय शुद्धाचरणेन ब्रह्मचर्येण श्रद्धया गुरुभक्त्या देशप्रेम्णा च नानाशास्त्राण्यधीयाना देशप्रगतिं जगतोऽवस्थितिञ्चावगच्छन्तो भारतीयसंस्कृत्या आदर्शानैक्यभावनां च लोकेषु संस्थापयन्तः परस्परं सौहार्दं, जन्मप्रभृति मरणपर्यन्तं भारतीयानामभ्युदयनिःश्रेयससाधनतत्परायाः सततं स्वसाहित्यसरोरसामृतेन तानाप्याययन्त्याः सर्वथा मङ्गलमय्या भारतीयानां मातृकल्पाया देववाण्याः समुद्धाराय बद्धपरिकरा भवेयुरिति।

दैन्यभावस्य च परित्यागो विशेषतो विधेयः। दैन्यभाव आशावादिता च नैकत्रावस्थानं सहेते। आशावादिता हि अस्माकमार्यधर्मावलम्बिनां मुख्य आदर्शः। दैन्यं चानार्यजुष्टोऽस्वर्ग्योऽकीर्त्तिकरश्च गुणः। वेदमन्त्रेषु यत्र तत्रापि दृश्यते। आशावादिता दैन्यराहित्यं चैव श्रेष्ठ आदर्शः प्रतीयते। अस्माकमधःपतितावस्थाकाले दास्यकाले च निर्मिताद् 'असारः संसारः सर्वथैव हेयः, कारागारसदृशो बन्धस्थानम्, जीवनं दुःखमयम्'

अभ्रमध्ये च पश्यन्ति चञ्चलां विद्युतां गतिम्।<br>
क्षणं दृष्ट्वा च नश्यन्ति तथा संसारिणो जनाः॥<br>
यथा हि कूपमध्ये च घटमाला भ्रमन्ति च।<br>
गमागमौ हि पश्यामि तद्वत्संसारिणो जनाः॥<br>
जले च बुद्बुदो यद्वत्तद्वत्संसारिणो जनाः।

इत्यादिनिराशाजनकभावपोषकसिद्धान्तैर्व्याप्तात्संस्कृतसाहित्याद्विपरीतमेव नो वैदिकं साहित्यम्। तत्र हि

विश्वदानीं सुमनसः स्याम पश्येम नु सूर्य्यमुच्चरन्तम् । ( ऋ० ६।५२।५)
अस्मे धेहि श्रवो बृहद्द्युम्नं सहस्रसातमम् ।
इन्द्र ता रथिनीरिषः ॥ ( ऋ० १।९।८ )
इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि ।
जयेम सं युधि स्पृधः ॥ ( ऋ० १।८।३ )
अदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् । ( यजु० ३६।२४)
पश्येम शरदः शतम् । जीवेम शरदः शतम् ॥

इत्यादिरूपाभिः प्रार्थनाभिराशावादितैव जातिदृष्ट्या व्यक्तिदृष्ट्या च जीवनस्य मुख्य आदर्शः, अभ्युदयस्य निःश्रेयसस्य च प्रथमं कारणमिति स्पष्टं प्रतीयते । एतद्दृष्ट्या हि जगदेतत्सुन्दरोपवनसदृशं विधात्रा करुणापरवशेनास्माकमभ्युदयाय ईश्वरप्रदत्तशक्तीनां च पूर्णरूपेण परिपुष्ट्यै परिपुष्टिक्रमेण चामृतत्वपदप्राप्त्यै एव सृष्टम्, अत एव च न सर्वथा हेयत्वेन विभावनीयम् । वयं हि भारतीयाः

ते सम्मता जनपदेषु धनानि तेषां तेषां यशांसि न च सीदति धर्मवर्गः ।
धन्यास्त एव निभृतात्मजभृत्यदारा येषां सदाभ्युदयदा भवती प्रसन्ना ॥
दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता ॥

इत्येवं सततं स्तूयमानाया भगवत्या महाशक्त्याः समुपासकाः 'तुष्टिरस्तु, पुष्टिरस्तु' इत्येवमहर्निशं प्रार्थयमानाश्च कथमिव निराशाया दैन्यभावस्य च पात्रं भवितुमर्हामः । ततश्च धृत्युत्साहसमन्वितैः, 'स्वदेशभविष्यस्य वयमेव निर्मातारः' इत्येवं दृढं विश्वसद्भिः, लोकप्रगतिमवगच्छद्भिः, किञ्चित्कालादेव नानादेशैर्या अभूतपूर्वा समुन्नतिरासादिता तां पश्यद्भिः 'वयमपि भारतीयमहापुरुषसन्ताना भारतीय-संस्कृत्यभिमानिनो भारतस्य भूयोऽभ्युत्थानं करिष्यामः, भारतीयजनताया निरभिमानबुद्ध्या सेवां कृत्वा तस्यां परस्परं स्नेहभावं च वर्धयन्तो वास्तविकं पुरोयायिपदमवाप्स्यामः' इति दृढं निश्चित्य सर्वाभ्युदयनिःश्रेयससाधनभूताया देववाण्याः समुन्नत्यै समुत्थातव्यमस्माभिः । प्रार्थना च विधेया,

ओं सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥
संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥ इति शम् ।

# सूर्योदयः ।

## त्रैभाषिको विशेषाङ्कः ।

पञ्चदशवर्षे १५ | ज्येष्ठपूर्णिमायाः १९९७, जून १९४० । | १२ द्वादशी संख्या

हे धर्मरूपे जगतामधीशे ! कृपाकटाक्षेण तवैव मातः ।
अनन्तब्रह्माण्ड-कटाहकोट्यो भवन्ति तिष्ठन्ति लयं प्रयान्ति ॥
विकर्षणाऽऽकर्षणशक्तितोऽम्बिके ! ताराग्रहोपग्रह-धूमकेतवः ।
स्थानाच्च्यवन्ते न सतामधीश्वरि ! स्वतः स्वयं ते ननु धर्मरूपिणि ॥

---

## धर्मस्य सार्वभौमस्वरूपम् ।

श्रीजगदम्बाया अचिन्त्या, अप्रतर्क्या, अलौकिकाद्भुतस्वरूपा या शक्तिराब्रह्माण्डात् पिण्डपर्य्यन्तं, सत्यादिनानालोकेभ्यः परमाणुपर्यन्तञ्च जडचेतनात्मकं यावत्सृष्टिप्रपञ्चं यथावद् धारयन्ती विद्यते सा अलौकिकी दैवी शक्तिः पूज्यपादैर्महर्षिभिः धर्मशब्देन प्रतिपादिता ।

नारायणोपनिषदि च—इत्थमेव सिद्धान्तितम् , तथाहि—

धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति ।
धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद् धर्मं परमं वदन्ति ॥

महाभारतेऽपि—एवमेव प्रतिपादितम्—

धारणाद्धर्ममित्याहु धर्मो धारयते प्रजाः ।
यत्स्याद् धारणसंयुक्तं स धर्म इति निश्चयः ॥

कर्ममीमांसादर्शनेऽपि कथितम्—

धारकोधर्मः ॥ अभ्युदयकरः सत्त्वप्राधान्यात् ॥ निःश्रेयसकरः शक्तिमत्वात् ॥

प्रतीपकर्माऽधर्मः ॥ समौ शक्तिवैशिष्ट्यात् ॥ अहितत्वाद्-हेयः ॥ धर्माऽधर्मनिर्णयः सत्त्वतमोभ्याम् ॥

वैशेषिकदर्शनेऽपि भगवता कणादेनाऽभिहितम्—

'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इति ।

तन्त्रशास्त्रेष्वपि कथितम्—

वेदप्रणिहितं कर्म धर्मस्तन्मङ्गलं परम् ।
प्रतिषिद्धक्रियासाध्यः स गुणोऽधर्म उच्यते ॥
प्राप्नुवन्ति यतः स्वर्गमोक्षौ धर्मपरायणे ।
मानवा मुनिभिर्नूनं स धर्म इति कथ्यते ॥
सत्त्ववृद्धिकरो योऽत्र पुरुषार्थोऽस्ति केवलः ।
धर्मशीले तमेवाहुर्धर्मं केचिन्महर्षयः ॥
या बिभर्त्ति जगत्सर्वमीश्वरेच्छा ह्यलौकिकी ।
सैव धर्मो हि सुभगे ! नेह कश्चन संशयः ॥

यस्यां मानवजातौ धर्माऽनुभवस्य गभीरता इयतीं परां काष्ठां प्राप्ता सैव जातिः संसारे जगद्गुरुरिति कथयितुं शक्या ।

एतादृशः सनातनधर्म एव भूलोके प्रचलितानां सर्वेषां धर्मसंप्रदायानां साहाय्यदाने समर्थः, आध्यात्मिकं ज्ञानं शिक्षयितुं समर्थः, सर्वेषां धर्माणां पितृस्थानीयश्च भवितुमर्हति ।

सनातनधर्मिणां ये विशेषधर्मास्तेऽप्यलौकिकाः सन्ति । तेषां विशेषधर्मेषु आध्यात्मिकोन्नतिकारिणां सर्वसिद्धान्तानां समावेशोऽस्ति । वेदान् शास्त्राणि च प्रमाणयन्तः सनातनधर्मिणो निम्नलिखितान्—एकादशसिद्धान्तान् मन्यन्ते, ते च सर्वैः स्मृतिपथमारोहणीयाः ।

१—वेदवेदाङ्गादिषु तदनुकूलस्मृतिपुराणेषु च विश्वासः ।
२—दैवसर्गे दैवे जगति देवपदधारिषु च विश्वासः ।
३—कर्मसु संस्कारेषु च विश्वासः ।
४—जन्मान्तरवादे श्राद्धकर्मणि च विश्वासः ।
५—अवतारवादे विभूतितत्त्वे च परमो विश्वासः ।
६—उपासनासु योगेषु च परमो विश्वासः ।
७—मूर्तिपूजायां पीठरहस्ये च विश्वासः ।
८—शुद्धाऽशुद्धभावे स्पृश्याऽस्पृश्यविवेके च विश्वासः ।

९—वर्णाश्रमव्यवस्थायां ( समाजविज्ञाने ) विश्वासः।

१०—यज्ञेषु महायज्ञेषु च विश्वासः।

११—सगुणे निर्गुणे चेश्वरतत्त्वे तथा मुक्तिविज्ञाने च विश्वासः।

सनातनधर्मावलम्बिनां दानतपोयागादीनां साधारणधर्माणामङ्गोपाङ्गानाम् पूर्वोक्तानामेकादशविश्वासानां तुलनायां सुस्पष्टतया सुविदितं भविष्यति—यत् संसारे यावन्तो धर्मसंप्रदायाः यावन्तो धर्ममार्गाश्च सन्ति ते सर्वे एतेषामेव धर्माङ्गानां साहाय्यमवश्यमासादयन्ति। अत एव सनातनधर्मावलम्बिनः कैरपि भिन्नसम्प्रदायावलम्बिभिर्द्वेषं न कुर्वन्ति।

---

## शुद्धाऽशुद्धविवेकविज्ञानम्।

मनुष्यः पूर्णोऽवयवो जीवः, पूर्णावयवत्वञ्च तस्य पञ्चकोषाणां पूर्णत्वात्। ते च अन्नमयः, प्राणमयः, मनोमयः, विज्ञानमयः, आनन्दमयः-इति पञ्चकोषाः। आर्यमानवपिण्डो भारतद्वीपस्य समाजविज्ञाने ( सोशियोलाजीति प्रसिद्धे ) स एव विज्ञायते यस्मिन् मानवपिण्डे एतेषां पञ्चकोषाणां शुद्धतायाः सामग्री विद्यमाना भवेत्।

साधारणरूपेण मनुष्येषु पूर्वोक्तानां पञ्चकोषाणां या भिन्ना भिन्ना अपवित्रता आयाति, तस्या एव भिन्नभिन्ननामानि वैदिकदर्शनशास्त्रेषु सलक्षणानि परिगणितानि। तद् यथा—अन्नमयकोषस्याऽपवित्रता 'मल' शब्देन कथ्यते, ते खलु दार्शनिका मलशब्देन केवलं मालिन्यमेव (गन्दगी) न प्रतिपादयन्ति—अपितु अन्नमयकोशे येन जाड्यं संजायते तदेव मालिन्यं कथ्यते। एवं प्राणमयकोषस्य नियमितक्रियायां तस्य पवित्रतायाञ्च यो बाधकस्तं 'विकार'-इति वदन्ति। एवमेव मनोमयकोषे येन कारणेन चञ्चलता वर्द्धते एतादृशीं स्थैर्य्यहानिकरीं शक्तिं 'विक्षेप' इति प्रतिपादयन्ति। विज्ञानमयकोषे या शक्तिर्बुद्धिमावृणोति, सा आवरणशक्तिः। योगबुद्धिगम्ये, आनन्दमयकोषे तमोगुणप्रभावपरिपोषिका शक्तिः 'अस्मिता' कथ्यते। भारतद्वीपस्य समाज विज्ञाने-(सोशियालजी) यः शुद्धाऽशुद्धविवेकस्य स्पृश्याऽस्पृश्यविवेकस्य च महान् विस्तृतोऽधिकारः प्राप्यते, तस्याऽयमेवोद्देश्योऽस्ति यत् मानवपिण्डे मल-विकार-विक्षेपाऽऽवरणाऽस्मितानां वृद्धिर्न भवेत्। वेदेषु शास्त्रेषु च आर्यजातीनामनार्यजातीनाञ्च वर्णनं कुर्वद्भिर्महर्षिभिः, आर्यपिण्डस्य विशेषतासाधनाऽभिप्रायेण शुद्धाऽशुद्धविवेक-सम्बन्धे, पञ्चकोशेषु कथमशुद्धता जायते इति युक्तिः

प्रदर्शिता, मीमांसाशास्त्रेऽतीवोत्तमतया सरलतया च बोधिताऽस्ति । तस्य कियन्त्यपि सूत्राणि यथा—

आर्यपिण्डविशेषत्वं तद्वत् ॥ आदितः सुसंस्कृतत्वात् ॥

तस्मात् सुसंस्कारकेन्द्रम् ॥ त्रिविधाऽऽकाशसंबन्धश्च ॥

शुद्धाऽशुद्धस्पर्शाऽस्पर्शोऽधिकारी ॥ विष्ठादिभिः प्रथमः ॥

शवादिभिर्द्वितीयः ॥ अशौचादिभिस्तृतीयः ॥

संसर्गादिभिश्चतुर्थः ॥ सदसद्भिः पञ्चमः ॥ अन्योन्यसम्बन्धाच्च ॥

अनुकूला व्यक्तिर्भवेत् प्रतिकूला वा, सनातनधर्माऽवलम्बिनां शुद्धाऽशुद्धविवेकं यथाऽऽधुनिका मन्यन्ते तस्मात् शुद्धाऽशुद्धविवेकस्य दार्शनिकं रहस्यमतीव गभीरम् ।

उदाहरणरूपेण वेदितव्यम् यत्—शवात् प्राणमयकोषोनिर्गच्छति—अतः स स्पर्शकर्त्तुः प्राणान् आकर्षति । दूरदेशे आत्मीयजननिधने अथवा चन्द्रग्रहे सूर्यग्रहणे वा मनसि कोऽपि विलक्षणः संक्षोभ उत्पद्यते । अत एतादृशाऽऽशौचानां प्रभावः प्रथमं मनोमयकोषादारभ्य सम्भवति ।

शुद्धाऽशुद्ध-विवेकं परिहसद्भिराधुनिकैः स्वचक्षुरुन्मील्य विचार्यताम् यद् रोगाणां संक्रामकत्वं स्पर्शादिभिरस्माकं पूर्वाचार्यैः प्रतिपादितमासीत् तदाधुनिकैः पाश्चात्यैर्विज्ञानरीत्यापि-( साइन्स ) संसाध्य दर्शितम्, यत् संक्रामकाः रोगा रोगिणः सामीप्यात् संस्पर्शात् कथं संक्रामन्तीति । युक्तिगवेषणापरायणैः पाश्चात्यैः केवलमन्नमयकोषविषये विचारः प्रकाशितः, अन्यत् कोषचतुष्टयमद्यापि ते नैव जानन्ति, अतस्ते तेषां विचारमेव कर्त्तुं न शक्ताः ।

---

## वर्णधर्मरहस्यम् ।

सनातनधर्माऽवलम्बिनीनाम् आर्यजातीनां वर्णाश्रमधर्म एको विशेषो धर्मः । सर्वस्मिन् संसारे केनापि प्रकारेण सामाजिकव्यवस्था प्रचलितैवास्ति । अधुना तु सभ्यदेशेषु समाजविज्ञानस्य ( सोशियोलाजी-इत्यस्य ) विचारो विशेषरूपेण प्रचलति । परन्तु सनातनधर्मावलम्बिनीनामार्यजातीनां समाजविज्ञानं सामाजिकश्रृङ्खला च विलक्षणा वर्त्तते, आध्यात्मिकोन्नतिशीलाया अस्या आर्यजातेः सामाजिकश्रृङ्खला सामाजिकविज्ञानञ्च धर्ममूलकमस्ति । तदेव विशेषधर्मनाम्ना वर्णाश्रमधर्मनाम्ना च प्रतिपाद्यते । आचार-विचार-शुद्धाऽशुद्धविवेक-पातिव्रत्यादीनां नानाङ्गानां सत्यपि भेदे द्वे मुख्याङ्गे स्तः, एका वर्णव्यवस्था, द्वितीया आश्रमव्यवस्था च । सर्वत इयं विशेषताऽत्र विद्यते यद् जन्मत एव जातिसम्बन्धः स्वीक्रियते ।

अनेन कारणेन सर्वप्रधानाः—ब्राह्मण-क्षत्रियवैश्य-शूद्राश्चत्वारो मुख्यवर्णा स्तदन्तर्गता अनेकेऽन्ये च वर्णा ( जातिशब्दवाच्या ) अभिमताः। तथैव ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-संन्यास इति चत्वार आश्रमा अभिमन्यन्ते। वैदिकदर्शनानामयं सिद्धान्तः, यत् ब्रह्म-प्रकृति-महामायायाः सत्त्वरजस्तमसां त्रयाणां गुणानां कर्मणाञ्च तारतम्यतः सृष्टिकालादेव चतस्रो जातयः समुत्पन्ना सन्तीति। जातीय-रजोवीर्य-प्रभावानुसारेण चत्वारो वर्णाः पृथक् पृथक् विद्यन्ते। अस्मिन् विषये सनातनाऽऽर्य-शास्त्रेषु चिरकालिकानि बहूनि प्रमाणानि सन्ति। एतावानस्या व्यवस्थायाः समादरो दृश्यते यद् भगवतो विष्णोः साक्षादवतारेण श्रीरामचन्द्रेण श्रीकृष्णचन्द्रेण च चतुर्णां वर्णानामियं मर्यादा, स्वकीये चारुचरित्रादर्शे भूरि सुचारुरूपेण प्रमाणीकृत्य प्रदर्शिता। उदाहरणरूपेण बोद्धुं शक्यते यत् श्रीरामचन्द्रेण परशु-रामस्याऽहङ्कारं पश्यताऽपि तस्योपरि शस्त्रप्रहारमकृत्वा केवलमेतावदेवोक्तम् यत्—

ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन च।
तस्माच्छक्तो न ते राम! मोक्तुं प्राणहरं शरम्॥ इति॥

भगवान् श्रीकृष्णः परमात्मनः पूर्णोऽवतार आसीत्, तथापि तस्य स्थूलशरीरस्य (मायिकत्वेपि) क्षत्रियजाताववतीर्णत्वेन धर्मराजयुधिष्ठिरस्य राजसूये यज्ञे निम-न्त्रितानां ब्राह्मणानां पादावनेजनकार्यं तेन सप्रमोदं स्वीकृतम्।

महाभारतस्य प्रजागरपर्वणि वर्णितम्—यद्-जन्मान्धो राजा धृतराष्ट्रो यस्मिन् समये धार्मिकप्रवराद् विदुरात् सर्वां रात्रिं नानाशास्त्रोपदेशग्रहणानन्तरमन्ते ब्रह्म-ज्ञानविषयकं प्रश्नं कृतवान् तदा मर्यादापालकेन विदुरेणोत्तरं दत्तम्—

"शूद्रयोनावहं जातो नाऽतोऽन्यद् वक्तुमुत्सहे" इति।

भगवतोः श्रीरामचन्द्रश्रीकृष्णचन्द्रयोश्चरितादपि प्रमाणीक्रियते यद् भारत-खण्डे वर्णधर्मोऽतिप्राचीनकालात्प्रचलित इति। भगवतः कृष्णचन्द्रस्यावतारसमया-दारभ्य ५००० पञ्चसहस्रादधिकान्येव वर्षाणि व्यतीतानीति महाभारतादिग्रन्थेभ्यः सिद्ध्यति। परन्तु भगवतः श्रीरामचन्द्रस्याऽवतारसमयादारभ्य तु चतुःकोटि-वर्षेभ्योऽधिकानि जातानीति देवीभागवतादिपुराणेभ्यः सिद्ध्यति। अतः—ऐति-हासिकगवेषणयापि सिद्ध्यति यद् हिन्दूजातौ वर्णव्यवस्था तथा जन्मत एव ब्राह्मणादिजातिव्यवस्था च चिरकालात्प्रसिद्धाऽस्ति। वर्णधर्मो रजोवीर्यशुद्धिमूलको व्यवस्थितः, जन्मत एव चतुर्णां वर्णानां व्यवस्था स्थापिता। अत्र प्रमाणं भगवान् गीतोपदेष्टा जगद्गुरुः पूर्णावतारः श्रीकृष्णो धर्मसंस्थापकः स्वयम् जगन्मान्ये गीताग्रन्थे स्वल्पैः शब्दैर्दार्शनिकरीत्या संसाध्य बोधितवान्। भगवता भक्तमर्जुनं

प्रत्युक्तम् यत् प्रकृतेः, त्रिभिर्गुणैः पूर्वजन्मोपार्जितैर्जीवानां कर्मभिः कारणैः तदनुरूपै- राचारैः सहकारिभिः कारणैर्मया चतुर्णां वर्णानां सृष्टिः कृतेति । एतस्यैव तात्पर्यं यच् चतुर्णां वर्णानां सृष्टिर्न मनुष्यकृता सा स्वाभाविकी भगवत्कृतास्ति-इति ।

प्रकृतेस्त्रयो गुणाः सत्त्वरजस्तमांसि स्वभावसिद्धाः । अतः सत्त्वगुणप्रधाना ब्राह्मणजातिः, सत्त्वरजःप्रधाना क्षत्रियजातिः, रजस्तमःप्रधाना वैश्यजातिः, तमः-प्रधाना शूद्रजातिः, सृष्टेः प्रथमावस्थायां भारतखण्डे रचिताऽऽसीत् ।

एवञ्च प्रकृतेर्गुणानां स्वाभाविकत्वात् जातिर्गुणाश्च परिवर्त्तयितुं न शक्याः, किन्तु परमेण यत्नेन भिन्नभिन्नव्यक्तिद्वारा पृथक् पृथक् कर्म यथेच्छं कारयितुं शक्यते । यतः खलु गुणत्रयसम्बन्धः प्रकृत्या, स्थूलशरीरसम्बन्धश्च स्थूलप्रकृत्या सहभावेन गुणत्रयं नूतनरीत्या नैवोत्पादयितुं शक्यते ।

इदन्तु निश्चितमेव यद् भगवद्गीतायां यत्र यत्र गुणशब्दप्रयोगस्तत्र तत्र प्रकृतेः स्वाभाविकानां सत्त्वरजस्तमोगुणानामेव सम्बन्धो विद्यते । ते त्रयो गुणा मातापित्रो रजोवीर्यद्वारा वंशपरम्परयाऽनुवर्त्तन्ते । अतो हिन्दूजातौ यद्-जन्मना जातिरभिमन्यते चिरकालात् जातिव्यवस्था च या त्रिगुणमूला सा स्वाभावि- क्यस्ति, स्वभावस्यानपायित्वात् । ब्राह्मणस्य कर्म शूद्राय शिक्षयितुं शक्यते, परन्तु प्रकृतेः, त्रयो गुणास्तारतम्यतः स्थूलशरीरे आविर्भावयितुं न शक्यन्ते । अत एव भगवता गीतोपनिषदि कथितम्—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम् ॥ इति ॥

उपनिषत् सारभूतायां श्रीमद्भगवद्गीतायां चतुर्णां वर्णानां स्वभावत उत्पन्न- कर्मणां विषयेऽपि बाहुल्येन विशदरूपेण च प्रतिपादितम्, यत्—

ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परन्तप !
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥
कृषि-गोरक्ष्य-वाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्याऽपि स्वभावजम् ॥

रजोवीर्यशुद्धेः प्रवाहो यथावत्, समायाति चेद् ब्राह्मणक्षत्रियवैश्यशूद्रजातिषु

तत्तज्जातिस्वभावः पृथक् पृथक् सन्दृश्यते, अयमेव गीतोद्धृतपूर्ववाक्यानां सिद्धान्तः।

यदा जातेः पृथक् पृथक् प्रकृतिः, मातापितृद्वाराऽऽकृष्य शरीरे समायाति तदा तल्लक्षणान्यपि अवश्यमेव प्रकटीभविष्यन्ति। मानवशरीरे मनुष्यत्वेनाऽऽर्यत्वेन च साकं पूर्वोक्तगुणत्रयतारतम्यानुसारेण प्रकृतेः चतुःप्रकाराः चतुःश्रेणीयाः स्वाभाविकवृत्तिसमूहाः चातुर्वर्ण्यमनुष्येषु स्वयमेव जायन्ते।

अतः प्रकृतिजनितगुणानां स्वभावजनितवृत्तिप्रकाराणाञ्चानुसारेण भिन्नभिन्न-वर्णानां मनुष्याणां शिक्षासाधनानाम् आचारव्यवस्थायाश्च पृथक् पृथक् सुव्य-वस्थितत्वेन, चातुर्वर्ण्यमनुष्याः स्वस्वाधिकारानुसारं जीवनपथे पुरःसरा भवन्तः इह लोकेऽभ्युदयस्य परलोके निःश्रेयसस्य च प्राप्तेरधिकारिणो भवन्ति।

यथा पशुषु दृश्यते यद् पशवे तज्जातीयश्रेण्यनुसारेण भोजनदाने एव तस्य कल्याणं भवितुमर्हति, नान्यथा। यथा हि—यदि कश्चिद् गवा मांसं सिंहेन घासं खादयितुं यतेत तर्हि स प्रयासो व्यर्थ एव न स्यात्, प्रत्युत गोजातेः सिंहजाते-श्चोच्छेदक एव भवेत्।

मनुष्यस्वभावः पशुप्रकृत्यपेक्षया पारिमार्जितो भवति, अतस्तेषु प्रकृतिगुणानां अवश्यं सूक्ष्मतया विकाशो भवति। अत एव पूज्यपादैर्महर्षिभिर्योगदृष्ट्यातीवानुसंधानं विचारञ्च कृत्वा चतुर्णां वर्णानां प्रकृतिपर्यालोचनञ्च विधाय तदनुरूपाणां कर्मणां तदनुरूपाणामाचारविचाराणां चैवं विभागो विहितः, यत्—तन्निर्दिष्टमार्गेण स्व-व्यवहारं कुर्वतां चतुर्णां वर्णानामवश्यमेव लोकद्वयकल्याणं भवेदिति। अतो वर्णा-श्रमधर्मावलम्बिनी प्रजा तदनुसारेणैव व्यवहरेद् यथा लोकद्वयहितं प्राप्नुयात्।

घोरेऽस्मिन् कलिकाले सनातनधर्मावलम्बिषु सदाचारविचारयोः विप्लवो दृश्यते। यथा—आर्यनारीषु सतीत्वधर्मस्य गम्भीरताया ह्रासो दृश्यते, यथा च वर्णा-श्रमधर्मस्य विधिवत् पालका विरला एव नयनगोचरा भवन्ति, तथैव चतुर्णां वर्णानामधिकारिणोऽपि स्वधर्माच्च्यवमाना दृश्यन्ते, वर्णव्यवस्थायां प्रायः शैथिल्य-मवलोक्यते। एवं सत्यपि—इदमवश्यं स्वीकर्तव्यमेव यत् सनातनधर्माऽवलम्बिनां समाजविज्ञानम् अतीवदूरदर्शितापरिपूर्णम्, तेषां चातुर्वर्ण्यव्यवस्था चाकाट्या-नुच्छेद्य-दार्शनिक-विज्ञाने, अवलम्बिता, प्रकृतिस्वभावानुकूला च वर्तते।

—०—

## बाल्यावस्थायां प्रारम्भिकशिक्षणम्।

बाल्ये वयसि यत् शिक्षणमुपदेशो वा दीयते तद्धि बद्धमूलं सुदृढं च भवति। अतश्च निवेदनमिदं यत् पाठकमहानुभावैः स्वस्वबालकैः, अधः प्रकाशिताः श्लोकाः कण्ठस्थी कारयितव्याः, स्वप्रतिवेशिजनेषु-एतादृशी शुभावहा प्रवृत्तिश्च समुत्पादनीया।

यत्सेवया प्रसीदन्ति ब्रह्मविष्णुमहेश्वराः। वन्दे तां मातरं भक्त्या लोकद्वयशुभाऽऽवहाम्।
पिता धर्मः पिता स्वर्गः, पिता हि परमन्तपः। सर्वदेवप्रीतये तं नमामि पितरं मुदा॥
अखण्डमण्डलाकारं व्याप्तं येन चराऽचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः।
गुरुर्ब्रह्मा गुरुर्विष्णु गुरुर्देवो महेश्वरः। गुरुरेव परब्रह्म तस्मै श्रीगुरवे नमः॥

---

## महात्मन उपदेशः।

एकस्मिन् स्थाने एको महाऽनुभवी महाविज्ञः कश्चिन्महात्मा दैववशाद् दृष्टिगोचरो जातः। प्रणामाऽनन्तरं वर्त्तमानविषये स पृष्टः सुचिरं ध्यात्वा उवाच—यद् घोरेऽस्मिन्समये सनातनधर्मावलम्बिनां धर्मप्रचार-धर्मशिक्षाऽऽत्मरक्षार्थं च त्रय उपायाः मुख्याः प्रतीयन्ते।

### १ ( भगवन्नामगानम् )

सर्वेभ्यो महान् मुख्यश्चायमुपायोऽस्ति यत् सर्वत्र स्वसदनेषु देवालयेषु प्रत्येकसभासु च—

हरे राम हरे राम राम राम हरे हरे।
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे॥

इत्यस्य कलियुगसंतारणोपनिषदुक्तस्य ब्रह्ममन्त्रस्य गानम्, गणपति-सूर्यदेवीविष्णुशिवादीनाम्—शास्त्रीयनाम्नाञ्च गानं, सर्वैः सङ्घीभूय सायं प्रातश्च करणीयमिति। शास्त्रीयनाम्नां भगवत्प्रतीकतया, वाच्य-वाचकयोः सम्बन्धस्य तादात्म्यतया—'ओ३मित्येकाक्षरमित्यादौ' प्रसिद्धत्वेन घनिष्ठत्वात्—अर्थात्—संज्ञासंज्ञिनोरभेदभावनया भगवन्नामगानेन सर्वमपि प्राप्तुं शक्यते।

### २ ( गृहे धर्मशिक्षा )

प्रत्येकगृहस्थेन स्वसन्तानाय धर्मशिक्षाप्रबन्धः बाल्यादेव करणीयः, यथा—सर्वे बालका बालिकाश्च सायं प्रातः स्वमातुः पितुश्च तथा देवानां गुरोर्नमस्कारं शिक्षेरन् येन सर्वेषां कल्याणं भवेत्।

### ३ ( सङ्घशक्तिप्राप्तिः )

सर्वैरपि सनातनधर्माऽवलम्बिभिः स्त्रीपुरुषैः—हिन्दूजातेः—एकमात्रविराट्सभायाः श्रीभारतधर्म महामण्डलाभिधानायाः साधारणसभ्यतां ( जनरलमेम्बर ) स्वीकृत्य हिन्दूजातेः सङ्घशक्तिं वर्द्धयित्वा श्रीभगवतः कृपार्जनं कर्त्तुमुचितम्, इति।

---

षोडशे वर्षे १६] आषाढ़-श्रावण पूर्णिमयोः १९९७ जुलाई अगस्त १९४० [१-२ संख्ये




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctionedby the Directors of Public Instruction United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—

त्यक्त-महामहोपाध्यायपदवीको

महामहाध्यापकः श्रीपञ्चानन-तर्करत्न-भट्टाचार्यः।

सहकारि-सम्पादकः—

अवधेशप्रसादशर्मा द्विवेदः

उद्गम—स्थानम्—

श्रीभारतधर्ममहामण्डलम्, जगत्गंज, काशी।

—:o:—

वार्षिकं मूल्यं मुद्रात्रयम्।

संरक्षकेभ्यः ५) बहिर्भारतम् ६) छात्रेभ्यः पुस्तकालयेभ्यश्च १)

# विषय-सूची ।

—०—



---

## परीक्षाफल ।

श्रीयुत हीरालाल कौशिक 'हिन्दीकोविद' डूंगर कालेज बीकानेर 'राष्ट्रभाषा भास्कर' निबन्ध परीक्षामें उत्तीर्ण हुए हैं ।

सेक्रेटरी—

अ० भा० धार्मिकाध्यात्मिक सं० वि० विद्यालय, महामण्डल भवन काशी।

—०—

# सूर्योदयः ।

षोडशवर्षे १६ { आषाढ़ श्रावण-पूर्णिमयोः १९९७, जुलाई–अगस्त १९४० । } १–२ संख्ये

## नववर्षारम्भः ।

संस्कृत-साहित्यसमाजे सूर्य्योदयपत्रमिदमिदानीमेकमद्वितीयं निजं पदं निदधाति इति सर्वेषामेव संस्कृतसाहित्यसेविनां सुविदितं विद्यते। पत्रेणानेनाविच्छिन्नं १५ पञ्चदशवर्षावधि सनातनधर्मस्य सुरभारत्याश्च सेवां विदधता सर्वेषां पाठकानां ग्राहकाणामनुग्राहकाणां पार्श्वेऽविरतं मासे मासे समुपसर्पताऽधुना षोडशे वर्षे सोल्लासं सानन्दं निजपदं निधीयते ।

तत्र सानन्दं श्रीमतो ग्राहकान्निवेदयामो यत् पञ्चदशवर्षं यावन्निरन्तरं पत्रमिदं स्वपोषं पुष्टवन्तः सर्वथा लेखैर्मसृण-कागजै र्मध्ये मध्ये चित्रैश्च समलङ्कुर्वन्तो वयं सुरभारतीं समुपास्महे। अधुना श्रीमन्तोऽपि स्वल्पमपि स्वकर्तव्यपालने ध्यानं दद्युश्चेन्महत्कार्य्यमनायासेनैव सम्पद्येत ।

पश्यन्तु, षोडशवर्षीयस्याप्यस्य पत्रस्याधुनाऽपि प्रायः षोडशशतान्येव ग्राहकाः स्युः किमिदं भवतां श्रवणयोग्यम् वृत्तम् । यत्र काश्यां राजकीयसंस्कृतपरीक्षायामेकस्मिन्नेव वर्षे षष्टिः शतानि संस्कृतपरीक्षार्थिनां संख्याः समायान्ति। सङ्कलनया षोडशभि र्वर्षैः षण्णवतिः सहस्राणि परीक्षार्थिनां संख्या भवन्ति। तत्रैव सर्वथा सुरगवीसमुपासकस्य पत्रस्य षोडशभिर्वर्षैः षोडशशतान्येव ग्राहकाणां संख्याः स्युरिति संस्कृतप्रणयिनां महादुःखजनकमिदम् ।

अतश्च सर्वेऽपि भवन्तोऽहमहमिकया प्रतिग्राहकं ग्राहकद्वयमेव वर्द्धयेरंश्चेद्द्वात्रिंशत् शतानि ग्राहकाणां भवेयुः। किमिति भवन्तः स्वाभ्युदयकर्मण्यप्येवमुदासीनाः सन्ति। नवयुवकानामङ्गानि सोत्साहानि समपेक्षितानि, तेषां रक्ते चोष्णताऽपेक्षिता। यदि त एव शिथिलोत्साहा शीतलरक्ता भविष्यन्ति चेत् कथं स्यात्संस्कृतसाहित्यसमाजाभ्युदयः ? सम्प्रति समाचारपत्रेणैव सर्वमपि कृत्यं संसाधितं भवति। तेनैव जनवर्गे आन्दोलनं क्रियते, तद्द्वारैव निजसमाजसंघटनं क्रियते। पत्रेणैव स्वोयो

हृद्गतो भावो बहिः प्रकाश्यते। किं बहुना समाचारपत्रमद्यत्वे बहूपकारकं विद्यते तस्य संरक्षणं सर्वेषामेव प्रधानं कर्मेति नास्ति अविदितम् देशकालात्मविदां विदुषाम्।

वयन्तु सवर्था सर्वतः समुन्नेतुमेवेदं पत्रं प्रयतामहे, परन्तु विना पाठकानां ग्राहकाणामनुग्राहकाणां संरक्षकाणां वा साहाय्येन न किमपि कर्तुमर्हामः। अवदधतु भवन्तः! गतवर्षेऽस्माभि र्मिलित्वा निर्धारितं यत् सूर्य्योदयस्य प्रतिविषयं पृथक् पृथक् लेखस्तम्भाः स्युस्तत्र तत्तद्विषयाणां लेखाः पृथगेव प्रतिस्तम्भं प्रकाशिताः स्युः। परन्तु तत्रापि नावहितं विद्वद्भिः। कियन्तश्च सुदूरगा नेपालादिदेशोद्भवा विद्वांसस्तत्र लेखं प्रहेतुं प्रतिज्ञातवन्तः प्रहितवन्तश्च, परन्तु इहस्थाः प्रधाननगरीस्थाः केऽपि विद्वांसश्छात्रा वा न प्रतिज्ञातवन्तो नापि लेखं प्रहितवन्तः। लेखयोर्लेखानान्तु कथैव का। किमेवमेव संस्कृतसाहित्यसमाजस्याभ्युदयो भविष्यति? इत्थमेवास्माकं सुरसरस्वती गौरवं पदमासीना भविष्यति?

अस्तु, सम्प्रति षोडशवर्षे प्रविशतोऽस्य सूर्य्योदयस्य—"नवे तस्मिन् महीपाले सर्वं नवमिवाभवद्" इति नीत्या सर्वमपि सूर्य्योदये नवीनमेव परिवर्तनं भवतां दृष्टिगोचरं भविष्यति। अस्मिन् वर्षे त्रैमासिकरूपेण इंग्लिश हिन्दीसंस्कृतेति भाषात्रयविशिष्टाश्चत्वारः सूर्य्योदयस्य विशेषाङ्का निःसरन्ति, यत्र विविधा धार्मिकाः साहित्यिकाः सामाजिकाश्च लेखा अत्यधिकोन्नतगम्भीरभावसम्भृता भवन्ति। सूर्य्योदयपत्रमपि बहूनां ग्राहकाणामनुरोधतो विविधैः समाचारैः समलङ्कृतं भविष्यति। बहूनां वैदेशिकानां देशानां भौगलिकमितिवृत्तमपि निवेदितं भविष्यति। येन सूर्य्योदयपाठकानां भौगोलिकं ज्ञानं समृद्धं भविष्यति। यतो हि संस्कृतज्ञाश्छात्रा भूगोलपुस्तकाध्ययनतः प्रायः पराङ्मुखा एव भवन्ति। तेषां कृते समाचारपत्रादिना भूगोलेतिहासादीनां विषयाणां ज्ञानमनायासेनैव भविष्यति। तेन बहूपकारो भविता संस्कृतज्छात्राणामिति सर्वेषामेव देशकालात्मविदां विदुषां परामर्शः। उदाहरणतः पश्यन्तु तथाहि—

रघुवंशे महाकविना कालिदासेन रघोर्दिग्विजययात्रावर्णनव्याजेन चतुर्थे सर्गे तत्तद्देशानां नदी-शस्यादिवस्तुजातानां ज्ञानं संस्कृताध्येतॄणां भौगलिकज्ञानवृद्धिकृते प्रधानं साधनमिति तदेव समुपन्यस्यता स्वीयम्। "उपमा कालिदासस्य" इति प्रसिद्धिः समर्थिता। तत एव कियन्ति पद्यानि पाठकानां पुरतः समुपन्यस्य प्रकृतमुपक्रमिष्यामः। यथा—अयोध्यानगरीतः प्रस्थितो रघुः सर्वतः प्रथमं पूर्वां दिशं जगाम। तत्र सुह्मदेशनृपतिं ततो वङ्गदेशनृपं ततश्च उत्कलस्थं राजानं तदनन्तरं कलिङ्गनाथं जित्वा दक्षिणां दिशं जगाम। तत्र कालिदासीयपद्यानि—

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ॥ ३६ ॥
स तीर्त्वा कपिशां सैन्यै र्बद्धद्विरदसेतुभिः ।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥ ३८ ॥
ततो वेलातटेनैव फलवत्पूगमालिना ।
अगस्त्याचरितामाशामनाशास्यजयो ययौ ॥ ४४ ॥

एवं दक्षिणां दिशं विजित्यापरान् नृपान् जयन् पारसीकदेशं जगाम । ततोऽपि चाश्वसाधनैः पाश्चात्यैर्युध्यमान उदीचीं दिशं जगाम तत्र कालिदाशीयपद्यानि—

पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना ।
इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी ॥ ६० ॥
काम्बोजाः समरे सोढुं तस्य वीर्य्यमनीश्वराः ।
गजालानपरिक्लिष्टैरक्षोटैः सार्द्धमानताः ॥ ६९ ॥
तमीशः कामरूपाणामत्याखण्डलविक्रमम् ।
भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ।

इत्येवं भौगोलिकं दृश्यमुपवर्णयन्महाकविः कालिदासः संस्कृताध्येतॄन्सङ्केतयति तदीयज्ञानार्जनायेति । वयमपि इह सूर्य्योदये भौगोलिकज्ञानोपगिलेखानां महान्तं समादरं करिष्यामः । ये हि महानुभावा ऐतिहासिकान् भौगोलिकान् वा लेखान् प्रहेष्यन्ति, तेषां लेखाः सर्वप्रथमं प्रकाशमेष्यन्ति ।

इत्येवं बहुभिरुपकरणैः सम्भृतमिदं सूर्य्योदयपत्रमस्मिन् हायने ग्राहकाणामनुग्राहकाणाम्पाठकानामुपपाठकानां सेवां विधास्यति, इति सर्वेऽपि द्विगुणितोत्साहा दयन्तामस्य सर्वथाभिवृद्ध्यै इति सर्वानेव निवेदयामः । अवसाने च सर्वान्तर्य्यामिणं परमेश्वरमभ्यर्थयामहे यद् यथा पञ्चदश वर्षाणि यावत् सर्वमपि विघ्नजातं निरस्यदिदं संस्कृतपत्रमग्रेसरतामासादयति सर्वेषां संस्कृतपत्राणां तथैवाग्रेऽपि निर्विघ्नं श्रेयोमार्गमासादयेदिति स्वीयानुग्रहामृतसेकेनामरीकुर्य्यादिति ।

---

## त्रैभाषिकस्त्रैमासिकश्च सूर्योदयः ।

अस्मिन् वर्षेऽस्माभिर्महामण्डलमन्त्रिसभाप्रस्तावानुसारं सूर्य्योदयस्य त्रैमासिको विशेषाङ्कोऽपि भाषात्रयविभूषितो विविधैर्धार्मिक-साहित्यिकादिलेखैः समाचारैश्च समीचीनैः समन्वितो धर्मविषये च गूढानां मननीयानां विषयाणां मर्मविवृतिभिस्सह सुसज्जितो नियमतः प्रकाश्यते । ये हि महामण्डलस्य सदस्या

भविष्यन्ति तेभ्यो निःशुल्कमेवायमङ्को वितीर्य्यते। विशेषाङ्केनानेन हिन्दूसङ्घटनविभागस्य कार्य्यं साधु सम्पाद्यते। विभागे तस्मिन् प्रतिगृहस्थगृहं बालानां बालिकानाञ्च कृते धार्मिकशिक्षायाः प्रबन्धः कृतो विद्यते। तत्रैत्रादृशो विद्यते नियमो यत् ये हि गृहस्था वार्षिकं शुल्कम् एकरूप्यकं वितीर्य्य स्थायिसदस्या भवन्ति तेभ्यो विना मूल्यमेवैकं सदस्यताप्रमाणपत्रं प्रदीयते। यत्र पञ्चानां देवानां सूर्य्य-गणेश-शिव-शक्ति-विष्णूनां प्रतिकृतयो भवन्ति। अधस्ताच्च तिसृषु भाषासु धार्मिकभावोपोद्बलकं मनोहरं गद्यं विद्यते। तदधश्च सदस्यानां पूर्णनामधामसङ्केतो भवति। अन्यच्चतस्य सूर्योदयपत्रस्य चत्वारो विशेषाङ्का भाषात्रयविभूषिता विना मूल्यमेव तेभ्यो दीयन्ते। धार्मिकानि वालकबालिकापठनक्षमाणि पुस्तकानि चाल्प मूल्येनैव मिलन्ति।

इत्थञ्चैकक्रियाऽर्थद्वयकृत्प्रसिद्धेति नियमेन वार्षिकमेकं रूप्यकं वितीर्य्य श्रीभारतधर्ममहामण्डल-सदस्यताग्राहकेभ्यो धार्मिकगृहस्थेभ्यः स्वबालक-बालिकानां धार्मिकशिक्षालाभ-सौकर्य्यं, बिनामूल्यम् इंग्लिशसंस्कृतहिन्दीतिभाषात्रयस्य धार्मिक-पत्रस्य पठन-सौकर्य्यं, हिन्दूसङ्घटनकार्य्ये साहाय्यप्रदानञ्चेति बहूनामलभ्यानां लाभानां भागित्वमासाद्यत इति त्वरायितव्यम् सर्वैः सद्गृहस्थैः।

---

## महामहोपाध्यायपदम्।

पदमिदमिदानीं संस्कृतविद्वत्सु बहु प्रतिष्ठितं विद्यते। ये संस्कृतवाङ्मयमहार्णवे महान्तो विद्वांसो भवन्ति तेभ्य एवेदं पदं भारतसम्राट्प्रतिनिधिना वायसराय महोदयेन समर्प्यते। बहूनीतराण्यपि सम्मानसूचकानि पदानि तत्तदधिकारिभ्यो वितीर्य्यन्ते। परन्तु तान्यन्ययोग्यतासूचकानीति न तादृशसमादरणयोग्यानि पदमिदन्तु वैदुष्ययोग्यतासूचकमिति भारतीयैर्बहुसमादरणीयं विद्यते। भारते सर्वतोऽपि सरस्वत्याः समादरणं समधिकं भवति। यतो हि सर्वमान्येन विष्णुदेवेनापि सरस्वत्याः समादरः समधिकः कृतो दृश्यते। तथाहि उक्तञ्च श्रीहर्षेण सुकविना—

"स्वानुरागमनघः कमलायां वेदयन्नपि हृदि न्यसनेन।
गौरवं व्यधित वागधिदेव्याः श्रीगृहोर्ध्वनिजकण्ठनिवेशात्।"

अस्तु—सम्प्रति पदेनानेन काशीस्था वैदिकशिरोमणयोऽग्निहोत्रिणः श्रीमन्तः पण्डित श्रीविद्याधरगौडमहोदया विभूषिता इति संस्कृतज्ञानां विदुषां प्रमोदस्थानमस्माकम्। इमे हि गौडमहोदयाः सम्प्रति काश्यामद्वितीयाः श्रौतस्मार्तक्रियाकलाप-

तुष्ठापने प्रवीणाः कर्मठाः सन्ति । इमे हि स्वभावतः सरलाः सुविद्वांस एतत्पदयोग्या अस्माकं बहुशो धन्यवादार्हाः । एतेषां पितृपादा अपि एतेन पदेनालङ्कृता आसन्निति विदुषां विशेषसमादरणीयमेतेषां वैदिकप्रवराणामिदं वंशपरम्परावैदुष्यसूचकं पदमिति भूयो भूयो धन्यवादराशिमेतेभ्यो वितरन्तो वयं विरमामो विस्तरात् । (स० सं०)



पण्डितराजः नडादूर स्वामी कृष्णमाचार्यः लक्ष्मीमन्दिरम्, मद्रास

## सभावृत्तान्तः ।

वाराणसीधामस्थे देवनाथपुरेति प्रसिद्धे पल्लीभागेऽवस्थितस्य जयभवानीमन्दिरस्य पवित्रप्राङ्गणे भूदेवविचारसमितेरुद्योगेन वैशाख-शुक्लसितपक्षीयैकादशीतिथेर्दिनत्रयं यावत् प्रत्यहम् अपराह्णपञ्चमहोरायां संघटितं क्रमेण सभात्रितयम् । प्राथमिके वासरे प्रातःस्मरणीय-वङ्गदेशालङ्कार-स्वर्गत-भूदेवमुखोपाध्याय सी० आई० ई० महोदस्य पूतस्मृतिमुपलक्ष्य आदर्शभूतचरितकथालोचनार्थं भूयसां विदुषामेका परिषदधिविवेश । प्रवीणतमस्मार्त्तपण्डितश्रीयुत शशिभूषणस्मृतितीर्थमहोदयाः सभापतिपदमलञ्चक्रुः ।

तत्र च परिषदि भूदेवचतुष्पाठीसंज्ञकपाठशालाया अतीतवत्सरस्य कार्य्यविवरणश्रवणानन्तरं पण्डित-श्रीमत्-ताराचरणसाहित्याचार्य्यमहोदयेन परिषदु-

ईश्वरवर्णनमुखेन भूदेवचरितादर्शविश्लेषणेन सभासदामाचकर्ष चेतांसि । अनन्तरम् भूदेवविचारसमितेरनुष्ठानमारब्धम् । तत्र स्मृतिन्यायशास्त्रयोर्विचारः कियत्काल-पर्यन्तं प्रचलित आसीत् । ततश्च कलिकाता-विश्वविद्यालयस्याध्यापकेन श्रीयुत श्रीजीव न्यायतीर्थ एम० ए० महोदयेन भूदेव-भूदेवकृते सर्व्वस्वदानावदाननिदान चरितमहिमानं शास्त्रविद्याविलासलालसत्वं स्वीयज्ञानगरिमानम् आचारप्रबन्धादि-ग्रन्थत्रयनिर्म्माणं गुणान्तराणि च समुल्लिख्य कृतम् सहृदयहृदयसौख्यदं व्याख्यानम् । शिष्टाचारानुसारेण सभापतिभ्यः कृतज्ञताज्ञापनानन्तरं परिषदन्तमाससाद ।

× × ×

## शक्तिभाष्यसम्पूर्त्तावुत्सवः ।

द्वितीये दिवसे च तत्र तादृशे समये श्रुतिस्मृतिसूत्रात्मकप्रस्थानत्रयस्य ( गीतो-पनिषद्ब्रह्मसूत्राणाम् ) शक्तिभाष्य-रचना-सम्पूर्त्तावानन्दोत्सवसम्पादनार्थं धरातल-ललामभूतवाराणसीधामनि निवसतां तथा नानादिग्देशजनपदेभ्यः कारणान्तरेणापि समागतानां विदुषां निवहेन रचिता काचन महती परिषत् । यत्र नानादर्शनपरमा-चार्य्याणाम् पूज्यपाद श्रीमत् पञ्चाननतर्करत्न भट्टाचार्य्याणां कृतिः शक्तिभाष्यं प्रथमं स्मृत्यन्तर्गतसप्तशतीग्रन्थे देवीभाष्योपनाम्ना प्रकाशितं प्रचारितञ्च, साम्प्रतं द्वितीयं शक्तिभाष्यं वादरायणब्रह्मसूत्रेषु तृतीयञ्चेशोपनिषदि मुद्राङ्कनमासादितं, चतुर्थञ्च श्रीमद्भगवद्गीतायां मुद्राङ्कनावसरमिदानीमप्यलभमानं रचनासम्पूर्तिमाप्तमि-त्ययतमोत्सवहेतुरिति पण्डितश्रीमत् ताराचरणसाहित्याचार्य्यमहोदयेन सानन्दमुद्-घोषितम् । उक्तञ्च पण्डितवर्य्येण तेन, भाष्यकाराणां शारीरमपाटवं जरया दीर्घरोगेण च यादृगनुभूयते, प्रस्थानत्रयस्य नवीनभाष्यरचनायाश्च दुरूहत्वञ्च यथास्माभिरनु-मीयते तेनैतद्भाष्यसम्पूर्त्तिः कस्य विस्मयाय प्रमोदाय च न भवति । सर्वस्यास्य मूलं च जगज्जनन्याः करुणेति तस्या एव मन्दिरे तदीयस्तुतिगीतिभिरुत्सवोऽयं निर्वर्त्तनीयः । सभाया अध्यक्षपदं पण्डितराज श्रीराजेश्वरशास्त्रि द्राविड़महो-दयेनालङ्कृतम् । पण्डित श्रीमद् देवनायकाचार्य्य श्रीमद् गंगाविष्णुशास्त्रि श्रीमत् सिद्धेश्वर न्यायशास्त्रि श्रीमद् वसन्तकुमार तर्कनिधिप्रमुखैः व्याख्यातृभिः शक्तिभाष्य-मधिकृत्य चेतश्चमत्कारकाणि भाषणानि प्रदत्तानि । पूज्यपादाचार्य्यानुद्दिश्य केचनाभिनन्दनश्लोकाः पठिताश्च । ते यथावसरमग्रिमाङ्के प्रकाशमेष्यन्ति ।

---

# समालोचना।

## वेङ्कटरमणार्यस्य ग्रन्थचतुष्टयम्।

अयं वेङ्कटरमणार्यो महीशूर देशीय-सँस्कृतपाठशालाया उपद्रष्टृपदमलङ्कृतवान्। अयं चेन्नरायपत्तनाभिजनः। अनेन आल्फ्रेड् टेनिसन्, नामकपाश्चात्यविपश्चिद्भिरचितं कपू संज्ञकं दुःखपर्यवसायि व्यङ्कप्रेक्षणकं संस्कृतभाषायां परिवर्त्य पञ्चाङ्कं "कमला विजयनामकं नाटकं" निरमायि। अत्र च रामसदृशो धीरोदात्तो नायको रावणसदृशो घोरोद्धतः प्रतिनायकः सीतासदृशी पतिव्रताशिरोमणिर्नायिका पाश्चात्यदेशे इतिहासप्रसिद्धमितिवृत्तम्—आद्यन्तयोः शृङ्गारः। मध्ये यथायथं सर्वे रसा दर्शिताः कविना, यथाशक्ति भारतीयनाटकसरणिरवलम्बिता, नूतन-रचना रसिकैः सर्वथा प्रेक्षणीयमिदं 'कमलाविजय नाटकम्'।

## स्तुतिकुसुमाञ्जलिः।

अयं ग्रन्थो नानादेवतास्तुतिरूपो भक्तैरवश्यमेव द्रष्टव्यः।

## सर्वसमवृत्तप्रभावः।

अस्मिन् ग्रन्थे—एकाक्षरपादादारभ्य षड्विंशतिवर्णपादपर्यन्तं सर्वेषां वृत्तानामुदाहरणानि बहूपदेशपूर्णानि रचितानि कविना येषु अवस्थाकर्त्तव्यं नवग्रहस्तोत्रं गणदेवादीनां नामरूपादिकं सुष्ठु विदितं भवति। सर्वथा द्रष्टव्योऽयं ग्रन्थः।

## उमादर्शः।

कृष्णस्वाम्यार्यविरचितः—उमास् मिरर् इत्याङ्गलभाषाग्रन्थस्याऽनुवादरूपोऽयं ग्रन्थः सर्गद्वयात्मकत्वेन खण्डकाव्यपदवीं लभते। उपदेशबहुलमिदम्। द्रष्टव्यानां द्रष्टव्यम्।

ग्रन्थचतुष्टयस्यापि प्राप्तिस्थानम्—राजकीय शाखामुद्रणालयः 'मैसूर'।

## भविष्यशङ्करः, मूल्यम् १)

प्राप्तिस्थानं नवजीवनप्रेस चन्दौसी यू० पी०। अस्मिन् पुस्तके संवत् १९९७ विक्रमीयवर्षस्य पाक्षिकं मासिकं दैनिकञ्च ग्रहचारफलम् भवारादियोगफलञ्च सप्रमाणं लिखितं विद्यते। मूल्यमधिकं प्रतिभाति। वार्षिकज्योतिःफलजिज्ञासुभिरवश्यं द्रष्टव्यं पुस्तकम्।

## शाकद्वीपीय ब्राह्मणबन्धुः।

अनेकभाषाभूषितम् सचित्रं मासिकपत्रमिदं सूर्योपासनायाः सर्वविषयैर्विभूषितम् "सूर्यसप्तमीविशिष्टाङ्कम्" सौरतत्त्वबुभुत्सुभिरवश्यमेव द्रष्टव्यम्। वार्षिकं

मूल्यम् २॥) सूर्यसप्तमी विशिष्टाङ्कस्य मू० ।≈) प्राप्तिस्थानम्—शाकद्वीपीय-ब्राह्मण बन्धु कार्यालय ४४ बाबुलनाथ चाल, बम्बई ( ७ )

अनुभूतयोगमालाया यूनानी चिकित्साङ्कः ( तृतीयो भागः ) सम्पादकः प्रकाशकश्च—चिकित्सकचूड़ामणिः पण्डित विश्वेश्वर दयालु वैद्यराजः। वार्षिकं मूल्यम् ४) अस्याङ्कस्य मूल्यम् २) प्राप्तिस्थानम्—अनुभूतयोगमाला आफिस, बराळोकपुर, इटावा, यू० पी०।

इयमनुभूतयोगमाला नाम्नी आयुर्वेदोयमासिकपत्रिका सप्तदशवत्सरैर्नित्यं नवनवाऽन्वेषणपूर्णप्रबन्धप्रकाशनेन, "यथा नाम तथा गुणः" इति सूक्तिमनुसृत्य नानाविधानुभूतयोगानामाविष्कारेण, लुप्तप्रायाणां लुप्यमानानाञ्च बहूनामायुर्वेदीयरत्नानामनुसन्धानेन, प्रतिवर्षं समस्तभारतीयप्रसिद्धायुर्वेदज्ञविदुषां विज्ञानपूर्णनिबन्धैरलङ्कृतानां विविधविशेषाङ्काणां प्रदानेन आयुर्वेदजगतः कियन्तमुपकारं जनयतीति न तिरोहितं तत्पाठकानाम्। तस्या एवायमष्टादशवर्षस्याऽऽरम्भाङ्को यूनानीचिकित्साङ्कस्य तृतीयभागरूपः। इतः पूर्वं वर्षद्वये द्वौ विशेषाङ्कौ प्रकाशितौ। यूनानी चिकित्साया अनेकरोगाणां सद्यो विनाशौपयिका रामबाणसमानाः केचन योगाः कियन्तं चमत्कारं विदधति रोगोपशमने इति सर्वे एव जानन्ति यूनानीचिकित्सारहस्यविदो विद्वांसः। तथाविधानामेव योगानां संग्रहरूपेण प्रकाश्यन्त इमे विशेषाङ्का महान्तं श्रमं व्ययभारञ्च शिरसि निधाय यूनानी ग्रन्थानामनुवादैः। नितरामुपादेयोऽयं विशेषाङ्कः। आयुर्वेदरहस्यजिज्ञासुजना एतादृशबहुमूल्यविशेषाङ्कावलोकनेन सफलयन्तु योगमालापरिश्रममिति।

× × × ×

वीणातरंगः। सम्पादकः—नागपुर संस्कृतकालेजाध्यक्षः श्री दि० वि० वराडपांडे एम० ए०। मूल्यम् १॥)

नागपुर संस्कृतकालेजस्थायाः "कल्परत्न एज्युकेशन सोसायटी" नामक समितेः प्रथमं प्रकाशितमिदं पुस्तकम्। अत्र आंग्लभाषालिखितभूमिकातिरिक्ताः सप्त लेखा महाराष्ट्रभाषायां, त्रयो लेखा आंग्लभाषायां, पञ्च लेखाश्च संस्कृते सन्ति। महाराष्ट्रविभागे आर्यचाणक्य, शिल्पशास्त्र, आगचा ब्राह्मण, वेदाङ्ग ज्योतिष, वाङ्मयान्तीस दृष्टिसृष्टिवाद इत्यादयो लेखा नितरां गवेषणापूर्णाः। आंग्लभाषालेखेषु कुन्दमालानाम्नो नाटकस्यालोचनात्मको विस्तृतनिबन्धो दर्शनार्हः काव्यरसिकानाम्। संस्कृते हरिविनोदकाव्यस्य उपोद्घातः, स्थायिभावानां संख्या, श्रेयसि केन तृप्यते, इत्यादयो लेखा वर्तन्ते। अत्रैव हरिविनोदकाव्यस्य पञ्च सर्गा अपि प्रकाशिताः सन्ति। धन्यवादार्हा समितिः सम्पादकमण्डली च। "विनीतः"

—०—

❀ कर्म्मणा वर्ण्णव्यवस्थायाः प्रत्यालोचना ❀

( डाक्टर—भगवान्दासीय-सिद्धान्तस्य प्रतिवादः )

निबन्धा—श्रीदीनानाथशर्म्मा शास्त्रि-सारस्वतः।

( स० ध० कालेजोपाध्यायः, मुलतान सिटी )

( एकादशाङ्कप्रकाशित-पृष्ठा २४० दग्रे )

यत् खलु डाक्टरमहाशयेनोक्तम्—'जो श्लोकार्ध उक्त सज्जनने उद्धृत किये हैं [ मया मनोः पादो न श्लोक उद्धृतः; न तु अर्धः। अत्र डाक्टरमहोदयस्य कर्म्म असत्यस्य। तृतीयः पादः सर्वमेव डाक्टरमहाशयस्य पक्षमुच्छिनत्ति ] उनके विषयमें क्या लिखूं। सिर नीचा करके चुप रहना ही अच्छा होता। किन्तु जो प्रसंग चला है, वह इतना लिखने को विवश करता है कि—कोई सद्हृदयका सद्ब्राह्मण उनको अपनी जिह्वा पर नहीं लावेगा। जो 'सदसद्वा समाचरन्' होगा, 'सर्वपापेष्ववस्थित' होगा, वही उचित दण्डसे बचनेके लिये ऐसा कहेगा'। अत्रोच्यते—

एतद् उपन्यस्य डाक्टरमहोदयेन स्वकीयाया असर्वतोमुखीनाया दृष्टेः परिचयो दत्तः। किं मया एतौ श्लोकौ पापकरणार्थं विधिरूपेण निर्दिष्टौ ?। मया तु एताभ्यां कर्म्मणा वर्ण्णव्यवस्थाया व्यासस्य मनोश्च अनभिप्रेतत्वं, जन्मना च वर्ण्णव्यवस्थाया अभिप्रेतत्वं च साधितम्। तद् डाक्टरमहोदयेन कथं न दृष्टं दृष्टापि ?। किमर्थं च अस्मन्निर्दिष्टस्य तृतीयपादस्य अपलापः कृतः ?। किं नेयं 'मत पढ़ो निमाज' इति उक्तपूर्वसदृशी घटना ?। किमयं सत्यव्यवहारः ?। अस्तु।

तथापि अत्रापि डाक्टरमहोदयेन अवधेयम्—एकस्य पुरुषस्य चत्वारः पुत्रा भवेयुः तत्र चतुर्भिस्तैरसत्यवचनरूपोऽपराधः कृतः। 'समानेऽप्यपराधे प्रजावत्सलः पिता, यथाधिकारं दण्डतारतम्यं करोति। स स्वकीयं वयोवृद्धं पुत्रं तेन असत्यव्यवहाररूपापराधेन तथा न दण्डयति, यथा कनिष्ठपुत्रम्। कनिष्ठपुत्रस्य कपोले स चपेटाप्रहारं दत्ते; परं ज्येष्ठेन सह तथा न व्यवहरति। किन्तु एतावन्मात्रम् अभिधत्ते, यद्—मम त्वत्त ईदृशी आशा नासीत्। द्वितीयं किञ्चिन्निर्भर्त्स्य एतावन्मात्रमाचष्टे—दुष्ट! पुनरेवं कदापि न कार्यम्। तृतीयस्य कर्ण्णं मर्दयति। तुरीयं चपेटाप्रहारैर्दण्डेन वा ताडयति असत्यव्यवहारकृते। इदं दण्डतारतम्यं यदि कश्चिद् धर्म्मशास्त्रकार आदिशेत्; तर्हि किं डाक्टरमहोदय एतदेव अभिधास्यति

यद्—अनेन ज्येष्ठपुत्राय कनिष्ठपुत्रसदृशं दण्डं न दत्त्वा* ज्येष्ठाय असत्य-व्यवहारविधिरादिष्टः? अथवा असत्यव्यवहारार्थं प्रोत्साहनं दत्तम्? हा हन्त!!!

डाक्टरमहाशयो ब्रूते—'कोई सद्हृदयका सद्ब्राह्मण उनको अपनी जिह्वापर नहीं लावेगा।' जो 'सर्वपापेष्ववस्थित' होगा, वही उचित दण्डसे बचनेके लिये ऐसा कहेगा। परं तेन इदं न चिन्तितं यद्-इदं पद्यं न मया अभिहितम्, नवा केनचिद् अन्य-ब्राह्मणेन। किन्तु प्रजावत्सलेन, वेदमूलकेन, यथाधिकार-दण्डविधि-निर्मात्रा, प्रजापतिना मनुनैव उदीरितम्, भृगुणा च तद् अनूदितम्। पूर्वदृष्टान्तवद् अत्रापि न किमप्यनौचित्यम्। ब्राह्मणस्य ज्येष्ठपुत्रत्वात् तस्मै कनिष्ठपुत्रवद् हिंसा-त्मकदण्डं न प्रदाय राष्ट्रबहिष्काररूपो दण्ड एव व्याख्यातो मनुना। तर्हि कथमत्र प्रक्षिप्तताऽवकाशः? कथं वा तत्कृते पापाज्ञाविधानरूपता?। अस्माभिस्तु अयं श्लोको मनोरेतद्हृदयप्रकटनाय उपन्यस्तो यद्—डाक्टरमहोदयत आदरणीयस्य मनो: कर्म्मणा वर्णव्यवस्था नाभिप्रेता, किन्तु जन्मत एवेति। परन्तु डाक्टर महोदयेन एतदुत्तरं कथं न वितीर्णम्?। डाक्टरमहोदयोऽत्र कामनुपपत्तिं पश्यति येन शिरोनमनं मौनं वाऽत्र सङ्केतयति?

प्रत्युत 'कोई सद्हृदयका सद्ब्राह्मण उनको अपनी जिह्वापर नहीं लावेगा' इति वाक्यं तस्यैव समाचारपत्रस्य पञ्चमपृष्ठे द्वितीयस्तम्भे लिखित्वा स्वयमेव स्वसिद्धान्तं 'कर्म्मणा वर्णव्यवस्थां' खण्डितवान् श्रीमान्। इदमित्थमवसेयम्—'सद्ब्राह्मण' इति शब्देन भवता—'असद्ब्राह्मणो'ऽपि मतः। अन्यथा 'ब्राह्मणेन' सह 'सत्' शब्दविशेषणदानस्य आवश्यकता नाऽऽसीत्। अत एव तस्यैव समाचार-पत्रस्य षष्ठे पृष्ठे प्रथमस्तम्भे स्वयमेव श्रीमता महता कण्ठेन—'असद्ब्राह्मण...की घोर निन्दा की है' इति वाक्ये 'असद्ब्राह्मण' शब्दः स्पष्टमुक्तः। एतेन कर्म्मणा वर्णव्यवस्था समूलं निरस्यते।

एतद् इत्थमवसेयं यद्—'आज' प्रकाशिते लेखे लेखकस्य नाम लिखितम्—'श्रद्धेय भगवान्दास'। अयं 'भगवान्दास' महोदयो 'मनुष्यः'। परम् उक्तनाम्ना सह तेन वा सम्पादकेन वा 'मनुष्य' इति विशेषणं कुतो न दत्तम्?। तत्र एतदेव उत्तरं यद्—अस्य लेखस्य लेखको डा० भगवान्दासः 'अमनुष्यो' न सम्भवी कदाचित्; तदा कथं व्यर्थं 'मनुष्य' इति तद्विशेषणमर्प्येत?। 'श्रद्धेय' इति विशेषणं तु एतदर्थं दत्तं सम्पादकेन, यद्—अन्यवैश्यगणाऽपेक्षया अयं सद्गुण-

* अत्र तकारद्वयम्।

कर्म्मवान्, अथवा अधिकसंस्कृतविद्वान् । सर्वे तु वैश्या नैतादृशाः, अत एव वैश्यान्तराणां नाम्ना सह 'श्रद्धेय' विशेषणं न प्रदाय अदसीयनाम्नैव सह 'श्रद्धेय' इति विशेषणं दत्तम् । एतदेव अभिलक्ष्य अयं न्याय ~ प्रसिद्धः—'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' । अर्थाद्—विशेषणं तदा अर्थवद् भवति, यदा विशेष्ये सम्भवेदपि; तादृशे अन्यस्मिन् विशेषो व्यभिचरेदपि ( न सम्भवेदपि ) । परं 'मनुष्य' विशेषणं सर्वेषु विशेष्यभूतेषु लेखकेषु सम्भवदपि कचिद् व्यभिचारं न प्राप्नोति, अत एव 'अव्यभिचारे विशेषणं न भवति' इति * आशय्य 'मनुष्य' इति विशेषणं न दीयते ।

अधुना प्रकृतमनुस्त्रियताम्—कर्म्मणा वर्णव्यवस्थाग्रहिलो डाक्टरमहाशयः सत्कर्म्मभिरेव ब्राह्मणत्वं वष्टि, न खलु असद्गुणकर्म्मभिरिति प्रतीयते । एवं यदि ब्राह्मणत्वस्य सद्गुणकर्म्मभिः सर्वथा अव्यभिचारः; तर्हि 'ब्राह्मण' शब्देन सह 'मनुष्य' विशेषणस्य वैयर्थ्यवत् 'सत्' इति विशेषणस्यापि अव्यभिचारवशाद् वैयर्थ्यमापतति । अतो 'ब्राह्मण' शब्देन सह 'सद्' इति विशेषणमपि वैयर्थ्याद् अप्रयोज्यमेव भवेत् कर्म्मणा वर्णव्यवस्थावादिनां मतेन । परं डाक्टरमहाशयः 'सद्ब्राह्मण' इति 'ब्राह्मण' स्य 'सद्' विशेषणं प्रदाय द्वौ ब्राह्मणौ अभिप्रैति यत्—सद्-ब्राह्मणस्तु सर्व्वपापेष्ववस्थितो न बुभूषिष्यति; परम् असद्-ब्राह्मणस्तु सर्वपापेष्वपि अवस्थितो बुभूषिष्यति । एवं चेद् यदा सर्वपापावस्थानेच्छुकस्य ब्राह्मणस्यापि डाक्टर महाशयेन 'असद्ब्राह्मण' शब्देन ब्राह्मणता मता; तर्हि कर्म्मणा वर्णव्यवस्थामननात्मकस्तदीयसिद्धान्तः सर्व्वथा खण्डितोऽभूत् ।

भेद ~ केवलमयमेव अजनि यद्—डाक्टरमहाशयोऽसद्ब्राह्मणमपि शूद्रवद् दिदण्डयिषति ; परं ब्राह्मणस्य ज्येष्ठपुत्रतावादी मनुस्तु शूद्राद्यपेक्षया तस्मै न्यूनतमं दण्डं दित्सति । भवाँस्तु कदाचिद् एतदर्थं तस्मै समानदण्डं दिदापयिषन् स्याद् यद्—भवान् स्वयं ब्राह्मणजातीयो न भवेद्, अथवा ब्राह्मणवत्सलो न स्याद्, अथवा ब्राह्मणस्य ज्येष्ठताभिमन्ता न वर्तेत †, अथवा यथाधिकारं दण्डतारतम्यमन्ता न विद्येत; परं मनुस्तु ब्रह्मपुत्रत्वाद् ब्राह्मणवत्सलः, ब्राह्मणस्यैव च ज्येष्ठताभिमन्ता, यथाधिकारं दण्डतारतम्यमन्ता चासीत्; अतएव तेन दण्डतारतम्यमपि लेख्यमेवासीत् ।

अधुना डाक्टरमहोदयेनैव वाच्यं यत्—तल्लेखे यः 'असद्ब्राह्मण' इति शब्दो

---

* आशय्य । अत्र 'अयङ् यि क्ङिति' इति 'शी' ईकारस्य अयङ् ।

† अत्र तकारो न हलन्तः ।

लिखितः; स प्रक्षिप्तो वा, तल्लिखितो वा ? । यदि प्रक्षिप्तः, तर्हि किं प्रमाणम्, यत्तस्त-दुल्लेखे प्रकरणविरोधोऽसङ्गतिर्वा न दृश्यते । यदि डाक्टरमहोदयलिखित एव 'असद्ब्राह्मण' इति शब्दः, न खलु प्रक्षिप्तः; तर्हि एतेन कर्म्मणा वर्णव्यवस्थानिर्देश-कृतत्सिद्धान्तखण्डनं जातम्, असतस्तदीयमते कदापि ब्राह्मणत्वाऽभावात् । एवं च भवल्लिखितमिदम् 'असद्ब्राह्मण' इति पदं भवन्मतविरुद्धमपि यदि न प्रक्षिप्तम्; तर्हि पापयुक्तस्यापि ब्राह्मणत्वकथनपरं तत् तथामन्त्र-व्यासमनुवचनमेव कथं प्रक्षिप्तं भवेत् ? । विश्वासोऽपि तु कर्त्तव्यो भवति, अन्यथा मनुस्मृतेः भवल्लिखिता एव श्लोका अपि कदाचिन्मनोर्न स्युः, किन्तु केनचिद् ब्राह्मणद्वेषिणा हत्र प्रक्षिप्ताः स्युः; भवत्पार्श्वे तेषाम् अप्रक्षिप्तत्वे किं प्रमाणं स्यात् ? । तेन प्रक्षिप्तताऽपदेशं दूरीकृत्य भवता एतच्छ्लोकाद् अस्माभिः साधिता जन्मना वर्णव्यवस्थैव निरस्यताम् । एवं न कृत्वा यदि भवता प्रक्षिप्तताऽपदेशेन अयं स्वसिद्धान्तसरणिकण्टकभूतश्लोको दूरी-क्रियेत; तर्हि भवत्सिद्धान्तसरणेः कण्टकाकीर्णता न निह्नुता स्यात्, तत्पक्षस्य स्वयमेव शैथिल्यं सिध्येत् ।

एवं कर्म्मणा वर्णव्यवस्थासिद्धान्ते सति 'असद्ब्राह्मण' शब्दस्यापि अत्यन्ता-भावः स्यात् 'सद्ब्राह्मण' शब्दस्यापि । 'असद्'विशेषणस्य अत्यन्ताभावोऽसम्भ-विताकारणात् स्यात् कर्म्मणा वर्णव्यवस्थासिद्धान्ते । 'सद्'विशेषणस्य तु अत्यन्ता-भावः स्याद् वैयर्थ्यकारणात् कर्मणा वर्णव्यवस्थासिद्धान्ते । एवं कर्म्मणा वर्णव्य-वस्थासिद्धान्ते 'असच्छूद्र-सच्छूद्र'शब्दयोरपि अत्यन्ताभावः स्यात् । 'सच्छूद्र'-शब्दस्य अत्यन्ताभावः सर्वथा व्यभिचारकारणाद् भवेत् कर्मणा वर्णव्यवस्थावादिनां नयेन । 'असच्छूद्र' शब्दस्य तु अत्यन्ताऽभावोऽव्यभिचारमूलकवैयर्थ्यापातात् स्यात् कर्मणा वर्णवादिनां मतेन । परं यदा खलु 'असद्ब्राह्मण-सद्ब्राह्मण' शब्दयोः 'असच्छूद्र-सच्छूद्र' शब्दयोः स्पष्टा सत्ता भवल्लेखे तथा शास्त्रेषु च वर्त्तते; तर्हि अनयोश्शब्दयोस्सत्तया कर्म्मणा वर्णव्यवस्थासिद्धान्तस्यैव अत्यन्ताभावः सिद्धः । केवलं सुकर्म्मणा तत्तद्वर्णानां प्रतिष्ठा, कुकर्म्मणा च तत्तद्वर्णानाम् अप्रतिष्ठैव सिद्धा, न खलु वर्णानां परिवर्त्तनम् ।

यदि सुकर्म्मणा कुकर्म्मणा च वर्णव्यवस्था भवेत्; तर्हि तु क्षत्रियवैश्ययोरा-वश्यकतैव न तिष्ठति । तदा केवलं ब्राह्मणाः केवलं शूद्रा एव च भवितुं शक्याः । एष्वेव ब्राह्मणशूद्रेषु ये युद्धादिकार्यं सम्भालयेयुः; ते क्षत्त्रिया अपि स्युः । ये च धनादिकार्यं सम्भालयेयुः; ते एष्वेव वैश्या अपि स्युः । तदा क्षत्त्रियवैश्याभ्यां सह कुकर्मसुकर्म्मणोः सम्बन्ध एव अनुपपन्नः स्यात् । परं वर्णचतुष्कमेव वर्त्तते;

तेन जन्मनैव एषां भेदः सिध्यति, न कर्म्मणा। कर्म्मणा तु प्रतिष्ठातारतम्यम् भवति, न तु वर्णपरीवर्तः *। किं डाक्टरमहोदयोऽत्र अवधास्यति ?।

एतेन 'सज्जन विद्वान् विचार करें कि—ऐसे श्लोकों पर आग्रह करने से अहङ्कार—तिरस्कार और परस्पर वैमनस्य बढ़ता है, अथवा सौमनस्य और शान्ति, तुष्टि, पुष्टि, प्रीति' इति आचक्षाणो डाक्टरमहाशय ्प्रत्युक्तः। 'मैं तो ऐसे श्लोकोंको प्रक्षिप्त ही मानता हूँ' अत्रोच्यते—डाक्टरमहाशयः स्वगृहे स्वतन्त्र एव यद्—एतान् श्लोकान् स्वसिद्धान्तखण्डनभिया प्रक्षिप्तान् मन्वीत, यतः—'करः खलु निवार्यते प्रहरतो न वक्तुर्मुखम्'। यदि डाक्टरमहोदय एव कथयेत्—वेदा अपि ब्राह्मणगणप्रणीता इति; तर्हि तं क ्खलु निरोद्धुं क्षमः ?। परमेतेन एकव्यक्ति-कथनमात्रेण कथमेतदादि श्लोकानां प्रक्षिप्तता भवेत् ?।

क्योंकि—'इनके विरोधी श्लोक विस्पष्ट और न्यायोचित मनुमहाभारतमें मिलते हैं'। अत्र ब्रूमो यदेतद्—वाङ्मात्रेणोक्तं 'डाक्टर' महाशयेन। अस्माभिर्महाभारत-कारस्य मनोश्च हृदयम् उत्तरपक्षश्च † प्रदर्शितमेव। तेन जन्मना वर्णव्यवस्था प्रतिपादकानि वचनानि तु एतयोः सिद्धान्तपक्ष एव। कर्मणा वर्णव्यस्था तु तत्र दर्शितैव न। यत्र कापि तद्गन्धोऽपि; तत्र कर्म्मप्रशंसाऽर्थवादे मते स्वयमेव व्यवस्था अविरोधश्च स्यात्। परं डाक्टरप्रभृतयो जना एकाक्ष्णैव पश्यन्ति न किल सर्वतो-मुखीनदृष्ट्या—इति बत !। अत एव तेषां दृष्टिकोणे स्वसिद्धान्तत्राणाय प्रक्षिप्ततोद्-घोषणमन्तरेण कार्यनिर्वाहो न भवति। विरोधश्चापि तैर्लक्ष्यते। यदि कश्चिज्जन्म-ब्राह्मण एतदादिकानि पद्यानि प्रक्षिप्तानि आचक्षीत; तर्हि स क्षम्यो भवेत्, तत्कथ-नस्य ईषद् गौरवमपि स्यात्। परं यदि कश्चित् क्षत्रियवैश्यादिस्तथा आचक्षीत; तर्हि जनाः स्वयमवबुध्यन्ते यदयं किञ्चिद्विद्यामुपसद्य स्वयं ब्राह्मणसदृशं मानं ब्राह्मणत्वं वा इच्छति। अत एव स्वार्थप्रवणत्वान्न तस्य प्रक्षिप्ततोद्घोषणस्य किमपि भवति मूल्यम्।

परमेतद् अवश्यध्येयं यत्—क्षत्रियवैश्ययोरपि कृते ब्राह्मणपरिमाणिका विद्या अपेक्षिता भवति तावद् यजनं तावदेव च दानं धर्मशास्त्रानुसारम्। एवं सत्यपि स न ब्राह्मणो निर्मीयते केनापि धर्मशास्त्रकारेण, न च ब्राह्मणसदृशं मानमेव स लब्धुमर्हति धर्मशास्त्रानुसारम्। तदैव तु तत्र समर्थयोरपि क्षत्रियवैश्ययो ् कृते प्रतिग्रहो याजनमध्यापनं च निषिद्धान्येव। अत एव डाक्टरमहाशयस्यापि मान्येन

* परीवर्तः 'उपसर्गस्य घञि' इति दीर्घः।

† अत्र नपुंसकैक शेषः।

मनुना उक्तम्—'त्रयो धर्मा निवर्तन्ते ब्राह्मणात् क्षत्त्रियं प्रति । अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः ।' १०।७७। वैश्यं प्रति तथैवेते निवर्तेरन्निति स्थितिः। न तौ प्रति हि तान् धर्मान् मनुराह प्रजापतिः' १०।७८। अस्मादपि अधिका का स्पष्टता भवेद् मनोर्यत्र स्पष्टं जन्मनव वर्णव्यवस्था पिशुनिता। किं सर्व्वत्रैव प्रक्षिप्ततां मंस्यते डाक्टरमहाशयः ? तेन अवधानीयमेतद् यत्—'प्राप्तौ सत्यां हि निषेधो भवति'। प्राप्तिश्च क्षत्त्रियवैश्ययोरध्यापनयाजनादिकर्म्मसामर्थ्यात् । एवं सामर्थ्येऽपि तयोर्ब्राह्मणत्वमनाख्याय तयोः क्षत्त्रियत्ववैश्यत्वमेव आचक्षाणस्य, ब्राह्मणकर्म्म सर्व्वथा तयोः कृते निषेधितवत एव मनोः स्पष्टमेव जन्मना वर्णव्यवस्था अभिमता।

एवं तेनैव मनुना ब्राह्मणक्षत्त्रियवैश्या जन्मतो द्विजत्वेऽधिकृता मताः, जन्मनैव च ब्राह्मणस्य अष्टवर्षतः; क्षत्त्रियस्य च एकादशवर्षतः, वैश्यस्य च द्वादशवर्षाद् आचार्यकरणमाख्याय तेषां विद्याकालेऽपि न्यूनाधिकता कृता। शूद्रश्च जन्मनैव द्विजत्वे अनधिकृतो मतः, स एकज एव कृतः। आचार्यताकरणाद् दूरीकृत्य स विद्यातोऽपि वञ्चितीकृतः। किमस्मादपि अधिकं प्रमाणमिष्यते मनोर्जन्मना वर्णव्यवस्थापक्षपातित्वे ? एवं चेत्; तर्हि तदीय एव जन्मना वर्णव्यवस्थापकः श्लोकः कथं प्रक्षिप्तत्वेन जोघुष्यते। एतेन स्पष्टं यद्—भवत्कृतको मनोरादरो वाग्विलासमात्रम्, आदरो भवतां स्वमतस्य। स्वमतविरुद्धो मनुश्लोको भवतां मते प्रक्षिप्तो भवति। प्रक्षिप्तताव्याजं च विना स्वमतनिर्वाहः कथं कर्तुं शक्येत भवद्भिः ?। प्रक्षिप्तताऽपदेश एव भवत्पक्षशैथिल्यस्य प्रमाणम्।

अग्रे डाक्टरमहाशयोऽपदिशति—'भागवतमें पृथुके आख्यानमें 'वात्सल्यं मनुवन्नृणाम्, ऐसी उपमा कही है, न केवल एक जाति वा एक वर्णके किन्तु सर्वमानवमात्रके आदि प्रजापति, ऐसे क्रूरवाक्य, पापाचारके प्रोत्साहक कैसे लिख सकते हैं' अस्य उत्तरं निर्दिष्टचरमेवाऽस्माभिरेकपितुः पुत्रचतुष्टयदृष्टान्तेन। तत् प्रागेव द्रष्टव्यम्। अत्र पापस्य प्रोत्साहना नास्ति, किन्तु अग्रजन्मनोऽवरवर्णान्तरापेक्षया दण्डलाघवमात्रं नाऽन्यत्। तदपि तेषां ( ब्राह्मणानां ) प्राक्तनजन्मशुकर्म्माण्यभिलक्ष्य; यद्वशात् तेषामिह जन्मनि ब्राह्मणवंशे जन्म जातम्। स्मृतिषु चाण्डालादीनामपि वर्ण्णनम्, उत्पत्तिप्रकारश्चापि निर्दिष्टः। तर्हि किं तद् दृष्ट्वा डाक्टरमहोदय एतदेव * अपदेक्ष्यति यदत्र मनुना शूद्रजातीया ब्राह्मणीग्रहणार्थं प्रोत्साहिता इति ? हन्त !

अग्रे स एव वक्ति—'यदि ऐसे श्लोक प्रामाणिक और उचित माने जायँ तब तो

* अपदेशं-व्याजं करिष्यतीत्यर्थः।

महालाट साहबको प्रवर्त्तमान भारतीयदण्डविधानमें······यह लिखवा देना अत्युचित होता कि—'अंग्रेजो नावमन्तव्यः सदसद् वा समाचरन्। न जातु हन्यादंग्रेजं सर्वपापेष्वपि स्थितम्॥ सीहानं स्फोटयेद् वापि यकृद् वा भेदयेत् यदा। द्विजैकजानाम्, अंग्रेजो नैव दोषेण लिप्यते॥ प्रत्यक्षं श्वेतवर्णोऽयं सर्ववर्णोत्तमोत्तमः। सर्वेषामेव वर्णानां अंग्रेजो न्यायतः प्रभुः॥ 'महती देवता ह्येषा नररूपेण तिष्ठति। पृथिव्यां, इन्द्रवच्चापि प्रसर्पति नभस्तले"।

यद्यपि एतल्लेखस्य प्रकृतविषयेण सह न सम्बन्धः; तथापि डाक्टरमहाशय॰ पृच्छ्यते यद्—एतदादिकं तत्र निभाल्यते नो वा ?। यमेव अपराधं कृष्णो जन॰ कुर्यात्; तमेव अपराधं श्वेतोऽपि कुर्यात्; तर्हि तस्मिन्नपराधे कृष्णस्य यदि शूलारोपणं (फांसी) क्रियते तर्हि श्वेतस्य तत्रैव देशनिर्वासन-(कालापानी) मात्रं भवति। तत्र किं कारणम् ?। एतदेव यद्—अंग्रेजी राज्ये श्वेतोऽग्रजन्मा। अत एव स हिंस्यते न, किन्तु राष्ट्राद् बहिष्क्रियते। सुधारका एव गान्धिमहाशयं दयानन्दस्वामिनं वा शतशो दोषयुक्तत्वेऽपि तथा वाग्बाणैर्हिंसन्ति किम्, यथा किल जन्मब्राह्मणम् ?। त एव भङ्गातमाखूपानेन दयानन्दं तथा न गर्हन्ते यथा भङ्गातमाखुपायकं कञ्चित् सनातनधर्म्माणम्। अयं प्रसङ्गः सर्वत्रैव सम्भवी। अस्तु। यदि प्राच्या धर्मशास्त्रकारा 'मनस्येकं वचस्येकं 'कर्मण्येकम्' इति अवलम्ब्य यदेव आचरेयुः—तदेव लिखेयुः, परम् आङ्गलिकसभ्या 'मनस्यन्यद् वचस्यन्यत् कर्मण्यन्यत्' इति अवलम्ब्य यद् न लिखेयुः; तदपि आचरेयुः; तर्हि किमेतेन 'न जातु ब्राह्मणं हन्याद्...राष्ट्रादेनं बहिष्कुर्यात्' इति वक्तुर्धर्म्मशास्त्रस्य अपराधिता स्यात्? अथवा किं हिन्दुराज्याऽङ्गलिकराज्ययोर्नियमानां समानशैल्या समुल्लेखनस्य व्याप्तिर्भवितुमर्हति ?।

'महती देवता ह्येषा नररूपेण तिष्ठति' इति उपहास्यं श्लोकं निर्माय डाक्टरमहोदयो मनुं प्रहरति। एषोऽस्ति मनोरादरादर्शः। यतोऽयमंशोऽस्ति मनुस्मृतेः सप्तमाऽध्यायीयाऽष्टमश्लोकस्य। अधुना डाक्टरमहोदयो वदतु यद्—नृपकृते मनूल्लिखितोऽयं श्लोक॰ किं प्रक्षिप्तो यत्—तत्र भवता उपहास्यो मतः ?। यदि प्रक्षिप्त इति चेत्—तर्हि 'नराणां च नराधिपम्' १०।२७ इति भगवद्गीतावचनं 'राज्ञो विश्वजनीनस्य यो देवो मर्त्यान् अति' अथर्व०—२०।१२७।७ इति तन्मूलं वेदवचनमपि प्रक्षिप्तं मंस्यते श्रीमान् ?। एवं चेद् धन्यः। श्रीमन्! यद् भवतोऽसम्मतं तत् किं वेदानुकूलमपि प्रक्षिप्तम् ?। एवं चेत् तर्हि वयमेव परास्ताः, अन्यथा भवान्। 'न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम्' अयं मनुश्लोकोऽपि—'न ब्राह्मणो हिंसितव्यः' अथर्व० ५।१८।६ इति वेदमन्त्रानुकूलः। 'सर्वपापेष्वपि

स्थितम्' इत्यस्य कथं समन्वयोऽत्र-इति चेत् तर्हि डाक्टरमहोदस्तस्मिन्नेव दृष्टचरे 'सूर्योदय'स्य अङ्के मन्निबन्धे मनोयोगपूर्वकं पश्येद्, उत्तरं लप्स्यते । एवं ब्राह्मणो-नाऽवमन्तव्यः सदसद् वा समाचरन्, इति महाभारतश्लोकः—'तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यात्, नाऽश्लीलं कीर्तयेत' तै० आ० २।१५ इति कृष्ण-यजुर्वेदकण्डिकानुकूलः, तत्र 'नाऽश्लीलं कीर्तयेत्' इत्यंशस्य विवरणम्—'न तु तस्मिन् विद्यमानमपि दोषं कीर्तयेत्' इति ऋग्वेदभाष्योपोद्घाते सायणः । तद् वेदानुकूल्यात् तत्रोभयत्र कथं प्रक्षिप्तताऽवकाशः ? । किं विद्वान् डाक्टरमहाभागोऽत्र अवधास्यति ? ।

'सो याद रखनेकी बात है—शास्त्रकी दुहाई तिहाई देनेसे यह लाभ नहीं हुआ, प्रत्युत''इत्यादि शास्त्र अथवा शास्त्राभास अथवा प्रक्षिप्तके विपरीत नवाविष्कृत उपज्ञात प्रकारोंसे' । इदमपि डाक्टरमहाशयकथनं वाग्विलासमात्रम् । वस्तुतो यदा शास्त्राणां पूर्णाचरणमासीत्; तदैव सर्वविधा शान्तिरासीत् । यदा च भवदादिभिः 'प्रक्षिप्तमेतद्' 'गप्पमेतद्' एतदादिनवाविष्कारान् प्रवर्त्य जनतायाः शास्त्रतः श्रद्धा-ऽपसारिता; जनता च स्वच्छायातले आकृष्टा; इतश्च शास्त्रेष्वविश्वासप्रवर्त्तिकायाम् आङ्गलभाषाशिक्षादीक्षायां रतिर्जाता मनुतनुजनुषाम्, तदात एव अशान्तिरपि प्रवृद्धाऽस्ति, यत्र तत्र हानयोऽपि घटन्ते, स्वराज्यमपि नष्टम् । अवशिष्टमपि स्वराज्यं भवादृशा एव शास्त्रवचनानि * अन्यथयित्वा, अन्तर्वर्णविवाहसदृशधर्मशास्त्र-निन्दित-कुकर्म्माणि, कन्यादिविवाहावस्थां, देवमन्दिराणां प्रवेशाधिकारादिकं, विवाहोच्छेदप्रभृति कुकर्म्माणि च राजकीयशासनायत्तीकृत्य, शास्त्राण्यपि अति-क्रामन्ति, स्वकीयानेव भ्रातॄन् दण्डयन्त्यपि । इतश्च वैदेशिकदृष्टिकोणेन स्वकीय-शास्त्राणि दृष्ट्वा, तत्र आपाततो विरोधं दर्शयित्वा, शास्त्राणां प्रभावमपि दवयन्तः† सन्ति, येन उच्छृङ्खलता प्रवर्तते । हा ! समयस्य महिमा । (क्रमशः)

—०—

## ब्रह्मसूत्रस्य शक्तिभाष्यम् ।



* अन्यथयित्वा-अन्यथा कृत्वा । नामधातोः क्त्वाप्रत्यये रूपम् । † दवयन्तः-दूरीकुर्वन्तः ।

# श्रीवेदपुरुषाय नमः।

## आश्वमेधिकमन्त्राः।

ले० श्रीहेमचन्द्रझा पं० श्रीशिवशङ्करझा शास्त्रिणोऽन्तेवासी।
( मतिहानीस्थ ने० रा० सं० म० विद्यालयीयः मधवापुर, दरभंगा )

वैदिकोऽयमश्वमेधयज्ञः सर्वकामैः सार्वभौमै राजभिरेव कर्त्तुं शक्यः। अस्य प्रारम्भः फाल्गुनशुक्लाष्टमीतो भवति, वर्षं निर्बाधमयं यज्ञः प्रचलति। फाल्गुनपौर्णमासीसमीपेऽस्य समाप्तिर्दृश्यते। कलियुगेऽस्याचरणं स्मृतौ निषिद्धमस्ति। तत्र बाह्यकारणं केवलं चक्रवर्त्तिनो भूपतेरभाव एवेति मन्ये। तत्र प्रथममध्वर्युर्यजमानस्य कण्ठे सुवर्णनिष्कं बध्नाति। ततो मन्त्रैरश्वमामन्त्र्य बहुभिः खड्ग-कवच-चापधारिभी रक्षकै राजपुत्रैः सह सोऽश्वः मुक्तो भवति। अश्वोऽयं यथेच्छं सर्वत्र भ्रमति। यदि कश्चिदश्वमवरुणद्धि तदा तेन संग्रामो भवति। अश्वाऽवरोधकान् विजित्याश्वं मोचयति ततोऽश्वः सर्वत्र परिभ्रम्य यज्ञस्थानमागच्छति, तदा ऋत्विजो मिलित्वा समन्त्रं तमश्वमन्यांश्चाऽश्वान् रथे युञ्जन्ति। अध्वर्युयजमानौरथमधिरुह्य जलाशयं परिक्रम्य यज्ञमण्डपमागच्छतः। तत्र च रथादश्वान् मोचयतः। अथ तिस्रो राजपत्न्योऽश्वशरीरमभिमन्त्रयन्ति, ततोऽश्वं संज्ञपयन्ति। तत्राश्वसंज्ञपनोत्तरकालं होता वक्ष्यमाणमन्त्रेणाश्वस्य स्वर्गप्राप्त्या मरणं निषिध्यते। यथा—"नवाऽउऽएतन्म्रियसे नरिष्यसि देवाँ२ऽइदेषि पथिभिः सुगेभिः। यत्रासते सुकृतो यत्र ते ययुस्तत्रत्वा देवः सविता दधातु। [ शु० य० वे० २३ अ० १६ मं० ] ततः प्राणाय स्वाहेत्यादि मन्त्रेणाऽश्वं दिव्यप्राणोपेतं करोति। अत्र कर्म्मकाण्डविवरणे चतुर्दशमन्त्रा गूढाशयाः सन्ति। अधुनैषां मन्त्राणां यानि भाष्याणि मिलन्ति तानि अल्पज्ञा निन्दन्ति, किञ्च विचारचक्षुषाऽवलोकनेन ज्ञायते यद्भाष्यकाराणां नास्ति कश्चन दोषः यतः—( "परोक्षकामा हि देवाः" [ श० ७।४।१।१० ] अत एव ते भाष्यकाराः परोक्षव्याख्यामेव कृतवन्तः। अतोऽत्र भाष्यकृतां दोषलेशोऽपि न दृश्यः। अत्र शातपथीः श्रुतीरुदाहृत्य केषाञ्चन मन्त्राणां गूढाशयः प्रदर्श्यते। श्रुतयः— "देवा वा ऊर्ध्वाः स्वर्गं लोकं न प्रजानँस्तमश्वः प्रजानाद्यदश्वेनोदञ्चो यन्ति स्वर्गस्य लोकस्य प्रज्ञात्यै वासोऽधिवासं हिरण्यमित्यश्वायोपस्तृणन्ति, यथा नाऽन्यस्मै पशवे तस्मिन्नेवमधिसंज्ञपयन्त्यन्यैरेवैनं तत्पशुभिर्व्यावर्त्तयन्ति घ्नन्ति वा एतत्पशुम्। यदेनं संज्ञपयन्ति प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहेति संज्ञ-

प्यमान आहुतीर्जुहोति प्राणानेवास्मिन्नेतद् दधाति ततो ह्यस्यैतेन जीवतैव पशुनेष्टं भवति, अम्बे अम्बिकेऽम्बालिके न मानयति कश्चनेति पत्नीरुदानयत्यह्वमतैवैना एतदथो मेध्या एवैताः करोति" [ श० १३।२।७।३। ] अत्र पश्वत्वमागतं साधारणमश्वं जनः कथं प्रार्थयेत्, अथच स कामानभिपूरयितुञ्च कथं क्षमः। अतः सामान्याश्वप्रार्थनायां शङ्काऽपि नैव कार्या। अत्र खलु अश्वशब्दप्रतिपाद्यः प्रजापतिरश्वशरीर आहूयते, ततः प्रजापतिं प्रार्थयन्ति। अथाश्वशोधनायोपस्थिताभिः पान्नेजनीहस्ताभिस्तिसृभी राजपत्नीभिः परस्परं कथोपकथनं कारयत्यध्वर्युः। पत्न्यः परस्परं वदन्ति—"अम्बेऽम्बिकेऽम्बालिके न मानयति कश्चन॥ ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्। अस्यार्थः—हे अम्बे! हे अम्बिके! हे अम्बालिके! कश्चन नरो मां न नयति, अश्वं प्रति न प्रापयति, तर्हि किमर्थं गम्यते तत्राहः—अश्वकः कुत्सितोऽश्वोऽश्वकः, अकुत्सितोऽपीर्ष्यया कुत्स्यते यथाः—हा दैव इति, सुभद्रिकां कुत्सिता सुभद्रा सुभद्रिका ईर्ष्यया कुत्स्यते तां काम्पीलवासिनीं ब्रह्मलोकवासिनीं तां नारीं मायामादाय ससस्ति शेते ( सस् स्वप्ने )। अस्य मंत्रस्य गूढाशयः—अश्वः प्रजापतिः अश्नुते जगदित्यश्वः "प्राजापत्यो वा अश्वः स्वयैवैनं देवतया समर्धयति" [ श० १३।३।३।४॥] किमर्थं गच्छसि चेत् कुत्सितोऽश्वः सुभद्रिकां मायां तां नारीमादाय ससस्ति शेते ( नरतीति नरः प्रोक्तः परमात्मा सनातनः ) अश्वरूपः प्रजापतिः मायामादाय शयिष्यतेऽतोऽहं गच्छामि मां कोऽपि न नयति, अर्थात् तत्सम्पत्तिकर्म्मफलं न प्रापयतीत्यर्थः। एषु चतुर्दशमन्त्रेषु कर्म्म, प्रतिनिधिः प्रजापालनम्, राज्यस्योत्तमता, एवमकुलीनक्षत्रियराजेन प्रजानामनिष्टाचरणादीनां विवरणमस्ति तेषां दिग्दर्शनमेवाऽत्र क्रियते। विशेषदर्शनेच्छायां मिश्रभाष्यमवलोकनीयम्। "विड्वैगभो राष्ट्रं पसोराष्ट्रमेव विश्या हन्ति तस्माद्राष्ट्री विशां घातुकः" "चतस्रो जाया उपक्लृप्ता भवन्ति महिषी, वावाता, परिवृक्ता, पालागली, सर्वानिष्किण्योलंकृता मिथुनस्यैव सर्वत्वाय ताभिः सहाग्न्यगारं प्रपद्यते पूर्वया द्वारा यजमानः दक्षिणया पत्न्यः" [ श० १३।४।१।८। ] अत्र मिथुनस्यैवेति आक्रोशमात्रवचनसिद्धये पत्नीनां तत्रागमनं भवति। तत्राश्वसमीपे महिष्यः स्थित्वा मीमांसया यज्ञफलं प्रकटयन्ति, अश्लीलवचनैरेव कथमिति चेत् संस्कारार्थमीदृग्भाषणस्य प्रयोजनं भवति। यथाः—"सर्वाऽप्तिर्वा एषा वाचः यदभिमेथिकाः सर्वे कामा अश्वमेधे सर्वया वाचा सर्वान् कामानाप्रवामेत्युत्थापयन्ति महिषीम्" [ श० १३।५।२।९। ] अथच "ये यज्ञेऽपूतां वाचं वदन्ति वाचमेवैतत्पुनते देवयज्यायै देवतानामनुपक्रमाय इति" श० १३।५।२।१०। यज्ञे या अपूता वाच उदाहरन्ति ता

वाचा एव पूता भवन्ति। यज्ञादन्यत्र यदि कश्चिदपशब्दमुच्चारयति तदाऽऽयुर्ह्रसति। यतः "अप वा एतेभ्य आयुर्देवताः क्रामन्ति" श०। अपशब्दभाषणेन देवता आयुर्हरन्ति। अत्र खलु संस्कारनिमित्तमिदमाक्रोशनं भवति। उक्तञ्च—"सर्वान् कामानवाप्स्यन् सर्वा विजितीर्विजगीषमाणः सर्वा व्युष्टीर्व्यशिष्यन्नश्वमेधेन यजते" [आ० श्रौ० सू० ] पुराऽश्वमेधयज्ञप्रकरणे फाल्गुनपौर्णमास्यामभिमेथितकर्मणः प्रचारात् सर्वासु फाल्गुनपूर्णिमासु गालीप्रदानरीतिः प्रचलितेति मन्ये। अत्र यज्ञसंस्कारार्थमेवाश्लीलशब्दोच्चारणं विहितमस्ति न पुनः व्यभिचारप्रचाराय आश्वमेधिकमन्त्राणामर्था बाह्यदृष्ट्या हास्यसम्पादकाः सन्ति किञ्च रहस्यविचारेऽश्लीलार्थस्य लेशोऽपि नास्ति दिङ्मात्रं प्रदश्यतेः—महिषी शोधिताश्वसमीपं गत्वा प्रार्थयति—

ता उभौ चतुरः पदः सं प्रसारयाव स्वर्गे लोके प्रोर्णुवाथां वृषावाजी रेतोधा रेतोदधातु ॥ मन्त्रार्थः—हे अश्व प्रजापते व्यापक इत्यर्थः, तौ त्वमहञ्च उभावावां चतुरः पदः पादान् सं प्रसारयाव सम्यक् प्रसारयाव। धर्ममोक्षौ तव द्वौ पादौ, तवाधीनत्वात् मम द्वौ अर्थकामौ इत्थं चतुरः पदः संप्रसारयाव, ततोऽध्वर्युः अधीवासेन प्रच्छादयति स्वर्गे लोक इति, अध्वयुर्वदति हे अश्वमहिष्यौ हे अश्वरूप प्रजापते! हे महिषि युवां स्वर्गे लोकेऽस्यां यज्ञभूमौ प्रोर्णुवाथां वास आच्छादयतम्। ततो महिषी—"अश्वशिश्नमुपस्थे कुरुते वृषावाजीति" अश्वस्य प्रजापतेः शिश्नं व्यापकं फलोत्पादकं तेज आकृष्य भक्त्या स्वयोनौ कर्म्मफलोत्पादके कारणवारिणि अथवा श्रद्धानामके जले फलोत्पादनपर्य्यन्तं सूक्ष्मरूपेण धारयति। वाजी बलवान् वृषा फलानां वर्षुकः प्रजापतिः रेतः स्वीयं तेजः मयि दधातु स्थापयतु, अत्र यदि ग्राम्यधर्मो विवक्षितः स्यात्तदा ता उभौ षट्पदः संप्रसारयाव इत्थं स्यात्। तथा च मृतेनाश्वेन कथं ग्राम्यधर्म्माऽचरणं सम्भाव्यते। अतः द्वेषं विहाय यदि शान्तचेतसाऽर्थमाकलयिष्यन्ति भवन्तः तदाऽऽश्वमेधिकमन्त्राणां गूढ़ाशयः ज्ञेयो भवेत्। सत्यवसरे समेषामाश्वमेधिकमन्त्राणामर्थान् प्रकटयितास्मि।

---

## संस्कृतसाहित्यस्य वर्तमाना परिस्थितिः।

ले० विद्यार्थी हरिद्वारशर्मा (काशी)

भगवत्या भागीरथ्याः पुण्यतमेऽस्मिन् वाराणसीनगरे संस्कृतसाहित्यरसिकानां वाणीसेवकानां विदुषां समक्षे न खलु मे लेशतोऽपि ज्ञानं वा पाण्डित्यं वा येन संस्कृत-साहित्यस्य समालोचनं—विधातुं प्रभवेयम्। नाप्यशक्येऽस्मिन्नारम्भे

आत्मानं व्यापारयिष्यामि—केवलं जनन्या गैर्वाण्याः साम्प्रतिकीं दुरवस्थामन्वीक्ष्य तन्निराकरणासमर्थस्य प्रव्यथितान्तरात्मनः तीव्रां मनोवेदनां भवद्भ्यो निवेदयामि। साम्प्रतं गीर्व्वाणवाणीसेवनपराणां सनातनधर्मावलम्बिनां विद्यार्थिनां यादृशी खलु शोचनीया दशा जाता कालवशेन विद्यते तां समवलोक्य कस्य सनातनधर्मपरायणस्य मानसं न खिद्यति ? संस्कृतभाषान्तु वैदेशिकभाषाया देशकालोपयोगिजीविकानुकूल-ज्ञानार्जनलब्धोपाधिकाः प्रायेण भारतीयच्छात्रा एताम् सामाजिकराजनैतिक-व्यवहारहीनाम् विचिन्त्य दूरतः परिवर्जयन्ति। अस्माकं साहित्यं कदाचित् वेद-ब्राह्मणारण्यकोपनिषदादिरूपेण प्रकटीबभूव। तदनन्तरकाले वाल्मीकिव्यासभास-कालीदासादि महाकविभिस्तादृशीं स्थितिमुपगमितं यथा निखिलमेव जगदुपकृतम्, तस्मिन्काले यद्यपि लोकभाषापि तत्र भिन्ना भिन्नाऽभूत् यथा पैशाची, महाराष्ट्री गौड़ी चेति तथापि सर्वाऽपि प्राकृतजनसमुच्चारणविषयतया प्राकृततया ख्यातिमगमत्।

इदानीं भारतीय-भाषाया भारतीयसाम्राज्यस्य, सभ्यतायाश्च पतनं संवृत्तम्। साहित्यन्तु म्रियमाणमिव दरीदृश्यते। संस्कृतप्रचारोऽलुप्यत, न केवलं विदेशत एव अपि तु भारतादपि। प्राचीनकाले राष्ट्रभाषा संस्कृतमासीत्, साम्प्रतं राष्ट्र-भाषापदे संस्कृतस्य प्रपौत्री हैन्दवी तिष्ठति, सा च यदि परेषां संसर्गमवाप्य भ्रष्टा न भवेत्तर्हि नूनं संस्कृतपदसेवनतत्परया तदनुरूपया संस्कृतरक्षणार्थं बद्धपरि-करया तया भाव्यम्। यदि हैन्दवी हिन्दुस्थानीगर्त्तादुद्धृता भवेत्, शुद्धैव तिष्ठेत् तदा कदाचित् केवलं क्रियाकर्मादिकतिपयभेदमपहाय पुनः संस्कृतत्वं प्राप्नुयात्। संस्कृतभाषाप्रचाराय केचन नियमा विधेयाः। प्रथमन्तु संस्कृतभाषायाः काठिन्यं दूरीकरणीयम्, येन हैन्दवीवेदिनः सुखेन कतिपयनियमान् व्याकरणस्य विज्ञाय संस्कृतं जानन्तु, शब्दानस्माकं शृण्वन्तु, श्रुत्वा च विचारयन्तु यत् किमेते लपन्ति।

प्राय एवं दृश्यते यत्संस्कृतपत्रेषु बहवो लेखकाः—काठिन्यशैलीमानयन्ति परेषां शैलीं सरलाञ्चावेक्ष्य विचारयन्ति यदयं लेखोऽल्प-बुद्धिलिखित इति। परन्तु "संस्कृता-ध्येतारः, तत्रापि पत्रपत्रिकादिनिरीक्षका अल्पा एव सन्ति, तेषां संख्यावृद्धये सरललेखः कियानुपकारक इति ते न जानन्ति।

द्वितीयश्च हैन्दवीशब्दानां ग्रहणे यत्नः कार्यः। एवं स्थिते संस्कृतज्ञानां कार्यक्षेत्रमपि किमपि विस्तृतं भवेत्। तृतीयस्तु संस्कृतज्ञानां विचारधारया तु सामयिकविचारधारा अनुसर्त्तव्या इति अन्येऽपि केचन प्रयत्ना आवश्यका भवेयुः इति। किन्तु संस्कृतसाहित्य-संरक्षणे न तथोपकरिष्यति ग्रन्थपरिवर्त्तनादिः क्षुद्रतमः सुधारो यथा संस्कृतज्ञानां

जीविकाविषयजटिलसुधारः । सम्प्रति संस्कृतज्ञानां समक्षेऽस्माकं विनीतप्रार्थनास्ति यत्संस्कृतसाहित्यरक्षणाय यत्नो विधेय इति । संस्कृतसाहित्यन्तु अस्य देशस्य प्राचीनतमं साहित्यमिति । शम् ।

---

## अधुनातनं कर्तव्यम् ।

( ले० विद्याधरशास्त्री गार्ग्यः ( काव्यतीर्थ विशारद गोरखपुर )

सम्प्रति प्रायशः सर्वो जनः स्वोन्नतये, स्वदेशस्य, स्वजातेश्च गौरवं स्थिरीकर्तुं कयापि प्रणाल्या कटिबद्ध आस्ते । केचन स्वार्थ-साधनाय परान्पीडयन्ति, क्रौर्यं नृशंसत्वञ्चात्मबन्धुमिव मन्वते । न केवलमुदरपूर्त्यर्थमेव सर्वमेतत्कुर्वतेऽपि तु सर्वं-जगतः सम्पत्तीरुदरसाद्विधायावशिष्टेन वेश्मापि भरन्ति । नेत्रे प्रसार्य पश्यन्तु परमपावनाशेष-शास्त्र-तत्त्वनिधिभूताया गीतायाः "दरिद्रान्भर कौन्तेय ! मा प्रयच्छेश्वरे धनमिति, सुधासिक्तं वचनं साम्प्रतं वैपरीत्येन दृष्टिगोचरतामायाति । यस्य सविधे शीतत्राणार्थं हस्तमात्रमपि वस्त्रं न विद्यते न सः कैरपि दयापथमानीयते ।

अद्यत्वे मनुष्या निजोदरपूर्तिमेव नाभिलषन्त्यपि तु गेहं भर्तुमिच्छन्ति । एवमेव संसारे लोभेन, तृष्णया वा सर्वाः कुप्रवृत्तयः प्रसरन्ति । स्वार्थस्य मिथ्याहङ्कारस्य चाप्रतिहता वृद्धिर्भवति । पाठकाः ! क्षणं विचार्यतां—वैज्ञानिकेऽस्मिन् युगे तादृशस्यादर्शस्य स्थापनमपेक्ष्यते, येन मनुष्येषु प्रेमप्रसारिण्याः शक्तेः यथार्थानुभवो भवेत् ।

सभ्यतायाः शिक्षायाश्चेदम्प्रथमङ्कर्तव्यमस्ति यत् मनुजानाम्प्रेमशक्तिं जगतः सर्वोन्नते पदार्थे प्रवर्तयेत् । अथ प्रेमस्फूर्तेः सत्यानुभवो भवेत् । प्रेम एव सदाचारस्य पराकाष्ठेति नात्र केषामपि वैमत्यम् । साम्प्रतं जगतः परिस्थितिः कीदृशी भयावहा ? संसारे कोऽप्यपूर्वो भावो दृष्टिगोचरतामायति । समेषाञ्चेतः कम्पते, न जाने द्वितीयं क्षणम् किन्दर्शयिष्यति ? यावन्न काप्यापत्तिरायाति तावत्तस्याः खेदावहं स्मरणमेव कस्या आपत्तेर्न्यूनम् ।

संसारे शान्तिः केवलं प्रेम्ण ऐक्यस्य वा सुप्रचारेण मिलिष्यति । यथा देहे ऐक्यसूत्रम् "अहमिति" स हि सर्वेष्वङ्गेषु आत्मानमन्वीक्ष्य प्रेमकरोति, तथैव यावद् जगतः सर्वशरीरेषु ऐक्यसम्बन्धो न भवेत् तावत् प्रेम्णो वस्तुतः स्थापनं दुःशकम् । एवमेव यदा समस्तसमाजेषु एक एव अहम्भावो व्याप्तः स्यात् तदा परोपकारोऽपि-

स्वोपकार स्यात्। अनेन सिद्धान्तेन यादृश आनन्दो मिलिष्यति न स स्वार्थे कदापि मिलिष्यति।

अस्माकमेतत्कर्तव्यमस्ति यत् जगतः सर्वाङ्गेषु-ईश्वरं वीक्ष्य स्नेहं कुर्मः "यो मां पश्यति सर्वत्र सर्वञ्च मयि पश्यति। तस्याहन्न प्रणश्यामि, स च मे न प्रणश्यति" इति भगवत्सिद्धान्तस्य याथार्थ्यञ्च प्रकटयामः। यदाऽस्माकञ्चेतः प्रेमपूर्णम्भवेत्तदाऽखिलो लोकः भ्रातृभावं बध्नीयात् तथैव च व्यवहरेत्। प्रेम्णि यो ह्यानन्दो मिलति स केवलमनुभवमात्रसंवेद्यः। न स वाण्या लेखन्या वा बहिः प्रकाशयितुं शक्यते। अयि भो मोहनिद्रानिद्रालवो मानवाः! यदि भवन्तः स्नेहानन्दमनुभवितुमीहन्ते तर्हि-आयान्तु स्नेहस्निग्धमानसाः सन्तः स्वचेतः प्रेमालङ्कारेणालङ्कुर्वन्तु।

किमधिकेन, यदि भवन्तः स्वजीवनस्य किमपि महत्त्वमवगच्छन्ति तदा भगीरथप्रयत्नेन भागीरथ्याः परमपवित्रधारासमानं; हिमालयस्य हैमशिखरेभ्योऽवतीर्य कृष्यां शुष्कक्षेत्रान्, पतङ्गतापतापितान्वृक्षान् प्रीणयन्तु। प्राणधारिणामुत्साहं द्विगुणं वर्द्धयन्तु। मृतकसदृशजनेषु नव्यजीवनं सञ्चारयन्तु। यदि वयं संसारक्षेत्रस्य सिंहास्तदा सिंहसदृशं वने सञ्चरन्तो जगन्ति सफलतायाः परमोन्नतशिखरे नयेम। यदि वयं मानवसमाजस्य सदस्यास्तह्यस्माकमिदं विधेयमस्ति यत्संसारे कामप्यद्भुतां ज्योत्स्नाम्प्रदर्श्य सर्वेषाञ्जीवनं सफलयामः। यदि च साम्प्रतिक्याः स्थितेः समीक्षा क्रियेत तदापि सर्वमिदं विचार्य चेतः "मानवसमाजस्य श्रेयसे प्रेमस्थापनम्" एकीकरणमित्येवमेवानारतं वदति।

तथा ह्यस्माकं को देशः क आचारः, का शिक्षा, कीदृग्जीवनम्, वयञ्च कतमस्मिन्पथि वर्तामहे इति सर्वमालोच्य यथासम्भवं प्रेम्ण ऐक्यस्य भ्रातृभावस्य प्रचारार्थम्, देशस्य, जातेः, धर्मस्य, सभ्यतायाः स्वसंस्कृतेश्च रक्षणार्थम्प्राणपणेन स्वजीवनमर्पयन्तु। (दन्त्योष्ठ्यवकारे परेऽनुस्वार एव तिष्ठति। परसवर्णे सति अनुनासिको वकार एव भवति। मकारस्तु कदापि न भवति इत्यवधयेम् स० सम्पा०)

---

## धर्मे सर्वं प्रतिष्ठितम्।

ले०—वे० र० बालकृष्णशास्त्री शुक्लः श्रीक्षेत्र-त्र्यंबकनिवासी।

केचन धर्मे विप्रतिपद्यमाना भारतीया अन्यान्यदेशीयानां अर्थकामबहुलां समुन्नतिं वीक्ष्य अर्थकामसमुत्कर्षमिच्छन्तो धर्ममोक्षौ विहायैव अन्यदेशीयैतिह्यं प्रमाणीकृत्य अर्थकामात्मिकां भौतिकीं समुन्नतिं प्रति यतन्ते नव्याः। परञ्च नैतत्

समीचीनम्। यतो वयं तु सनातनधर्मीयाः पुरुषार्थचतुष्टयमङ्गीकुर्वाणा मोक्षस्य प्रथमसोपानं धर्ममेव उररीकुर्मः। वैदिकधर्मशास्त्रे धर्मार्थकाममोक्षाख्यान् पुरुषार्थान् प्रतिपादयन्तो धर्मशास्त्रप्रवर्तकाः, नहि केवलेनार्थपुरुषार्थेन वा कामपुरुषार्थेन वा आमुष्मिकं नैःश्रेयसिकं सुखं लभन्ते मानवाः। धर्मानुसारेण यथा शास्त्रं कामभोगः पुरुषार्थो न गण्यते। नहि पश्वादिवत् केवलेंद्रियतृप्त्या यथेष्टविहारेण वा कामस्य पुरुषार्थत्वं तथैव केवलस्यार्थस्य पुरुषार्थत्वं विना धर्मकामाभ्यां। अर्थो हि धर्मार्थं शास्त्रविहितकामभोगार्थमेव सम्पादनीयः। न च प्रवृत्तौ सर्वथा त्याज्यं कामं मन्यामहे। किन्तु "धर्माऽविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ"— इत्यादि शास्त्रेण यः धर्मविरुद्धो न भवति, एतादृशः कामः पुरुषार्थो भण्यते शास्त्रकारैः। अर्थपुरुषार्थस्तु, 'ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरिश्रुतं शाश्वतमाद्रियन्ते। इष्टाय पूर्ताय च कर्मणेऽर्थान् दारानपत्याय तपोऽर्थमायुः।' इत्यादिना भगवता भवभूतिना अर्थस्योपयोगो धार्मिकेष्टपूर्तादि कर्मणे दर्शितः। एतावता धर्ममुल्लङ्घ्य अर्थकामसमुन्नतिर्जाताऽपि न कदाचित् अपि आमुष्मिक-नैःश्रेयसिकां समुन्नतिं दास्यति। यदि धर्मानुसारिणौ अर्थकामोत्कर्षौ सम्पादितौ स्यातां, ततश्च पारत्रिक-नैःश्रेयसिकसुखं यथाकामं कर्तुरनुभवगोचरं भवति। न हि केवलार्थकामसमुत्कर्षेण।

यौरोपियाः स्त्रीयस्तीयास्तथा माहम्मदीया याहुदीया वा इतरेतरधर्मानुयायिनो जीवात्मान ऐहलौकिकोन्नत्यविरोधिनीं कथमपि पारलौकिकीम् उन्नतिं कार्यकारणभावादिशुद्धिं विना—तथा—अकृताभ्यागमकृतविप्रणाशादिकं चानादृत्य स्वकीयधर्मशास्त्रे कथयन्ति, इत्यहो आश्चर्यं! एतत् सर्वं श्रीमद्भिः नव्यपण्डितैः सादरं विचारणीयम् इत्यभ्यर्थये। अत एव अनादृत्य धर्मविचारं सदैव वञ्चनापरा जिगीषया युयुत्सवः अत्यासन्नाः सन्तो जगत्क्षोभकरं युध्यन्ति परान् आक्रमन्ति च। इयमेव आसुरी सम्पत्। यया जीवात्मानः परलोकसमुन्नतिम् अनपेक्ष्य केवलभौतिकीं समुन्नतिं संपिपादयिषवो दृश्यन्ते। न तथा वैदिकधर्मशास्त्रसिद्धान्तो दृश्यते। तत्र तु पुरुषार्थचतुष्टयं संपाद्यतया निर्दिश्यते।

न केवलम् "काम एव पुरुषार्थः" इति चार्वाकसूत्रानुसरणशीला भारतीयाः सन्ति। तर्हि आंग्लविद्याविशारदैः अर्थकामाभिलाषुकैः परानुकरणोत्सुकैः भारतवर्षीयैः नैजं वैदिकधर्मशास्त्रं सूक्ष्मतया मुहुर्मुहुरभ्यस्य न च स्वधर्मपरिवर्तनं न तस्य त्यागं वा कदाचिदपि कर्तुं मनसि निधार्यम्। तस्मादेव सुखं यथा कामं लभ्यते मानवेन।

यथा भगवान् सहस्ररश्मिः स्वतः तेजस्वी जाड्यापहा विराजते, तथैव धर्मः

सुखदाता स्वयमेव वर्तते, भगवति दिवाकरे मेघपटलोपरागादिना पिहिते विविधाच्छादकव्यवधानेन जनदृष्टेः सूर्यस्य निस्तेजस्कत्वं प्रतीयते तेन भगवति भास्करे न्यूनाधिक्यं न जायते। तद्वदेव वैदिकधर्मः स्वतः परिस्थित्यादिना नहि फलदानासमर्थः संभवति, स तु यथापूर्वं वर्तते। परञ्च देशकालपरिस्थित्यादीनां पटलेन यद्यपि हीयमान इव भाति, जनलोचनानां तथापि कलिकालमनुसृत्य प्राचीनमहर्षिप्रतिपादितस्मृतिनियमेनाऽनुष्ठितश्चेत् यथाकामं फलदायी स्यात्। न तस्य सांप्रतिककालदेशपरिस्थित्यनुसारिपरिवर्तनापेक्षा स्यात्।

अतः पुरुषार्थसंपादने यतनोयम्। यद्यपि वेदान्तिभिः केवलं मोक्षस्यैव मुख्य-पुरुषार्थत्वं प्रत्यपादि, तथापि धर्मादिपुरुषार्थानां गौणपुरुषार्थत्वं चाङ्गीकृतं तैः। न च जगति वर्तमाना सर्वेऽपि मानवा मुमुक्षव इति भणितुं शक्यम्। बहवः खलु मुमुक्षव इति न कदापि भवितुं युक्तं? किन्तु बहवश्चैहिकामुष्मिकविषयसुखेप्सवः। ततोऽन्यूना मुमुक्षवः। तेभ्योऽप्यल्पतरा मुक्ता महाभाग्यवन्तो जगति वर्तन्ते इति तु सर्वेषां प्रत्यक्षम्। उक्तत्रिविधजनानां यथेष्टं सुखं दातुं प्रवृत्तिनिवृत्तिभेदेनैकस्यैव धर्मस्य द्वैविध्यं स्वीकृतं प्राचीनैः।

परं च आधुनिका वितर्कवादिनः परलोकविषये सन्दिहानाः सन्तः प्रत्यक्षमेव प्रमाणीकुर्वन्तो दृश्यन्ते। कुतः तेषां परलोकसमुन्नतिविषये श्रद्धा? येषां परलोकविषये श्रद्धा नास्ति, तेषां तद्विषये समुन्नति दूरोत्सारितैव मंतव्या। तद्विषये विचारयामः। अहो महाशयाः! कथं संदिह्यते परलोकविषये भवतां चेतोभिः। यदि प्रत्यक्षमेव केवलं प्रमाणं वर्तते, न शब्दानुमानादि। अदृष्टार्थे अश्रद्धालुत्वात्। सा च अश्रद्धा बहुशः विपरीतार्थबोधने साह्यकारी स्यात्।

यथा—आदर्शे मुखं साचीकृत्य पश्यतां मनुष्याणां वदनानि वक्राण्येव तत्रोप-दृश्यन्ते—यथा—भारतीयानां यत् यावच्च ज्ञानं वर्तते भौतिकं, तदपेक्षया अती-वाधिकं भौतिकविज्ञानं यौरोपीयानां विद्यते - इति तु प्रत्यक्षसिद्धम्। तेन विस्मित-प्राया भारतीयास्तथाचेतरदेशस्था अपि समभवन्। तथव यौरोपीयानां विवि-धाधिभौतिकविज्ञानेभ्य आधिदैविकाध्यात्मिकज्ञानेन विशिष्यन्ते केचन भार-तीयाः। तेषां तत्तद्विषयज्ञानं संस्कृतग्रन्थद्वारा स्पष्टं प्रतीयते। अनुभवगोचरतां प्राप्नोति सर्वमेतत्। भारतवर्षीयाणां खगोल भूगोल शारीराधिदैविकाध्यात्मिकादि-ज्ञानं पूर्वमितरदेशीयातिशायि आसीत् इति नास्ति संदेहलेशोऽपि।

तेनेदमेव संसिध्यति यत् एकस्य यद्विषयकं ज्ञानं विद्यते तदन्यविषयकं ज्ञानम् इतरस्य नैव जायते इति न निश्चेतुं योग्यम्। यथा तंत्रीसंदेशविषयक-

ज्ञानिनः वायुसंदेशविषयकयन्त्रनिर्माणज्ञानं वर्तत एवेति गदितुं शक्यं ? यथा वा उपर्युक्तः संदेशविज्ञानिनोः विमानविषयकं विज्ञानं विद्यत एवेति निश्चेतुं शक्यम्— न हि सर्वः सर्वं जानाति। एतावता भौतिकविज्ञाने व्यक्तिभेदेन, समाजभेदेन वा ज्ञानतारतम्यं यदि दृश्यते—नहि तावता अविदुषः तत्तद्विषयाऽज्ञानेन तत्तद्भौतिक-विज्ञानं जगति नास्तीति भणितुं युक्तम् इति तथैव स्थूलदृशां अज्ञेयत्वेन प्रतीयमानं अप्रत्यक्षं च स्वर्गनरकादि—आधिभौतिकशक्त्यादि, आध्यात्मिकाधिदैविकादि च मूलतः नास्त्येव इति वक्तुमर्हं भवेत् ?

यत् यत् मज्ज्ञानविषयं न भवति तत् तत् वस्तु लोकादिर्वा जगति नास्त्येवेति अनुमानस्य प्रत्यक्षतो बाधात्। अतो वर्तत एव सर्वं स्वर्गनरकादि तथा आधिदैवि-कशक्त्यादि चेत्यनुमानस्य अबाधितत्वात्, अनेकश्रुत्यनुगृहीतत्वाच्च, महर्षिप्रति-पादितस्मृतिप्रामाण्यात्। अतीन्द्रियविषयद्रष्टृमहर्षिवर्यैः तथा तस्यानुभूतत्वात्। तस्मात् संसिध्यत्येव स्वर्गादिलोक आधिदैविकाध्यात्मादिशक्तिश्च। तस्मात् तत्त-ल्लोकादिप्राप्तये वा तत्तद्देवतासाक्षात्कृतये च तदुद्दिश्य विहितो धार्मिकाचारादि-रेव अपेक्ष्यते धार्मिकैः। धर्माचारफलयोस्तु बीजाङ्कुर इव कार्यकारणभावः विलसति तत्तत्फलजन्यसुखं तु धर्मानुष्ठानं विना नहि भविता—अतः उक्तं 'सुखं तु जगता-मेवं प्रायः धर्मेण जन्यते' इत्यलं पल्लवितेन।

---

## विजयप्रार्थना।

(श्रीतारादत्तपन्तः मुख्यः, उपदेशक-महाविद्यालयस्य)

नमः परस्मै पुरुषाय भूयसे, सदुद्भवस्थाननिरोधलीलया।
गृहीत-शक्तित्रितयाय देहिना, मन्तर्भवायाऽनुपलक्षवर्त्मने ॥१॥
अशेष-संक्लेश-शमं विधत्ते, गुणाऽनुवादश्रवणं मुरारेः।
कुतः पुनस्तच्चरणारविन्द-परागसेवा-रतिरात्मलब्धा ॥२॥
अतो भवन्तः सकलेश्वरं तम्।
हृदा स्मरन्तो वचसा गृणन्तः॥
सन्तोषयध्वं भुवनस्य शान्त्यै,
यतोऽधुना क्षुभ्यति राजसङ्घः॥ ३ ॥
(सर्वे गायन्ति)
भगवन् परिरक्ष सांप्रतम्।
भुवनं घोर-रणार्णवादुपद्रुतम्॥

वृटिशेश-जयाय जागराम् ।
तनु, निद्रां त्यज योग-सेविताम् ॥ ४ ॥

वृटिशाधिप - बुद्धिवर्द्धनाद् ।
जयिनी स्याद् भरतस्य भूरियम् ॥

भरताऽजिर - वासितोषणात् ।
विजयी स्याद् वृटिशाऽधिपः स्वयम् ॥ ५ ॥

( प्रार्थनेयं वृटिशविजयार्थं, विश्वशान्त्यै च श्रीभारतधर्ममहामण्डले जाता )

---

## अभिनन्दनम् ।

श्रीमन्माननीयानां महामहिमशालिनां श्रौतस्मार्त-धर्ममर्यादा-संरक्षण-विचक्षणानां गौडकुलालङ्काराणां महामहोपाध्यायादि-विविधोपाधि-विभूषितानां स्वर्गीय श्रीमत्-प्रभुदत्तशर्म्मतनुजन्मनां वैदिकशिरोमणीनां भारतप्रसिद्धविदुषामाहिताग्नीनां श्रीमद्विद्याधरशर्म्ममहोदयानां सादरं शुभाभिनन्दनम् ।

अयि वैदिकशिरोमणयः !

तत्र भवतां कुलपरम्परया-सम्प्राप्त-त्रैदुष्यवैभवानां, श्रौतस्मार्तकर्मानुष्ठान-निष्ठान्तःकरणानां, साङ्गवेदशास्त्र-परिशीलन-समधिगताशेषशेमुषीकाणां, साम्प्रतिक-संस्कृतसाहित्यसमाजे, भारतीय-संस्कृतिसंरक्षणसंवर्धननिदर्शनानां विविधवेद-वेदाङ्गग्रन्थप्रणयनप्रकटितप्रतिभाप्रकर्षाणां वैदिकसंम्राजां सर्वमाननीयानां श्रीमतां दिगन्तप्रसृतं वेदवैदुष्यं समीक्ष्य भारतीयसम्राट्प्रधानप्रतिनिधिभिः ( वाइसराय-महोदयैः ) साम्प्रतं सर्वमान्यं 'महामहोपाध्याय' इति पदं श्रीमद्भ्यः प्रदाय यद् रत्नकाञ्चनसंयोगन्यायश्चरितार्थितस्तेन तदीयसमुचितयोग्यायोग्यविवेकशीलतां प्रशंसन्ती प्रमुदितान्तःकरणेयं श्रीकाशीपण्डितसभा "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति" इति भगवदुक्त्यनुसारं श्रीमतां प्रौढगुणग्रामाणां 'शुभाभिनन्दनं' विदधती श्रीकाशीविश्वेश्वरमभ्यर्थयते यत् स भवतामुत्तरोत्तरं समुन्नतिमभ्युदयञ्चिरायुष्यञ्च विदध्यादिति शम् । [ श्रीकाशीपण्डितसभया महामहोपाध्यायपदप्राप्तिनिमित्तं दत्तमभिनन्दनमिदम् ]



म० म० श्रीविद्याधर गौडा अग्निहोत्रि प्रवराः ।

## माता बालं प्रति ।

( पज्झटिका )

लेखकः—पण्डित माधवोपाध्यायः

एषु दिनेषु पुरे न विहारं, तात ! विधेहि विचार्य विकारम् ।
प्रवहति प्रबला किल पाश्चात्या, बहुलोपद्रवकृत्या वात्या ॥ १ ॥
दूरमपि प्राग्दिक्पर्यन्तं, परिसर्पन्ती व्याप्याऽत्यन्तम् ।
बहुलं कोलाहलमातनुते, तत्र विहर्त्तुः शान्तिः क नु ते ? ॥ २ ॥

यत्र क्वचिदपवित्रस्थाने, स्थितमुत्थाप्य रजोऽप्ययस्थाने ।
कष्टं ! दृष्टौ तत्संबन्धं, कृत्वा कुरुते त्वां द्रुतमन्धम् ॥ ३ ॥
यावच्चक्षुर्निष्फल-पद्म, दलसि बलात्तावन्निज-लक्ष्म ।
सोपाधिकमथ कुत्सित-रागं, धत्ते प्रत्युत धृत-परभागम् ॥ ४ ॥
आन्ध्येनेत्थं सहसाऽऽक्रान्तः, स्या दिशि नेत्रयुतोऽपि भ्रान्तः ।
स्यादिह पन्था अपि ते नष्टः, मासो वा स्यान्मार्गो भ्रष्टः ॥ ५ ॥
पदयोः कण्टक-वेधापातः, क्वचिदथ तव पाषाणाघातः ।
क्वचन भवेत्तव गर्त्त-निपातः, पुत्र ! कथं स्या भवनायातः ? ॥ ६ ॥
मूल-दृढाऽपि च मन्दिर-सत्ता, हन्त ! प्रकम्पन-वेगायत्ता ।
अस्ति पतन्तीतिश्रुत-वार्ता, मङ्गल-भङ्ग-भयादहमार्त्ता ॥ ७ ॥
उन्नत-धर्माणः प्रतिकूलाः, स्वे प्रसरे ये, ते प्रोन्मूलाः ।
मरुता प्रविधित्स्यन्ते सन्तः, पुष्प-फलैस्तरवः प्रणमन्तः ॥ ८ ॥
प्राचो वृक्षान्महतो जात्या, हन्त ! निपात्य बलाद्धत ! वात्या ।
समभिलषति सममखिलं कर्त्तुं, वत्स ! पुरे तु न याहि विहर्त्तुम् ॥ ९ ॥

## अवशिष्टा मुद्रित सम्मतयः ।

ले० यशोदानन्दनशर्मा शास्त्री जयतलः ।

'सूर्य्योदय'स्य १५।६ अङ्के मद्गुरुवराणां श्रीदीनानाथशर्म्मशास्त्रि सारस्वतानां* परिचयः, १५।७ अङ्के च तत्सम्बद्धा मुद्रितसम्मतयश्च प्रकाशिताः । परमयं निबन्धो सार्द्धवर्षादेव प्रेषित आसीत् कार्य्यालये । तदन्तराले तेषां सम्बन्धे कतिचन अन्याः सम्मतयोऽपि प्रकाशिताः समाचारपत्त्रेषु । अधुना तासामपि उद्धरणं दीयते—

( २४ ) अयोध्यास्थ 'संस्कृत' पत्त्रस्य ९।१ अङ्के तृतीय पृष्ठे तत्सम्पादकैः श्रीकाली प्रसाद शास्त्रिभिरिमे शब्दाः प्रोक्ताः—"किं समस्ते भारते मुल्तानीय पं० दीनानाथ शास्त्रिणम् अन्यो न कश्चिद् अनुकरिष्यति विद्वान् ?। मन्ये अहम्, उक्त शास्त्रि तुल्यो न प्रौढ पाण्डित्यपूर्णनिबन्धलेखकः कश्चित् सत्वरमेव भवितुमर्हतीति" ।

* तस्यां सङ्ख्यायां विग्रहावसरे 'दीनान् आनाथयतीति' इति मुद्रणीये मुद्रक—प्रमादात् 'दीनान् अनाथयतीति' मुद्रितम् । पाठकैश्शोध्यमेतत् । आङ् अभिन्यासौ ।

(२५) 'संस्कृत' पत्त्रस्य ९।१२ अङ्के तत्सम्पादकमहोदयेन उक्तम्—"अत्र वृत्तमिदं—क्षमादेवी विदुषी भूत्वा प्रतिष्ठापत्रं गुर्जरपत्त्रेषु प्रकाशनाय दत्तवती। खालसा कालेजस्य विद्वान् अध्यापकः श्रीनागप्पा होसकेरे शास्त्रिमहोदयस्तदध्ययनं कृत्वा तदन्तिके प्रेषितवान् (व्याकरणाऽशुद्धिसम्बन्धि) प्रतिवादपत्रम्। सा तत् पत्रं मह्यं दत्तवती। मया तत्पत्रमपरप्रतिष्ठापत्रेण सह प्रहितं महाविदुषस्तटस्थस्य अन्तिके। तेन तदुत्तरं दत्तम्।" अत्र तटस्थनाम्ना श्री पं० दीनानाथशास्त्रिभिरेव उत्तरं दत्तमासीत्। ततोऽत्र श्रीनागप्पाशास्त्रिण ˘ प्रतिवचनं प्रकाशितम्। ततश्च अस्मद्गुरुवरैः 'प्रतिवचनं विमर्शः' इति वृद्दाकारस्य 'संस्कृतस्य' ९।१४ अङ्के १२ स्तम्भेषु प्रकाशितो व्याकृतिसम्बन्धे। परं ततः श्रीनागप्पाशास्त्रिणा नोच्चरितम्।

(२६) 'संस्कृत' पत्त्रस्य ९।१२ अङ्के तत्सम्पादकः—'सुप्रभातसम्पादकस्य तु गणनैव का, अन्यपत्रेष्वपि इयमशुद्धि मुद्रणत्रुटिः प्राप्यते एव। तदर्थमेव पं० दीनानाथशास्त्रिणो 'मुद्रकाणामुपरि अभियोगः' साम्प्रतं 'संस्कृते' प्रकाशितो भवति, कानि पत्राणि न तत्र सन्ति ?" । पृ० ३

(२७) 'मधुरवाणी' पत्त्रे अद्वैतवादखण्डने लेखमाला प्रचलन्ती आसीत्। तदुत्तरे श्रीमता सुब्रायभट्ट महोदयेन 'अहो ! संस्कृतज्ञानामपि गैर्वाण्यामनादरः' इति प्रहसनं प्रकाशितमासीद् लेखमालारूपेण 'संस्कृत' पत्त्रे। तत्र अमुना महोदयेन 'मधुरवाणी' पत्त्रिकायै अस्मच्चरितनायकद्वारा प्रशस्तिपत्त्रप्रदाने स्वविधया पात्रद्वयमुखात् प्रश्नोत्तरचर्चा चालिता। तत्र प्रकृतोपयोगी अंशस्तु अयम्—

'प्रश्नः—पण्डितमूर्धन्यदीनानाथशास्त्रिप्रभृतयो हि सनातनधर्माभिमानिनो महापुरुषा मधुरवाणीमेनां सनातनधर्मानुरागिणीमेव समर्थयन्ते प्रशस्तिपत्रप्रदानेन। तथा च तादृशशिष्टपरिगृहीतत्वात् तस्याः प्रामाण्यमव्याहतमेव'। उत्तरम्—'तादृशानामाशयमजानाना भवन्तः किमपि स्वकपोलकल्पनया कल्पयन्ति........'।

प्रश्नः—अन्यथा प्रशस्तिपत्रदानेन पण्डितदीनानाथशास्त्रिप्रभृतयः कथमेनामनुगृह्णीरन्।

उत्तरम्—तेषामान्तराभिप्रायः पूर्वमेव मया प्रादर्शि। अथवा पण्डितदीनानाथशास्त्रिलिखितलेखेषु सनातनधर्मसम्बन्धो भूयस्तया विद्यते एव—इति तद्घटितपरम्परासम्बन्धेन पत्त्रिकाया अपि सनातनधर्मानुबन्धित्वं वर्तते एवेति, तेनैवाऽभिप्रायेण प्रशस्तिपत्रदानव्यवसायस्तेषाम्। नहि पुण्यात्मानस्तादृशाः कलहमपि सनातनधर्मत्वेन कश्चिद् अभिमन्येरन्'। इति द्वैतवादखण्डक श्रीसुब्रायभट्ट महोदयलेखे 'संस्कृते' ९।२५ पृ० २

(२८) उक्त प्रहसनस्य उत्तरे द्वैतवादपण्डितप्रकाण्डेन श्रीविश्वम्भरशास्त्रि-महोदयेन 'मधुरवाण्यां, केचिच्छन्दा लिखिताः ४।९-१० अङ्के ४९ पृष्ठे—

"सर्वतोमुखैर्विद्वन्मस्तकान्दोलनक्षमैस्तलस्पर्शिभिरनुपमैर्लेखैः सकलं संस्कृत-पत्रिकाप्रपञ्चं परितोषयतां साधु प्रकृतीनां सङ्ख्यावन्मूर्धन्यानाम् आचार्यं दीनानाथ-शास्त्रिणां प्रहसने दूषणेपि ईषदपि भयसङ्कोचमनासादितवतां प्रहसनकारिणां धन्य-वादार्पणेन अहो कियती वा दर्शिता श्रीमद्भिर्गौरवबुद्धिः कृतज्ञ तासहकृता तपस्विषु श्रीदीनानाथशास्त्रिषु ( संस्कृत ) सम्पादकपदारूढैः कथ्यतां किञ्चित्।"

(२९) अयोध्यास्थ 'संस्कृत' पत्रस्य प्रकाशकेन अस्मद्गुरुवरप्रणीत 'श्रीसनातन-धर्मालोक' ग्रन्थस्य प्रकाशनसम्बन्धे 'संस्कृत' पत्रस्य ९।२० अङ्के प्रथमपृष्ठे केचि-च्छन्दा उपन्यस्ताः; तेऽपि अत्र उद्ध्रियन्ते—मुलताननिवासिना पं० दीनानाथ शास्त्रिणा 'सनातनधर्मालोक' नामा ग्रन्थोऽलेखीति 'संस्कृत' पाठका जानन्ति। ग्रन्थोऽयं नूनं संस्कृत-सनातनधर्मयोरुपकारी। अस्य प्रकाशने नाधिको व्ययः। संस्कृतग्राहकेषु न जाने कियन्तो महाधनिकधार्मिक सहृदया वर्तन्ते। तेषु एकोऽपि यदि उद्यतो भवेदस्मिन् विषये, तदा संसारे महद् यशोऽधिगन्तुं शक्तः। पुण्यं तु स्पष्टमेव। शास्त्रिमहोदयेन संस्कृतकार्य्यालयस्यापि ध्यानमाकृष्टम्। तत्र केवलमिदमेव निवेदनं यद्-यद्यपि कार्यालये बृहद्ग्रन्थप्रकाशनशक्तिसमयाऽभावः, तथापि सत्यवसरे तदाज्ञापालने पश्चात्पादो न भविष्यति। तथापि कश्चिदन्यो यदि अमुं भारं बिभृयात्; तदा उचितं भवेत्'।

(३०) '...सर्वेषामत्र कर्तव्यमिदमस्ति यत्—तैः स्वस्वकुण्डल्या अननुकूला ग्रहा विवेचनीयाः; तथा तेषां शान्तिश्च विधेया। एवं हैदराबादीयान्दोलनोत्तरणात् प्राक् कृत्यमासीद् आर्यसमाजस्य यत् सोऽपि स्वविपरीतग्रहाणां शान्तिं करोतु; यत-स्तदीया जना अपि अद्यत्वे सनातनधर्मिणां दैवतां स्वीकुर्वन्तः शिवमन्दिरादिसत्या-ग्रहेषु सहयोगं दत्तवन्तः। अतो ग्रहशान्तिमन्तरा तेषां सत्याग्रहसंग्रामे समुत्तरणे भङ्गाभट्टस्य दुनोति चेतः। यतस्तेषाम् ( आर्यसमाजिकानां ) ग्रहेषु मुलतानस्थितः पं० दीनानाथशास्त्री महान् प्रचण्डो ग्रहः, सोऽवश्यं संतर्पणीय आसीत्' 'संस्कृत' पत्रे ९।२६ अङ्के ८ पृष्ठं भङ्गाभट्टः।

(३१) 'पं० दीनानाथस्य विशालशास्त्रज्ञानस्य न केवलं वयं प्रशंसामेव कुर्मः प्रत्युत पण्डितवर्यं दिष्ट्या धन्यवादैश्च सम्मानयामः, प्रार्थयामहे च यत् पण्डित-प्रकाण्डस्य अनन्यसदृशं संस्कृतज्ञानं शास्त्रज्ञानं च वैदिकधर्माय भारतवर्षाय च

लाभकरं स्यात्' श्रीपत्रिकायाः ७।४ अङ्के पृ० ४-५ तत्सम्पादकः श्रीयुतकुलभूषणमहाभागः।

(३२) 'ज्योतिष्मती' पत्रिका समालोचनावसरे 'मधुरवाण्याम्'—'ज्योतिष्मती पत्रिकायां 'स्त्रियाः पुरुषत्वं पुरुषस्य च स्त्रीत्वम्' इति विवेचनात्मकः संस्कृतवाङ्मयसागरपारीणानाम् आचार्यश्रीदीनानाथशास्त्रिणां लेखो विस्मापयते आधुनिकशारीरशास्त्रमर्मविदोऽपि' मधुरवाण्याः ४।६-७ अङ्के ३३ तमे पृष्ठे तत्सम्पादकाः श्रीरामाचार्य्य श्रीनिवासाचार्य्याः। इयं सम्मतिर्ज्योतिष्मतीसम्पादकेनापि स्वपत्रिकायामुद्धृता १।३ अङ्के।

पाठकैर्दृष्टा एव स्युरिमाः सम्मतयोऽपि। अस्मद्गुरुवरप्रणीत 'श्रीसनातनधर्म्मालोक' विषये गताङ्केषु संक्षिप्तपरिचयो दत्त एव। तत्र विशिष्टमिदं ज्ञेयम्; यत्—तदीयविषयसङ्ख्या द्विशतमिता। पृष्ठ संख्या च द्विसहस्र पृष्ठतोऽधिका। तत्प्रणीत 'निबन्धरत्नालोकस्य च एकसहस्रमिता। अयोध्यासंस्कृतकार्य्यालयेन वर्षेऽस्मिन् एभ्यो 'विद्याभूषणम्' इत्युपाधिरपि अर्पितः। अस्तु।

'श्रीसनातनधर्म्मालोक'स्य उपयोगिताप्रतिपादकानि एवमेषा लेखान्तराणामुपयोगिताप्रतिपादकानि च येषां विद्वद्वराणां पत्राणि एषां पार्श्वे प्राप्तानि; तेषां विवरणं पुनर्दीयेत अवसरमासाद्य। अधुनाऽयं निबन्धोऽत्रैव समाप्यते।

---

# वेदशिक्षाया आवश्यकत्वम्

लेखकः—श्रीवेणीरामशर्मा गौडः (वेदाचार्यः)

वेदाध्यापकः—काशीस्थ गोयनका संस्कृत महाविद्यालयस्य।

इह खलु द्विजानां वेदाभ्यास एव धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थसिद्धेः कारणमिति वैदिकसिद्धान्तः। स हि वेदाभ्यासः पञ्चधा विहितः। अध्ययनं विचारोऽभ्यसनं जपोऽध्यापनमिति। तथा च स्मर्यते—

वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा॥
(दक्षस्मृतिः, २।३४)

तथा चाभिधानं याज्ञवल्क्यशिक्षायाम्—

'प्रणवं प्राक् प्रयुञ्जीत' इत्यादिनाऽध्ययनम्, 'अभ्यासार्थे द्रुतां वृत्तिम्' 'ऋक्संहितां त्रिरभ्यस्य' इत्यादिना चाभ्यसनम्, 'प्रयोगार्थे तु मध्यमाम्' इत्यनेन

जपादि 'गुरोरनुमतिं कुर्यात्' 'गुरुशुश्रूषया विद्या' इत्यादिना चाध्ययनं स्वयमेव। तस्मादधीतवेदस्य हि सति सामर्थ्ये सम्पूर्णफलेच्छया विचारस्यावसरः प्राप्तः। स च विचारो द्विविधः—अर्थतो लक्षणतश्चेति। तथा चोक्तं निरुक्ते प्रथमाध्याये—

स्थाणुरयं भारहारः किलाभूत्
अधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते
नाकमेति ज्ञानविधूतपाप्मा॥

अन्यच्च—

यद् गृहीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥

पश्यन्तु भुवन-भास्करम्-आसृष्टेः श्रुतिकथितां वाचम् "हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्" (शु० य० ३३।४३) इति रूपां समाश्रयति नतमस्तकः। न कदाचिदपि निमेषार्धस्यापि कृते तदीयां वाचमुत्थापयति। इतरेऽपि शशाङ्कादयः खेचराः प्रकृतिवादिनां जडा अजडाश्चास्माकम्भावनया निर्विरोधलेशं वेपमाना इव रक्षयन्ते वेदवाचम्।

हं हो! अत्रि-भृगु-कुत्स-वाशिष्ठ-गौतमाङ्गिरसादयो महामहिमशालिनो महर्षयो वेदानामेव कृते जनुर्गृहीतवन्तः सृष्टेरादिकाले। तथा च मानवधर्मशासनम्—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वं मनसा क्षीणकल्मषाः॥

एतेषां घोरं तपो वेदानामेव कृते सम्पन्नम्। अनिच्छन्तोऽपि मोक्षपदवीं दवीयसीं घोरप्रचारेषु विपिनेषु चिरं निवसन्तः प्राप्तवन्तो वेदपदवीम्।

यत्किमपि व्यतीतविषयताशालितामुपगतं यच्च साम्प्रतिकप्रतीतिसमालीढितं यच्चागामितामाश्रयमाणमिव सर्वमेतादः श्रुतिभ्य एव निश्चितीकर्त्तुं पार्यते नान्यथा— "भूतं भव्यं भविष्यच्च सर्वं वेदात्प्रसिद्ध्यति" इति प्रामाणिकोक्तेः।

वेदस्य मनुष्यमात्रेण सह सत्यपि सामान्यतः सम्बन्धे भारतीयैः सह घनिष्ठः सम्बन्ध इत्यत्र नास्ति विप्रतिपत्तिलेशः।

अस्ति चात्र कारणानां भूयस्त्वम्। तत्र तावदिदमेकं कारणम्, यन्मनुष्य-सृष्ट्यारम्भे विश्वामित्रवसिष्ठात्रिभरद्वाजप्रभृतयो ये महर्षयो भारतीयानामस्माकं वंशप्रवर्त्तयितारः प्रवराध्याय-प्रवरमञ्जर्यादावुक्ताः, त एव सर्वानुक्रमण्यामार्षानु-क्रमण्यां च वेदप्रवर्त्तका भणिता इत्यस्मत्पूर्वतनैरेव वेदाः प्रवर्त्तिता इति बहादरणीयता।

द्वितीयं तु—मनुष्यमात्रस्याभ्युदयोऽधः पतनं वा स्वं स्वं शीलमेवावलम्बते। यस्य हि पुंसः शीलमुदारतरं निर्मलं च प्रकाशते तस्याभ्युदयः करतलगतः। यस्य चैतद्विपरीतं तस्याधःपतनमिति निश्चप्रचमेव। तादृशे च शीलादौ पुंसः प्रवर्त्तनं संस्कृतवाङ्मय एव दरीदृश्यते।

किं बहुना—भारतीयानामस्माकं सर्वस्वभूतेयं संस्कृतभाषा। ईदृशी चाप्युत्तमा भाषा केनापि दुर्दैवविपाकेन नेदानीमात्मानं समग्रतया प्रकाशयति, तथापि यावानुपलभ्यते त्वंशस्तावतैवोक्तगुणगणभूषिता वर्वर्त्ति।

अस्य सर्वोत्तमसंस्कृतसाहित्यकल्पवृक्षस्य मूलभूतो वेदः। वेदत एव संस्कृत-साहित्यस्य सञ्जातमुत्थानम्। भारतीयैश्च संस्कृतसाहित्यस्य अमुमेव मूलभूतं वेदमवलम्ब्य लोकोत्तरोऽभ्युदयः समपादि सम्पादयिष्यते च।

यस्य वेदस्यावलम्बनमेवास्माकं महतेऽभ्युदयाय कल्पते तादृशेनानेन सहास्माकं विशेषतः सम्बन्धोऽवश्यमङ्गीकार्यः। अपि च वेदोऽस्माकं प्राचीनो धर्मग्रन्थः। धर्मग्रन्थे च यत्किञ्चिन्निरूपितं तदविलम्बेन मान्यं पालनीयञ्च व्यवहारे परमार्थे चेति तृतीयं कारणम्।

येन वेदेन सहास्माकमेतादृशो निविडः सम्बन्धः, यश्चास्माकमभ्युदयनिः-श्रेयसहेतुः, तादृशे वेदे सर्वथा वयमनभिज्ञा इति किमस्त्यतोऽपि शोचनीयम्। एवं बहुभिः श्रुत एव न वेदः, यैश्च कैश्चिच्छ्रुतस्तेऽप्येवमनुमिमते यन्महान् वेदराशिः स च न शक्यते सकृत्पठितुमप्येकस्मिन् जन्मनि। दूरे तिष्ठन्तु पामराः, पण्डिता अपि बहवो दशामेतादृशीमनुभवन्तीति किमतः शोच्यतरम्?

सुविदितमेतत्—देशान्तरीयपुरुषापेक्षया भारतीयाः सभ्यतरा विद्याभ्यास-शालिनश्च। तत्तादृशानामस्माकं सर्वश्रेयोनिदानभूतेऽस्मिन् वेदभागे उपेक्षैतादृशी सर्वथाऽनुचितैव।

को नाम पितरमिव स्वकं न्याय्ये धर्म्ये च पथि प्रवर्त्तयन्तमधर्म्यादन्याय्यतश्च पथो निवर्त्तयन्तं वेदमिममुपेक्षमाणः कथं लोकयात्रामैहिकीमामुष्मिकीं वा निवर्त्तयितुमीशेत।

ये च महान्तः करुणापूरपूरिता ईर्ष्यालुता-क्षुद्रहृदयता-कातरताद्यनेकदोष-विनिर्मुक्ता अनुग्रहैकपरायणा अस्मत्पूर्वतना महर्षय आसन्, तादृशानां तेषामेव सन्ततयोऽपि वयमिदानीं क्षुद्रहृदयतादिभिर्महद्भिर्दोषैः परिपूरिताः। तत्र चेदमेव मुख्यं कारणं, यदस्माकं वैदिकी पठनपाठनशैली सर्वथा परिभ्रष्टा। सर्वेऽप्येते दोषा वेदस्य पठनपाठनत एव निर्वर्त्स्यन्ते, मित्रता-वीरतादि गुणाश्च प्रादुर्भविष्यन्ति।

वेदशिक्षा खलु मनुष्यहृदयक्षेत्रे देशहितं, जातिहितं, आत्महितमित्येतादृशं गुणगणं वपति। या चैवमेतादृशीं गुणसम्पत्तिं लभते, भजति चैहिकामुष्मिकफलप्राप्तिभाजनतां, सैव मनुष्यजातिर्लोके सर्वोत्तरा विजयते।

येयं वैदिकी शिक्षा तादृशीं गुणसम्पत्तिं प्रसूते, या च ऐहिकामुष्मिकफलभाजनतामापादयति पुरुषम्, हन्त! महदिदं दौर्भाग्यमस्माकं यत्तया शिक्षया सर्वथा वञ्चिता वयम्। प्रायो मनुष्यजातिः स्वपूर्वजानां सम्पत्तेरभिरक्षणं स्वस्य महाभाग्यं मनुते, तदर्थमहर्निशं प्रयतते च यथाऽस्माकं पूर्वजैः सहाविच्छिन्नः सम्बन्धो भवेत्। स्वभाव एवायं मनुष्यजातेः, परन्तु वयमिह तादृशात्स्वभावादपि दूरे वर्त्तामहे।

अतो दूरीकृत्येदमौदासीन्यम्, अस्मत्पूर्वजानाममूल्यसम्पत्तिभूतस्य वेदराशेरभिरक्षणार्थं तदीयशिक्षालाभस्तत्प्रचारश्च प्रथमां कोटिमावहति।

यदि वयमवश्यकर्त्तव्यस्यास्य पालनं न कुर्मस्तर्हि स्वीयपूर्वजानाममूल्या वेदसम्पत्तिरचिराद् भ्रश्येत। तद्रक्षणं विना पूर्वजैः सह सम्बन्धोऽपि विनश्येत्। ये च मतान्तरस्था वा पुरुषाः स्वीयां पूर्वतनीमल्पीयसीं निःसारभूतामपि सम्पत्तिं महता प्रयासेन अकार्यकरणेनापि सम्यगभिरक्षन्ति वर्धयन्ति च, तेषां पुरतो महदिदं लज्जास्पदम्।

अतः सानुरोधं प्रार्थ्यते—वेदस्यैव अध्ययनेऽध्यापने च यथाशक्ति सर्वैः प्रयतितव्यम्, तत्र च वर्त्तमानं शिक्षारत्नमादाय संसारेऽस्मिन् सत्काराहैंरनुकरणीयैश्च भवितव्यं, यतोऽस्माकं भारतीयानां वर्त्तमानावस्था शोचनीया घृणोत्पादिका च।

कुलीनाः खलु पुरुषाः सामान्यतोऽप्यात्मना सम्बद्धं पदार्थजातं यथाशक्ति निर्वहन्त्येव यावज्जीवं न कदापि परित्यजन्ति। अस्माकन्तु भारतीयानां न केवलं वेदेन सह सामान्यतः सम्बन्धः किन्तु विशेषत एवेति निरूपितम्।

एवं सर्वप्रकारेणापि सम्बद्धं वेदमिममात्मानं जीवितं मन्यमाना न पालयेम न वा भवेम तदभिवृद्धौ दत्तदृष्टयस्तदा धिगस्मान्। यतो जात्यन्तरापेक्षया हिन्दुजातिः सर्वतः श्रेष्ठा। तादृशस्यास्य वेदस्य परिरक्षणं पठन-पाठनद्वारा अर्थज्ञानद्वारा च भवितुमर्हति नान्यथा। अस्यैव महतो वेदराशेः सर्वश्लाघनीयस्य सर्वाभ्युदयनिदानभूतस्य यथावदर्थं निर्णेतुमेव प्रवृत्तः सर्वोऽपि संस्कृतवाङ्मयराशिः।

---

# सूर्योदयः ।

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जड़वाद-कैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनो मनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

## त्रैभाषिको विशेषाङ्कः ।


षोडशे वर्षे १६ } भाद्रपूर्णिमायाः १९९७, सितम्बर १९४० । } ३ तृतीया संख्या


## आर्यसंस्कृतिः शिखासूत्रञ्च ।

प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं
सच्चित्सुखं परमहंसगतिं तुरीयम् ।
यत्स्वप्नजागरसुषुप्तिमवैति नित्यं
तद्ब्रह्म निष्कलमहं न च भूतसङ्घः ॥१॥
प्रातर्भजामि मनसां वचसामगम्यं
वाचो विभान्ति निखिला यदनुग्रहेण ।
यन्नेति नेति वचनैर्निगमा अवोचं-
स्तं देवदेवमजमच्युतमाहुरग्र्यम् ॥२॥
प्रातर्नमामि तमसः परमर्कवर्णं
पूर्णं सनातनपदं पुरुषोत्तमाख्यम् ।
यस्मिन्निदं जगदशेषमशेषमूर्तौ
रज्ज्वां भुजङ्गम इव प्रतिभासितं वै ॥३॥

अध्यात्मतत्त्वमेवार्य्यमर्य्यादायाः परमं लक्ष्यं विद्यते । यथा चाचार्य्यवर्य्याणा-सुपरिनिर्दिष्ट-स्तोत्रपद्धत्या व्यज्यते । तद्धि अध्यात्मपदं गुणातीतपदमुच्यते । ये हि

गुणातीतमध्यात्मपदं पूर्णतया नानुगन्तुमर्हन्ति, ते हि परमात्मनोऽशेषजगन्निया-मकस्थानेकेभ्यः सगुणरूपेभ्यः किमपि स्वाभिलषितं सगुणरूपं स्वहृत्पटले समानीय संस्थापयन्ति। तद्ध्यानेनैव च स्वीयं दैनिकं सांसारयात्रिकं कर्मप्रारब्धं विदधति। ततश्च दिनचर्य्यां रात्रिचर्य्यां च सर्वामेव क्रियां यज्ञस्वरूपेण विदधतः स्वीयं सदाचार-मयं जीवनं देवहितं भुञ्जते। वर्णाश्रमाचारवतामार्य्याणामाध्यात्मपदमेव लक्ष्यं, तज्जा-तीयचिह्नञ्च शिखैव विद्यते। यज्ञप्रधानमेवार्य्याणां जीवनं विद्यत इत्यत एव ते यज्ञसूत्रं शिखां च बिभ्रति। लक्ष्यञ्चाध्यात्मदं स्यात्, जीवनञ्च यज्ञमयम् अर्थतः सर्वथा सर्वदा च स्वीया चेष्टा यज्ञप्रधानैव स्यादित्युभयमेव शिखासूत्रयो मौलिकं रहस्यं परमोपनिषदस्तीति न विस्मरणीयम्। वेदोपनिषत्स्वरूपायां गीतायामुक्तमेव भगवता—

"अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।
स संन्यासी च योगी च निरग्निर्न चाक्रियः॥
यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।
नह्यसंन्यस्तसंकल्पो योगी भवति कश्चन॥
आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥
यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते॥
उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥

इत्येवं बुद्धिमनसोः सर्वदोर्ध्वीकरणाभिप्रायेणैव शिखाधारणस्य विधिः प्रथमं सदाचारमार्गे निवेशितो विद्यते। शिखायामेव सर्वेषां देवानां पीठस्थापना भवितुमर्हति। अत एव शिखां बध्वैव शास्त्रीयं कर्म प्रारभ्यते। विना शिखाबन्धनं किमपि दैवं पैत्र्यं वा कर्म नैव भवितुमर्हति।

यदा शिखायां दैवस्य पीठस्य प्रतिष्ठा क्रियते तदा मनोबुद्ध्योरुर्ध्वीकरणे प्रबलं साहाय्यमासाद्यते।

इत्येवं यज्ञमयजीवनविषयेऽपि तत्रैव श्रीमद्भगवद्गीतायामभिहितम्—

नियतं कुरु कर्म त्वं कर्मज्यायो ह्यकर्मणः।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः॥
यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर॥

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥
देवान्भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥
इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तानप्रदायैभ्यो यो भुंक्ते स्तेन एव सः॥
यज्ञशिष्टाशिनः संतो मुच्यन्ते सर्वकिल्विषैः।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्॥
अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्म समुद्भवः॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥

कर्मैव जगतः सृष्टिस्थितिप्रलयनिमित्तं विद्यते। यद्धि कर्म सत्त्वगुणवर्द्धकं भवति तद्धर्मपदभाग्भवति, यच्च तमोगुणसमेधकं भवति तदेवाधर्मशब्देनोच्यते। यद्धि धर्मकृत्यं भगवत्प्रसादमासाद्य दैवस्य जगतः सञ्चालकानां देवपदाधिकारिणां संवर्द्धननिमित्तं भवति, तदेव हि यज्ञशब्दवाच्यम्। अत एव हि विविधानां कर्मयज्ञोपासनायज्ञ-ज्ञानयज्ञादीनां वर्णनम् वेदशास्त्रप्रभृतिसंस्कृतवाङ्मयमहार्णवे समुपलभ्यते।

श्रीमद्भगवद्गीतायामपि विविधश्रेणिविभक्तानां विविधानां यज्ञकर्मणां प्रतिपादनं चतुर्थाध्याये समुपलभ्यते। अत एवाध्यात्मिकोन्नतिशीलाया आर्य्यजातेः कायवाङ्मनोबुद्धिभिः सह विविधानां यज्ञानां विविधः सम्बन्धो दृश्यते। अन्यच्चायमेवार्य्यजातेर्महिमा सर्वोपरि विद्यते यत्तस्या जीवनं यज्ञमयमुच्यते। यज्ञसूत्रधारणं हि आर्य्याणां जातीयं चिह्नं विद्यते। यज्ञसूत्रे हि यास्तिस्रो ग्रन्थयो भवन्ति, तास्तु त्रिविधानामाध्यात्मिकाधिदैविकाधिभौतिकीनां शुद्धीनां परिचायिका भवन्ति।

आर्य्यजातेः सदाचारमयजीवनव्यापारे आध्यात्मलक्ष्यस्य तदीययज्ञमयजीवनस्य च कीदृक् सुदृढः सम्बन्धो विद्यते, स हि ब्रह्मयज्ञीयप्रकरणस्थानामधोनिर्दिष्टानां मन्त्राणां परिशीलनात्स्फुटं प्रतीयते—

आचारमूला जातिः स्यादाचारः शास्त्रमूलकः।
वेदवाक्यं शास्त्रमूलं वेदः साधकमूलकः॥
साधकश्च क्रियामूलः क्रियाऽपि फलमूलिका।
फलमूलं सुखं देवि! सुखमानन्दमूलकम्॥

आनन्दो ज्ञानमूलस्तु ज्ञानं वै ज्ञेयमूलकम्।
तत्त्वमूलं ज्ञेयमात्रं तत्त्वं हि ब्रह्ममूलकम्॥
ब्रह्मज्ञानं त्वैक्यमूलमैक्यं स्यात्सर्वमूलकम्।
ऐक्यं तद्धि महेशानि भावातीतं सुनिश्चितम्॥
भावातीतमिदं सर्वं प्राकाश्ये भावमात्रकम्।
नास्त्यत्र संशयः कोऽपि सत्यं सत्यं वदाम्यहम्॥

आर्य्यसंस्कृतौ हि शौचाचारतः समारभ्य सर्वेष्वपि कायिक-मानसिक वाचनिक-बौद्धिककर्म्मसु अध्यात्मलक्ष्यमेव प्रतिष्ठितं विद्यते। इत्युपरि निर्दिष्टमन्त्रैः स्पष्टमेव प्रतिभासते। शिखिनां द्विजानां गायत्रीमन्त्रेण शिखाबन्धनं कर्तव्यं भवतीति शास्त्रीयाज्ञा विद्यते। तथाहि—

गायत्र्या तु शिखां बद्ध्वा नैर्ऋत्यां ब्रह्मरन्ध्रतः।
जुटिकाञ्च ततो बद्ध्वा ततः कर्म समारभेत्॥

तदानीमेतदेव स्मरणीयं भवति यद् ब्रह्मविष्णुमहेशादयः सर्वेऽपि देवा अन्यैश्चापि देवपदाधिष्ठातृभिर्देवैः सहिता अस्यां शिखायां देवपीठभूतायामधिष्ठानं कुर्वन्तु इति। शिखामुक्तिकाले तु एष मन्त्रः पठ्यते—

गच्छन्तु सकला देवा ब्रह्मविष्णुमहेश्वराः।
तिष्ठत्वत्राचला लक्ष्मीः शिखामुक्तिं करोम्यहम्॥

एतेन मन्त्रेणतत् सिध्यति यत् शिखाबन्धनावसरे सर्वेषां देवानां पीठाधिवासकल्पना क्रियते। सर्वदेवशक्तीनाञ्च तत्रैव बन्धनं क्रियते। शिखामुक्तिकाले चैतत् कल्प्यते यत् सर्वेऽपि शिखाधिष्ठिता देवाः सम्प्रति मया विसर्जिताः स्व-स्वाभीष्टदेशं यथा सुखं गच्छन्तु, एकैव लक्ष्मीदेवी अत्र सर्वदा तिष्ठतु। तस्या इतो गमनं न भवत्विति स्पष्टमेव प्रतीयते।

एतस्यायमेवाभिप्रायो व्यज्यते यत् वैष्णव्याः शक्तेः श्रीलक्ष्मीदेव्यास्तत्राचलप्रतिष्ठया सर्वा अपि देवशक्तयः पुनराहूता अनायासेनैव तत्रागमिष्यन्तीति। एवं हि यज्ञसूत्रम् यज्ञमयजीवननिर्वाहायैव सर्वदा स्वतनौ सन्धार्य्यते। तत्र प्रत्यक्षमेव प्रमाणमधो निर्दिष्टान्मन्त्रादासाद्यते—

यज्ञार्थं धार्य्यते सूत्रं यज्ञं ब्रह्मण्यमिष्यते।

आर्य्यजातेर्जीवनं केवलं यज्ञमयमेव स्यादित्यत एवार्य्येषु द्विजातिवर्णेषु यज्ञोपवीतसंस्कारो वितन्यते, तथा यज्ञोपवीत-धारणार्थं विशेषविधिरपि विद्यते। इत्युभयोरपि रहस्यपूर्णयोरनयोः संस्कारयोर्मूलोपपत्तिः सर्वैरपि धर्मशास्त्रमर्म्म-

वेदिभिर्विद्वद्भिः स्मरणीया नैव कदापि विस्मरणीयेति आर्य्यसंस्कृतिसंरक्षणमन्त्रः संक्षेपेणैवात्राभिहितः। इत्थमेवार्य्याणामन्येषामपि संस्काराणामाश्चर्य्यकरं विज्ञानं विद्यते। तेषामपि यथावसरं विवरणं विधास्यते। सम्प्रति संक्षेपेणैव विरमामः।

—०—

## वेदाः शास्त्राणि च।

प्रत्येककल्पादौ सत्ययुगारम्भसमये भगवान् वेद आविरस्ति। "अनन्ता वै वेदाः" इति शास्त्रीयसिद्धान्तमनुसृत्य अनन्तानामपि वेदराशीनामेकदैवाविर्भावो न सम्भवति इति तत्र तत्र कल्पादावपि यथावश्यकमेव तत्स्वरूपप्रकाश इत्यवधेयम्। वेद एव निजानन्त्यमनादित्वञ्चाभिधत्ते तद् यथा—

"अनन्ता वै वेदाः, वेदार्थस्मरणं स्मृतिः"। इति श्रुतिः।

"अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः" इति वाजसनेयिब्राह्मणोपनिषत्। अनाद्यनन्तरूपस्य महतो भूतस्य निःश्वसितमप्यनाद्यनन्तमित्यत्र नाणीयानपि सन्देहलेशः।

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी विद्या यतः सर्वाः प्रवृत्तयः॥" इति महर्षि व्यासः।
ब्रह्माद्या ऋषिपर्य्यन्ता द्रष्टारो न तु कारकाः।
युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥
अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिध्यर्थम् ऋग्यजुःसामलक्षणम्॥
प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥ इति स्मृतयः।
"नैव वेदाः प्रलीयन्ते महाप्रलयेऽपि।" इति मेधातिथिः।

"प्रलयकाले सूक्ष्मरूपेण परमात्मनि वेदराशिः स्थितः।" इति कूल्लूक भट्टः।

कल्पादौ सत्ययुगारम्भे वा नित्यशब्दस्वरूपो वेदस्त्रिकालाबाधितो याथातथ्येन महर्षिभिः स्वीयेषु समाधिस्थान्तःकरणेषु श्रूयते। परन्तु "वेदार्थस्मरणं स्मृतिः" इति श्रौतसरणिमनुसृत्य पुराणादि स्मृतिशास्त्राणि भावरूपेण महर्षीणामन्तःकरणेषु प्रकाशन्ते। पुराणादिशास्त्राणि भावरूपेणैव नित्यानि न शब्दरूपेण, किन्तु वेदस्तु शब्दस्वरूपेणापि नित्य इति निर्गलितार्थः। कालप्रभावतो हि वेदस्य मृत्युलोके

केवलमाविर्भावतिरोभावौ भवतः। एतत्कल्पादौ वेदस्य ११८० शाखा आसन्। सम्प्रत्यल्पा एव लभ्यन्ते। वाङ्मयस्वरूपाया भगवत्या भारत्याः पुस्तकस्वरूपाणि पञ्च श्रोतांसि समुपलभ्यन्ते। तद् यथा शुक्लयजुर्वेदसंहितायाम्—

"पञ्च नद्यः सरस्वतीमपि यन्ति सस्रोतसः।
सरस्वती तु पञ्चधासो देशेऽभवत् सरित्॥" इति।

स्मृतावपि—

"ब्रह्माण्डपिण्डनादाश्च विन्दुरक्षरमेव च।
पञ्चैव पुस्तकान्याहु र्योगशास्त्रविशारदाः॥" इति।

वैदिकशब्दस्वरूपाणां योगयुक्तान्तःकरणेषु यथावत् श्रवणं स्मार्तभावानां च प्रकाशनं भौतिकेन पाश्चात्यविज्ञानेनापि सिध्यति। जडरूपेण 'रेडियो' नामकयन्त्रेण सहस्राधिकयोजनदूरप्रभवा अपि गीत-वादित्र-वार्त्तालापादिशब्दा यथावत् तत्क्षणेनैव यथेष्टदेशेषु यदि प्रकाशमाप्नुवन्ति, तर्हि योगयुक्तसमाधिस्थचैतन्यावच्छिन्नान्तःकरणेषु ब्रह्मलोकात् ब्रह्मानुशासनभूतो वेदराशि र्यथावत् श्रूयते चेत् किमत्र चित्रम्? यदि 'थाट् ट्रान्सफर' प्रभृति स्पीच्युअल" विज्ञानेन तद्विज्ञानविशेषज्ञः कश्चित् कस्यचित् पुंसो न केवलं मनसो गतिं परावर्त्तयति, प्रत्युत तत्र भावान्तरमपि प्रादुर्भावयति, तदा देवलोकस्थिता अपि महर्षयः मृत्युलोकवास्तव्यविद्वद्वृन्दपरमपवित्रचेतस्सु निजान् लोकशिक्षणविचक्षणान् जगद्धितकरान् भावान् प्रकटयन्ति चेत् किं तत्र विचित्रम्? राद्धान्तोऽयं सद्विचारकोटीं नातिक्रामति, युक्तिशून्यतां च नाधिगच्छति! नाद-विन्दु-ब्रह्माण्ड-पिण्डाक्षरात्मकानीति पञ्चधा पुस्तकस्वरूपाणि शास्त्रेषु समुपलभ्यन्त इति पूर्वमभिहितम्। एषु पञ्चस्वपि केवलमक्षरमयं पुस्तकं मृत्युलोके, अन्यानि चत्वारि देवलोकेषु तिष्ठन्ति। केवलमक्षरमयानि नश्वराणि, नान्यानि। तानि तु देवलोकेषु नित्यं तिष्ठन्ति। भगवान् वेदो हि नादपुस्तकनाम्नाऽभिधीयते। स च सर्गादौ सत्ययुगादौ वा प्रणवादाविर्भूय ब्रह्मणो लोकात्प्रेर्य्यमाणो भारतद्वीपनिलयानां ब्रह्मर्षि-राजर्षि-परमर्षिप्रभृतीनां समाधिनिगृहीत-सात्त्विकचेतस्सु यथावत् प्राकट्यमवाप्नोति। एकोऽपि वेदः कालेन ऋग्यजुःसामाथर्वभेदेन चतुर्धा विभक्तः। चतुर्णामेषामेकैकस्यापि संहिता-ब्राह्मणोपनिषद् भेदेन त्रयो भेदाः। अनन्तराशे र्वेदस्य सम्प्रति कलिकालेऽत्र अणीयान् अंशः समुपलभ्यते। द्वितीयं विन्दुरूपं पुस्तकं देवलोकनिवासिभिर्हर्षिभिः प्रेर्यमाणं भारतीये द्वीपे प्रकाशते। यथा मनुसंहिता, पुराणानि च। एतादृशपुस्तकानां देशकालानुसारं प्रकाशने ज्ञानप्रवर्त्तकमहर्षिप्रेरणैव निदानमव-

गन्तव्यम् । तृतीयं ब्रह्माण्डपुस्तकं ब्रह्माण्डाधीश्वरहरिहरादिदेवप्रेरणया जगति प्रकाश्यते । यथा च तन्त्रेषु आगमरूपाणि, भगवद्गीता, शिवगीतादिशास्त्राणि इत्यादि । चतुर्थं किल पिण्डपुस्तकं दैवलोकनिवासिभिरलौकिकदैवशक्तिसम्पन्नैः प्रेर्य्यमाणमाविर्भवति । यथा किल आयुर्वेदशास्त्राणि, मन्त्रशास्त्राणि, संगीतशास्त्राणि । बहुविधान्यासुरशास्त्राण्यपि पिण्डपुस्तकान्तर्गतानि । यतोऽसुरा अपि देवयोनय एव । लोकानां रक्षणार्थम् आध्यात्मिकसमुन्नतिसाधनार्थं च यानि शास्त्राणि, तानि दैवानि, तद्विपरीतान्यासुरशास्त्राण्यवधेयानि । चतुर्धा विभक्तान्यप्येतानि नाद-विन्दुब्रह्माण्डपिण्डपुस्तकानि विविधवर्णैर्लोके व्यक्तानि अक्षररूपपुस्तकाख्यया-ऽभिधीयन्ते । साधारणमानवबुद्धिविलसितान्यपि पुस्तकानि अक्षरपुस्तकान्तर्गतानि सन्ति तदेकमिदमक्षररूपं पुस्तकं नश्वरं भवति, नान्यानि इति शास्त्रसिद्धः सिद्धान्तः । चतुर्विधानि अपि उपर्य्युक्तपुस्तकानि शब्दरूपतो वा भावरूपतो वा दैवादेव जगतः समुपलभ्यन्त इति सिद्धान्तोऽन्यधर्ममतावलम्बिभिरपि समर्थ्यते । खीस्त-माहम्म-दादीनि अवैदिकान्यपि धर्ममतानि, वेदविरुद्धानि बहूनि हैन्दवान्यपि सम्प्रदाय-मतानि स्वस्वसम्प्रदायमतपुस्तकानां दैवादेव जगतः समुपलब्धिं मन्यन्ते । वैदि-कानि अवैदिकान्यपि वा मतान्तराणि तत्तद्धर्मपुस्तकानां दैवेन जगता सह सम्बन्ध-मामनन्त्येव । सनातनधर्मावलम्बिनां गवेषणाशक्तिः, अधिकरणशक्तिः, दैवजगद्-विज्ञानशक्तिश्च सर्वोत्कर्षं प्राप्नोति न तद्रहस्यज्ञानमन्यदेशीयविदुषामस्ति । अतस्ते विविधमनर्थजल्पनकल्पनमाचरन्तो दृश्यन्ते । वैदेशिकज्ञानालोक-प्रकाशितबुद्धयो भारतीया अप्यनेके विद्वांसो वेदशास्त्रसमयनिर्द्धारणे वृथैव चेष्टन्ते । पूर्णरूपतः स्वीयशास्त्राणामनध्ययनेनैव कारणेन ते भ्राम्यन्ति । भवत्येवाऽनुकृतिपरायणा प्रमादग्रस्ता जातिरदूरदर्शिनीति ।

---

## पञ्चकोषविज्ञानम् ।

जीवमस्य यदाऽविद्या जनयेत्स्वप्रभावतः ।
चिज्जडग्रन्थिमेतद्धि वपुः कारणमुच्यते ॥
स्थूलैश्च पञ्चभिर्भूतैः स्थूलं निर्मीयते वपुः ।
परिशिष्टैस्तत्त्वजातैः सूक्ष्मो देहः प्रजायते ॥
एतद्देहत्रयस्यैव देवाः ! आवरणान्मम ।
स्वरूपं न प्रकाशेत शुद्धं नित्यमपि स्वयम् ॥

एतदेवास्ति वेदेषु वर्णितञ्च क्वचित् क्वचित् ।
पञ्चकोषाभिधानेन देवाः ! आवरणं ननु ॥
पञ्चभ्यः स्थूलभूतेभ्यः कोषो ह्यन्नमयो भवेत् ।
कोषादन्नमयादेव स्थूलमुत्पद्यते वपुः ॥
केवलोऽन्नमयः कोषः पतेन्मृत्युक्षणे सुराः ।
कोषस्यान्नमयस्यैव निरीक्ष्य परिवर्तनम् ॥
अज्ञास्तं जीववर्गस्य मृत्युमाहुर्विनाशकम् ।
मिलिताः पञ्चप्राणा मे सूक्ष्मशक्तिस्वरूपिणः ॥
पञ्चकर्मेन्द्रियैः सार्द्धं कोषः प्राणमयो भवेत् ।
असावेव सुपर्वाणः ! कोषः प्राणमयो महान् ॥
युष्माकं खलु लोकस्य सम्बन्धो मृत्युलोकतः ।
अवस्थापयते नूनं द्वयोर्हि स्थूलसूक्ष्मयोः ॥
मिलित्वा मनसा सार्द्धं पञ्चज्ञानेन्द्रियाण्यहो ।
नाम्ना मनोमयं कोषं जनयन्तेतरां सुराः ! ॥
स्याद्विज्ञानमयः कोषो बुद्धिर्ज्ञानेन्द्रियैः समम् ।
देवाः ! मनोमयः कोषः कोषः प्राणमयस्तथा ॥
विज्ञानमयकोषोऽपि सम्भूयैतत्त्रयं सह ।
शरीरं प्राणिनां सूक्ष्मं समुत्पादयतेतराम् ॥
शरीरं सूक्ष्ममेवाहो दशामेत्यातिवाहिकीम् ।
अधिलोकान्तरं सर्वं शक्नुयाद् भ्रमितुं सुराः ! ॥
कारणाख्यवपुर्भूताऽविद्यायां नन्वत्रस्थितः ।
प्रियमोदप्रमोदैर्हि भावैरेभिः समन्वितः ॥
आत्मस्वरूपावरको देवाः ! मलिनसत्त्वकः ।
नाम्नाऽऽनन्दमयः कोषः कथ्यते वेदपारगैः ॥
एतदेवास्ति जीवानां शरीरं कारणं ध्रुवम् ।
चतुर्विंशतितत्त्वानामयं हेतुर्यतोऽस्त्यहो ॥
अविद्याऽऽवरणादेव मत्प्रधानस्वरूपयोः ।
स्वरूपं न प्रतीयेत कैश्चिज्जीवगणैरिह ॥

—०—

षोडशे वर्षे १६] आश्विन-कार्तिक पूर्णिमयोः१९९७अक्टूबर नवम्बर १९४० [४-५ संख्ये

अखिल भारत वर्षीय

संस्कृत विश्व विद्यालयः

तस्य मुखपत्रम्

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—

अवधेशप्रसादशर्मा द्विवेदः

उद्गम—स्थानम्—

श्रीभारतधर्ममहामण्डलम्, जगत्गंज, काशी।

—:०:—

वार्षिकं मूल्यं मुद्रात्रयम्।

[illegible]केभ्यः ५) बहिर्भारतम् ६) छात्रेभ्यः १)

# विषय-सूची ।

# सूर्योदयः।

षोडशे वर्षे १६ } आश्विन कार्तिकपूर्णिमायाः १९९७, अक्टूबर नवम्बर १९४०। { ४, ५ संख्ये

## शोकोच्छ्वासः।

स विश्ववन्द्यो विबुधो महात्मा।
पञ्चाननो देवगिरां महाब्धिः॥
विहाय काशी-विबुधावलीं हा!
गतोऽद्य पञ्चानन-देवभूयम्॥

इह श्रीकाशीधाम्नि विगताश्विनशुक्लैकादश्यां पवित्रतिथौ रात्रौ पादोननववादन-वेलायां भगवत्या ।भागीरथ्यास्तीरवर्तिनि चतुष्षष्टिदेवीघट्टस्थे स्वतन्त्रनरपति-श्रीमदुदयपुरमहाराजप्रासादे त्यक्तमहामहोपाध्यायपदाः श्रीभारतधर्ममहामण्डलतो लब्धमहामहाध्यापकपदवीकाः सर्वतन्त्रस्वतन्त्राः पञ्चाननतर्करत्नमहोदयाः पञ्चसप्तति-वर्षावस्थायां शिवसायुज्यमगमन्निति निशम्य सर्वोऽपि विद्वत्समाजो हिन्दुसमुदायो विशेषतश्च सनातनधर्मवर्गो विषण्णचेताः सञ्जातः। पञ्चाननतर्करत्नमहोदया अद्यत्वे ब्राह्मणवर्गे विद्वत्समाजे सर्वमूर्द्धन्या आसन्निति केषां नास्ति विदितम्। ते हि आमृत्यु वङ्गीयब्राह्मणसभायाः सभापतिपदासीना अभूवन्। तथैव ते आमृत्यु श्रीकाशीपण्डितसभायाः प्रधानसभापतिपदं विभूषितवन्तः श्रीभारतधर्ममहामण्डल-प्रतिष्ठापितस्य, अखिल-भारतीयसंस्कृतधार्म्मिकाध्यात्मिकविश्वविद्यालयस्य प्रधान-सञ्चालका आसन्, अस्य सूर्य्योदयपत्रस्यापि त एव प्रधानसम्पादकपदासीना अभूवन्। किं बहुना काश्यां कोऽपि धार्मिकविवादास्पदविषयः तेषां सम्मतिमन्तरा-ऽग्रेसरो न भवति स्मेति सर्वेऽपि काशीपण्डितसभासदस्या जानन्ति। तेषां संक्षिप्त-जीवनचरितमिह निर्दिश्यते किञ्चित्।

तेषां पितृपादाः पं० नन्दलालविद्यारत्नमहोदयाः अपरिग्रहशीलाः तपस्विप्रवरा आसन्। दशरूप्यकेणैव मासिकायेन संसारयात्रां सञ्चालयतान्तेषां बहुवर्षावधि

कोऽपि सन्तानो नाभूत्। ततश्च तैः श्रीतारकेश्वरमहादेवस्याराधना समारब्धा। तदनन्तरम् कतिपयैर्वर्षैः सन्तुष्टस्य आशुतोषस्य भगवतः शिवस्य प्रसादात् तेषां त्रयस्त्रिंशद्वर्षावस्थायां शशिमुखीदेव्यां धर्मपत्न्यां पुत्ररत्नमजायत । तस्यैव पञ्चानन इति नामकरणमभूत्, यश्चाग्रे वयसि पञ्चाननतर्करत्नतां जगाम। स हि बालः पञ्चवर्षीय एव स्वपितुरुत्सङ्गे क्रीडन्नपि श्रीमद्भगवद्गीतायाः १०, ११, १२ दशमैकादशद्वादशानामध्यायानां कण्ठत एव पाठं कुर्वन् एतादृगभ्यासं चकार, यो हि वृद्धावस्थायामपि तादृश एवाभ्यस्त आसीन्न विस्मृतोऽभूत्। षष्ठे च वर्षे स्वमातृष्वस्रेयमुखात् अभ्यस्यमानं प्रथमं पद्यं "श्रियः पतिः श्रीमति शासितुं जगत्' इत्यादि श्रुत्वा तदनुरूपमेवकं छन्दोऽन्तरसम्बद्धं पद्यमुच्चारयामास—"कियः पतिः कः पतिदेवसूर्य्यः नारायणस्य ग्रहकांक्षिणीकः" इति। अस्य पद्यस्यार्थोऽपि श्रीदुर्गादेवीपरको विद्यते तैरेव पञ्चाननतर्करत्नमहोदयैः कृतः स च नात्र प्रकाश्यते स्थानाभावात्। नवमे हि वर्षे सुपद्मव्याकरणं समापयद् यन्मरणकालावधि ससूत्रसंख्याकं स्मृतिपथारूढमासीद्। त्रयोदशे हि वर्षे राजकीयसंस्कृतोत्तमपरीक्षां दत्वा काव्यकण्ठ इत्युपाधिं लब्धवान् चतुर्दशे वर्षे शुम्भनिशुम्भवधनामकं महाकाव्यं व्यरचयत्।

ततो हि म० म० राखालदास न्यायरत्नस्य पार्श्वे न्यायशास्त्रं पठितुमारब्धवान्। तदीयञ्च प्रतिभाप्रकर्षं दृष्ट्वा प्रखरप्रज्ञसुशिष्याध्यापनकामनया म० म० शिवरामसार्वभौममहोदया महताऽनुरोधेन तान्स्वपार्श्वे संस्थाप्य बाधान्तं गादाधरं नव्यन्यायं पाठयामासुः। तदानीमेव मधुसूदनस्मृतिरत्नमहोदयेभ्यस्ते स्मृतिशास्त्रमप्यधीयाना आसन्। इदानीन्तनाश्छात्रास्तु केवलवैयाकरणाः, शुष्कतार्किका एव भवन्ति। परन्तु तर्करत्नमहोदयास्तु इत्थं व्याकरणन्यायस्मृतिशास्त्रमधीत्याप्यसन्तुष्टा इह काश्यां परमप्रसिद्धविद्वद्भ्यः म० म० श्रीताराचरणतर्करत्नमहोदयेभ्यो वेदान्तशास्त्राध्ययनधियाऽऽजग्मुः। परन्तु तत्पार्श्वे आगमनानन्तरम् कियद्भ्य एव घस्रेभ्यस्ताराचरणमहोदयानां स्वर्गारोहणञ्जातमिति न तेषामिच्छापूर्तिरभूत्। किन्तु कियत्कालं स्थित्वेह काश्यां सस्वरयजुर्वेदाध्ययनं चक्रुः। यद्यपि कियतां मन्त्राणामेवाभ्यासस्तैः कृतः। परन्तु तेषां स्मृतेः प्राबल्यादधुनापि सस्वरमन्त्राः तादृशा एवोपस्थिता आसन् न विस्मृता अभूवन्निति। इहैव म. म.प्रमथनाथतर्कभूषणमहोदयैः तर्करत्नमहाशयानामतिहार्दं सौहार्दमभूत्। तच्च तारामैत्रमेवं वृद्धिमुपागमत् यत्तर्करत्नमहोदयैः सह तर्कभूषणमहोदया भट्टपल्यां गत्वा तेषां सतीर्थ्या भूत्वा स्वाध्ययनं प्रारेभिरे। तत्रैव तौ उभौ अपि महोदयौ अधीयानौ प्रबलविधिवशात् परस्परसम्बन्ध-

भाजावप्यभूताम् । तत्र तर्करत्नमहोदयानामनुज्ञया तर्कभूषणमहाशयानामुद्वाह-संस्कारोऽभूत् । तत्रैव हृषीकेशशास्त्रिभ्यः सांख्यादिशास्त्रमधीत्य प्राप्तप्रगाढपाण्डित्या-स्तर्करत्नमहोदयाः परिणयं कृत्वा गृहकार्य्येण सहैवाध्ययनकार्य्यमपि कुर्वन्तोऽभूवन् । ततो नवदशवर्षे दारिद्र्य-पीडितास्तर्करत्नमहोदया उद्विग्नाः सन्तो गृहाद्बहिर्भूताः । इत-स्ततो भ्रमन्त इन्दौरनगरे धारानगरे च गत्वा तत्रत्यान् राजपण्डितान् शास्त्रार्थे पराजित्य राजसम्मानं लब्ध्वा पुनर्गृहं परावृत्ताः । तत्रागत्य स्वप्ने दुर्गादेव्याः स्वगृहागमनप्रसादमुपलभ्य स्वमन्दिरे दुर्गादेव्याः प्रतिष्ठां कृतवन्तः । २१ एक-विंशतिवर्षे च स्वगृहे एव व्यवस्थितां चतुष्पाठीं चालयन्तस्ते शिष्यानध्यापयितुं प्रारेभिरे । ततश्च देव्याः कृपया सर्वत्र विद्वत्सत्कारमहोत्सवेषु तेषां निमन्त्रणानि प्रारब्धान्यभूवन् । तत्र च शास्त्रार्थादिना प्रख्याततरयशसां तेषां प्रगाढपाण्डित्यमुप-लभ्य तात्कालिकेन प्राड्विवाकमुख्येन इन्द्रनाथवन्द्योपाध्यायमहोदयेन प्रशंसिताः तद्द्वारैव योगीन्द्रवसुना वङ्गवासिमुद्रणाध्यक्षेण जातपरिचया भूत्वा नियतं मासिकं पुरस्कारं गृहीत्वा वङ्गवासिमुद्रणालये शास्त्राणां वङ्गभाषानुवादकर्मणि व्यापृताः । ततः प्रभृति श्रीदेव्याः प्रसादतः तेषामार्थिकी अवस्था समुन्नता सञ्जाता । तत्रैव स्थित्वा सर्वेषां पुराणानां सर्वासाञ्च धर्मसंहितानां महाभारत-रामायणादीतिहास-ग्रन्थानां मन्वादिस्मृतीनां वङ्गानुवादं चक्रुः । तदवसरे एव सर्वमङ्गलनाम्नैकं श्लिष्ट-काव्यं सांख्यतत्त्वकौमुद्याः पूर्णिमाटीकामुपस्कारस्य परिस्कारटीकां धर्मसिद्धान्त-नामकमेकं स्वतन्त्रग्रन्थञ्च निर्मितवन्तः ।

एव्ववसरेष्वेव ३७ सप्तत्रिंशद्वर्षावस्थायां तेषां पत्नीवियोगोऽभूत् । तदानीन्त्रयः पुत्रा आसन्निति गृहस्थाश्रमपराङ्मुखास्ते श्रीभारतधर्ममहामण्डलसञ्चालकेभ्यः पूज्य-पाद श्रीस्वामिज्ञानानन्दमहाराजेभ्यस्तथा वैद्यनाथधामस्थेभ्यः श्रीब्रह्मचारिबालानन्द महोदयेभ्यश्च योगशिक्षाकर्मणि व्यापृताः । तदानीमेव वङ्गदेशे विधवाविवाहप्रचार-स्यान्दोलनं प्रवृत्तमासीदिति तद्विरोधपक्षे तर्करत्नमहोदया आसन् । ते स्वसिद्धान्त-संरक्षणाय सर्वस्वत्यागमसहन्त । परन्तु विधवाविवाहखण्डनतो न परावृत्ताः । ततश्च तत्रैव वङ्गदेशे वङ्गविच्छेदनिमित्तीकृत्य विदेशिवहिष्कारस्य स्वदेशिप्रचारस्य चान्दोलनं प्रवृत्तम् । तत्र तेषां प्रवलं साहाय्यमासीत् । धर्मशास्त्रीयपद्धत्या सर्वेषामपि वैदेशिकवस्तूनां परित्यागस्य व्यवस्था तैः प्रदत्ता ( नेशनल कौंसिल एज्युकेशन ) राष्ट्रियशिक्षासभासंस्थापकेष्वन्यतमास्तेऽप्यासन् । आमृत्यु तस्याः सभायास्ते सदस्या आसन् । गुरुदासवनर्जी ब्रह्मबान्धवोपाध्यायप्रभृतिभिस्तेषां तदानीं महान् समादरः कृतोऽभूत् । तदानीमेव वङ्गदेशे नवयुवकानां शासनपरिवर्तनविषये क्रान्तिक्रमान्दो-

लनं प्रचलितमासीदिति तद्भ्रमेण तेषामपि राजपुरुषैर्निग्रहं कृत्वा कारागारे निरोधः कृतः । तत्रापि ते स्वाचाररक्षणार्थं सत्याग्रहं कृत्वा आर्य्यमर्य्यादयैव सर्वं स्वान्हिकं कृत्यं निर्वहन्तोऽरविन्दघोषप्रभृतिभिः तत्कारावासिभिः परिवृता दिनचतुष्टयं स्थिताः । ततश्च निःशङ्का राजपुरुषा निरपराधांस्तान् कारागारान्मुक्तांश्चक्रुः । ततः समागत्य वीररसप्रधानं भारतीयस्वातन्त्र्यनिदर्शकम् उदयपुरराज्यसम्बद्धेतिहासविषयकम् अमरमङ्गलनामकं संस्कृतम् ऐतिहासिकं महानाटकं प्रणिनिन्युः । (यस्य हिन्दी भाषायां गद्यपद्यात्मकोऽनुवादोऽपि श्रीमता पण्डितगोपालशास्त्रिदर्शनकेशरिमहोदयेन कृतो विद्यते । ) तस्मिन्नेवावसरे वङ्गीयब्राह्मणपण्डितानां सङ्घसंस्थापनकामनया धार्मिकाचारसंरक्षणाय च वङ्गीयब्राह्मणमहासभायाः प्रतिष्ठापनामपि ते कृतवन्तः । तत्कार्य्यं चालयन्तस्तत्सभापतिपदासीनास्ते पार्थाश्वमेधमहाकाव्यं दूतोक्तिरत्नमालां सप्तशतीदेवीभाष्यं बहून्यन्यानि च विविधग्रन्थरत्नानि व्यरीरचन् ।

पञ्चाशद्वर्षावस्थायां त्रयोविंशतिवार्षिके श्रीजीवन्यायतीर्थ एम्० ए० महोदये योग्यतमे स्व-पुत्रे गृहभारं विन्यस्य काशीनिवासबुद्ध्या इह विश्वनाथपुर्य्यां समाजग्मुः । अत्र च तेभ्यो भूदेववृत्तिप्रदानावसरे तेषां पाण्डित्यप्रकर्षं दृष्ट्वा दीनबन्धुन्यायरत्नमहोदयाः दशसंख्याकब्राह्मणपण्डितप्रदानक्षमां भूदेववृत्तिं केवलं तेभ्य एव प्रदातुं भूदेववृत्तिसञ्चालकान् प्रेरितवन्तः, किन्तु कालातिपातात्तन्नाभूत् । अपितु भूदेववृत्ते र्वितरणे तेषामेव प्राधान्यमासीत् ।

पुनश्च १९२७ मुनिनेत्राङ्काब्जमिते खैष्टे वर्षे महामहोपाध्यायपदेन, तत्त्यागं न ते कुर्य्युरिति सशङ्कैरेव साम्प्रतिकभारतशासकराजपुरुषैस्तेऽलङ्कृताः । परन्तु राजप्रतिग्रहपराङ्मुखास्ते तदीयं वस्त्रं शतसंख्याकं प्रतिवार्षिकं द्रव्यञ्च नैव गृहीतवन्तः । उपाधिरपि अग्रे समागत्य शारदाविधानविरोधान्दोलने त्यक्त एव तैः । तदानीमेव १९२९ अङ्कनेत्राङ्काब्जवर्षे शारदाविधानविरोधं निमित्तीकृत्य अखिल भारतीय ब्राह्मणमहासम्मेलनं तेषामेव प्रधानसमुद्योगेन प्रतिष्ठितमभूत् । यच्च स्वर्गीयलक्ष्मणशास्त्रिपादानामभावात् तद्योग्यपदाधिकारिणामभावेन तदीयसदस्यानाञ्च परस्परसहयोगाभावादिविविधकारणेन विनष्टप्रायं दृष्ट्वा तत उदासीनास्ते वेदान्तसूत्रे शक्तिभाष्यरचनायां व्यापृताः । शक्तिभाष्यसिद्धान्तपोषणार्थं तदीयसारसंग्रहप्रभृतीन् बहून् ग्रन्थानन्यादृशानपि व्यरचयन् । किं बहुना ते हि ग्रन्थलेखने सिद्धहस्ता आसन् । मृत्युशय्यायामासीना अपि ते महात्मानो विष्णुविक्रमनामकं महाकाव्यं प्रणीतवन्त इत्यहो ! वैदुष्यमहो ! पण्डित्यप्रकर्षता ! अद्भुतो लोकोत्तरो ग्रन्थप्रणयनाध्यवसाय ! आश्चर्य्यकरं कर्मकौशलम् ? ईदृशानामेव महापुरुषाणां कृतेऽभिहितं श्रीहर्षेण-

"वाग्जन्मवैफल्यमसह्यशल्यं गुणाद्भुते वस्तुनि मौनिता चेत् ।
खलत्वमल्पीयसि जल्पिते तु तदस्तु वन्दीभ्रमभूमितैव ॥" इति

परन्तु अस्माकमुपरि तु तृतीयपादगत एव दोष आपतति सूर्य्योदये स्थानाभावात् वियोगदुःखविक्षिप्तान्तःकरणतया चाधिकलेखावसराभावादिति किमग्रे ब्रूमः । तादृशानां महापुरुषाणां जन्म किञ्चिन्निमित्तमादायैव भवतीति पञ्चाननतर्करत्न-महोदया ब्राह्मण्यरक्षणायैव समवतीर्णा आसन् ।

श्रीशङ्कराचार्य्येणापि श्रीमद्भगवद्गीताभाष्येऽभिहितम्—"ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद् वैदिको धर्मस्तदधीनत्वाद्वर्णाश्रमभेदानाम् ।" एवं हि यत्र कुत्रापि तैर्लेशतोऽपि ब्राह्मणत्वहानिकरो भावो दृष्टस्तत्रैव क्रोधाग्निशस्त्रसम्भृता भूत्वा कर्मणा मनसा कायेन सर्वथापि तद्विरोधो विहितः । तेषां जीवनमध्ये द्वित्रकृत्व एवमवसरः समुपस्थितोऽभूत् यल्लोकशास्त्रमर्यादातः किञ्चिद्वैगुण्येन धर्मव्यवस्था-प्रदाने लक्षरूप्यकावधि द्रव्यप्राप्तिर्भवति स्म । परन्तु तैः तान् द्रव्यदातॄन् भर्त्सनापूर्वं स्वसम्मुखतो दूरीकृत्य तद्विरोधपक्ष एव गृहीतो न तत्कृते किमपि साहाय्य-माचरितम् । इत्येवं पवित्रचरितानां महामहाध्यापकानां सर्वतन्त्रस्वतन्त्राणां पं० पञ्चाननतर्करत्न-महोदयानां जीवनचरितविषये किञ्चित्संक्षिप्तं समभिधाय स्वीयश्रद्धाञ्जलिं समर्पयन्तो विरमामो वितरात् ।

---

## अहो ! शालग्रामशास्त्रिणः !

भाद्रमासस्य शुक्लप्रतिपदि लक्ष्मणपुर—( लखनऊ ) निवासिनां पण्डितप्रवराणां शालग्रामशास्त्रिणां देहावसानमभूदिति बज्रपातवृत्तान्तं श्रुत्वा विषण्णा वयम् । सुरभारत्या अनर्घरत्नानि क्रमेण विलुप्तानि भवन्ति इति महाशोकास्पदं संस्कृतभाषा-ध्यायिनां सुरसरस्वतीसमुपासकानाम् । स्वर्गीया इमे शालग्रामशास्त्रिणः सारस्वत-पथपथिकाः साहित्यव्याकरणयोः प्रधानपण्डिता आसन् । इमे हि दर्शनशास्त्राणा-मायुर्वेदविज्ञानस्य मर्मविदोऽभूवन् । इमे संस्कृतज्ञाः सन्तोऽपि हिन्दीभाषायाः परम-सेवका आसन् । एभिर्लिखिताः संस्कृतहिन्दीभाषामया बहवो ग्रन्था निबन्धाश्च सन्ति । साहित्यदर्पणस्य हिन्दीभाषामयी विस्तीर्णा मनोहरा पाण्डित्यपूर्णा टीका एभिर्लिखिता मुद्रिता विद्यते । यतश्चैतेषां हिन्दी-संस्कृत-साहित्यपाण्डित्यं प्रकटीभवति । इत्येवं संस्कृतज्ञा आयुर्वेदज्ञाश्चापि इमे यावज्जीवं हिन्दीभाषायाः सेवां विहित-वन्तः । सान्यत्र संस्कृतविद्वत्समाजे विरलतयैवोपलभ्यते । तदीयाकस्मिकनिध-

नेन संस्कृतभाषायाः सनातनधर्मस्य हिन्दीभाषायाश्च महती अपूरणीया च क्षतिर्जाता इति तद्वियोगशोकसन्तप्ता वयं तदीयकुटुम्बिभिः सह समवेदनां प्रकटयन्तः तदात्मशान्तये श्रीकाशीविश्वेश्वरमभ्यर्थयामहे ।

---

## विहारसंस्कृतशिक्षासुधारसमितिः ।

विहारप्रदेशो हि वैदिककालादारभ्य संस्कृतविद्यायाः प्रधानं केन्द्रं विद्यते । इहत्या जनक-याज्ञवल्क्य-संवादकथा श्रुतिनिबद्धा विद्यते । कुरुपाञ्चालानां विदुषां समवायो मिथिलायामेव भवति स्मेति बृहदारण्यकोपनिषत्प्रमाणयति । मण्डनमिश्र-वाचस्पतिमिश्रादयो महान्तो विद्वांसस्तत्रैव विहारे प्रादुरभूवन् । नालन्दाविश्वविद्यालयोऽपि बौद्धकाले विहारप्रान्तमेवालञ्चकार ।

इत्येवं संस्कृतवाङ्मयमहार्णवरत्नविभूषिते विहारप्रान्ते सम्प्रति संस्कृतशिक्षासुधारयोजनानिर्माणार्थं प्रान्तीयमहापण्डितानामेका समितिः तत्रत्यशासकशिक्षामन्त्रिभिर्निर्मिता विद्यते । तया समित्या प्रान्तीयानां प्रधानविदुषां संस्कृतपाठशालानाञ्च सम्मतिग्रहणार्थं प्रश्नावलीपत्राणि मुद्रापयित्वा प्रहितान्यासन् । विद्वांसोऽपि महता समुत्साहेन स्वकीयाः सम्मतीः प्रश्नानुरूपाः प्रहितवन्तः । तत्रेदानीं सर्वेऽपि प्रतीक्षन्ते यत्संस्कृतशिक्षासुधारसमित्या कीदृशो हि संस्कृत-शिक्षासुधारप्रकारो निर्दिश्यते ।

अद्यत्वे संस्कृत-शिक्षायाः प्रकारे नितान्तसङ्कोचः सञ्जातो विद्यते । साम्प्रतिकानां संस्कृतविद्यार्थिनां ज्ञानं तादृशं विस्तीर्णं नैव जायते यादृशञ्च प्राक्तनानां संस्कृताध्यायिनां भवतिस्म । रघुवंशकाव्यस्थकालिदासीयपद्यतो विज्ञायते यत्प्राक्तने काले संस्कृताध्यायिनामध्ययनविषयाणां महानासीत् विस्तारः । तथाहि—

"निर्वन्धसञ्जातरुषाऽर्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे कोटिश्चतस्रो दश चाहरेति ॥"

एतेन सूच्यते यच्चतुर्दशापि विद्या एकेनैव संस्कृतच्छात्रेणाधीता भवन्तिस्म तदैव तु विस्तीर्णा उदारा च दृष्टिः संस्कृतज्ञानां प्राक्तनानां दृश्यते । तथाहि—"दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम् ।" इति वशिष्ठस्मृतिवाक्यम् । विद्यया स्वजीविकार्जनमपि यथेच्छं सम्पाद्यमित्यपि संस्कृतज्ञानामेवोक्तिरस्ति "वश्यश्च पुत्रोऽर्थकरी च विद्या" इति संस्कृतस्यैव पद्यम् ।

अतश्च विहारसंस्कृतशिक्षासुधारसमितिसदस्यानामिदमावश्यकं कर्तव्यं भवति

यत्ते संस्कृतशिक्षाया देशकालानुरूपं समुचितं परिवर्तनं कृत्वा संस्कृतविद्यायाः संस्कृतविदुषाञ्च पुनरपि प्राक्तनं स्थानं प्राचीनञ्च गौरवं शीघ्रमेव समानयन्तु इति। राजकीय-शिक्षाविभागतः पुरस्कारदानेन संस्कृतभाषायाः क्षेत्रविस्तारस्य संस्कृतज्ञानां जीविकासमस्यायाश्च कृते पुनरपि व्यासपीठानां संरक्षणस्य पौरोहित्यकर्मणः समेधनस्य परिष्कारस्य च सर्वत्र विद्यालयादिषु भारतीय-संस्कृतिज्ञानस्यावश्यकत्वञ्च समीक्ष्य तादृशी पाठ्यपद्धतिः संस्कृतपरीक्षायां सन्निवेशनीया यया संस्कृताध्यायिनां विद्यार्थिनां सामान्यजनताभिः सह घनिष्ठः सम्बन्धः समेधितः स्यादिति।

——०——

## काशिक-राजकीय-संस्कृतपरीक्षा केन्द्रम्।

सर्वेऽपि संस्कृतज्ञा विद्वांसो विदन्ति यत् काशिक-राजकीय-संस्कृत परीक्षाया इह भारते विद्यते महान् समादरः। सर्वप्रान्तेऽपि संस्कृतमहाविद्यालयादिषु काशिक-राजकीय-परीक्षोत्तीर्णा विद्वांसोऽध्यापकत्वेन प्रायो नियुक्ताः सन्ति। सर्वप्रान्तीयाः पाठशाला अपि काशिक राजकीय संस्कृत-परीक्षया सम्बद्धाः सन्ति। प्रथमपरीक्षात आरभ्याचार्य्यपरीक्षां यावत् छात्रान् पाठयन्तः तांश्च परीक्षार्थं प्रेषयन्तो बहवो विद्यालयाः सन्ति। अस्मिन् संयुक्तप्रान्ते-(यू० पी०) ऽन्यत्रापि मुम्बापुर्य्यां गुर्जरप्रान्तादिषु च प्रथमामध्यमपरीक्षयोरेव परीक्षाकेन्द्राणि सन्ति। परन्तु शास्त्र्याचार्य्यपरीक्षयोः परीक्षाकेन्द्राणि कुत्रापि न सन्ति। केवलमिहैव वाराणसीक्षेत्रे काशिक-राजकीय-संस्कृत-पाठशालायामेव शास्त्र्याचार्य्यपरीक्षे गृहीते भवतः। सैवैकाकिनी काशिक-राजकीयसंस्कृतपाठशाला केवलं तयोः परीक्षयोः कृते परीक्षाकेन्द्रं विद्यते। "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" इति वेदान्तभागीयमन्त्रस्योदाहरणशिक्षायै एवं क्रियते किमिति न वयं विद्मः। प्रायः संकृतज्ञाः छात्राः सर्वथा अकिञ्चना भवन्ति। विद्यालयतो मासिकीं छात्रवृत्तिं लभमाना अध्ययनं कुर्वन्तः स्वाभ्यवहरणाच्छादनादिकृत्यं कथमपि निर्वहन्ति। त एव धूमयानादियात्रया बहुव्ययं कुर्वन्तोऽवश्यमत्रैव काशिकराजकीय-संस्कृत-पाठशालायामागत्य शास्त्र्याचार्यपरीक्षे दद्युरिति को लाभः परीक्षाबोर्डसदस्यानां भवति ? पश्यन्तु मुम्बा ( बम्बई ) पुरीत इह समागत्य शास्त्रिपरीक्षां ददतश्छात्रस्य धूमयानीयतृतीयश्रेण्यां यात्रां कुर्वतः महता सङ्कोचेन यदि व्ययो भविष्यति तदा ५०) पञ्चाशद्रूप्यकाणां व्ययः स्यात्। तथाहि १७) सप्तदशरूप्यकाणि आगमनस्य तावन्त्येव गमनस्येति ३४) चतुस्त्रिंशतो रूप्यकाणां केवलं वाष्पयाने व्ययः। अन्यावश्यकगृहभाटकभोजनादिव्ययं मेल-

यित्वा १४) चतुर्दशरूप्यकाणामेव व्ययो यदि मन्येत तर्हि ५०) पञ्चाशद्रूप्यकाणां प्रतिच्छात्रं व्ययो भवति । एवमेव यदि विंशतिः शास्त्रिपरीक्षायाः संस्कृतच्छात्राः परीक्षायाम् आयान्ति चेत्तदा सहस्ररूप्यकाणां व्ययो भवति । अहो ! इयतां रूप्यकाणां धूमयानादिषु संस्कृतच्छात्राणां व्ययः कथमनुमन्यते, कथं च सह्यते संस्कृतपरीक्षाबोर्डसदस्यैरिति वयं वेत्तुमसमर्थाः । अतश्चैवं प्रतिवर्षम् व्यर्थमेवाकिञ्चनानां संस्कृतच्छात्राणां धूमयानादिव्ययं संरक्षयन्तः प्रतिप्रान्तं शास्त्रिपरीक्षायाः केन्द्राणि कुर्य्युश्चेन्महान् स्यादुपकारः संस्कृतच्छात्राणाम् । संयुक्तप्रान्तेऽपि हरद्वारे ( मायापुर्य्यां ) लक्ष्मणपुरे ( लखनऊ ) कर्णपुरे ( कानपुरे ) राजस्थानप्रदेशे च सुदूरप्रान्ते च मुम्बापुर्य्यां ( बम्बई ) अहमदाबादनगरे पोरवन्दरे राजकोटनगरे च शास्त्रिपरीक्षायाः केन्द्राणि कर्तव्यानि । यतो न स्यात्संस्कृतच्छात्राणां व्यर्थमेवमर्थव्ययबाहुल्यम् । परीक्षाधिकारिणाञ्च नास्त्यत्र कोऽपि प्रयासोऽधिकः । यथा प्रथमामध्यमपरीक्षयोः प्रश्नपत्राणि तत्र तत्र केन्द्रेषु प्रहीयन्ते, एवमेव शास्त्रिपरीक्षाप्रश्नपत्राणि प्रहितानि भविष्यन्ति । नास्ति तत्रान्यः कोऽपि प्रयासः । इत्येवं यदि परीक्षाधिकारिणोऽभिलषेयुस्तर्हि अकिञ्चनानां संस्कृतच्छात्राणां महोपकारकरमिदं कार्य्यमनायासेनैव सुसम्पन्नं स्यादिति । आशास्ति अधिकारिणो ध्यानं दास्यन्तीति ।

---

## विद्यावाचस्पति-स्वर्गीय-शालग्रामशास्त्रिणः ।

यस्य विद्वद्वरेण्यस्य पार्श्वयोः शारदाश्रियौ ।
स्पर्द्धया स्म विराजेते विस्रस्तकलहस्मृती ॥ १ ॥
तापहापनशीलापि यस्य पीयूषपाणिता ।
सदा सन्तापयामास वलूलान् यमकिङ्करान् ॥ २ ॥
कृतपद्मदोद्धृती पावनीभावितक्षिती ।
यस्य पादावसेवन्त धीभुजश्च धराभुजः ॥ ३ ॥
यस्य दूर्वीकृताऽहार्या गोष्पदीकृतसागरा ।
पुरा कीर्त्तिर्दिवं याता हन्त सोद्य दिवं गतः ॥ ४ ॥
शालग्रामः सुधीः सोऽयं विद्वत्पद्मसहस्रपात् ।
द्योतयित्वा मयातोऽस्तं कृत्स्नं सारस्वतं जगत् ॥ ५ ॥

---

नानादर्शनाचार्य्याय ब्रह्मर्षिकल्पाय शक्तिभाष्यकाराय
श्रीमत्पञ्चानन-तर्करत्न-भट्टाचार्य-महोदयाय
प्रस्थानत्रय-शक्ति-भाष्य-समाप्त्युत्सवसभायां प्रदत्तमेतदभिनन्दनम् ।

वेदान्तेषु पुराण-तन्त्र-वचने मन्त्रे च यन्त्रे तथा,
प्रायः सर्वजनप्रमाण-पदवीमायाति या नित्यशः ।
यद्भक्तिः शिथिलापि वङ्ग-मिथिला-काश्मीरदेशादिषु
व्यासाद्यापि विभाति सा विजयतां शक्तिः पुनर्भारते ॥१॥
शक्तिप्रीतिं जनयितुमिह ब्रह्मसूत्रस्य भाष्यं,
शक्तेः पक्षे रचयितुमहो ! शङ्कराचार्य्य एव ।
धृत्वा स्वान्तं नववरवपुर्गौतमीयान्वयेऽसौ
नाम्ना पञ्चानन इति पुनर्भट्टपल्ल्यां वतीर्णः ॥२॥
ध्यात्वा तेनाद्यशक्तिं निरुपमसुधिया वेदमन्त्रं विचार्य्य,
शाक्तानां साधकानां चिरमभिलषितं रत्नसारं पृथिव्याम् ।
दत्तं वर्णाश्रमिभ्योऽमृतमयममलं शक्तिभाष्यं प्रणीय,
कार्य्यं पूर्णं विदित्वा गमनमभिलषत्येव सोऽयं स्वधाम्नि ॥३॥
शास्त्रे वादे कवित्वे विलसति विमला धीः सदा यस्य दीप्ता,
नानाग्रन्थप्रणेता सकलगुणमयः सर्वतन्त्रस्वतन्त्रः ।
कृत्वा सांख्यादिटीकामपि च करुणया सर्वविद्यार्थिनां यो
गच्छेदाचार्य्यतां तं सुरगुरुसदृशं नन्दयामोऽद्य भक्त्या ॥४॥
भूदेवविद्यालयतः सशिष्या अध्यापकाः प्रीतियुताः समेताः ।
तं शक्ति-भाष्योत्सव-संसदीत्थं प्रस्थानपूर्त्तावभिनन्दयन्ति ॥

—o—

## सन्ध्याभाष्यम् ।

[ छपरा मारवाड़ीसंस्कृतमहाविद्यालये प्रधानाध्यापकपदमधिष्ठिता आयुर्वेदाध्यापकाः श्रीमन्तः पण्डित श्रीश्यामनारायण चतुर्वेदमहोदयाः सम्प्रति सन्ध्याभाष्यम् संगृह्णन्ति । तत एवैकस्य प्रसिद्ध मन्त्रस्य भाष्यं सूर्य्योदये मुद्रापणार्थं तैः प्रेषितम् । यदधो विद्यार्थिनामुपकाराय किंचित् संक्षिप्य प्रकाश्यते । वयमनुरुध्मो यच्चे सर्वमपि भाष्यं पुस्तकाकारेण स्वतन्त्रतया पृथक् प्रकाशयन्तु । अनेन भाष्येण विद्यार्थिनामुपकारः स्यादिति वयं विश्वसिमः ( स० सम्पादकः ) ]

—o—

# अथातोऽघमर्षणं व्याख्यास्यामः ।

अघं पापं मृष्यते नाशनेन कर्मोक्षमत्वात्सह्यतेऽनेनेत्यघमर्षणम् सूक्तम्, कर्माप्यघमर्षणं वा। अघपूर्वकात् मृषेः "करणाधिकरणयोश्चे" तिल्युट्। तथा च वृद्धविष्णुः

"यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः ।
तथाघमर्षणं सूक्तं सर्वपापप्रणाशनम् ॥"

अत एव हलायुधोऽप्याह सर्वस्वे—"अघमर्षणसूक्तस्य ऋषिरेवाघमर्षणः। अनुष्टुप् च भवेच्छन्दो भाववृत्तन्तु दैवतम्। अश्वमेधावभृथके * विनियोगोऽस्य कल्पितः"। इति

परन्तु नत्वश्वमेधावभृथे कुत्रचिदिमा 'ऋतमित्यादय' ऋच उक्ताः तस्मान्नात्राश्वमेधावभृथे विनियोग इति वक्तव्यम्। वक्तव्यन्तु अघमर्षणे विनियोग इति। अघमर्षणस्य पापपुरुषनिरसनार्थत्वादत्र सन्ध्यायां नासा-जल-संयोगोऽघमर्षणमभिप्रेतम्।

विनियोगस्तु अनेन मन्त्रेण मयेदं कर्म कर्त्तव्यमिदानीमिति ऋष्यादि-ज्ञान-पूर्वकं कथनम्। तथाचाभियुक्तोक्तिः "अनेनेदन्तु कर्त्तव्यं विनियोगः प्रकीर्तितः" इति। योगियाज्ञवल्क्यस्तस्यानुक्रममाह यथा—"आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव चे"ति न त्वघमर्षणम् "ऋतमि" त्याद्येव, अन्येषामप्यघमर्षणत्वोक्तेः। यथा—"सहस्रशीर्षा" इति तृचस्याघमर्षणत्वमाह गोभिलः—"सहस्रशीर्षा इति तृचेनाघमर्षणं जपेदि" ति। स्ना० सू०।

आश्वलायनो सन्ध्यापरिशिष्टे—अघमर्षणकर्मणि द्रुपदाम् ऋचं च पठति—यथा—

"संयतप्राणोऽघमर्षण-सूक्तं द्रुपदामृचं चावर्त्य" इत्यादि।

यद्यपि सन्ध्यायां नासा-जलसंयोगेनाघमर्षणकरणं प्रसिद्धं तथाप्यन्यत्र "ऋतमि"-त्यादीनां त्रिरन्तर्जलजपस्याघमर्षणकर्मत्वमुक्तम्। यथाह बौधायनः—

"ऋतञ्च सत्यञ्चाद्यघमर्षणं त्रिरन्तर्जले जपन् सर्वस्मात्पापात् प्रमुच्यते"। इति।

एवम्—द्रुपदामन्त्रस्यापि—

"द्रुपदा नाम यो मन्त्रो वेदे वाजसनेयिके ।
अन्तर्जले त्रिरावर्त्य सर्वपापैः प्रमुच्यते" ॥

इति बृहस्पतिः।

—०—

* अवभरति पुष्णाति कर्माणीत्यवभृथः। अवे० भृञः क्थन्।

## अथ ऋतश्चेति व्याख्यास्यामः ।

ऋतमिति तृचमेकोनचत्वारिंशं सूक्तं मधुच्छन्दसः पुत्रस्याघमर्षणस्यार्षमानुष्टुभं रात्र्यादीनां भावानां सृष्ट्यादि प्रतिपादकत्वाचादृगरूप एवार्थो देवता । तथा चानुक्रान्तम् "ऋतं माधुच्छन्दसोऽघमर्षणो भाववृत्तमानुष्टुभन्त्विति" । लिङ्गाद्विनियोगोऽवगन्तव्यः । तत्र प्रथमा—ऋतञ्च सत्यञ्चाभीद्धात्तपसोध्यजायत । ततो रात्र्य * जायत ततः समुद्रो अर्णवः ॥ ऋ० वे० अ० ८ व० ४८ मं० १० अ० १२ सू० १९१।१।

सायणस्तैत्तिरीयारण्यके ऋतमित्यस्य भाष्ये जले निमग्नस्य प्राणायामार्थमघमर्षणसूक्तमाह ऋतमित्यादि—ऋतमिति सत्यनाम ऋतं मानसं यथार्थसङ्कल्पनम्, सत्यं वाचिकं यथार्थभाषणम्, चकाराभ्यामन्यदपि शास्त्रीयं धर्मजातं समुच्चीयते † तत्सर्वमभीद्धात्, अभितप्तात् ब्रह्मणा पुरा सृष्ट्यर्थंकृतात् तपसो अधि, अधि उपर्यर्थे, उपर्यजायत—

उदपद्यत तपस्तप्त्वा इदं सर्वमसृजतेति श्रुतेः । तपश्चात्र स्रष्टव्यपर्य्यालोचनलक्षणं यस्य ज्ञानमयं तपः इति श्रुत्यन्तरात् अभिपूर्वादिन्धेः कर्मणि निष्ठा "श्वीदितो निष्ठायामि" तीट्प्रतिषेधः । गतिरनन्तर इति गतेः प्रकृतिस्वरत्वम् । स्वरितो वानुदात्ते पदादावित्येकादेशः स्मर्यते । यद्वा अभीद्धात् अभितः प्रकाशमानात् परमात्मनो मायाधिष्ठानरूपादुपादानभूतात् ऋतं सत्यञ्चाजायत "जनिकर्त्तुः प्रकृतिरि" ति प्रकृतेरपादानसंज्ञा । ततस्तस्मादेवेश्वरात् रात्री उपलक्षणमेतत् अहोऽपि अहश्च रात्रिश्चाजायत । रात्रेश्चाजसाविति ङीप् । ततः तस्मादेवेश्वरादर्णवः अर्णसोदकेनयुक्तः ।

---

* रात्रिरजायतेति तैत्तिरीयारण्यकपाठः प्रपा० १० । अनु० १ । १३ ।

† तत् सर्वम्, अभिद्धात्, अभितः प्रकाशमानात्, परमात्मनः उत्पन्नम् । तपसोऽधिस्रष्टव्य पर्य्यालोचनलक्षणात् तपसः ऊर्द्ध्वम् । ततः स्वप्रकाशात् परमेश्वरात् रात्रिः उत्पन्ना अहोऽप्येतदुपलक्षणम् । ततः तस्मात् परमेश्वरात् समुद्रः उत्पन्नः । सामान्योक्तस्य लवणोदक्षीरोददध्यादि विशेषमभिप्रेत्यार्णवशब्देन पुनर्विशेष्यते । अवान्तरभेदयुक्तात् समुद्रात् अधि-ऊर्द्ध्वं समुद्रोपलक्षितः कृत्स्नः कालः समुत्पन्नः । स च उत्पादकः परमेश्वरः अहोरात्रोपलक्षितान् सर्वान् कालविशेषान् विदधत् सृजन् मिषतः, निमेषादि युक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्त्तते स तादृशः 'धाता' परमेश्वरः सूर्य्यादि देवान् पृथिव्यादि लोकांश्च यथा पूर्वम्, अतीतसृष्टौ यस्य यादृशं रूपं तादृशमनतिक्रम्य "अकल्पयत्" सङ्कल्पमात्रेण सम्पादितवान् । दिवञ्चेत्युपात्तत्वात् "सुवः" शब्देन भोगविशेषो विवक्षितः ॥ तैत्ति० आ० । सा० भा० ।

समुद्रश्चाजायत। समुद्रशब्दोऽन्तरिक्षोदध्योः साधारण इति अभिमतार्थस्य प्रकाशनाय अर्णवशब्देन विशेष्यते। अर्णसः सलोपश्चेति मत्वर्थीयो व प्रत्ययः सलोपश्च॥१॥

समुद्रादर्णवादधि संवत्सरो अजायत।
अहो रात्राणि विदधद्विश्वस्य मिषतो वशी॥ २॥

अर्णवात् समुद्रात् सृष्टात् अधि ऊर्द्ध्वं संवत्सरः संवत्सरोपलक्षितः सर्वः कालः अजायत। श्रूयते हि सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि कलाः मुहूर्त्ताः काष्ठाश्चेति। स चेश्वरः अहो रात्राणि एतदुपलक्षितानि सर्वाणि भूतजातानि विदधत् कुर्वन् सृजन्। अभ्यस्तानामादिरित्याद्युदात्तत्वम्। ततः समासे कृदुत्तरपदप्रकृतिस्वरत्वं मिषतो निमिषादियुक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्त्तते॥ २॥

सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्।
दिवं च पृथिवीं चान्तरिक्ष मथो स्वः॥ ३॥

विधाता यथा पूर्वं पूर्वस्मिन् काले अकल्पयत् सृष्टवान् तथैवागामिन्यपि काले कल्पयिष्यतीत्यर्थः॥ ३॥

अत्र यद्यपि सायणेन ऋतं मानसं यथार्थसङ्कल्पनम्। सत्यं वाचिकं यथार्थभाषणमित्युक्तम् तथापि गुणविष्णुना तु "ऋतमेकाक्षरं ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्मे" ति श्रुतिभ्याम् ऋतं सत्यं परं ब्रह्म इत्युच्यते। मन्त्रं चेत्थं व्याख्यातवान्—ऋतञ्च सत्यञ्चासीत् परब्रह्ममात्रमासीत्। एतेन महाप्रलयावस्थाप्रतिपादिता। महाप्रलयसमये केवलं ब्रह्ममात्रमासीदित्यर्थः। महाप्रलयावस्थायामेव रात्र्यजायत; समुत्पन्ना, सकलमन्धकारमयमासीदित्यर्थः। तथा च स्मृतिः—"आसीदिदं तमोभूतमप्रज्ञातमलक्षणमि"ति। ततः प्रलयावसाने सृष्ट्यारम्भसमये तपसः अदृष्टबलात् समुद्रः अध्यजायत। किं भूतः अर्णवः पानीययुक्तः, सकलजगदुत्पत्तिनिमित्तं जलराशिः, उत्पन्नः इत्यर्थः। यथा च स्मृतिः—"अप एव ससर्जादौ तासु बीजमवासृजत्।" किंभूतात्तपसः अभिसर्वतो भावेन समृद्धाल्लब्धवृत्तेः प्रलयसमये हि निरुद्धवृत्ति अदृष्टं भवति। ततः समुद्रात् अर्णवात् धाता, स्रष्टा, अजायत। किं भूतः मिषतः प्रकटी भवतः विश्वस्य वशी प्रभुः महाप्रलये विलुप्तस्य जगतः निर्माणे प्रभुरित्यर्थः। स धाता यथापूर्वं यथाक्रमं सूर्याचन्द्रमसौ अकल्पयत्। किंभूतौ अहोरात्राणि विदधत्।

१ "भुवः" इति तैत्ति॰ आ॰ पाठः। प्रपा॰ १० अनु॰ १।१४।

अहोरात्रान् कुर्वाणौ, सूर्य एव हि दिवसं करोति चन्द्रमाश्च रात्रिम् । ततः सूर्य्य-चन्द्रयोरुत्पत्त्यनन्तरम्, संवत्सरः अजायत । सूर्यचन्द्रोत्पत्तौ रात्रिंदिवविभाग कल्पनया संवत्सरसम्भवः । अथोऽनन्तरं दिवं स्वर्गं पृथिवीं महीम् अन्तरिक्ष-माकाशं स्वः नक्षत्रलोकोपरिस्थं स्वर्गलोकं स एव धाता अकल्पयत् । चराचरात्मकं सकललोकं स एव धाता सृष्टवान्—इत्यादि ।

—०—

# कर्मणा वर्णव्यवस्थायाः प्रत्यालोचना ।

## ( डाक्टर-भगवान्दासीय-सिद्धान्तस्य प्रतिवादः )

निबन्धा—श्री दीनानाथ शर्मा शास्त्री सारस्वतः ।
( सं० ध० कालेजोपाध्यायः मुलतान सिटी )

( षोडशवर्षीय द्वितीयाङ्क प्रकाशित १६ पृष्ठादग्रे )

'हे भाई, थोड़ा विचारो, ऐसे पापिष्ठ प्रत्यक्ष श्लोकोंका ही फल है कि- -इस अभागे देशमें भयंकर अनाचार, दुराचार, प्रजापीडन होने लगा···' । इदमादिकं निष्प्रमाणमेव । प्रत्युत विधिशास्त्राऽऽज्ञात्याग एव एतदादौ कारणम् । यदा खलु 'राष्ट्रादेनं बहिष्कुर्यात्' इति दण्डविधानं तत्रापि निर्दिष्टम्, तर्हि तेषां पद्यानां कथं पापिष्ठता ? । तेष्वेव शास्त्रेषु यत्र ब्राह्मणे कर्त्तव्यभारो निःक्षिप्तः; तेष्वेव शूद्रस्तस्माद् लघूकृतः । शास्त्रेषु सदा उत्सर्गमात्रं न भवति, किन्तु उत्सर्गोऽपि, अपवादोऽपि । केषुचिद् अपराधेषु, ब्राह्मणेषु सर्वथा दण्डविधानं निर्दिष्टमेव न; केषुचिच्च ब्राह्मणाः शूद्रतोऽप्यधिकं दण्ड्यन्ते । एतदुत्सर्गापवादव्यवस्थापकैर्बहुश्रुतैरेव निर्णेतुं पार्य्यते; आपाततो दर्शिनाम्, उत्सर्गमात्रद्रष्टॄणां वा तु यत्र तत्र विरोध एव अवभासेत; अत्र ऐकदेशिकदृष्टिकोणो नाऽपेक्षितो भवति, किन्तु सार्वमुखीन एव । तत्र 'न जातु ब्राह्मणं हन्याद्' इति यदि उत्सर्गः; तर्हि 'गुरुं वा बाल-वृद्धौ वा ब्राह्मणं वा बहु-श्रुतम् । आततायिनमायान्तं हन्यादेवाऽविचारयन्' इति अपवादोपि लभ्यते, को नामाऽत्र विरोधः ? । 'परीवादात् खरो भवति श्वा वै भवति निन्दकः' मनु० २।२०१ विद्यमान-दोषाभिधानं परीवादः; अविद्यमानदोषाभिधानं निन्दा । अत्र गुरोर्विद्य-मानदोषकीर्तनेनापि जन्मान्तरे खरयोनिप्राप्तिरभिहिता । यदि एतत् सामान्यशास्त्रम्; तर्हि 'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं

हन्यादेवाऽविचारयन् ७८।३५० इति भवदुद्धृतपद्ये अपवादरूपेण तस्यैव आततायित्वरूपदोषयुक्तस्य गुरोर्वधोऽपि उक्तः। किमत्र डाक्टरमहाशयो विरोधं मन्येत ?। अथवा पूर्वश्लोकं गुरोर्दोषकरणप्रोत्साहनेन पापिष्ठं मत्वा प्रक्षिप्तं मन्येत ?। प्रक्षिप्तता तेन क्व क्व मंस्यते ?। अयमेव स्वोद्धृतः श्लोक एव विविच्यतां डाक्टरमहोदयेन। अत्र आततायिनोऽपि ब्राह्मणत्वं निर्दिश्य मनुना एतच्छ्लोकोपस्थापकस्य कर्म्मणा वर्णव्यवस्थापक्षपातिनो भवतः पक्षः समूलं व्युच्छिन्नः। यतो हि भवान् सुकर्म्माणमेव ब्राह्मणं सिद्धान्तयति। परमत्र मनुना कुकर्मा आततायी अपि ब्राह्मणः स्वीकृतः। हन्त ! डाक्टरमहोदयस्य मूलपक्षः (कर्मणा वर्णः) किं तदीयशब्दतः 'सच्छास्त्रेण' न व्युच्छिन्नः ?। यदि व्युच्छिन्नः; तर्हि स इमं तु श्लोकं 'सच्छास्त्रं' मन्यते मनोः; प्राक्तनं च 'असच्छास्त्रम्' किं नाऽत्र स्पष्टं तत्पक्षप्रत्याख्यानं स्वार्थप्रवणता वा ?। अयं श्लोकोऽपि कर्मणा वर्णव्यवस्थारूपभवत्पक्षखण्डकत्वात् प्रक्षिप्तः स्वीक्रियताम्। तेन अनेन आततायि-ब्राह्मणहननरूपेण मनोरपवादश्लोकेन 'न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम्' इति उत्सर्गस्थे 'सर्वपापेषु' इति शब्दे आततायित्वरूपपापातिरिक्तसर्वपापसङ्केत एव ज्ञेयः; यत आततायित्वं विशिष्टपापम्, एतदर्थमेव मनुना तन्निन्दनार्थं पृथगेकः श्लोकः प्रणीतो यत्—'नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन' म० ८।३५१। अधुना वाच्यं डाक्टरमहोदयेन यत्-तत्प्रतिपादितो विरोधः क्व कर्पूरायितः ?। किं स न जानाति यत्—'प्रकल्प्य चाऽपवादविषयं तत उत्सर्गोऽभिनिविशते' महाभाष्ये ३।२।१२४।

वस्तुतस्तु आततायिनो ब्राह्मणस्य वधोपि दैहिको न भवति। अतएव डाक्टरसम्मते श्रीमद्भागवते भगवतः श्रीकृष्णस्य उक्तिरश्वत्थाम्नो विषये वर्तते। सा इयम्—'ब्रह्मबन्धुर्न हन्तव्य—आततायी वधार्हणः। वपनं (मुण्डनं), द्रविणादानं, स्थानान्निर्यापणं तथा। य एष ब्रह्मबन्धूनां (ब्राह्मणानां) बधो, नाऽन्योऽस्ति दैहिकः' १।७।५३।५७ इत्येवं मनुश्लोकस्यापि व्यवस्था। अत्र आततायिनोपि अश्वत्थाम्नो ब्राह्मणत्वाख्यानं कर्मणा वर्णव्यवस्थाया मूलमुच्छिनत्ति। ततश्च तादृशस्यापि ब्राह्मणस्य दैहिकवधं न कृत्वा वपनादिरूप एव बधस्तत्रेष्यते इति आख्यानं च अस्मदुक्तभवदुक्तयोः पूर्व्वापरमनुश्लोकयोर्विरोधं व्यवच्छिनत्ति। एवं महाभारतेपि प्रकृतेतिहासे एष प्रसङ्गो दृश्यताम्। एवमन्यत्रापि तत्र प्रोक्तम्।—'नहि मे ब्राह्मणो वध्यः पापेष्वपि रतः सदा' आदिपर्वणि २९।२। किं सर्व्वत्र प्रक्षिप्ततैव भवेत् ? नैवम्। अतएव मनुरपि एतद्विषये स्वयमेव उत्तरपक्षमाचष्टे—'मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते। इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत्' ८।३७९ हन्त !

कियती स्पष्टता। तेन डाक्टरमहाशयप्रदर्शितो मनोः पूर्वापरविरोधोऽपास्तः। अयमेव मनोरुत्तरपक्षः 'सत्यम् उत्तरः पक्षः' तैत्तिरीयोपनिषदि २।४। तत् कथमस्मत्प्रदर्शितमनुवचने प्रक्षिप्तता ? डाक्टरमहाशयोऽत्र अवश्यं प्रणिदध्यात्"।

एतेन मनुना आततायित्वमक्षम्यं पापमुद्घुष्य आततायिनो ब्राह्मणस्यापि वधे दोषाऽभावं च आख्याय, अन्यविधपापेषु ब्राह्मणस्य वधाऽभावमुक्त्वा, देशनिर्वासनमात्रमादिश्य पूर्व्वश्लोकस्य स्वसम्मतता अप्रक्षिप्तता च पिशुनिता।

यच्च 'अष्टापाद्यं तु शूद्रस्य...ब्राह्मणस्य चतुःषष्टिः' ८।३३७-३३८ इमौ श्लोकौ डाक्टर महाशयेन उद्धृतौ, तौ इह लोके दण्डनिदर्शकौ न, किन्तु जन्मान्तरे पापपरिमाणनिदर्शकौ। पूर्वः स 'न जातु ब्राह्मणं हन्यात्' इति मनोः श्लोको ब्राह्मणस्य इह लोके हिंसानिषेधक आसीत्; परं परलोके तदीयं पापफलं को न मन्येत ?। एतज्जन्मस्थपापपुण्यस्य अग्रिमशरीरारम्भकत्वात्।

अग्रे डाक्टर महोदय आचष्टे—'लिखनेको तो बहुत कुछ लिखा जा सकता है, और जैसा ऊपर कहा, बहुत वर्षोंसे लिखता ही रहा हूँ, पर निष्कर्ष यही है कि—'कर्मणा वर्णः' का ही सिद्धान्त माननेसे हिन्दू समाज क्या मानव समाजकी सुव्यवस्था हो सकती है और मानवमात्रका कल्याण सध सकता है'। अत्र डाक्टरमहोदयः 'जन्मना वर्णः' का ही सिद्धान्त माननेसे तथा तदनुकूल कर्माचरणसे' इति पाठमात्रं विपरिवर्त्य सर्वमिदं स्वकीयवाक्यं पठतु। तद् अस्माकं भवन्तं प्रति 'उत्तर वाक्यं' भविष्यति। 'जन्मना वर्णः' माननेसे इसके विपरीत समाजकी दुरवस्था, समाजमें अनन्तप्रकारके दोषों और मानस और शारीर दुराचारों और रोगोंकी वृद्धि और नित्य नयी आपत्ति विपत्ति होती रहेगी, जैसी हो रही है'। अत्र डाक्टरमहाशयवाक्ये 'जन्मना वर्णः' अत्र 'कर्मणा वर्णः' इति पाठ-परिवर्तनपूर्वकं पठनेन सर्वमेव इदं वाक्यम् अस्मत्पक्षपोषकं भविष्यति। यदि न भवेद् विश्वासो डाक्टरमहोदयस्य; तर्हि स 'सूर्योदय' पत्रे स्वकीयदृष्टचर—मामकीनलेखाद् अग्रिमाङ्के प्रकाशितस्य 'कर्मणा वर्णव्यवस्थायां हानिः' इति मम निबन्धस्य पारायणं करोतु, तदीयाः सर्व्वविधाः संशीतयो दूरे स्युः। परमिमे स्वकीयामेव वाचं श्रावयन्ति, परकीयां तु वाचं न वा शृण्वन्ति नाऽपि * अवदधत्येव।

यदि कर्मणा वर्णव्यवस्था मन्यते भवदादिभिः, तर्हि कर्म्माणि तु जन्मत आरभ्य मरणान्तं † भवन्त्येव भवन्ति। तदा तदनुकूलवर्णप्रदानं भवन्त् कदा करि-

* अवदधति—इति बहुवचनम्।

† भवन्ति—शत्रन्तं क्लीबकर्म विशेषणम्।

ष्यन्ति ?। कर्म्मणां परिणामो वर्ण्णः; परीक्षाया स्तत्परिणामस्य च समकालता कदापि न भवति। अथ च काले-काले कर्म्माणि परिवर्त्तमानान्यपि तिष्ठन्ति; तर्हि किं भवन्तोऽपि वर्ण्णपरिवर्त्तनं कुर्व्वन्तो भविष्यन्ति ?। यदि एकवारमेकं वर्णं स्थिरीकृत्य पुनः कर्म्मपरिवर्त्तनेऽपि तं वर्ण्णं भवन्तो न परिवर्त्तयन्ति; तर्हि भवतां 'जन्मना वर्णव्यवस्था' व्यवस्थापकेभ्य ः को भेदस्तिष्ठति ?। किमयमेव भेदो यत्—ते परमात्मप्रदत्तं जन्मनैव च प्राप्तं वर्णं स्वीकुर्वन्ति; भवन्तश्च विस्मृतिशील-प्रमादपक्षपातादिदोषदिग्धाऽनीश्वरमनुष्यदत्तं कृत्रिमं वर्ण्णं स्वीकुर्व्वन्ति। एवं चेद् ईश्वरमपि अतिशयाना धन्या भवन्तः।

अत्रेत्थमवसेयम्—यदि श्रीमान् गुणकर्म्मपरीक्षोत्तरं वर्णप्रदानं मन्यते, तर्हि श्रीमता एतज्ज्ञेयं यद्—य उपाधिर्दित्स्यते, प्राक् तस्य श्रेणी निर्मीयते। यथा पञ्चनदीय-शास्त्रिपदवी केनचित् प्राप्तव्या; तर्हि स शास्त्रिश्रेण्यामधीते। एवं केनचिद् भवदनुसारं ब्राह्मणपरीक्षा दातव्या, तर्हि तत्र प्रश्नो यत्—तस्य ब्राह्मणत्वश्रेणी या नियता क्रियेत वादिभिर्भवद्भिः, सा पितृवर्णानुसारम् अर्थाद् जन्मना नियम्येत ? गुणकर्म्मणा वा ?। पितृवर्णानुसारं तथा कृते तु जन्मनैव वर्णव्यवस्था सिद्धा। गुणकर्म्मणा इति चेत्—तर्हि कृतं धाष्टर्येन। यतोऽधुना तु तेन पठनकर्म्म प्रारब्धम्। तस्य कानि तानि गुणकर्म्माणि, यैः स ब्राह्मणत्वेन परिगणितो भवद्भिः ?

अथ च यदि कथ्येत यत्—पितृवर्णानुसारिणि वर्णे एव पाठ्यते सः; यदि स तच्छ्रेण्यामनुत्तीर्णो भवेत्, तदा स तस्याः श्रेण्या अवतार्यते इति, एतदप्ययुक्तम्—। यत् पुरुषो यस्यां श्रेण्यामनुत्तीर्णो भवेत्, तस्यामेव श्रेण्यां स पुनः पठति। अधमश्रेण्यां पठनाय स न नियुज्यते। यथा कश्चित् पञ्चनदीयशास्त्रिश्रेण्यामनुत्तीर्णो भवेत्, तर्हि स शास्त्रिश्रेणीय एव भवति, तत्रैव च पठति, न खलु स पञ्चनदीयविशारदश्रेणीयग्रन्थान् अध्येतुं बाध्यः क्रियते। एवं पितृवर्णानुसारिणि वर्णे पठन् पुत्रस्तद्वर्णश्रेण्यामनुत्तीर्णोऽपि तद् वर्णश्रेण्या एव छात्रो मंस्यते, न तदवरश्रेणीयच्छात्रः। अर्थात्—ब्राह्मणवर्णे स्थितः स तद्वर्णश्रेणीमनुत्तीर्णवानपि ब्राह्मणवर्णश्रेणीय एव मंस्यते; न खलु क्षत्रियवैश्यवर्णश्रेणीयः। अथ च यदि भवन्मतानुसारमपि पठनादिकं त्रयाणामेव वर्णानां समानम्, तर्हि पठनरूपकर्म्मानुसारं नामभेदो न भवितुमर्हति। तथापि यदि तत्र नामभेदः; तत्र कारणत्वं जन्मन एव, न खलु गुणकर्म्मणः।

अथ च एतदपि प्रष्टव्यं यत्—ब्राह्मण क्षत्रिय-वैश्य-शूद्र वर्णश्रेणी शास्त्रि-विशारद-प्राज्ञ-प्रवेशिका श्रेणीवत् * क्रमिका भवति, युगपत्कालिकी वा ?। अर्थाद्

* क्रमिका। 'क्रमाद् वुन्' वोरकः। स्त्रियां टाप्।

यथा—प्रवेशिकापरीक्षामुत्तीर्य प्राज्ञश्रेणीं, प्राज्ञपरीक्षामुत्तीर्य विशारदश्रेणीं प्रविशति च्छात्रः। ततो विशारदश्रेणीमुत्तीर्य शास्त्रिश्रेणीं प्रविशतिच्छात्रः। तामपि उत्तीर्य विद्वान् भवति। एवं वादिनां मते किं चातुर्वर्ण्यश्रेण्योपि क्रमिकोन्नतिमत्यः सन्ति? अर्थात् शूद्रश्रेणीमुत्तीर्य वैश्यः, वैश्यश्रेणीमुत्तीर्य क्षत्रियः, क्षत्रियश्रेणीमुत्तीर्य च ब्राह्मण इत्येवं क्रमिकोन्नतिरभीष्टा वादिनाम्? यौगपद्येन उन्नतिर्वा?। यौगपद्येनेति चेत्—तन्न युक्तम्। श्रेणीनां भिन्नभिन्नत्वेन यौगपद्यस्य असम्भवित्वात्।

क्रमिकोन्नतिरिति चेत् तदपि न युक्तम्। नहि वादिभिरीदृक् क्रमः कुतश्चित् प्रदर्शयितुं शक्यो यत्—प्राक् स शूद्रश्रेणीं पठन् भवेत्, तत उत्तरोत्तरं वैश्यादि ब्राह्मणान्तासु श्रेणीषु। अथ च सर्वासां श्रेणीनां परीक्षा भाविनी पञ्चविंशे वर्षे वादिनां मतेन, अयं समयोऽस्ति केवलैकश्रेण्याः। केवलो ब्राह्मणोऽपि तावत्समयेन परीक्षां दद्यात्, केवलक्षत्रियः केवलवैश्योपि तावता समयेन। यदि शूद्रवैश्यादि-श्रेण्यः क्रमिकश्रेण्यो मन्येरन्; तर्हि एकश्रेण्युत्तीर्णतायोग्ये समये एक एव पुरुषः कथं यौगपद्येन सर्वाः श्रेणीरपि प्रवेक्ष्यति, यौगपद्येन च सर्व्वाः परीक्षा अपि दास्यति? भिन्नभिन्नास्त्विमे भिन्नभिन्नश्रेण्यां युगपत्समये पठितुमपि शक्ताः, भिन्नभिन्नपरीक्षा-मपि च दातुम्। परम् एकः क्रमिकश्रेणीषु यौगपद्येन पठितुं, परीक्षाञ्च प्रदातुं, कथं शक्तः?। यदि च न शक्तः, तदा वैश्यादयो ब्राह्मणान्ताः प्राज्ञविशारदशास्त्रिवत् क्रमिकश्रेण्यः—इत्यपि निरस्तम्। भिन्नभिन्नाश्च ये तत्तद्वर्णश्रेणीषु युगपत् पठिष्यन्ति, युगपच्च परीक्षा दास्यन्ति, ते आरम्भत एव अन्तपर्यन्तं तत्तच्छ्रेणीका एव भविष्यन्ति स्थास्यन्ति च। तेषु, मध्ये मध्ये परिवर्त्तनं न भवितुमर्हिष्यति।

तेन स्पष्टं जातं यद्—आरम्भतोऽपि उत्तमश्रेणीको ब्राह्मणः स्वश्रेण्यामुत्तीर्णतां लभमानोऽन्तेऽपि उत्तमः स्थास्यति। तस्यां श्रेण्यामनुत्तीर्णतां लभमानोऽपि स तच्छ्रेणीक एव स्थास्यति। तथापि स द्वितीयश्रेणीयात् प्रत्युत द्वितीयश्रेणीमुत्तीर्ण-वतोऽपि क्षत्रियवर्णश्रेणीकात् श्रेष्ठ एव मंस्यते। शास्त्रिपरीक्षामनुत्तीर्णो विद्यार्थी विशारदश्रेणीमुत्तीर्णवतोऽपि विद्यार्थितः श्रेष्ठ एव मन्यते। तस्मात् सिद्धं यद्-ब्राह्मणः स्वगुणकर्म्मसु पूर्णत्वे तु ब्राह्मण उत्तमश्च अस्त्येव। तत्र अपूर्णोऽपि स क्षत्रिय-गुणकर्म्मपूर्ण-क्षत्रियाद्यपेक्षया श्रेष्ठ एव, श्रेणीप्राधान्यात्। एवं ब्राह्मणादीनां वादिमतानुसारं श्रेणीरूपत्वेऽपि जन्मनैव वर्णव्यवस्था सिद्धा। वस्तुतो वर्णाः शास्त्रि-विशारद-प्राज्ञवत् श्रेणीरूपा न सन्ति, अस्माभिस्तु वादितोषन्यायेन तथा स्वीकृत्य तत्र समाधानं प्रतिपादितम्।

इमे वर्णास्तु पूर्वजन्मकर्मणां कारणतस्तत्तद्वर्णवतः पितुः, तत्सवर्णपत्न्याश्च

शुक्ररजोयोगप्राप्तसजीवदेहेन लभ्यन्ते । तत इहत्यकर्म्मणां फलमग्रिमजन्मनि भवति। निष्कर्षोऽयम्—उत्पत्तित आरभ्य उपमरणं यद् यद् अस्माभिः क्रियते, इयमस्ति परीक्षा नाम । मरणं यज्जायते, तत आरभ्य पुनर्जन्मप्राप्तितः प्राक्तनः कालोऽस्ति-परमात्मरूपपरीक्षकस्य उक्त जीवपरीक्षाप्रश्नोत्तरपत्त्रदर्शनकालः । ततश्च यत् पुनर्जन्म दीयते परमात्मना, तद् अस्ति परीक्षितचरोत्तरपत्त्राणां परिणामोद्‌घोषणम् ।

अधुना डाक्टरमहोदयेन विचिन्त्यतां यद्—अस्मिन् जीवलोके जीवन्तो वयं यद् यत् कुर्म्मः अयं कालस्तु अस्माकमस्ति परीक्षाप्रदानकालः, अर्थात् परमात्मदत्त-प्रश्नपत्त्रोत्तरप्रदानायोत्तरपत्त्रलेखनकालः । परीक्षाप्रदानकाले तु परिणामः कदाचिन्निःसर्त्तुमेव न शक्यः । आम्, जीवनपरीक्षासमाप्तौ जातायाम् अर्थाद्—मरणे सम्पन्ने, तस्या अपि अनन्तरं नियतेषु दिनेषु व्यतीतेषु, तत एव पुनर्जन्मोद्‌घोषणरूपपरिणामो निस्सरति । तस्मिन्नेव परिणामे तस्मै ब्राह्मणादिपदवी तत्तद्वर्णमातापित्रुत्पत्ति-द्वारतो दीयते । तेन स्पष्टं यत्—पितृवर्णानुसारमेव भवति वर्णः, स च पूर्वजन्म-कर्म्मणैव प्राप्तः । एवं पितुरपि वर्णः पूर्वजन्मकर्मद्वारा जन्मनैव प्राप्तो भवति ।

ऐहिक जन्मकर्मणां तु सञ्चये जाते, परमात्मद्वारा च परीक्षणे जाते, ततोऽपरस्मिन् जन्मन्येव तत्परिणामः प्राप्तः स्यात्, न खलु अस्मिन् जन्मनि । तेन ऐहिक-गुणकर्म्मणा अस्मिन् जन्मनि वर्णपरिवृत्त्यादिकं भवतीति वादिनां सिद्धान्तो निष्पिष्टः । जन्मनैव च वर्णव्यवस्था भवति, तत्परिवर्त्तनं च न भवतीति सनातन-धर्म्मसिद्धान्तः सुनिष्पन्नः ।

अग्रे डाक्टरमहोदयस्य अस्मद्—असम्बद्धविषये विचारो व्यर्थः, इतश्च विस्तर-भीरपि । तेन तस्य 'न विशेषोऽस्ति वर्णानां' इति आक्षिप्तश्लोके, अन्यत्र च द्वित्र* वाक्येषु प्रकाशं विधाय लेखममुं समापयामः । सर्वसमालोचने तु अयं निबन्धो मम प्राक्तनवर्णव्यवस्थाविषयकनिबन्धस्य पृष्ठसङ्ख्यामपि अतिशयीत † ।

'न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् । ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्' अत्र श्लोके डाक्टरमहोदयस्य महान् गर्वः । अत एव अयं श्लोकोऽमुना 'बहुत प्रसिद्ध श्लोक' शब्देन प्रोक्तः । यदि वयमपि महाभारतश्लोकान् स्वपक्षपुष्ट्यै दद्याम ‡ मतङ्गादीतिहासाँश्च तत्रत्यान् समर्प्पयेम ‡; तर्हि 'डाक्टर' महोदयस्तत्र सपद्येव 'अप्रसिद्ध' 'प्रक्षिप्त' प्रभृतिविशेषणैः सत्करिष्यति । अत एव तदुपेक्ष्य वय-

* द्वित्रेषु । अत्र समासान्तो डच्, टेर्लोपः ।

† अतिशयीत लिङि, तकारो न हलन्तः ।

‡ अत्र मकारो न हलन्तः, विधिलिङि ।

मिममेव डाक्टरमहाशयाभिमतश्लोकं स्वकीयमीमांसाया आधारं कुर्महे। अस्याऽर्थः—वर्णानां ब्राह्मणादीनां कोपि मिथ आकारादिविशेषो नास्ति। सर्वमिदं जगद् ब्राह्मम्, ब्रह्मण उत्पन्नत्वात् शब्दमात्रतो ब्राह्मम्। अत्र न कापि अनुपपत्तिः। अत्र ब्रह्मणः सन्ततिकारणत्वादेव तद् अपत्यार्थकप्रत्ययवत्त्वाद् जन्मतो ब्राह्ममुक्तम्। अतएव 'ब्राह्मोऽजातौ' ६।४।१७१ इति सूत्रमपि प्रसिद्धम्।

अत्र द्वितीयतृतीयपादौ—'सर्वं ब्राह्ममिदं जगत्—ब्रह्मणा पूर्वसृष्टं हि' इत्युभौ परस्परसम्बद्धौ। द्वितीयपादः प्रतिज्ञावाक्यम्। तृतीयपादो हेतुवाक्यम्; अत एव तस्मिन् ३यपादे हेत्वर्थको 'हि' शब्दः साक्षाद् विद्यमान एव। एवं प्रथमपादतुरीयपादयोः सम्बन्धः। तत्र प्रथमे पादे कोऽपि वर्णानां विशेषो नोक्तः, चतुर्थपादे च ब्रह्मसृष्टवर्णानां भेदकं कर्म्म आख्यातम्। एतेन वादिनां किमपि अभीष्टं न सिध्यति, यतोऽत्र एतदेव विवेक्तव्यं यद्—अत्र ब्रह्मसृष्टवर्णानां यानि कर्म्माणि अत्र सङ्केतितानि; तानि पूर्वजन्मनो वा? ऐहिकजन्मनो वा? यदि संसारप्रवाहस्य अनादित्वात् पूर्व्वजन्मन एव कर्म्माणि; यैर्ब्रह्मणा स स वर्णो निर्मितः; तान्येव च ब्रह्मनिर्मितवर्णेषु मूलानि; तर्हि तु जन्मनैव वर्णव्यवस्थासिद्धान्तः सिद्ध एव; यतो जन्मना वर्णव्यवस्था पूर्वजन्मकर्मणैव मन्यते, नैहिककर्म्मणा। (क्रमशः)

---

## उपदेशक-महाविद्यालयः।

भारतवर्षीयाणां मानवानां विशेषत आर्य्यमर्य्यादाश्रितानां सम्प्रति हिन्दुशब्दवाच्यानां धार्मिके जगति विद्यते परमादरः। आर्य्यजातेस्तु मूलाधार एव धर्मो विद्यते। उक्तञ्च केनचित्—

'धर्मेणैव जगत्प्रतिष्ठितमिदं धर्मो धराधारकः' इत्यादि। अतश्चैकस्य धर्म्मस्यैव सर्वथा संरक्षणेन सम्बर्द्धनेन प्रचारेण सर्वमेव भारतीयं कल्याणं सुसाधितं स्यादिति। तस्य च धर्मस्यादौ ज्ञानं ततस्तस्य पालनं पश्चाच प्रचार इति परम्परा साधिता भवति। यथोक्तमन्यत्र—'चतुर्भिश्च प्रकारैर्विद्या उपयुक्ता भवति। आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति। श्रीहर्षेणापि एवमेवोक्तम्। अधीति-बोधाचरणप्रचारणै दशाश्चतस्रः प्रणयन्नुपाधिभिः, इत्यादि विचारणया सर्वत्र जनसमाजे धर्मप्रचारकामनया धर्मोपदेशक-महोपदेशकत्व शिक्षायै इहोपदेशकमहाविद्यालयनाम्ना एको महान् विद्यालयः प्रतिष्ठापितोऽभूत्। पूर्वं यस्य प्रधानाध्यक्षाः श्रीमन्तः सर्वमान्या व्याख्यानसम्राजः स्वर्गीयाः श्रीदयानन्दस्वामिनो-

ऽभूवन् । तेषां स्वर्गारोहणानन्तरम् कियद्दिनावधि तस्य विद्यालयस्य कार्य्यं शिथिलमासीत् । सम्प्रति पुनर्महामण्डलीयसञ्चालकानामनुरोधेन स एवोपदेशक-महाविद्यालयः सञ्चाल्यते । प्रतिदिनं नियमत उपदेशोचित-विषयक-धर्मग्रन्थानां पाठनं भवति । काशीस्थाश्च विद्वांसो मध्ये मध्ये समागत्य धार्मिकं सामाजिकं साम्प्रतिकप्रगतिप्रतिस्पर्द्धि व्याख्यानं ददति । राजकीय-संस्कृतपरीक्षाया मध्यम-परीक्षोत्तीर्णास्ततोऽधिका वा छात्रा अत्र गृह्यन्ते, येभ्यः किमपि योगक्षेमाधायकं पारितोषिकमपि वितीर्य्यते यदि ते धर्मोपदेशे स्वीयं पाटवं दर्शयन्ति ।

इत्येवं धर्मोपदेशशिक्षार्थं महान् सुसमयः समुपस्थितो विद्यते । सम्प्रति संस्कृताध्येतॄणां छात्राणामिदमिहोचितं कर्तव्यं दृश्यते यत्ते देशकालं पश्यन्तः स्वीयामध्ययन-पद्धतिं परिवर्त्य धर्मोपदेशशिक्षामवश्यं गृह्णीयुः । अद्यत्वे केवलं परीक्षापद्धत्या पठनेन परीक्षोत्तरणमात्रेण नास्ति कोऽपि लाभः ।

सम्प्रति तु व्यापकपाण्डित्यस्यैव प्रयोजनं विद्यते । लोका अपि बहुश्रुतानेव विदुषः समाद्रियन्ते । पूर्वकालेऽपि चतुरस्रपाण्डित्यस्यैव समादरणमासीत् । यथा कालिदासादयो विद्वांसोऽभूवन् । यथा वा मध्ययुगेऽपि मल्लीनाथादयः । 'वाणीकाण-भुजीमजीगणदवाशासीच्च वैयासकीमन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् । वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां । लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः' । इति मध्ययुगेऽपि विदुषां चतुरस्रमेव पाण्डित्यं दृश्यते । सम्प्रत्येव शतार्धवर्षतः एकदेशीयज्ञानं परीक्षाप्रणाल्या प्रचलितं दृश्यते । यच्च दर्शं दर्शं साम्प्रतिका देशकालात्मानभिज्ञा इतिहासज्ञानशून्याः कियन्तस्तामेव प्राचीनां पद्धतिमुद्गिरन्ति तज्जालपतिताः स्वयमन्यानपि तत्रैव पातयितुमिच्छन्ति ।

अस्तु—धर्मोपदेशज्ञानमिदानीं नितान्तमावश्यकं व्याख्यानशैलीशिक्षणञ्च सत्रोद्दीपन—विभावकृत्यमावहतीति भारतधर्ममहामण्डलीयोपदेशक-महाविद्यालये नामोल्लेखनपूर्वकं काशीस्था भावुकाः संस्कृतज्ञाश्छात्रा अन्ये च बहिस्था धार्मिकाध्यात्मिक-विश्वविद्यालयीयपरीक्षाप्रदानेनात्मानं सार्थकयन्तु इत्यस्माकं सत्परामर्शः ।

---

## काश्यां संस्कृतच्छात्रालयः ।

सम्प्रति भारते काशी नगरी हि विद्याकेन्द्रं विद्यते । पूर्वमपि इयमेव पुरी विद्याकेन्द्रं तपःक्षेत्रञ्च प्रसिद्धमासीदिति लोकशास्त्रप्रसिद्धिरस्ति । तथाहि—

"पुरी श्रेष्ठा तीर्थराजी जित्वरी च तपःस्थली ।
काशी वाराणसी काशिर्वरणासी वराणसी ॥" इति ।

इत्येवमार्य्यधर्ममर्य्यादाया जागरूके केन्द्रे विद्यावैभवभवने सम्प्रति संस्कृत-वाङ्मयमहार्णवेऽस्मिन् पवित्रतमे काशीक्षेत्रे संस्कृतच्छात्राणां कृते एक ईदृशश्छात्र-निवासोऽपेक्ष्यते, यत्र बहिर्देशदेशान्तरतः समागतानां संस्कृतच्छात्राणां प्राथमिकी स्थितिः स्यात्तदनन्तरं तेऽन्यत्र कापि पाठशालायां सति निवासप्रबन्धे निवसेयुः । अद्यत्वे तु इह वाराणस्यां संस्कृतच्छात्राणां निवासकष्टमवर्णनीयं विद्यते। ते हि स्वग्रामात् पलाय्य स्वबन्धून्निवेद्यानिवेद्य वा इह काश्यां संस्कृताध्ययनेच्छया समायान्ति । परन्तु इह समागत्य कापि समुचितनिवासमलभमाना मठात् मठमाहिण्डमानाः क्वापि जीर्णमन्दिरे कुत्रापि वणिगापणे, कुहचन वञ्चकभवने क्वचन सन्यासिनिलये कुत्रचनानुचितस्थाने यथाकथमपि स्थित्वा कुसङ्गत्याऽध्ययनत एव पराङ्मुखा भवन्ति । यदि दैवान्नैवेदृक्कुसङ्गतिप्रभावः कस्मिंश्चित् पतति चेत्स स्वयमेव निवासदुःखोद्वेजितः पुनरपि स्वगृहमेव परावर्तते । कियन्त एवेदृशीं विषमां निवासदुःखपरम्परामनुभवन्तो विद्यार्जनं विदधति । संयुक्तप्रान्तीयाध्यापकमण्डलेनाप्येकस्य-संस्कृतछात्रालयस्येहावश्यकतोद्घोषितास्ति ।

सत्येवं व्यतिकरेऽतित्वरयैवेह काशीक्षेत्रे एकस्य वृहत्संस्कृतच्छात्र-निवासस्य प्रयोजनं विद्यते । यत्र स्थित्वा संस्कृतज्ञाः छात्रा एकभावभाषावेशविभूषिताः प्राचीनगौरवसंरक्षणपुरस्सरा वर्तमानप्रगतिपरिचायकवातावरणसंरक्षिताः परिष्कृतमतयो हिन्दुसंस्कृतिसमेधनतत्परा भवेयुः । यथेच्छञ्च निवसन्तो यत्र क्वापि विद्यालये स्वतन्त्रतया पठेयुश्च । अत्रापेक्ष्यते कस्यचन श्रेष्ठिनो धार्मिकस्य दृष्टिपातः । येनायं छात्रनिवासालयः शीघ्रमेव विशालक्षेत्रे विविक्तप्रदेशे निर्मितः स्यादिति दिङ्मात्रमिदानीमस्माभिर्निर्दिश्य विरम्यते ।

———०———

भारतविश्रुतानां त्यक्तमहामहोपाध्यायपदवीकानां महामहाध्यापकानां पण्डितप्रवर-पञ्चानन-'तर्करत्न' महाशयानां निधनोपलक्ष्ये सवैलक्ष्यम्

## शोक-सलिलाञ्जलिः ।

चकाशे सुमनोमध्ये काशी वासेन यस्य हा !
पञ्चभूतेश्वरोऽप्यासीत्पञ्चानन इवापरः ॥ १ ॥

दाक्षिण्यवात-मलयो निलयो गुणानां
सौजन्य-सिन्धुरथ भारतलोकबन्धुः ।
वाराणसी-सुमनसां मनसाऽनुचिन्त्यः
पञ्चाननः क्व नु गतः प्रथितः पृथिव्याम् ॥ २ ॥

आनन्दवनवासेन विमलीकृतमानसः।
चिदानन्दमुदं विन्दन्नविन्दद्ब्रह्मणः पदम् ॥ ३ ॥

प्रभाशून्या काशी, विलसति विकासी न सुमनाः
न वा धर्माचारः परमसुविचारः सनियमः।
अहो! स्वान्तं नष्टं विधुरफणिदष्टं हि सुखिनां
त्वयि त्यक्ते लोकं वहति वहुशोकं निजजनः ॥ ४ ॥

कर्पूरकान्तिर्विजयाभिलाषो वृषध्वजो भूतदयार्द्रचित्तः।
सदोमयाश्लिष्टतनुर्महेशो विहाय पञ्चानन! हा! कुतोऽसि ॥ ५ ॥

वाणी कलां न सकलां विदधाति खिन्ना
भिन्ना भवादृशसुतं परिमार्गमाणा।
हा! हा!! क्व पुत्र इति साश्रुमुखी ब्रुवाणा
कांस्कान्न शोकपटली विकलीकरोति ॥ ६ ॥

तर्कः कर्कशतां गतोऽर्थगुरुतां वेदान्तपाथोनिधिः
नूनं व्याकृतिकौमुदी विगलिता सन्मानहीनानना।
संसारे वहुशास्त्रवादरसता साऽस्तं गता साम्प्रतं
कैवल्यं व्रजति प्रवीणविबुधे पञ्चानने शाश्वतम् ॥ ७ ॥

शशः स्वीयं सारं प्रथयितुमनाः क्रोशति भृशं
मृगो धावन् गर्वं भजति करिणश्चीत्कृतिजुषः।
कलापी सोत्साहं व्यपगतघने नृत्यति वने
दिवं याते पञ्चानन! वनदशा कीदृगधुना ॥ ८ ॥

मायामात्रविलासि नश्वरमयं बुद्ध्वा जगद्व्यग्रता-
भारैर्निष्कुषितं विचक्षणवरः क्षोणीमणिः सत्वरः।
कृत्वा शिक्षणसंस्कृतं जनचयं प्राप्तः पदं ब्रह्मणः
स्वीयाभी रमणीयभाभिरमलान् सम्पादयत्वाशु नः ॥ ९ ॥

पञ्चाननप्रसादेन लब्धः पञ्चाननो हि यः।
तस्य पञ्चाननस्यान्ते भूयः पञ्चाननं श्रये ॥ १० ॥

रचयिता—
शोकसन्तप्तः श्रीकाशीनाथठक्कुरः साहित्याचार्यः।
रानीकोठा मीरघाट काशी।

—०—

त्यक्तमहामहोपाध्यायपदवीक सर्वतन्त्र-स्वतन्त्र-स्वनामधन्यतर्करत्न-
श्रीपञ्चाननदेवशर्म्माणां परलोकाधिगमे

## शोके प्रलापः।

श्रीपञ्चानन एव पञ्चवदनो भूत्वेह पञ्चाननः,
द्वैताद्वैतविभेदपञ्चकपरान् स्वत्सम्प्रदायानुगान्।
निर्जीवान् निजशक्तिभाष्यरसतः सञ्जीवनाज्जीवयन्,
हा! पञ्चाननतर्करत्नविबुधः पञ्चाननत्वं गतः॥ १॥

भाष्यं भास्वरमस्य शक्तिपरकं दृष्ट्वैव सर्वप्रियं,
तत्पाण्डित्यबलं विदन्ति निखिला वाराणसेया बुधाः।
वैदुष्ये विदुषो न यस्य विदुषां वैमत्यमेवाभवत्,
श्रीपञ्चाननतर्करत्नसुधिया काशी कथं प्रोज्झिता॥ २॥

गीर्वाणवाणीरसिकः कुमारः
शिवस्य शैवीं पुरमध्यतिष्ठत्।
गते कुमारे स्वयमेव काश्यां
पञ्चाननोऽभूद् बुधतर्करत्नः॥ ३॥

जगत्पावके जाह्नवीतीर्थदेशे
चतुःषष्टिशक्त्याख्यपीठे वरेण्ये।
सदा शक्तिरूपं परं ध्यायमानः
स्वतः शक्तिरूपो हि पञ्चाननोऽभूत्॥ ४॥

हा! पञ्चाननतर्करत्नविबुधे विद्वद्वरैरर्चिते,
आनन्दाख्यवनं विहाय सहसा श्रीशक्तिलोकं गते।
गर्जन्तो विहरन्ति भीतिरहिता धर्मद्विषः फेरवः,
श्रीमद्भारतधर्मकल्पविटपध्वंसं विधत्ते कलिः॥ ५॥

शोकार्त्तो—गङ्गाविष्णुशास्त्री (महामहोपदेशकः)
श्रीभारतधर्ममहामण्डलस्य।

—

## शोकोद्गमः ।

अन्तस्तापप्रकटनविधौ न क्षमेयं वराकी
वाणी यद्यप्ययि ! तनयितुं शोकभारं स्वकीयम् ।
यस्मिन्नासीन्नुतिरनुदिनं सर्वतन्त्रस्वतन्त्रे
तस्मिन्नेवं रुदतिरधुना वर्द्धते शोकवेगात् ॥ १ ॥

दिशः शून्याः सर्वाः परिगलितधैर्य्याश्च विबुधा
अहो ! लोकाः शोकाश्रुकलितदृगम्भोजयुगलाः ।
तथेमे ते शिष्या विबुधपतिपञ्चाननगुरौ
त्वयि प्राज्ञे पञ्चाननपुरनिवासं कलयति ॥ २ ॥

पुरा त्यक्तोऽप्येष त्वयि समनुरक्तो ननु भृशम्
महेत्याद्याख्यो यः समभिलषणीयोऽपि विबुधैः ।
न धत्ते सौभाग्यं त्वयि सुरपुरं वै कलयति
ह्युपाधिः सोऽयन्ते प्रविलपति किन्तु प्रतिपलम् ॥ ३ ॥

न कोपः कारुण्यं श्रयति न च रागो हि विषये
विशेषः स्वर्गे वा भुवि च तव नाद्वैतकलनात् ।
विहाय द्रागस्मानिह विरहखिन्नानयि गुरो !
ह्यकस्माद्धा ! कस्मादमरपुरवासं वितनुषे ॥ ४ ॥

गुरोऽयं संयोगः परममहसा ते च सहसा
न योग्यः शोकस्य प्रभवति तथापीह जगति ।
महामोहागारे दुरितनिचये मूढ़मनसो
वयं शोच्याः शोचाम इव ननु लीना हि निरये ॥ ५ ॥

गभीरं पाण्डित्यं निखिलनिगमालोकनविधौ
सभायां वाग्मित्वं सरससुकवित्वं निपुणता ।
निबन्धानां बन्धेऽपि च किल मदान्धा मधुरिमा
स्मृतं सर्वं भिन्नं दलयति च चेतो मुहुरिदम् ॥ ६ ॥

त्वदीयं संसर्गं परिकलितगर्वं च सहसा
समासाद्य द्रागेव च खलु सरागेण मनसा ।

पुरा या हा ! शोकात्तव विरहजादेवमधुना
इमा विद्याः सर्वा गलितनिजगर्वाः समभवन् ॥ ७ ॥
हित्वा पूर्वं प्रवरतनयं गर्वभूतं समेषाम्
विद्यावाचस्पति मधुलसत्सूदनाख्यं त्विदानीम् ।
विद्वद्गर्व्वं प्रवरविबुधं रत्नपञ्चाननञ्चेद्
धिग् दौर्भाग्यं तव जननि ! हा !! दुर्भगे !!! मातृभूमे ॥ ८ ॥
वाणी मुग्धा विरहविधुरा शोकदग्धा विदग्धा-
श्वेतश्चिन्तानिचयचलितं कण्ठमाकुण्ठितञ्च ।
शोकोच्छ्वासादहह !!! महता नेत्रनीरोद्गरेण
रुद्धेऽपाङ्गे जगति विकले मौनमालम्बयामः ॥ ९ ॥

—श्रीबलभद्रठाकुर साहित्याचार्य्य-सर्वदर्शनशास्त्रिणः ।

—o—

जगन्मान्य त्यागमूर्ति पण्डितप्रवर श्रीपञ्चाननतर्करत्नभट्टाचार्याणां विषये-

## शोकोच्छ्वासाः ।

[ श्रीमतो रायबहादुर पण्डित जगन्नाथप्रसादमेहता-महोदयस्य सभापतित्वे काश्यां टाउनहालशोकसभायां पठिताः ]

इदमद्य विलाप्य सीसकं द्रवदग्नि श्रवणेषु सम्भृतम् ।
अथ दिग्धविषेण शंकुना हृदयेषु प्रविषह्य कीलितम् ॥
अनलैः सममेव वैद्युतैः प्रहृतं हा ! परितोऽङ्गकेषु नः ।
यदिमे प्रथमे मनीषिणां सहसोत्सृज्य दिवं गता इति ॥
श्रुतमर्धपदेन मूर्च्छितैरपि च श्रावितमश्रुगद्गदैः ।
नहि कश्चिदलं विलोकितः श्रुतवानश्रुजवाद्विना भवन् ॥
क गतोऽद्य बुधाग्रणीमणिः क्वनु पञ्चानन-तर्करत्नराट् ।
अवलम्ब्य यदेव चेष्टितं तदु मूलं विधिना विकर्तितम् ॥
इतरेषु कथावशेषतां गमितेष्वत्र नियम्य गौरवम् ।
व्यरमाम विधेऽधुनाऽपि तान् हरता हन्त ! कृता निरंकुशाः ॥
अधुना क उपेत्य पृच्छ्यते किमिवोदाहरणं विधीयते ।
विनयं कुत आप्नुवामहे स्खलितेष्वप्यनुशास्तु कोऽद्य नः ॥

स्मरतां गुणगौरवं कवेः स्मरतामप्यपुनः समागमम् ।
हृदयं शतधा विदीर्यते तनुरेषा तनुते महाज्वरम् ॥

नहि जातु भयान्न लोभतो न च कामान्न च जीवितेहया ,
त्वमधर्मपथे पदं न्यधा इतरेषूत्पथगेषु भूरिषु ॥

स्मृतिरस्खलिता तव स्मृतौ श्रुतिवाच्यश्रुतपूर्वचातुरी ।
पदवाक्यसुमानवारिधौ ननु पारङ्गतता मतेस्तव ॥

त्वमधर्मनियामकं नृपं विनिकुर्वन्पदवीं निराकरोः ।
अवलोक्य यदैव पण्डिताः सुजगन्मान्यपदं तवावदन् ॥

अपि विप्रमहासुमेळने ननु संघेऽपि विशुद्ध-संस्कृते ।
अपि विश्वकलालये भवान्प्रविधाताऽखिलधर्मकर्मसु ॥

वद कस्य तवेव भावना जगदम्बाचरणाम्बुजातयोः ।
यदलिख्यत शक्तिभाष्यकं मधु वेदान्तमुनेर्मनोगतम् ॥

बहुशो बत कोपितोऽपि सन् ममतां वत्स इवादधा मुहुः ।
ननु भूरिविवेकपूरिता निजवैषम्यविधावुदासते ॥

कति वा गणयाम ! ते गुणान्गणनीयांस्तु परार्धसंख्यया ।
ननु बालवदीदृशो जनः कियदेवाकलयेद् यथामति ॥

इह धार्मिकपक्षकानने सति पञ्चानन ! शास्तरि त्वयि ।
निभृतं समवस्थिताः शिवा अधुना हन्त ! रुवन्त्यमङ्गलाः ॥

धृतिरस्तमिता मतिश्च्युता हृदयं शून्यमिवावभासते ।
सकलं सह रोदितीव नो जगदाभाति निरुत्सवं पुरः ॥

ननु सत्यमुदाहृतं श्रुतौ नहि कश्चिद्भवितेह कस्यचित् ।
नहि चेत्कथमद्य वत्सलः स्वजनान्नः परिहाय यास्यति ॥

असमाप्य विधिं समादृतं क्व गतो हन्त ! भवान्न विद्महे ।
किमपेक्षितवस्तु नाकतः परिगृह्यैष्यसि पूर्तये पुनः ॥

शिव ! शिव ! नहि पूर्तिं निर्गतस्यावलोके ।
असुकृतिदुरवापास्ते गुणाः कस्य वा स्युः ॥

विधिरसि सुनृशंसो यो गुणानां निधानं ।
सृजसि परमकाण्डे निर्दयो नेष्यसीति ॥

परिजनेषु—

किमिह बहु विलप्याप्येति नासौ गतात्मा इयमिह किल रीतिः सम्मता सा पुराणी।
तदनुवदत युष्माकं तथाऽस्माकमेष प्रदिशतु धृतिमीशो मुक्तिदाता महेशः॥

—श्रीगीर्वाणवाग्वर्धिनी सभासदः।

—०—

## विराट् शोकसभा।

त्यक्तमहामहोपाध्यायपदानां महामहाध्यापकानां सर्वतन्त्रस्वतन्त्राणां पण्डितप्रवर पञ्चाननतर्करत्न महोदयानां शाश्वतिकवियोगे श्रीभारतधर्ममहामण्डलतः उपदेशकमहाविद्यालयतः आर्य्यमहिलामहापरिषत्तः श्रीकाशीपण्डितसभातः श्रीमैथिलविद्वत्परिषत्तः सयुक्तप्रान्तीयाध्यापकमण्डलतः काशीनागरिकसमुदायतश्च विराट् शोकसभा कार्तिककृष्णाष्टम्यां श्रीमत्याः श्रीदरभङ्गा महाराज्या वांसफाटकस्थ-महामन्दिरे चतुर्वादनेऽभूत्। तत्र महान्तो विद्वांसो बहवश्च नागरिका भूयांसश्च संस्कृतच्छात्राः समवेता अभूवन्। श्रीमन्तो महामहोपाध्यायाः श्रीफणिभूषण तर्कवागीश महोदयाः सभापतिपदे समासीना आसन्।

सर्वप्रथमं महामहाध्यापकानां पं० श्रीगोपाल शास्त्रिणां दर्शनकेशरिणां तर्करत्न-महोदयजीवनचरितसम्बन्धे संक्षिप्तभाषणानन्तरम् पं० श्रीदेवनायकाचार्य्याः, महामहोपदेशकाः पं० गङ्गाविष्णुशास्त्रिणः, विद्यासागर श्रीदेवीनारायण ऐडवोकेट महोदयाः तर्करत्नमहोदयानां जीवनचरितविषयेऽभिहितवन्तः। अवसाने च सभा-पतिमहोदयानामुपसंहारभाषणानन्तरम् अधोलिखितः प्रस्तावः सर्वैरुत्थाय स्वीकृतः—

सर्वेऽपि वयं काशीस्थाः सम्प्रति प्रधानविद्यापीठेऽस्मिन् काशीक्षेत्रे महतैकेन शाश्वतिकवियोगदुःखेन सन्तप्ता इह समवेताः स्म। यद्यपि जन्मना सहैव मृत्यु-रपि इह मृत्युलोके सहचरवद् व्यवतिष्ठते तथापि अद्यास्य भारतद्वीपस्यैकोऽसाधा-रणो विद्वान् सर्वशास्त्राणां पारवेत्ता वेदान्तशास्त्रीयप्रस्थानत्रये शक्तिभाष्य-रचयिता सदाचारस्य जागरूकः प्रतिनिधिः हिन्दूधर्मस्य प्रतीकः सनातनमर्य्यादायाः प्रौढः प्रतिपालयिता सर्वविज्ञानराशिः पं० पञ्चाननतर्करत्नमहोदयो लोकमिमं विहाय परलोकं प्रस्थित इति हिन्दुधर्मस्य सनातनधर्मसमुदायस्य संस्कृतविद्वत्समाजस्य च या हि अपूरणीया क्षतिः सञ्जाता साऽस्मान् सदा समुद्वेजयति।

स हि महात्मा शास्त्राणां मर्मवेत्ता अनेकग्रन्थानां निर्मातैव केवलं नासीत्, किन्तु

साम्प्रतिके घोरेऽस्मिन् कलिकाले वेदशास्त्राणां प्राक्तनीमार्य्यमर्य्यादामक्षुण्णां संरक्षन् सदाचारपालनप्रतीको भूत्वाऽस्माकं समक्षे आदर्शस्वरूप आसीत्। आमृत्यु जगत्कल्याणं धर्मजातिदेशसेवाञ्च विदधत् स्वात्मानं स्वकुलं स्वदेशं च धन्य-धन्यं चकार, इह काश्यां देहत्यागं कृत्वा शिवसायुज्यं गत्वा जन्मसाफल्यमुपाजगाम । तस्यान्त्येष्टिसंस्कारश्च मणिकर्णिकास्थविष्णुपदोपरि सञ्जातः । इत्येवं देवदुर्लभां गतिमुपलब्धवान् । स हि अशोच्यो वर्तते किन्तु तद्वियोगवन्तः शोच्या वयं तद्वियोगदुःखसन्तप्तेभ्यस्तदीयसुयोग्यपुत्रादिसर्वकुटुम्बेभ्यो हार्दिकीं शोक सम-वेदनां प्रकटयन्तो महातीर्थेऽस्मिन् समवेताः श्रीविश्वनाथचरणयोः प्रार्थयामहे यत्त-दीयचिरशान्तिभाक्पवित्रात्मप्रभावतो वयं तदुपदर्शितेन पथा प्रचलितुं शक्तिभाजो भवामः। सनातनीं मर्य्यादां लोकधर्मजातिदेवभाषादेशभाषासेवां च तदादर्शेनैव कर्तुं शक्तिञ्च समधिगच्छन्तस्तदीयपादपद्मयोः श्रद्धाञ्जलिं समर्पयाम इति ।

---

## कनखले शाश्वतिकी धर्मप्रतिष्ठा ।

(लें०—एकः प्रत्यक्षदर्शी विद्वान्)

श्रीमतां महामहिमशालिनां परमहंसपरिव्राजकाचार्य्याणां श्रीमतां श्रीस्वामि-कृष्णानन्दजी मण्डलीश्वरमहोदयानां शुभसंकल्पेनाद्यत्वे सनातनधर्मजगति सर्व-परिव्राजकानुकरणीयम् सनातनधर्मप्रतिष्ठाप्रचारादि कार्य्यं भवतीति सर्वैः सनातन-धर्मावलम्बिभिर्विज्ञैः सुज्ञातमेवास्ति। तै र्हि महात्मभिः काशीक्षेत्रे विश्वनाथपुर्य्यां लक्ष्मीकुण्डस्थाने नारायणमठनाम्ना विशालमेकं भवनं निर्मापितम् । यत्र ब्राह्मणाः साधवश्छात्राः तीर्थयात्रिणश्च निरन्तरं निवसन्तोऽध्ययनाध्यापनदेवाराधनपूजन-जपतपस्तीर्थनिवासादिकृत्यमनुतिष्ठन्ति ।

अमृतसरनाम्नि पञ्चालप्रान्तीयप्रधाननगरेऽपि एकं वृहन्निवासमन्दिरं संन्यासा-श्रमनाम्ना प्रतिष्ठापितं यत्रैकः संन्यासिसंस्कृतपाठशालेति नाम्ना संस्कृतविद्यालयोऽप्य-स्ति। तत्र ब्राह्मणबालकाः संन्यासिनश्च भोजनाच्छादनादिकं सर्वमपि जीवनोप-योगि वस्तुजातं लभमानाः स्वाध्यायं कुर्वन्ति ।

सम्प्रति इह कनखलतीर्थे दक्षप्रजापतिक्षेत्रतो नातिदूरे भगवत्या भागीरथ्या-स्तीरे चण्डिकादेव्याः पश्चिमायां दिशि सर्वजनीनमार्गस्य पुरोभागे 'श्रीकृष्णाश्रम' इति नाम्नाभिनवम् एकमतिविशालं भवनं तैरेव महात्मभिर्निर्मापितम्। यत्र चत्वारि वृहन्ति देवमन्दिराण्यपि निर्मापितानि। येषु एकस्मिन् स्वयमाविर्भूतो भगवान्

पातालेश्वराख्यः शङ्करो विराजते। अन्येषु च त्रिषु मन्दिरेषु एकस्मिन् मध्यमहा-मन्दिरे गणपत्यादिभिः सह शिवपञ्चायतनं विद्यते। ततो दक्षभागस्थमन्दिरे पद्म-पादाचार्य्यसुरेश्वराचार्य्य-हस्तामलकाचार्य्य-त्रोटकाचार्य्याभिधैश्चतुर्भिः शिष्यैः सह भगवान् भाष्यकारः श्रीमानाद्यशङ्कराचार्य्यो विराजते। वामभागस्थमन्दिरे चतुर्विंशति कोटिभिः "ॐ नमो नारायणाय" इति लिखितमन्त्रैः सम्भृतपक्वेष्टक-कुट्टिमोपरि श्रीलक्ष्मीदेव्या सह भगवान् श्रीलक्ष्मीनारायणो विराजते।

एषामेव मन्दिराणां प्रतिष्ठाकर्मोद्देशेन ज्येष्ठकृष्णपञ्चमीतो ज्येष्ठकृष्णैकादशीं यावत् तत्र महानासीत् धार्मिकः सम्मर्दः। नवनिर्मितस्य महाप्रासादस्य विस्तृते प्राङ्गणे एकस्मिन् भागे नारायणरुद्रनामको होमात्मको यागो वैदिकानां ब्राह्मणानां तत्त्वावधाने महता समारम्भेण सम्पद्यमान आसीत्। एकस्मिन् भागे सनातनधर्म-प्रवचनं प्रत्यहं भवति स्म यत्र श्रोतृभक्तानां महान् समुदायः समुपस्थितो विद्यते स्म। सर्वस्यास्य यागादिकृत्यस्य सम्पादनाय श्रीकाशीधाम्नोऽमृतसरस्तः ऋषिकेशस्थाना-दन्यतोऽपि बहवो महात्मानः संन्यासिनः साधवो विद्वांसश्च निमन्त्रिता आसन्। तेषु काशीतः समागतेषु समुल्लेखनीया विद्वांसः सर्वतन्त्र-स्वतन्त्राः पं० पद्मनाभ-शास्त्रिणः षड्दर्शनाचार्य्याः, महामहाध्यापकाः पं० श्रीगोपालशास्त्रिणो दर्शनकेशरिणः (श्रीकाशीपण्डितसभायाः प्रधानमन्त्रिणः) समुपस्थिताः। तत एव समागतेषु संन्यासिषु समुल्लेखयोग्याः श्रीमन्तो व्याख्यानविशारदा भारतप्रसिद्धवाग्मिनः श्रीलालनाथस्वामिनः, श्रीशङ्करानन्दस्वामिनश्चोपस्थिताः। अमृतसरस्तः श्रीदेवदत्त-शास्त्रिणः श्रीकृष्णानन्दस्वामिनश्चोपस्थिता आसन्। ऋषीकेशतः श्रीमायारामा अग्निहोत्रिणो वैदिकाचार्य्याः, येषां यागे प्राधान्यपदमासीत्। प्रवचनकर्तृषु स्वनाम-धन्या महात्मानः श्रीस्वरूपानन्दमहोदयाः श्रीस्वामिपूर्णानन्दमहोदयाः श्रीस्वामि-मोहनानन्दमहोदया आसन्।

पूर्णाहुतिदिवसात् पूर्वदिने महता समारोहेण नगरयात्रानिमित्तेन देवमूर्तिप्रति-मानां हरद्वारस्य ब्रह्मकुण्डेऽभिषेकसम्पादनार्थं विराट्-रथयात्राप्रदर्शनमभूत्। ततो द्वितीयदिने सर्वेषामेव देवमूर्तीनां प्रतिष्ठा वेदमन्त्रघोषपुरःसरं समजनि। यत्र ब्रह्मचारी भगवान् चैतन्यदेवः श्रीस्वामिविशुद्धानन्दः कोठारिमहोदयश्च कृत्य-सम्पादनभारं गृहीतवन्तौ आस्ताम्।

सर्वान्तिमदिने हरद्वारस्थानां कनखलस्थानाञ्च सर्वेषामेव साम्प्रदायिकानां संन्यासिनां योगिनां निर्मलानां समष्टिभोजनं सवस्त्रदक्षिणं सम्पन्नम्, यत्र महा-संसदि सर्वेऽपि मण्डलीश्वराः श्रीमन्तो मोहान्ताश्च समुपस्थिता आसन्। तत्र सर्व-

प्रथमं श्रीमतां श्रीजगदीश्वरानन्द भारती महोदयानामुपक्रमभाषणानन्तरं काशीस्थ प्रसिद्धविदुषां श्री पं० पद्मनाभशास्त्रिणां श्रीगोपालशास्त्रिणाञ्च भाषणमभूत् । ततश्च कैलासाश्रमीय श्रीकृष्णानन्द मोहान्तमहोदयैः सह समागतेषु मण्डलीश्वरेषु सर्वं प्रथमम् श्रीमतां मण्डलीश्वराणां श्रीमद्भागवतानन्द स्वामिनामशेषशास्त्राचार्य्याणां संक्षिप्तो धर्मोपदेशः । श्रीमतां मण्डलीश्वराणां महेशानन्दस्वामिनामपि संक्षिप्तो धर्मोपदेशः । स्वामिवर्य्याणां मोहनानन्दमहोदयानां श्रीधर्मानन्दमहोदयानाञ्च सामयिकं मन्दिर-प्रतिष्ठादिधर्मकृत्योपरि संक्षिप्तं भाषणमभूत् । अवसाने च मन्दिरप्रतिष्ठापकानां श्रीमतां मण्डलीश्वराणां श्रीकृष्णानन्दस्वामिमहोदयानां संक्षिप्तं भाषणमभूत् । यत्र तैर्महा-भागैः स्वात्मनो हृद्गतो भावो विवृतो यदिदं सर्वं भगवतो विश्वात्मनो नारायणस्य तुष्ट्यै एवास्माभिः सम्पाद्यते । एतेन धार्मिककृत्येन विश्वजनीनं कल्याणं स्यात् । सर्वेषां साधूनां सद्गृहस्थानाञ्चाभ्युदयो भवेदित्येव मे मनसोऽभिलाषः । एतेन मदीय-कृत्येन विश्वात्मा प्रीयतां शरीरमिदं मदीयं सर्वजनीनकृत्ये एव संलग्नं स्यादित्याद्यभिधाय विरतेषु मण्डलीश्वरमहोदयेषु सहस्रसंन्यासि—ब्राह्मणानां भोजनदक्षिणादिकृत्यानन्तरं दीनानाथेभ्योऽन्नवितरणादि धार्मिकं कृत्यं निर्विघ्नं सुसम्पन्नम्, इत्येवं कनखलेऽत्र धर्मक्षेत्रे गतनिदाघे महानासीद् धार्मिकः समारम्भः ।

—o—

## दिवङ्गताः पण्डित गङ्गाधरशास्त्रिणो भारद्वाजाः ।

काशिक राजकीय संस्कृतपाठशालायामिमे साहित्यव्याकरणाध्यापका आसन् । एतेषां वयोऽधुना पञ्चपञ्चाशद्वार्षिकमेवासीत् । परन्तु कालस्य क्रूरस्य कृते न किमपि युक्तायुक्तविचारप्रयोजनं भवति । स हि समयप्राप्तं सर्वमेव निगिलति । इहैव काश्यां विगताश्विनमासि निजगृहे तेषां निधनमभूत् इति विमृश्यैवोक्तं केनचन मर्मविदा कविना "कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि" ।

इति अकालेऽकस्माद्वियुक्तानां स्वर्गीयाणां भारद्वाजमहोदयानां शोकेन सन्तप्तान्तःकरणा वयं तदीयकुटुम्बिभिः सह समवेदनां प्रकटयामः तद्वियोगं सोढुं तद्बन्धुभ्यो धैर्य्यप्रदानाय तदात्मनश्चिरशान्त्यै श्रीकाशीविश्वेश्वरञ्चाभ्यर्थयमाना विरमामो विलुप्तधैर्या इति । सं०

## श्रीमत्कृष्णाभ्यर्थना।

सम्राजो निखिलाः परस्परमहाविद्वेषिणश्शृङ्खलाः,
सर्वे युद्धविशारदा द्विरदवन्मत्ताः प्रमत्ता मदात्।
अन्येषां विजिगीषया शतशतोपायानपायान्वितान्,
कुर्वन्तो जगतां महाप्रलयनं कर्तुं किमद्योद्यताः॥ १॥

श्रीमत्कृष्णकृपानिधे स्त्रिजगतामेको नियन्ता भवान्,
सर्वेषां हृदये स्थितो निजमहामायाबलान्नर्तयन्।
माऽकाले प्रलयं विधेहि भगवँल्लोकानिमान्पालय,
प्राप्ते तत्समये विधास्यसि तथा भूयाद्यथा ते रुचिः॥ २॥

सर्वस्मात्त्वदुपासके तव जनुःप्रान्ते पवित्रे प्रिये,
प्रीत्या त्वत्प्रतिपालिते तव पदाम्भोजे रते भारते।
बाल्यात्ते करुणार्णवस्य करुणापात्रे सुपात्रे महान्,
उत्पातोऽतिभयङ्करोऽतिविषमस्तस्मात्परित्राहि तम्॥ ३॥

विद्रोहो दुरुपद्रवः प्रतिदिनं राजप्रजामध्यगो,
दुःकालोऽपि दुरामयोऽप्यतिदुराचारप्रचाराश्चिरात्।
अत्याचारपरम्परापि जगतां सर्वत्र संवर्धते,
तज्जानञ्जगतास्पते यदुपते जागर्षि निद्रासि वा॥ ४॥

सुप्तश्चेद्द्विषसोदरासहचरः क्षीरार्णवे साम्प्रतम्,
क्षिप्रं तत्करुणार्णवः करुणया जागर्तु विश्वम्भरः।
नो चेद्भारतभूरियम्भगवतो लीलास्थली सत्वरं,
दुश्शीलैर्मनुजैर्भविष्यति कलेर्लीलास्थली दुःस्थली॥ ५॥

—राघवरामत्रिपाठी 'राघव'
(गीताप्रेस, गोरखपुर)

---

# अयोध्यास्थ "संस्कृत" पत्रसमालोचना ।

[ जयपुरीय "संस्कृतरत्नाकर" पत्रस्य विगते अगस्तमासीयेऽङ्के "संस्कृतमिति नाम्ना प्रसिद्धस्य पत्रस्य सम्पादकमहोदयोऽवदधातु" इति शीर्षकेणैकः सम्पादकीयो लघुलेखः प्रकाशितो दृष्टः । स चाविकलरूपेणाधस्तात् प्रकाश्यते येन "संस्कृत" पत्रस्य स्वरूपसम्बन्धे पाठकानां वास्तविकं ज्ञानं जायेत । सम्पादकः ]

---

## संस्कृतमिति नाम्ना प्रसिद्धस्य पत्रस्य

सम्पादकमहोदयोऽवदधातु ।

"विद्वन् ! अभिवादये ।

भवता यदेकं पत्रमादर्शरूपेण सम्प्रेष्य सम्प्रार्थितं यद् 'भवतां स्वकीयविद्यालयच्छात्रेषु पत्रस्यास्य प्रचारः कर्तव्यः' इत्यादि । तत्र ममेदमेव निवेदनं यत्तत्रभवतः संस्कृतप्रचारोत्साहस्तु सर्वथाऽभिनन्दनीयः प्रशंसनीयोऽनुकरणीयश्च । परं भवता स्वपत्रान्तर्गतलेखैः संस्कृतभाषा समुन्नीयतेऽवनीयते वेति परं विचारास्पदम् । भवत्प्रेषितसंख्यायाः सर्वेष्वपि लेखेषु मा भून्नाम प्रौढिः परं तत्र विद्यमाना व्याकरणाशुद्धयस्तु मन्ये सर्वेषामेव विज्ञपाठकानां मनांसि खेदयन्ति । यदि भवदभ्यर्थनाऽनुसारं छात्रेषु भवत्पत्रप्रचारः क्रियेत ते च तल्लेखान् प्रामाणिकान् मत्वा तदनुकरणं कुर्युस्तर्हि न केवलं परीक्षायामनुत्तीर्णा एव स्युः प्रत्युत निन्दाभाजनान्यपि । दूरे तिष्ठतु दीर्घलेखानां कथा, प्रारम्भिक लघुतरलेखेभ्य एव कानिचित् वाक्यान्युदाहरणरूपेण समुद्ध्रियन्ते—"प्रसिद्धनराः किञ्चिदपि चन्दां ददौ । धनिकस्य श्राद्धः । श्राद्धे सहस्रब्राह्मणाः वहवः दरिद्राश्च द्वौ दिवसौ पर्यन्तम् अखादयन् । स सर्वे असाध्यरोगाणां भेषजानि विना मूल्येन ददाति" इत्यादि । भगवन् ! किमेवंविधस्यैव संस्कृतस्य प्रचारोऽभीष्टः ? किमेवंविधसंस्कृतप्रयोगेणैव छात्राः परीक्षासु समुत्तीर्णा भवेयुः ? वक्तारश्च सभासु प्रशंसां लभेरन् ? लेखकाश्च वैदुष्यख्यातिमासादयेयुः । न कदापि । भगवन् ! हितबुद्ध्याऽहिताचरणं नोचितम् । संपादकः ।"

---

# विजावरराज्याधिपतेराकस्मिकदेहावसानम्।

कार्तिके मासे अमावास्यायां स्वराजधान्यां भारतधर्मेन्दु श्रीमन्महाराजाः सवाई सर सावन्तसिंह जू देवबहादुर के० सी० आई० ई० विजावराधिपतिमहोदया नश्वरं शरीरं विहाय आकस्मिकमसामयिकमेव स्वीयं शाश्वतिकं वियोगं निजप्रजाभ्यः प्रदाय परलोकं प्रस्थिता इति अस्माकम् श्रीभारतधर्ममहामण्डलस्थानां महान् शोकावसरः। इमे महाराजाः श्रीभारतधर्ममहामण्डलस्य संरक्षकाः, प्रजारक्षका धर्मानुरागिणश्च आसन्। सर्वथा स्वदेशस्वधर्मरक्षणार्थं विविधान् प्रयत्नान् कुर्वन्तिस्म। महाराजानां प्रजावात्सल्यं धर्मानुराग ईश्वरभक्तिश्च सर्वजनविदिता एवासन्। ईदृशानां नरपतीनां निधनेन देशस्य समाजस्य सनातनधर्मस्य प्रजानाञ्च या हि अपूरणीया क्षतिः सञ्जाता तया विषीदन्तो वयं तदीयशोकसन्तप्तेभ्यः कुटुम्बेभ्यो राजपरिवारेभ्यः प्रजाभ्यश्च धैर्य्यकामनया तैस्सह समवेदनां प्रकटयन्तो दिवङ्गत-महाराजानामात्मनः चिरशान्तिं श्रीविश्वेश्वरात्कामयामहे।

( सम्पादकः )

---

# परीक्षा सूचना।

धार्म्मिकाध्यात्मिक-संस्कृतविश्वविद्यालयस्यागामिन्यः सर्वा अपि परीक्षाः संवत् १९९८ वैक्रमे चैत्रमासीय-शुक्लैकादशीतः चतुर्दशीं यावत् तदनुसारेण अप्रैलमासीय ७ सप्तम तारिकातः १० दशम तारिकावधि गृहीता भविष्यन्ति।

सम्प्रति केन्द्राध्यक्षैर्महाशयैरन्यैरपि परीक्षादित्सुभिः परीक्षार्थमावेदनपत्राणि यावन्ति अपेक्षितानि स्युः, तावन्ति एव न हि ततोऽधिकानि, शीघ्रमेव कार्य्यालये पत्रम्प्रेष्य गृह्णन्तु। तानि च पूरयित्वा सशुल्कानि फरवरीमासस्य १५ तिथिपर्य्यन्त-मिह प्रधानकार्य्यालये प्रेषयन्तु। निश्चिततिथेः पश्चात् आवेदनपत्रप्रेषणे प्रत्यावेदन-पत्रम् अष्टौ आणका अधिका देया भविष्यन्ति। अन्यथाऽऽवेदनपत्राण्येव न गृहीतानि भविष्यन्तीति न विस्मरणीयम्।

मन्त्री—अ० भा० धार्मिकाध्यात्मिक संस्कृत विश्वविद्यालय,

महामण्डल भवन बनारस।

---

# समवेदनावेदनम्।

निवेदकः—श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः।

( स० ध० कालेजोपाध्यायः, मुल्तान सिटी )

'सूर्योदय'स्य प्रधानसम्पादकानां महामहाध्यापक-श्रीपण्डित पञ्चाननतर्करत्न-भट्टाचार्यमहानुभावानां देहान्तं श्रुत्वा खेदः समजनि। तत्र भवन्तो वयोवृद्धा महाविद्वांसश्चासन्। सनातनधर्म्माधारस्तम्भैरेभिः 'शारदाबिल' विरोधे स्वकीया महामहोपाध्यायपदवी त्यक्ता। अन्त्यजमन्दिरप्रवेशविरोधे एभिरेव मुख्यतया सनातनधर्ममार्गः प्रदर्शितः। एतद्धर्म्मदृढविश्वासकारणादेव एभिर्मालवीयमहोदयैः सह मतभेदाद् हिन्दुविश्वविद्यालयस्त्यक्तः।

वेदान्तदर्शनेऽपूर्वभाष्यमपि रचितमेभिः। 'कलङ्कमोचन' नाटकप्रभृतयो बहवः सुन्दरग्रन्था एभिर्निर्मिताः, यैरेषां प्रखरवैदुष्यपरिचयः प्राप्यते।

एषां वियोगेन वयमदसीयतनूजश्रीजीवन्यायतीर्थ भट्टाचार्य एम० ए० महोदयेन सह 'सूर्योदय' कार्यालयेन च सह सहानुभूतिं प्रकटयामः। परमात्मानं च प्रार्थयामहे यत् पुनश्च सनातनधर्म्मं त्रातुमदसीयाऽवतरणं स्यादिति।

—०—

# बेतिया-सनातनधर्म-सभा

## श्रीहरिहर-संस्कृत-कालेजश्च।

अहम् चम्पारनमण्डलान्तर्गत-बेतिया-नगरे सनातनधर्मसभायां धर्मोपदेशार्थं गतवानासम्। तत्र सभायां श्रीमन्तः स्वामिहरिहरगिरिमहोदया बकुलहरमठस्य मोहान्ताः सभापतिपदासीना आसन्। तेषामेव निवासभवने सभायाः कार्य्य-कारिणी समितिरुपविष्टाऽभूत्। तद्धि भवनं मोहान्तमहोदयस्य स्वकीयमेव विद्यते। अस्मिन्नेव वर्षे तैस्तत्र बेतियानगरे धर्मकृत्यार्थं नवीनं बृहद्भवनं तन्निर्मापितम्। तत्र गत्वा मया दृष्टं यत् पञ्चाशत्संस्कृतच्छात्राः संस्कृतविद्वांसोऽन्ये चातिथयः उभयसन्ध्यं तत्र पक्वान्नं भुञ्जते स्म। तद् दृश्यं दृष्ट्वा मम स्मृतौ महाभारतीयं तत् पद्यं सहसा समागतम्। यत्—

"ब्राह्मणानां सहस्राणि युधिष्ठिरनिवेसने।
पक्वान्नं भुञ्जते नित्यमुभे सन्ध्ये क्रियोत्तरम्॥"

ततश्च मोहान्तमहोदयैः सह बकुलहरमठेऽपि मम गमनमभूत्। तत्रत्यं दृश्यन्तु

मया वर्णनातीतं दृष्टम्। तदत्र सूर्य्योदयपाठकानामवश्यज्ञेयतया किञ्चित् संक्षिप्तमेव विव्रियते।

श्रीमद्भिः स्वामिहरिहरगिरिमहोदयैस्तत्र वेतियानगराभ्यासे स्वीयबकुलहरमठे तैःहरिहर-संस्कृत-कालिजनाम्ना एका बृहती संस्था विगतवर्षे प्रतिष्ठापिता। यस्याः कृते स्थायी द्रव्यनिधिरपि संरक्षितः। तदर्थमेकं सङ्कल्पपत्रं तैर्विलिखितं विद्यते। यत्र बहवो विहारप्रान्तीया राजकर्मचारिणस्तस्य द्रव्यनिधेः द्रष्टिपदे सन्निवेशिताः सन्ति। सर्वदा स द्रव्यनिधिः सुरक्षितः सम्वर्द्धितः स्यादित्येतदर्थं पञ्चषा ग्रामास्तस्य कृते राजनियमानुसारतो दान-पत्ररूपेण प्रत्ताः। इत्येवं मोहान्तमहोदयानां संस्कृतविद्या-प्रचारेऽनुरागं दृष्ट्वा तत्रत्याः सर्वेऽपि भारतीयार्य्यमर्य्यादानुरागिणः सज्जना हृदयतस्तेभ्यो धन्यवादं वितरन्ति।

इयं सनातनधर्मसभाऽपि मोहान्तमहोदयानामेव साहाय्येन सुसम्पन्ना। अत्र श्रीभारतधर्ममहामण्डलस्य महामहोपदेशकाः पण्डितगंगाविष्णुशास्त्रिणः काशीस्थाः प्रसिद्धपण्डिताः पं० श्रीरामदेवद्विवेदाश्च संमिलिताः सन्तः प्रभावशालिभाषणं दत्तवन्तः। पं० उमानाथद्विवेदी पं० रघुवीरदत्तद्विवेदी पं० मोदकाद्विवेदि-प्रभृतयः सभासंयोजका धन्यवादार्हा आसन्। तत्र सभायां बहवः प्रस्तावाः स्वीकृताः। प्रस्तावेषु वेतियाराज्य-मैनेजरमहोदयानां श्रीविपिनविहारिवर्म्मणां राज्य-प्रबन्धसौष्ठवेन प्रजानामानन्दप्रकाशनात्मकः तस्योपरि स्वविश्वासप्रकाशनेन स्वसन्तोषप्रकटनात्मकः तदीयप्रबन्धस्य चिरकालस्थितिकामनया तदोयाभिनन्दनात्मक एकः प्रस्तावो द्वितीयश्च वेतियाराज्यस्थ-देवमन्दिराणां झटित्येव निर्माणाय प्रबन्धकानुरोधनात्मक इत्युल्लेख्यौ स्तः। द्वितीयदिने च भारतप्रसिद्धविद्वांसो वैद्यरत्नमहोदयाः पं० चन्द्रशेखरधरमिश्रमहाभागाः सरयूपारीणसभायाः सभापतयोऽभूवन्। तत्रापि बहवः प्रस्तावा स्वीकृताः। इत्येवं सर्वाणि तत्र सभायां धर्म-कृत्यानि मोहान्तमहोदयसाहाय्येन सफलितानि, सर्वेषां परिश्रमोऽपि सफलितः। किं बहुना तत्र प्रान्ते सर्वस्मिन्नपि धर्मकृत्ये मोहान्तमहोदया एवाग्रेसराः सन्ति, न सा सभा यत्र मोहान्तमहोदयानामाह्वानं न स्यात्। न तद् धर्मकृत्यं यत्र मोहान्त-महोदयानामुपस्थितिर्न स्यात्। इत्येवं तत्र वेतियामण्डले सम्प्रति सनातनधर्मस्य संस्कृतविद्यायाश्च प्रचारस्य मोहान्त महोदया निदानतामधिगच्छन्ति।

तत्र बकुलहरमठे गत्वा मया हरिहरसंस्कृतमहाविद्यालयः (कालेज) दृष्टः। तत्र पं० मधुसूदनप्रसादमिश्रमहोदयाः प्रधानाध्यापकाः सन्ति। तैः सह पं० लक्ष्मण-मिश्राः पं० जनकपाण्डेयाः, पं० विश्वनाथपाण्डेयाः पं० गोविन्दनन्दनद्विवेदि-

प्रभृतयः साहाय्यकृत्यं कुर्वन्ति। महाविद्यालये वेदव्याकरणसाहित्यज्यौतिष-धर्म-शास्त्रायुर्वेदविषयाणामध्यापनं भवति। छात्राणामेकशतं संख्या विद्यते। बहुभ्यो मासिकं द्रव्यसाहाय्यप्रदानं भवति। तत्र संस्कृतच्छात्रा हिन्दीभाषाया इतिहास-भूगोलप्रभृति-विषयाणामध्ययनं विदधति। प्रतिपक्षं संस्कृतच्छात्राः संस्कृत-भाषणाभ्यासवर्द्धनार्थं परस्परं वादविवादसभां कुर्वन्ति। प्रतिदिनं व्यायाम-व्यवस्था विद्यते। तत् स्थानमपि नगराद्बहिरतिरमणीयं विद्यते। यद् दृष्ट्वा प्राचीन-महर्षिप्रवराणामाश्रमदृश्यं स्मृतिपथमारोहति।

इत्थं हि स्वामिहरिहरगिरिमहोदयानां विमलं संस्कृतानुरागं धर्मप्रेम च दृष्ट्वा अहमत्यन्तं सन्तोषमावहम्। अन्यानपि संस्कृतविदुषोऽहमनुरुणध्मि, यदा ते बेतियाप्रान्ते गच्छेयुस्तदा हरिहर-संस्कृतमहाविद्यालय—निरीक्षणमवश्यं कुर्युस्तत्रत्यानां धार्मिककृत्यानामवलोकनं कुर्युर्मोहान्तमहोदयस्योत्साहवर्द्धनं कुर्युः। प्रतिदिनं तत्र जनतोपकारार्थं धर्मकृत्याभ्युदय एव दृश्यते। अस्मिन्नेव हायने महाविद्यालयीय-भवन-निर्माणार्थं मिथिलेशमहोदयानां करकमलतः शिलान्यासमहोत्सवोऽपि सुसम्पन्नोऽभवत्। तत्र सर्वजनोपकाराय पूर्वप्रतिष्ठितः चिकित्सालयोऽपि आसीत्। स च स्वतन्त्रतया मोहान्तमहोदयः डिष्ट्रिक्टबोर्डतः पृथक् कृत्य नवीनया व्यवस्थया विभूषितो विधापितः। यतश्च तस्य जनतायां महान् समादरो दृश्यते। इत्येवं सर्वथा प्रशस्यमिदं कृत्यं ससाधुवादमभिनन्दयन्नहं परमेश्वरं प्रार्थये यत्तत्रत्यानां सज्जनानां सद्बुद्धिसाहाय्येन श्रीस्वामिहरिहरगिरिमहोदयानां समुत्साहेन दैनन्दिनमिदं धर्मकृत्यं विवृद्धं सद् सनातनधर्मसंरक्षणस्य प्रधानकेन्द्रभूतं भवेत्। सर्वेषामपि विहारप्रान्तीयमोहान्त साधूनामादर्शस्थानमनुकरणीयं च स्यादिति।

श्रीगोपालशास्त्री ( दर्शनकेसरी ) मन्त्री—श्रीकाशीपण्डितसभायाः ( काशी। )

—•—

## समालोचना।

**संस्कृतरत्नाकरस्य शिक्षाङ्कः**। पृष्ठसंख्या २२४। सम्पादकः—कविशिरोमणिभट्टश्रीमथुरानाथशास्त्री, सहायक-सम्पादकः—प० वृद्धिचन्द्रशर्मा शास्त्री व्याकरणधर्मशास्त्राचार्यः। प्रकाशकः म० म० श्रीगिरिधरशर्मा चतुर्वेदः, महाराज-संस्कृतकालेजाध्यक्षः जयपुरम्। मूल्यम्—न लिखितम्।

भारतप्रसिद्धविदुषां, सततमेव संस्कृतसमाजसमुन्नतिसंलग्नचेतसां महामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदानां तत्त्वावधाने प्रकाशकत्वे च निर्गम्यमानः संस्कृत-

षोडशे वर्षे १६ ] पौष-माघ पूर्णिमयोः १९९७ जनवरी-फरवरी १९४१ [ ७–८ संख्ये

अखिल भारत वर्षीय

संस्कृत विश्व विद्यालयः

तस्य मुखपत्रम्

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—

अवधेशप्रसादशर्मा द्विवेदः

उद्गम—स्थानम्—

श्रीभारतधर्ममहामण्डलम्, जगतगंज, काशी।

—:o:—

वार्षिकं मूल्यं मुद्रात्रयम्।

संरक्षकेभ्यः ५) बहिर्भारतम् ६) छात्रेभ्यः १)

# विषय-सूची

—०—



—०—

# सूर्योदयः ।

षोडशे वर्षे १६ } पौष-माघपूर्णिमायाः १९९७, जनवरी-फरवरी १९४१ । { ७, ८ संख्या

## अ० भा० सनातनधर्ममहासम्मेलनम् ।

आगामिनि वर्षे संवत् १९९८ वैक्रमे चैत्रे मासि नवरात्रावसरे आर्य्यमर्य्यादायाः (हिन्दुधर्म्मस्य) प्रधानकेन्द्रभूतेऽस्मिन् विद्यापीठे वाराणसीक्षेत्रे अखिलभारतीय-सनातनधर्मावलम्बिनां प्रतिनिधिभूतायाः श्रीभारतधर्ममहामण्डलाख्याया विराट् धर्मसभायाः प्रबलप्रयत्नेन अखिलभारतवर्षीयसनातनधर्ममहासम्मेलनं भविष्यति।

काश्यां तदानीं सर्वप्रान्तीयाः सर्वसम्प्रदायगाः सर्वश्रेणिस्थाश्च नेतृमहोदया महाधिवेशनस्यास्य महतीमावश्यकतां पर्य्यालोचयन्तोऽवश्यमस्मिन् महाधिवेशने भूयस्यां संख्यायां समुपस्थातुं सन्नद्धा भविष्यन्तीत्याशास्महे। अस्मिन् शुभावसरे सर्वैरपि सनातनधर्मावलम्बिभिरेकस्य सनातनधर्मध्वजस्तम्भस्याधस्तात्समवेताः सन्तः सर्वस्यापि सनातनधर्मसंरक्षणोपायसमूहस्य विचारे दत्तावधानाः सङ्गच्छमानसंवद-माना सौमनस्यभाजो भवन्तः स्वजातिधर्मसमाजरक्षया सह हिन्दुसंस्कृतेरार्यमर्यादाया भारतीयसभ्यतायाश्च संरक्षणसम्वर्द्धनोपायचिन्तां विदधतो गन्तव्यमार्गं निश्चे-ष्यन्ति। भाविन्यस्मिन्महाधिवेशनेऽधोलिखितेषु विविधविषयेषु विचारो भविष्यतीति स्वागतकारिण्या समित्या निर्द्धारितं विद्यते। मुद्रितमनुष्ठानपत्रं सर्वविधसदस्यानां सनातनधर्मसभानां धार्मिकजनानां च सन्निधौ प्रेषितमस्ति। तत्र संक्षेपतः कियतां विषयाणामुल्लेख इह विधीयते। तथाहि—

१—सनातनधर्मावलम्बिनामभ्यन्तरसम्प्रदायेषु वर्तमानधार्मिकसंस्थासु च परस्परसङ्घर्षनिराकरणपूर्वकं परस्परप्रेमसम्बर्द्धकैक्य-संस्थापनोपाय विचारः।

२—साम्प्रतमार्यमर्यादायाः (हिन्दुसंस्कृतेः) प्राचीनादर्शस्य भारतीयधार्मिका-ध्यात्मिकभावस्य चोपरि सर्वतोऽपि जायमानानां प्रहाराणां निराकरणपूर्वकं तत्संर-क्षणोपायानाम् देशशान्तिरक्षणोपायानाञ्च दृढीकरणविचारः।

३—धर्मश्वरनिर्मूलनपरायाः साम्प्रतिकशिक्षापद्धतेः स्थाने तत्समर्थिकायाः शिक्षापद्धतेः प्रचारायोपाय परिचिन्तनम् ।

४—हिन्दु गृहस्थानां गृहाभ्यन्तरमेव तदीयबालक-बालिकानां बाल्यकालत एव धार्मिकशिक्षाप्रवन्धो यथास्यात्तथोपाय प्रवन्धविचारः—

५—इह भारते मातृभाषां द्वारीकृत्य यदि विविधविषयाणां शिक्षणं स्यात्तर्हि-सम्प्रति भारतीयानाममितशक्तिधनराशिबहुलसमयानां यद्दुरुपयोगो वैदेशिक-भाषाशिक्षणे भवति तन्निरोधोपायचिन्तनम् ।

६—आर्य्यमर्य्यादायाः ( हिन्दुसंस्कृतेः ) भारतीयानां धार्मिकाध्यात्मिकभावानां प्राचीनादर्शस्य भारतीयसभ्यतायाश्च संरक्षणसम्वर्द्धनार्थं संस्कृतभाषायाः शिक्षण-व्यवस्थास्थितिस्थिरीकरणं नितान्तमावश्यकमिति संस्कृतभाषाशिक्षणरक्षण प्रचार-सम्वर्द्धनप्रकारपरिचिन्तनम् ।

७—इह भारते राष्ट्रियसङ्घटनदृढताय एकराष्ट्रसम्पादनाय च संस्कृतमूलिकाया एव राष्ट्रभाषायाः प्रयोजनमस्तीति हिन्दीभाषाया देवनागरीलिप्याश्च बहुलप्रचा-रोपायपरिचिन्तनम् ।

८—सम्प्रति राजनीतिकक्षेत्रेषु सनातनधर्मावलम्बिनां प्रवेशं विना तदीयधर्म-मर्य्यादायाः संरक्षणम् तदीयधार्मिकसामाजिकसाहित्यिक-राजनीतिकादिसर्व-विधस्वाधिकारसंरक्षणमसम्भवीति सर्वत्रैव केन्द्रीय-प्रान्तीयधारासभायां राज-सभायां म्युनिसिपलबोर्ड-डिष्ट्रिक्टबोर्डप्रभृतिशिक्षारक्षाविभागेषु भूयस्यां संख्यायां सनातनधर्मावलम्बिनां प्रवेशोपायपरिचिन्तनम् ।

९—हिन्दुमन्दिराणां तदीयधर्मस्थानानां सनातनधर्मानुकूलानाथालय-विधवा-श्रमाणाञ्चाधिकाररक्षायै जीर्णोद्धारेष्टापूर्तादिकर्मणां सुप्रबन्धकरणपूर्वकं तत्र प्रवि-ष्टानां कुप्रथानां निवारणोपायपरिचिन्तनम् ।

१०—सनातनधर्मावलम्बिनां मुख्य धर्मस्वरूपाया गोसेवायाः सुदृढप्रचारार्थं तथा कृषिप्रधानदेशस्यास्य भारतस्य सर्वथाभ्युदयसम्पादनाय गोधनरक्षायै गोवंशवृद्ध्यै च धार्मिकार्थिकोभयदृष्ट्या व प्रबलप्रयत्नकरणमार्गनिर्द्धारणम् ।

११—हिन्दुषु सङ्घशक्तिसम्पादनार्थं प्राचीनग्रामपञ्चायतन-जातिपञ्चायतन प्रथायाः पुनरुद्धारार्थम् च महोपदेशकादिभिः पुस्तकप्रणयनादिभिश्च प्रबल-प्रयासकरणम् ।

१२—लोकवलवृद्ध्यै धर्मशिक्षाप्रचारार्थं जनशिक्षासम्वर्द्धनार्थञ्च योग्यधर्मोप-देशकानां धर्मसेवकानां धर्मसेविकानाञ्च बाहुल्यसम्पादनाय यथा वाराणस्यां श्री-

भारतधर्ममहामण्डलस्त उपदेशकमहाविद्यालय आर्य्यमहिलामहाविद्यालयश्च सञ्चाल्येते तथैव सर्वत्रैव प्रान्ते मण्डले ईदृशानां विद्यालयानां संस्थापनप्रकारपरिचिन्तनम्।

१३—वर्तमानकाले सर्वत्रैव समेधमानाया दरिद्रताया निरुद्योगतायाश्च सर्वथा निर्मूलनाय स्वतन्त्रराजवृन्दानां नेतृवृन्दानाञ्च परस्परसामञ्जस्य-सम्पादने-नेदृशोद्योग सम्पादनम् येन द्रुतमेवास्माद्दुःखाद्भारतस्य मोक्षः स्यादिति।

१४—नागरिकसत्त्वसंरक्षार्थं सामाजिकशृङ्खलासुदृढतायै स्वात्मजनसंरक्षणार्थञ्च विविधधार्मिकसामाजिकादि कृत्यसम्पादनाय च महावीरदल भैरवदल शक्तिदलधर्मसेवकदलादिनाम्ना प्रतिनगरं प्रतिग्रामं वा नवयुवकदलसंघटनार्थमुद्योगकरणम्।

१५—जातीयाभ्युदयार्थं संघशक्तिसम्पादनायानाथदीनविधवादि-संरक्षणाय धर्मप्रचाराय विविधोद्योगशिल्पादिकलापरिरक्षणाय उपर्य्युक्तसर्वोद्देश्यसाफल्याय चैकस्य महार्थकोशनिधेः संस्थापनमावश्यकमिति तत्संस्थापनोपायाविष्करणम्।

१६—'सङ्घे शक्तिः कलौ युगे' इति नियमतः सङ्घ धानेऽस्मिन् युगे सर्वमपि कृत्यं विना शृङ्खलितां सङ्घशक्तिं नैव सम्भवितुमर्हतीति स्वजातिवर्गसमाजदेश-प्रान्त-मण्डलस्थानां सर्वेषामेव जनानां राज्ञां प्रजानाञ्च सहानुभूत्या श्रीभारतधर्म-महामण्डलाख्याया सनातनधर्मावलम्बिसमुदायस्यैकमात्रप्रतिनिधिभूतायाः अतिप्रसिद्धाया धर्मसंस्थाया दृढतासम्पादनाय सर्वविधोद्योगकरणम्।

इत्येवं संक्षिप्तोद्देश्यानामपरिनिर्दिष्टनामिह महासम्मेलने विचारो भविष्यति। तत्र क्रमशो दिनत्रयं प्रतिदिनमेकैकशः सभापतयो भविष्यन्ति। तत्र प्रथमदिने श्रीमिथिलाधिपतयः श्रीमन्तो महाराजाधिराजा द्वारवङ्गेश्वरमहोदयाः, द्वितीयदिने प्रसिद्धनरपतयः श्रीमन्तो महाराजाः श्रीदेवासनरपतयः, तृतीयदिने च देश-वाणिज्यविज्ञानवेत्तारो व्यावसायिकौद्योगिकसमाजनेतारः श्रीमन्तः श्रेष्ठिवर्य्याः श्रीरामकृष्णडालमियामहोदयाः सभापतिपदमलङ्करिष्यन्ति।

इत्येवं सर्वथा सर्वतः सुसमारोहेण सम्पद्यमानेऽस्मिन् महासम्मेलने बहवः प्रान्तीया नेतृमहोदयाः महामहोपदेशका धर्माचार्य्याश्च समुपस्थातुं सम्भाविताः सन्तीति। सर्वेऽपि सनातनधर्मावलम्बिनोऽभ्यर्थ्यन्ते यन्महाधिवेशनेऽस्मिन् समुपस्थाय धनेन मनसा वाचा कर्मणा महासम्मेलनमिदं साफल्यं नेतुं यतन्तामिति। कारणकलापतश्चोपस्थातुमसमर्थाः स्वसन्देशप्रेषणतोऽनुगृह्णीयुश्चेति संक्षेपः।

———o———

## आर्यमहिलामहाविद्यालयस्य वार्षिकोत्सवः।

श्री आर्यमहिलाहितकारिणी-महापरिषद् द्वारा सञ्चाल्यमान आर्यमहिलामहाविद्यालयो भारतीयमहिलासु शिक्षा प्रसारार्थं स्थापितेषु विद्यालयेषु किमपि वैशिष्ट्यमावहतीति नाविदितं भवेत् स्त्रीशिक्षा-सहयोगिनां सज्जनानाम्। भारतीयसंस्कृतेः सनातनधर्मस्य च समुन्मूलिकायाः पाश्चात्यशिक्षासरितः प्रवलप्रवाहमवरोध्य धार्मिकशिक्षा प्रदानपुरस्सरमन्यान्य सर्वविध लौकिकशिक्षाप्रदानाय प्रयतमानोऽयं महाविद्यालयः सनातनधर्मानुयायिनां महत्सम्मानभाजनम्। तस्यैतस्य विद्यालयस्यैषमो वार्षिकोत्सवः फरवरीमासस्य नवमतारिकायां महता समारोहेण सम्पन्नमभूत्। श्रीमान् डा० पन्नालाल महोदयः ( सी० आई० ई०, आई० सी० एस०, एडवाइजर टू हिज एक्सेलेन्सी दी गवर्नर यू० पी० ) सभापतिपदमलमकार्षीत्। मङ्गलाचरणानन्तरं विद्यालयस्य प्रधानाध्यापिका श्री शान्ति अग्रवाला ( एम० ए० एल० टी० ) वार्षिक-विवरणमश्रावयत्। अनन्तरं श्रीसभापति-महोदयानामभिभाषणमभूत् यस्मिन् विद्यालयोद्देश्यस्य भूरिशः प्रशंसा कृता। "गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ" इति कालिदासोक्तिमनुसृत्य दीयमानैव शिक्षा भारतीयानां कृते हितकारिणीति समर्थितं सभापतिभिः। अतः परं विद्यालयबालिकाभिः भीष्मप्रतिज्ञा, अहिल्याशाप-विमोचनम्, लक्ष्मणोर्मिला-मिलनम्, शकुन्तला-वृक्षसिञ्चनम्, गर्वानृत्यम्, चन्द्रगुप्तनाटकम्, सम्मिलितगानम्, पर्वतीयनृत्यम् इत्यादीनामभिनयः संस्कृतभाषया हिन्दीभाषया च प्रदर्शितः। बालिकानामभिनयपाटवं विलोक्य बहुभिः सज्जनैरनेकविधानि पुरस्करणानि प्रदत्तानि। अन्ते च 'वन्दे मातरम्' इति गीतद्वारा सभाविसर्जनमभूत्। उक्तमहापरिषदः प्राणभूतायाः श्रीमत्या विद्यादेवीमहादयायाः परिश्रमेण विद्यालयस्य समुन्नति र्दिनंदिवी जायते। करुणावरुणालयस्य भगवतः श्रीविश्वनाथस्य चरणसरोरुहेषु देवीमहोदयाया दीर्घजीवनं परिषदश्च समुन्नतिं प्रार्थयामहे।

---

## शुभाभिनन्दनम्।

ऐषमो नववर्षारम्भे श्रीमन्त आप्पाशास्त्रिश्रीचिन्नस्वामिशास्त्रिणो मीमांसाशिरोमणयो हिन्दुविश्वविद्यालयीयप्राच्यधर्म-विज्ञानविभागाध्यक्षा मद्रासप्रान्तीयाः, कलिकातास्थ-संस्कृत-महाविद्यालयस्य न्यायशास्त्राध्यापकाः पं० श्रीकालीपदतर्काचार्याश्च बङ्गालप्रान्तीयाः, तथा हिन्दुविश्वविद्यालयीयायुर्वेदविभागनिरीक्षका

रसायनाचार्य्याः श्रीमन्तः कविराज श्रीप्रतापसिंहमहोदयाश्च संयुक्तप्रान्तीयाः, भारतीयसम्राजा क्रमशः महामहोपाध्यायपदाभ्यां 'वैद्यरत्न' पदेन च समलङ्कृता इति परमप्रमोदास्पदमस्माकम् । अस्मिन्नवसरे महामहिमशालिनामेषां त्रयाणामपि महापण्डितानां वयम् अखिलभारतीयसनातनधर्मैकप्रनिधिभूतायाः श्रीभारतधर्ममहामण्डलाभिधानायाः महासंस्थायाः सकाशात् सधन्यवादमभिनन्दनं कुर्वन्तः श्रीकाशीविश्वेश्वरादेषां सर्वदा सर्वथाऽभ्युदयं दीर्घायुष्यञ्च कामयामहे ।

---

## राष्ट्रभाषा हिन्दी ।

अखिल भारतीय-हिन्दीसाहित्यसम्मेलनस्य २९ ऊनत्रिंशत्तममधिवेशनम् श्रीसम्पूर्णानन्दमहोदयस्य भूतपूर्वसंयुक्तप्रान्तीयशिक्षामन्त्रिणः साभापत्ये भवितुं निर्धारितमासीत्तराम् । परन्तु तेषां वर्तमानसत्याग्रहान्दोलने कारागारनिवासितया अनुपस्थितौ श्रीमतः पुरुषोत्तमदासटण्डन महोदयस्याध्यक्षतायां मद्रासप्रान्ते सुसम्पन्नम् ।

तत्र श्रीसम्पूर्णानन्दमहोदयस्य भाषणं हिन्दीभाषायाः कृते बहूपयोगि विद्यते । ते हि कथयन्ति यत् सम्प्रति हिन्दीभाषाया उपरि सर्वतः प्रहारो भवति । वर्तमानशासकास्तु सर्वथा तद्विनाशे एव कटिबद्धा दृश्यन्ते, कर्गजमुद्रायां रौप्यमुद्रायां कुत्रापि हिन्दीभाषाया विनियोगः शासकवर्गैर्न क्रियते । अन्यच्च ध्वनिक्षेपकयन्त्रे ( रेडियो विभागे ) ज्ञात्वैव प्रचलितानामपि संस्कृतशब्दानां हिन्दीभाषातो निःसारणं कृत्वा अपरिचितानां कठिनार्थानाम् अरबी-फारसी-शब्दानां विनियोगं कुर्वन्ति । किं बहुना सर्वत्रैव उर्दूनाम्ना प्रचालितायाः कस्याश्चन वैदेशिकभाषाया एव प्रचारे ते सन्नद्धा दृश्यन्ते । भाषया सह सदैव संस्कृतेः सम्बन्धो भवतीति सर्वेऽपि जानन्ति । अतश्च सर्वथा संस्कृतिरक्षाभिलाषुकैः सम्प्रति हिन्दीभाषायाः संरक्षणे बद्धपरिकरैर्भाव्यम् इति हि तेषां संक्षिप्त आशयः ।

अत्र वयं संस्कृतसमाजस्य कृते किञ्चिद्वक्तुं कामयामहे । ते हि कर्णे पातिततैलाः हिन्दीभाषातो बहुदूरं तिष्ठन्ति । तेषु सम्प्रत्यपि बहवो विद्वांस एवम्भूताः सन्ति, ये हिन्दीभाषां 'भाखा' इति नाम्ना समुपहसन्तः सर्वथा तदनादरे एवात्मानं धन्यं मन्यन्ते । तत्र ते दत्तावधानाः परामृशन्तु यत्–संस्कृतभाषायाः संरक्षणं किं जगति उर्दूभाषाप्रचारतो भविष्यति आहोस्वित् हिन्दीभाषाप्रचारेणेति । अत्र नास्ति अधिकं वक्तव्यम् यद् हिन्दीभाषा हि संस्कृतभाषात एव निर्गतेति तत्प्रचारे तत्संरक्षणे संस्कृतभाषापि संरक्षिता सम्मानिता भविष्यति । सर्वतोऽपि सम्प्रति भारते हिन्दीभाषा राष्ट्रभाषा भवति चेत् तन्मातृस्थानीया संस्कृतभाषाऽपि राष्ट्रभाषाजननी भविष्यति ।

परन्तु यदि हिन्दीभाषा विकृता सती 'हिन्दुस्तानी'ति नामधारिणी भूत्वा संस्कृतशब्दान् स्वकोषात् सर्वथा विदूरीकुर्वती एव स्थास्यति तर्हि तु कियता कालेन भारतवर्षसंस्कृतिरपि विनष्टा स्यात्, तयैव सह संस्कृतस्यापि नामशेषः स्यादिति। सति समये संस्कृतानुरागिणो महानुभावा यतन्तां हिन्दीभाषायाः स्वरूपसंरक्षणे इत्यस्माकं निवेदनम्। सम्प्रति मनुष्यगणनायां 'हिन्दी' इति नामैव सर्वैं हिन्दुभिर्लेखनीयम् नहि हिन्दुस्तानीति। अत्रापि पूर्णमवधानं देयम् विद्यते।

संक्षेतोऽस्माकमेतदेव वक्तव्यं विद्यते यत् संस्कृतज्ञाः सुधियः सर्वथा सन्नधा भूत्वा कार्य्यक्षेत्रेऽवतरन्तो हिन्दुसंस्कृतेः हिन्दीभाषायाश्च संरक्षणं कुर्वन्तः संस्कृतभाषाया एव सम्मानं करिष्यन्तीति सर्वतः सर्वथाऽस्माकमनुरोधः।

---

## सन्ध्यारहस्यम्।

नाविदितं तत्र भवतां विद्यैकशरण्यानां निखिलभूमण्डलमण्डनायमानानां भासुरभूसुरनिकरपरिवृतानां विद्वद्धौरेयाणां विपश्चितां, कीदृग् पुस्तकमिदं संध्या रहस्यमिति दृष्टिपथैव विभावयन्तु नव्यशिक्षादीक्षितेभ्योपि संध्यावन्दनादि कार्यंप्रवृत्यर्थं पुस्तकमिदं वरीवर्ति। कथं संध्याकरणीया, संध्यावन्दनेन किं भवति इत्यादि प्रश्ननानामुत्तरमपि विज्ञानरीत्या प्रदर्शितमस्ति।

पण्डितसमाजानां कृते तु उपस्थानादीनां मन्त्राणां पदच्छेदतया सायणभाष्यरीत्या च अर्थं स्फुटं प्रतिपादितं विद्यते। विशेषतस्तु ब्राह्मणकर्मरहितानां ब्राह्मणसमाजानां कृते पुस्तकमिदं समुपयोगि वर्तते। अन्ते चास्मिन्पुस्तके आनोभद्रादीनां मंत्राणामपि समावेशः कृतः। अभिलाषाष्टकमपि सार्थतया व्याख्यातम्। अस्मिन्पुस्तके आनोभद्रादीनां मंत्राणां अभिलाषाष्टकस्यार्थश्च व्याकरणाचार्य मन्नूलालद्विवेदमहोदयैः कृतः। यद्यप्यस्मिन्पुस्तके मंत्राणामर्थाः तत्रैव स्थाने न सन्ति—तथाप्याशास्महे यदग्रिमसंस्करणे त्रुटिरियं व्यपगता स्यात्। अस्य संपादक महाभागाः प्रथितमहायशस्काः श्रीलक्ष्मणनारायणगर्दे महाशयाः सन्ति। संग्रहकर्ता च बहुस्मृतिकः कश्चित् "स्मृति" नामामहाशयः। प्रकाशकः—राजाराम पंडया महाशयः। पुस्तकमिदं वेदानुवचनं "दि डेलो प्रैक्टिस आफ दि हिन्दूज" प्रकाशकानां साहाय्यतया प्रकाशितम्। वहिःस्थाः जिघृक्षुमहोदया षडाणकचिटिकाप्रेषणेन पंडया राजाराम—राममन्दिर चौखम्बा बनारस इति संकेतेन प्राप्स्यन्ति। अत्रत्यसमाजानां कृते तु विना मूल्यं वितरति पुस्तकमिदमुपरितनसंकेतेनेति शिवम्। (कृष्णनागर पण्डितः)

---

## समालोचना ।

मधुरवाणी—संस्कृतमासिक पत्रिका । सम्पादकः संस्कृतसाहित्यरत्नम् गलगली रामाचार्यः, सहसम्पादकः संस्कृतसाहित्यभूषणं वुर्ली श्रीनिवासाचार्यः । मूल्यं सपादं रूप्यकद्वयम् । एकस्याङ्कस्य मूल्यमाणकचतुष्टयम् । प्राप्तिस्थानम्—मधुरवाणी कार्यालय, १६९२ बेलगांव ।

सहसा कर्णाटकप्रान्तस्य एकमात्रसंस्कृतमासिकपत्रिकेयं न केवलं कर्णाटक एव प्रत्युत समग्रेऽपि भारते संस्कृतभाषाप्रचारं विदधती संस्कृतसाहित्यसमाजे नवनवमुत्साहमुत्पादयन्ती यशस्वितयाऽत्मनो वर्षपञ्चकमतिक्रम्य ऐषमे कार्तिकमासे षष्ठवर्षे पदं न्यदधादिति कस्य गीर्वाणवाणीहितैषिणो न प्रमोदातिशयः स्यात् । सम्प्रति सपादशतपृष्ठात्मको विशेषाङ्को मदग्रे वर्तते । अस्य नाम प्रथमसंस्कृतसाहित्यसम्मेलनाङ्क, इति । विशेषाङ्केऽस्मिन् प्रकाशितानि साहित्यसम्मेलन—गीर्वाणवाग्वर्धिनीसभयोरध्यक्ष-स्वागताध्यक्षभाषणानि पराण्यपि संस्कृतभाषाप्रचारौपयिकानि प्रबन्धपुञ्जानि संस्कृतज्ञानां कृते नितरामुपकारकाणीति सर्वैः संग्रहणीयोऽयमङ्कः । एतादृशैः सेवाविशेषैः संस्कृतमुपकुर्वन्तो सहयोगिनी 'मधुरवाणी' दिनेदिने समुन्नतिं कीर्तिञ्चावाप्नुयादिति नो हार्दिकोऽभिलाषः ।

—o—

## अ० भा० संस्कृतविश्वविद्यालयपरीक्षा ।

अखिल भारतवर्षीय-धार्मिकाध्यात्मिकसंस्कृतविश्वविद्यालयस्य तदन्तर्गतायाः काशी आयुर्वेदसंमिलन्याश्च सर्वा अपि परीक्षा अप्रेलमासस्य १० दशमीतारिकामारभ्य १२ त्रयोदशतारिकां (१९४१) यावत् तदनुसारतः चैत्रशुक्ल त्रयोदशीगुरुवासरतः वैशाखकृष्णद्वितीया रविवारपर्यन्तं भविष्यन्ति । समुचितसमये सर्वत्र केन्द्राध्यक्षमहाशयानां सन्निधौ परीक्षा प्रश्नपत्रादिकं प्रेषितं स्यादिति ।

निवेदक—सेक्रेटरी, अ० भा० सं० विश्वविद्यालय,
महामण्डल भवन, जगतगञ्ज; बनारस कैंट ।

—o—

## शुभसमाचाराः ।

छपरा मण्डलान्तर्गत जगन्नाथपुराभिजनानां काशीस्थानां महामहाध्यापक श्री पं० गोपालशास्त्रिणां दर्शनकेशरिणां भ्रातृव्यस्य श्रीउमेशत्रिपाठिनः परिणयसंस्कारः सम्वत् १९९७ सप्ताङ्काङ्काब्जमिते वैक्रमे माघशुक्लदशम्यां गुरौ तत् प्रान्तीय कुडवा-

ग्रामाभिजनानां श्रीहरदीपत्रिपाठिनां स्वस्तिमत्या कन्यया सह समजनि। अस्मिन् शुभावसरे वेश्यानृत्यनिरोधं कृत्वा काशीस्थानां महतां विदुषां श्रीमतां म० म० गङ्गाविष्णुशास्त्रिणां व्याख्यानान्यभूवन् सूर्य्योदयसम्पादका श्रीअवधेशप्रसाद-द्विवेदिनः श्रीसरयूप्रसादशास्त्रि (द्विजेन्द्र) कविरत्नमहोदयप्रभृतयः संमिलिता आसन्। तत्र प्रान्ते सर्वत्रैव वेश्यानृत्यनिरोधस्य सुप्रथाप्रचारो जातः। इत्येवं सर्वथा आदर्शविवाहोऽयं निर्विघ्नं सुसम्पन्न इति।

—श्रीदेवव्रत त्रिवेदी कविराज हवड़ा।

## काशी सरयूपारीणपण्डितमहासभा।

इह काश्यां काशीस्थप्रसिद्धवैद्यानां पं० श्रीसत्यनारायणशास्त्रिकविराजमहोदयानां साभापत्ये काशीस्थसरयूपारीणानां विदुषां विद्यार्थिनाञ्च सङ्घटनोद्देश्यत इह्त्यानां सुप्रसिद्ध-सरयूपारीणब्राह्मणानां प्रथमाधिवेशनमभूत्। तत्र सर्वसम्मत्याघोनिर्दिष्टा विद्वांसः पदाधिकारिणो निर्वाचिताः। सदस्याश्च एकपञ्चाशत्संख्याका निर्धारिताः। येषां सम्मत्या सर्वप्रथमं काशीस्थानां सरयूपारीणविदुषां विद्यार्थिनां संख्यासङ्कलनं भविष्यति। ततोऽग्रे कार्य्यप्रसारो भविता।

स्थायी सभापतिः—पं० श्रीसत्यनारायणशास्त्री कविराजः। प्रधानमन्त्री—पं० श्रीगोपालशास्त्री त्रिपाठी (दर्शनकेशरी) स० मन्त्रिणौ—पं० श्रीरामजीशास्त्री पाण्डेयः पं० श्रीईशदत्तशास्त्री पाण्डेयश्च। प्रचारमन्त्री—पं० श्रीवेणीमाधवशास्त्री शुक्लः। कोशाध्यक्षः—पं० श्रीनारायणपतित्रिपाठी महोदयः।

निवेदयिता—श्रीसरयूप्रसादशास्त्री (द्विजेन्द्रः)

## शोकोच्छ्वासः।

मेरठमण्डलान्तर्गत पिलखुवाऽवसथवास्तव्यस्य असौडास्थ देवीसिंहसंस्कृत-विद्यालये संस्कृताध्यापकस्य पं० प्यारेलालशास्त्रिणो ज्येष्ठपुत्रः सोमदत्तशर्मा द्वादशवर्षवयस्येव करालकालकवलितोऽभूत्। एतस्य पुत्ररत्नस्य वियोगेन सम्बन्धि-जनवर्गस्य असह्यमपारदुःखमस्ति। अतो वयं समवेदनया परमेश्वरं प्रार्थयामः—शास्त्रि-महोदयस्य कनीयान् सिब्बो नामसुतो दीर्घायु र्भूयात् मृतात्मनः शान्तिं तन्मातापित्रोः परिचितजनानाञ्च तदीय दुःखसहनस्य सामर्थ्यञ्च देयादिति शम्। शोकार्तः परशुरामः।

# कलि पञ्चकम् ।

निर्माता—पं० शिवावतारमिश्रः व्याकरणशास्त्री ( कर्वी कालेज बान्दा )

प्रिया वामा वामाः पतिषु तनयास्तातरिपवो
निरायासा दासाः परिजनजनाः प्रेमविमुखाः ।
स्वपार्श्वस्थावस्था सततविषमाऽभद्रभवना
घनाशोका लोका अहह ! कलिकालः प्रभवति ॥ १ ॥

क्वचिद्वस्त्राभावादमितशिशवः कम्पितवपुषः
क्वचिच्चान्नाभावे भ्रमति भुवने भिक्षुकगणः ।
क्वचिद्रोगाक्रान्ता ध्रुवत इह हा रामरमण !
प्रभो ! पाल्या लोका अहह कलिकालः प्रभवति ॥ २ ॥

अशर्मा सत्कर्मा लसदशुभकर्मा सकुशलः
युवानन्दा मन्दाः सुमतिनिधयो निर्धनतराः ।
परार्थप्रभ्रंशी नृषु सदवतंसीयत इह
समस्मिन् लोकेऽस्मिन्नहह ! कलिकालः प्रभवति ॥ ३ ॥

विना वृष्टिं नष्टा कृषिरमितगावो विनिहताः
गता नैर्धन्यं वै कृषकनिवहाः सर्वविधिना ।
धनाध्यक्षाः स्वच्छासनशयनशीला युतमदा
निराकुर्वन्त्यन्यानहह कलिकालः प्रभवति ॥ ४ ॥

समेषां शूद्राणां भवतु भुवि सन्मन्दिरगतिः
सुभुञ्जन्तां लोकाः सततमधमैः सार्धमधुना ।
भवन्त्येवं वाचो जननि ! सुखदानेच्छुकनृणां
कथं भद्रं भूयादहह ! कलिकालः प्रभवति ॥ ५ ॥

---

# मानवीय-विकासः ।

( लेखकः—विद्याधरशुक्ल शास्त्री काव्यतीर्थः, विशारदः
गवर्नमेण्ट आयुर्वेद कालेज पटना )

मानवजातेरुच्चतमविकासः लक्षाब्दात्प्राक् समजनि । विकासे च कतिकोटिहायनान्यतीतानि । महाभारतकालादनन्तरं जगति धर्मस्य, शौर्यस्य, पौरुषस्य च ह्रासः प्रारब्धः, जगति परिवर्तनमारब्धम् ।

पुरातना आर्याः धनानि, रत्नानि च निस्साराणि मत्वा पृथिव्यां निक्षिप्य निष्प्रयोजनतां स्फुटम्प्रकटितवन्तः। परन्त्वतीते तादृशे सुपुण्ये काले जना वसुधातः वसूनि निष्कासितवन्तः, तानि चावाप्यात्मन्यन्तर्हितां शक्तिं सर्वथा विस्मृतवन्तः। यत्र च—"यत्र नार्यः प्रपूज्यन्ते रमन्ते तत्र देवताः" इति सिद्धान्त आर्यजातेरासीत्, परिवर्तमाने जगति ता एव देव्यो भोग-सामग्रीत्वेन जनैरङ्गीकृताः। यश्चानाचारः विस्मृतिगर्ते निपातित आसीत्तस्यैव पुनरुद्धारः कृतः। असत्पथे द्रुतगत्या व्रजतश्च जगतोऽवरोधो नितरामावश्यकः, तस्य च भगीरथप्रयत्नमन्तरा न साधारण्येन निरोधः कर्तुं शक्यते। क्षणं सुस्थिरं मनो विधाय, विचार्यतां यदामुष्मिके प्रवाहे कः पोत आश्रयणीयः, कश्च जगतः श्रेयसे भविष्यतीति।

सुखस्य, दुःखस्य, शुचश्च साधनमिन्द्रियं मनः। तस्मान्मनसः पूतीभाव एव निखिलश्रेयस्साधनमिति ब्रूमो चेन्न केषामपि शेमुषीजुषां वैमत्यं प्रसज्येत। पूतीभूते च मनसि सर्वाः समस्याः स्वयमेव समाहिता भवेयुः।

एतत्सर्वं समीक्ष्य मानवजातेरुत्कर्षवृद्ध्यै सर्वेषाम्मनसः पूतीकरणमेव साधनमिति विचार्योपाय आश्रयणीयः, कृते चोपाये न केषामपि चेतसि कुत्सिताः हीनाश्च भावा उत्पद्येयुरिति प्रयत्नपरैर्भवितव्यम्।

एवञ्च कृते पुनरपि सत्ययुग-समयः समायास्यति, मानवाश्च स्वस्वकर्तव्यमार्गान् विन्देयुः, सर्वे च जनाः सुखेन, शान्त्या स्वजीवनयात्रायां साफल्यभाजनानि भवेयुरिति।

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति" अस्या अपि सुधामधुरवाचस्तदैव याथार्थ्यमवगतं स्यात्। स्वान्तःस्थाया आत्मशक्तेः प्रेरणामविदित्वाऽनवधार्य च मानवः कर्मबन्धने बध्यते, मायया लिप्यते, मोहेन मोह्यते। एवञ्चात्मस्थां शक्तिं विस्मृत्य सर्वतः स्खलनपदव्यामेव पदं धत्ते।

प्राणिनामैहलौकिके जीवने मानवजीवनः सर्वोत्कर्षेण वर्तते। प्राणिनः स्वभावेन स्वस्योन्नतिं चिकीर्षन्ति, परन्त्वधुना ते स्वकमुत्कर्षं सर्वथा विस्मृत्य, सांसारिकेषु विषयेषु च ते लीनाः सन्तः विषयानन्दमेवानन्दसर्वस्वं मत्वा सत्यानन्दतः बहुदूरे सन्ति।

वस्तुतः, मानवजन्म एवात्मोन्नतेर्विकासस्य च द्वारमस्ति, अनेनैव च द्वारेण प्रधानं धाम लप्स्यते। इन्द्रियाणि हि पार्थिवानि, पार्थिवेषु च विषयेषु तेषामाकर्षणं स्वभावसिद्धमेव। परन्तु विकाससाधनानि तान्येव सन्तीति तेषां स्वायत्तीकरणं सर्वतः प्रथमसपेक्ष्यते।

सत्ययुगे सर्वाणीन्द्रियाणि स्वायत्तान्यासन्न च सांसारिकेषु विषयेष्विदानीमिवाकृष्टानि । एतदेव कारणमस्ति, यत्ते स्वान्तःस्थां शक्तिमनुभूयाध्यात्मिके ज्ञाने सफलाः सन्त आत्मानं विकासितवन्तः । जाते ह्यात्मिकशक्तिविकासे जगतः विषयजालेभ्यः चेतो निवर्तते ।

स एव विकासः प्रशस्यते, स्पृहणीयश्च भवति, यत्र हि स्वात्मा सच्चिदानन्देन सह परमानन्द-धारायां निमज्जति । तथा च,

"सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां,
सोऽश्नुते सर्वकामान्सह ब्रह्मणा विपश्चिता"

इत्युपनिषद् वाक्येन जीवन-याथार्थ्यमाप्नुयान्मनुजः । यदि विकासानन्दः क्षणमप्यनुभूयते, इन्द्रियाणि स्वयमेव वशे स्युः, लोकश्च संसारतो विरज्यानन्दानन्दराशौ निमज्जितुं सन्नद्धो भवेत् ।

जगतः पाशे बद्धो हि मनुजः न विकास-पथे पदमप्याधातुं सहसा प्रभवति पुरस्सरता तावद्दूरे तिष्ठतु । आस्माकीना मानसी गतिर्नितरां विकृतिमापन्ना, येन विषयजाले बद्धा अपि हर्षातिरेकमनुभवामः । स्वेनैव च स्वपदं बन्धने बध्नीमः ।

मानवजातिर्यदि स्वोत्कर्षं कामयेत, संसारे चादर्शस्थानमार्यजातेः, सभ्यतायाः संस्कृतेश्च विजयवैजयन्तीमाकाशमण्डले दोधूयमानां दिदृक्षति, तर्हि सावधाना भवतु, अस्माच्च जगतः, "दुराचारं, स्वार्थकामित्वं, लोलुपत्वं, नीचतां, दीनतां, हीनतां सर्वविधानाचारताञ्च, निष्कासयतु । धर्मस्य, भारतभूमेश्च गौरवमीहताम् ।

मानवजातेः साफल्यमसाफल्यं वल्गुत्वम् फल्गुत्वम्वा सर्वं भवद्धस्ते निहितंवर्तते ।

जागरूकेन सता निजस्य विधेयं विहितं चेदत्रैव जीवनस्य साफल्यमन्यथा "जठरं को न बिभर्ति केवलम्" । भवद्भिः स्वजीवनयात्रायां कियती सफलतावाप्तेति विचार्यतां ? विकासे, साफल्ये च, अभ्यासो, रुचिर्ज्ञानमित्येतानि साधनानि ।

वीरतां, धीरतां, साहसोत्साहौ च साहाय्ये नियुज्य सावधानतयाऽग्रे पदमास्थापयन्तु ।

धैर्यमात्मसंयमश्च द्वावेतौ विपत्प्रतीकारक्षमौ अतः स्मारं स्मारमिमौ न विस्मर्तव्यौ । न मृषा कदापि बुद्धिः कलुषयितव्या ।

आत्मिकशक्तिमनुभूय स्वोन्नतये प्रयतन्ताम् । एष समयः समुन्नतेः, यदि साम्प्रतं कर्णे तैलं सन्निधाय निद्रिताः स्युस्तर्हि नूनमधः पतिष्यन्ति ।

वयं सर्वे मानवसमाजस्य सदस्या अतोऽस्माभिः समाजस्य शिक्षायाः सभ्यतायाश्च विकासो विधेयः स्वीया च मानवी शक्तिस्तथा वर्द्धनीया येनेदं नभोमण्डलमस्माकञ् कीर्तितिमिरोतप्रोतं स्यात् । मानवाश्च सुखेन शान्त्या जीवनं यापयेयुरिति ।

—०—

## "किङ्किन्न साधयति कल्पलतेव विद्या"

लेखकः—विद्यार्थी शिवचन्द्रशर्मा "अद्भुत" तिलक कुटीर ( छपरा )

अस्मिञ्जगति के न जानन्ति यत् येन प्रकारेण कल्पतरुः याचकेभ्यः अप्राप्यवस्तूनि अपि प्रददति, तेनैव प्रकारेण विद्या अपि सर्वेभ्यः सर्वं दातुं शक्नोति ।

कस्यचित् अपि निकटे विद्या तिष्ठति चेत्, तर्हि स मन्यते यत् मम निकटे किन्नास्ति, अर्थात् सवमेवास्ति । तथा स कुत्रापि ( अन्यस्मिन्देशेऽपि ) गच्छेत् तर्हि स तस्य देशस्य पूजनीयो भविष्यति । स कुत्रापि अनादृतो न भविष्यति । क्षुद्रोऽपि नरःकथन्न भवेत् यदि असौ विद्यावानस्ति तर्हि सोऽपि राजभवने सन्मानं लभते । अत अस्माकं हितोपदेशे लिखितमस्ति यत्—

सङ्गमयति विद्यैव, नीचगापि नरं सरित् ।
समुद्रमिव दुर्द्धर्षं, नृपं भाग्यमतः परम् ॥

अर्थात्—येन प्रकारेण निम्नगापि नदी निजाश्रितान् तृणादीन् दुर्गमं जलनिधिं प्रापयति, तेनैव प्रकारेण नीचपुरुषाश्रयापि विद्या नरं दुर्धर्षं नृपं प्रापयति ।

अस्मिन्भूमण्डले कोऽपि जनः विद्यया विना किमपि प्राप्तुं न शक्नोति । धनं, ज्ञानं, यशः किमधिकं मोक्षोऽपि विद्यया विना लब्धुं न शक्यते । मन्यताम्, कस्यचित् नृपस्य निकटे धनं तिष्ठेत्, तर्हि असौ नीचकर्मणि निजद्रव्यं व्यापारयिष्यति ततः पश्चात् मोक्षाधिकारी न भविष्यति ।

यदि तस्य निकटे विद्या अस्थास्यत् तर्हि स सुकार्ये निजधनं व्यापारयिष्यत्, ततः परमवश्यं मोक्षाधिकारी अभविष्यत् । अनेनैव ज्ञायते यत् विद्यां विना धनसम्पन्नो भूत्वापि नर ऐहिकं पारलौकिकञ्च सुखं प्राप्तुं न शक्नोति । अहा ! विद्या कीदृशी विद्यते, कस्यचित् निकटे विद्या भवेत् यदि तेन अरण्येऽपि कथन्न स्थीयताम् तथापि तस्करैः सा ( विद्या ) चोरिता न भविष्यति ।

यदि कोऽपि धनमादाय कुत्रापि गच्छेत् तर्हि पथि चौराः तम् हत्वा सर्वाणि

धनानि अपहरिष्यन्ति। कोऽपि कुमार्गे गच्छेत् तर्हि विद्या तम् कुमार्गगामिनं नरं सन्मार्गगामिनम् कर्त्तुम्प्रभवति। किमधिकं लिखानि, अनेनैव एकेन श्लोकेन भवन्तः अस्याः समुत्कर्षं सम्यग् रूपेण ज्ञास्यन्ति।

यथा—विद्या ददाति विनयं, विनयाद् याति पात्रताम्।
पात्रत्वाद्धनमाप्नोति, धनाद्धर्मं ततः सुखम्॥

अत एव भवन्तः सर्वं त्यक्त्वा सरस्वत्याः आराधने तत्पराः भवेयुः, इयमेव किङ्करस्याभिलाषा वर्त्तते।

—०—

## "भारत-माता"

ले० पं० रामबचनपाण्डेयः (अध्यापकः) बी० बी० एम० ई० स्कूल बक्सर, शाहाबाद।

स्वस्त्यस्तु ते जननि! मे भुवि कीर्तिरस्तु,
मार्गे शुभे तव बलं च चिरायुरस्तु।
पद्मा समाविशतु ते सदनेऽस्तु पुष्टिः,
शान्तिः सुशान्तिरथ मङ्गलमस्तु तेजः॥१॥

भूस्वामिनां प्रशमयाशु कलिं प्रजानां,
दुर्वासनाशत-मलीमसमानसानाम्।
संस्तोतु-(संगातु) मुज्ज्वलगुणान् विबुधानुमेयान्,
व्यक्तः कथं तनुमति'वचनो' हि दासः॥२॥

लोकप्रिये! तव वियोगजवह्नि-धूम-
स्तोमप्रभा-प्रशिथिलीकृत-दृष्टिपाताः,
सभ्याः परस्परमुखं प्रसमीक्ष्य नूनं
ध्यायन्ति ते धवलकीर्तिकदम्बशोभाम्॥३॥

न केवलं नागरिकैर्जनैरये! (प्रजागणैः)
प्रतन्यते तीर्थशिलाधिरोपणम्,
तटे हि गाङ्गे भवबन्धनच्छिदे
समुत्सुकैर्ग्राम्यजनैरपि स्वयम्॥४॥

नैतिकैर्दमन-शासनैर्भृतं,
सार्वभौमपुरुषं नराधिपम् ।
दुःखदग्धहृदया दिदृक्षया,
आगताश्च विफलीकृता गताः ॥५॥
( प्रजागणाः )

सा च विश्ववशता हरित्सु ते
भारतीयजनतासु चाश्रिता,
दृश्यते ननु विभर्त्सना क्वचित्
नास्ति कापि खलु क्षपातिता ॥६॥

धर्मरक्षणविधौ प्रजागणाः
केन सन्ति सुचिरात्समीहितम्,
प्रापिताः स्वनिलयेषु नैतिकं,
कीर्तिसारमनिशं स्मरन्ति नो ॥७॥

---

## संस्कृत-भाषा ।

( लेखकः—वि० कृष्णस्वाम्यय्यङ्गार्यः, श्रीभाषाभ्यासिनीसभाकार्यदर्शी, श्रीचामराजेन्द्रसंस्कृतमहापाठशाला )

संस्कृतभाषा नाम सेयममराणामनुत्तमा वाणी सरसकवितावशीकृतरसिकजनमानसराजहंसा गम्भीरभावप्रकाशनोपयोगिसुन्दरपदबन्धबन्धुरा कविकुलतिलककालिदासादिपण्डितप्रवरैस्सकललोकबहुमानपात्रैरभिवर्धिता प्रख्यातिमवापिता च सकलकलाकलापदुर्दैववैभव इव गृहीताभिधानान्तरे कलिकालेऽस्मिन्प्राचीनसंप्रदायपरित्यागमात्रसमभिनन्दन्मूढजनबहुलेऽपि जागर्ति धिषणाबलतुलितधिषणैर्विद्वदग्रगण्यैरुपास्यमाना, यस्यामेव भारतीयैः "प्रमाणानां मूर्धन्याः कृतकेतरा इमा वाच" इति प्रशस्यमाना त्रयी प्रादुरासीत्, यामेव च सारज्ञपण्डितबहुमन्यमानसौन्दर्यविशेषेण नानाविधभावोद्रेकप्रयोजकमनोहरपदगुम्फरमणीयेन साहित्येनाधुनाऽपि मातृभाषापदवीमधिष्ठापितामपि मृतभाषामाचक्षाणाः पाश्चात्या लज्जाभरविनम्रवदनास्तूष्णीम्भावमवलम्बन्ते । विदितमेव किल सर्वेषामेतद्विस्तरेणाभिदधतो मम पुनरुक्तिदोषेण दूषितमिदं वचनं यदाधुनिकैर्विदेशीय-विद्याभ्यासपरिवर्तित-

भावनाजालैर्भारतीयपद्धतीरशेषा अपि निरर्थिका मूढजनप्रवर्तिताश्च मन्यमानैस्तरुणै र्वैज्ञानिकग्रन्थशून्यतयाऽनुपयुक्तदुरवगाहशास्त्रग्रन्थभूयिष्ठतया व्याकरणनियमबाहुल्येन व्युत्पित्सूनामतीव कष्टावहतया च भाषामेतामनाद्रियमाणैर्भूयत इति। सत्यमेवैतत्संस्कृतभाषायां शृंखलाबन्धननिर्विशेषा वैयाकरणविषयो बहवस्सन्तीति, तथाऽपि तदेव किल तस्यास्संस्कृतत्वं नामेति विजानानो न कोऽपि तामुपेक्षितुमुत्कण्ठते। आंग्लभाषाभ्यासपक्षपातिनः पुनराधुनिका उदरम्भरणोपायमन्यमनवेक्षमाणा गैर्वाणवाणीशुश्रूषामनावश्यकीमालोच्योदासते। प्राचीनाः पुनर्लक्ष्मीलीलाकमलमकरन्दास्वादनलुब्धरोलम्बावलम्बितसौखशायनिकपरिचारकभावा उदरपूरणक्लेशवार्तानभिज्ञाः संस्कृतां वाणीमुत्तमतमग्रन्थलेखनादिनाऽभ्यवर्धयन्निति नैतद्विपश्चितामपाश्चात्यानामपि न श्रुतिपथमलङ्करकार। एवमुदासीनेष्वास्मास्वात्मनो जन्मभूमावेव भारते देशे क्षीणप्रसारा गीर्वाणभारती विनाशकालमासन्नमवबुध्येव खिन्नहृदया प्रतिदिनं कृशतामवाप्नोति। आंग्लविद्यामभ्यसितुमशक्नुवानाः पुना रूप्यकशून्यपाणयो ( Poor men like a church-rat ) दरिद्रा जनास्संस्कृतभाषामधीयते तासु तासु शालासु, परन्त्वेतावता न जातु जननी भाषान्तराणामियममराणां वाणी परममानन्दं लब्धुमीष्टे। तदत्र किङ्कर्तव्यमस्माभिर्गीर्वाणवाणीप्रणयपरित्याजितस्वार्थसाधनाभिलाषैर्निर्मलान्तःकरणैः प्राचीनैरिवेति सत्यमुदेति काचिदाशङ्का। किमपि ममोचितमिति विदितमुत्तरं वितरीतुमेष लेखने यत्नो व्यरचि।

न आधुनिकीषु पाठशालासु पञ्चदश हायनान्यभ्यस्यमपि गैर्वाणीं वाणीं कोऽपि तत्र पाण्डित्यमवाप्तुमीष्टे। प्राथमिकपरीक्षापाठ्यग्रन्थत्वेन निर्णीतानि हि रघुवंशकुमारसम्भवमाघादिमहाकाव्यानि न कस्याऽपि व्युत्पित्सोरप्रौढमतेर्बालकस्योपकारं नाम तन्वते; परन्तु तादृशकष्टग्रन्थावलोकनमात्रेण भीतानेतान् शिथिलितसंस्कृतभाषाभ्याससङ्कल्पानारचय्यामरवाणीप्रसारे विपुलं प्रतिबन्धमाचरन्ति। एवं सति समुचितग्रन्थदारिद्र्ये कथङ्कारममृतधारामधुरा जननी सर्वासामपि भाषाणामवाप्नुयादभीप्सितां सर्वतोमुखीं प्रगतिमिति विचिन्तनीयमापतितमस्ति देशसेवाधुरीणैरकृत्रिमराष्ट्रप्रेमधूतकल्मषैरशेषैरपि विद्वद्भिः। भाषामेकामखिलपरिचितामन्तरेण न कदाऽपि राष्ट्रस्योद्धारस्सुकर इति समवगतवद्भिः किल गान्धिप्रमुखैर्हिन्दीभाषाप्रचारे महान्प्रयत्नोऽवालम्ब्यत, यस्य किल प्रभावेन दक्षिणभारतहिन्दीप्रचारसभा नाम काचन हिन्दीभाषापरिचरणश्रद्धालुस्संस्था निरमायि। एवमनेके राजकीयरङ्गे सामाजिकक्षेत्रे च लब्धयशसो विवेकिनस्तत्र तत्र नानाविधोपायावलम्बनेन भाषाप्रचाररूपमावश्यकं कर्तव्यमदम्भेनारचयन्तो जरीजागरति येषामेव

पन्थानमनुप्रपन्नैरमरवाणीशुश्रूषणकुतूहलिभिरस्माभिरपि महान्तमास्थाय प्रयत्नमवाप्तव्यमस्ति समीहितम् । गद्यग्रन्थविनाभावदुरभ्यसा हि व्युत्पित्सुबालकानादरगोचरा नो वाणी शीघ्रमेव समग्रे भारते प्रचारमुपेष्यति यदि वयमप्यान्तरान्कलहान्परित्यज्य ( internel quarels ) ध्येयसाधकानामावश्यकीमैकमत्यभावनामाश्रयन्तः परित्यक्तेर्ष्यादिप्रगतिविरोधिदुर्गुणाः कर्तव्यमवबुद्धवन्तो भाषासुन्दरीमनुपमैर्नाटककादम्बरीकथादिरूपैराधुनिकदशोचितरीतिलिखितैरनेकविधै ग्रन्थैरेव परमरमणीयैर्भूषणैरलङ्करिष्यामः । लिखिताः पुनरनुभावमनुभावमपरिमितमायासमत्युत्तमैस्सरसशैलीवशीकृतभावज्ञसारग्राहिपुरुषमानसैः कविभिरभिनवाश्चेद्ग्रन्थाः कुबेरमप्यवधीरयद्भिस्तत्रतत्र लब्धप्रतिष्ठैश्चलचित्रदर्शनव्यसनिभिर्धूमवर्तिका (Cigarette ) पानमहोत्सवाभिलाषिभिर्वा पाश्चात्यनागरकितापरिवर्तितजीवनक्रमैर्धनिकैर्मुद्राप्येरन्प्रकाशनपदवीञ्च प्राप्येरंस्तर्हि सद्यस्समवाप्तसमधिकसन्तोषा सनातनसत्संप्रदायसाभिमानसरस्वतीसमाराधक-समभ्यर्चिता सुरभारती महतीमभिवृद्धिमचिरेणाधिगमिष्यतीत्यत्र नास्ति संशयावसरः । [ एतादृशदुरधिगमगद्यलिखितो भवदभिप्रायः सर्वसाधारणानां कृते क्लेशावह इति प्रचारविषये सरलभाषा व्यवहारायानुरोधं कुर्मः-सम्पादकः ]

---

## आह्वानम् ।

कवे ! त्वम् चल, चल, वनदिशि !
गुञ्जन्तम् मञ्जलरवगीतम्
लतामधुर-रसपीतम् ।
दिशि-दिशि-चूं-चूं-करणे मग्नम्
पश्यतु, द्विजगणवृन्दम् ।
× × ×
गुल्मे गुल्मे मधुरचरन्तम्
पुष्पे पुष्पे रसकणनीतम् ।
रजनीकरधवले मञ्जूले
गायन्तं तम् मधुरलसन्तम् ।
कविमनसोहरणे च भ्रमन्तम्
कविताववनिता गोतवरन्तम् ।
अमले कमले लसति द्विरेफे

मनोहारिणि स्वरसङ्गीते।
कथं न ! त्वम् भजसि

कवे ! त्वम् चल, चल, वनदिशि !

पादपमूले वद्धकदम्बम्
मधुररवन्तम् पुंस्कोकिलम्
प्रियागीतगाने सुमग्नम्
पथिक हृदयतोडने तीव्रम्।

दिशि दिशि केकाकरणे मग्नम्
नर्तन्तम् तम् मधुरं कूजन्तम्
पत्रपाल्या राजितदेहम्
मयूरमयूरी मिथो लसन्तम्।

दर्शं दर्शं, ललितं ललितम्
गायन्तम् तम् दम्पतियुग्मम्।
श्रावं श्रावं वनसङ्गीतम्
हरति दुःखम् विरही।

कवे ! त्वम् चल, चल, वनदिशि !

चूतमञ्जरी रसकणमग्नम्
मधुरं भणन्तम् द्विरेफछन्दम्।
प्रतिरसाले प्रतितडागे
गायन्तम् तम् वद्धकदम्बम्।

रविनवकिरणे नवप्रभाते
वासन्ते नवकुसुमसंजाते।
विटपे विटपे रहसि व्रजन्तम्
मदनगीतगाने संलग्नम्।

नयनफलं कुरु सफलं ध्रुवम्
दर्शं दर्शं शुकगणच्छन्दम्।
वद, कथं न ? त्वं व्रजसि
कवे ! त्वम् चल, चल, वनदिशि।

—कृष्णमोहनचौधरी "साहित्यशास्त्री"

---

## शिशुः।

( ले० पण्डित रामनाथपाठकं 'प्रणयी' व्याकरणाचार्यः )

जनयतु जनकानन्दम्
मञ्जुल-मोहकहासः
विकसितकुमुदाभासः
चलितचन्द्रकर इवानवरतं प्रसरतु परितोऽमन्दम्
जनयतु जनकानन्दम्।
मृदुलमुकुलदशकायः
अभिनवकान्तिनिकायः
व्रजतु समुन्नतिमविरतमतुलाञ्चारुतरां स्वच्छन्दम्
जनयतु जनकानन्दम्।
कथयतु कामपि चित्राम्
कथां मनस्विचरित्राम्
भवतु कुशलनेता जगतामथ गायतु गीतममन्दम्
जनयतु जनकानन्दनम्।
जीवतु चिरं कुमारः
सहृदय-हृदय उदारः
विभ्रद् वाति मरुद्भुवने हृदि यावदहो ! मकरन्दम्
जनयतु जनकानन्दम्।

—०—

# शङ्करस्य रहस्यपूर्णं स्थानम्।

ले०—के० टी० रामशरण शर्मा शास्त्री आर० ई० कालेजाध्यापकः
(दयालबाग, आगरा)

बाँदामण्डलान्तर्गतो यामुनेये दक्षिणतीरे सरका नामको ग्राम एकः। तत्र विख्यातानेकविचित्रपवित्रचरित्रा भगवतः शङ्करस्य मूर्तिरेकाऽनेकाब्देभ्यः पूज्यमाना नानादिग्देशागतमानवैरश्वत्थैकस्यारणितरोरधो वर्तते। उच्चैस्त्वमस्याः प्रायः पुरुषप्रमाणम्, सा च 'मूँडिया बाबा' इति नाम्ना प्रसिद्धा मूर्तिः। वैशाखीय वलक्षपक्षत्रयोदश्यामत्र मेला लगति। यस्याञ्च सुदूरवर्तिनो जना मूर्तिदर्शनार्थमुपागच्छन्ति।

भारतेऽनेकान्येवं भूतानि स्थानानि सन्ति। यत्र गमनेन विभिन्नाभिलाषाजुषां मनुतनुजनुषामचिरेणैवेष्टपूर्तिर्जायते तेषु चैकतममेतत्। एतस्य विषये प्रभूतानुभूतजनश्रुतयः प्रसिद्धाः सन्ति। कथमप्यभिलष्यात्रागतः न कोऽपि ना नैराश्यमवलम्ब्य परावाततो भवेदिति मामकीनोऽनेकविषयेषु व्यक्तिगतानुभवः। विभिन्नामय-हरणाय इदं दिव्यद्वारमेवोद्घाटितं वर्तते पृथिव्याम्। अन्यरोगापहरणापेक्षया 'गठिया' विषये तु स्थानमेतदाश्चर्यजनकचमत्कृतिं प्रदर्शयत्स्थानान्यन्यानि सर्वाण्यतिशेते। अत्रागत्य स्नात्वा रोगी जलविल्वदलफलादिभिः शिवमर्चयति; त्रिश्चतुर्वा परिक्रमते; कुण्डभस्मना शरीरं विलेपयति। एतावन्मात्रमत्रत्यं कृत्यम्। रहस्यस्यास्य तु स जगदीश एवेष्टे यत्काऽलौकिकशक्तिस्तद्भवभस्मनि किन्तु श्रद्धापूर्वकं तद्विलेपनमेवेर्क्षेक्षनमप्यतिरिच्य कथमपि शोथः कथं न स्यात्तमपसार्याङ्गं प्राकृतिकदशामुपनयच्छारीरिक-वायुजातवेदनां चापसार्याचिरमेव सद्यः फलदायकं प्रमाणीभवति। एतत्सम्बद्धानन्यचमत्कारानपहाय मदीयगृहस्यैव कतिपयाभिनवघटनाः सविशेषं वर्णिताः स्युः।

(१) षोडशवत्सरेभ्यः प्राङ्मदीयो भागिनेयो यश्च तदानीमेकवर्षीय एवासीदनेनैव रोगेण पीडितः सञ्जातः। अङ्गेषु शोथपूर्वकः सञ्जायते स्म वेपथुः। पौषस्यासीन्मासः, सहनातीतमासीच्छीतम्। एवं भूतेऽपि समये मदीया माता तं स्नपयित्वा यमुनायां प्रातरेव तत्स्थानं क्रोशार्द्धान्तरं गृहान्नीत्वा भवभय-निकन्दनं सेनानी-नन्दनं यथाशक्ति समयावाप्त-जलफलमूलादिभिरभ्यर्च्य परिक्रमां च कारयित्वा तत्कुण्डभस्मना शरीरं विलिप्य गृहमागच्छति स्म। एवं कृते सप्ताहाभ्यन्तर एव दारकः पूर्णरूपेणोल्लाघतामभजत्।

(२) मामकीनाऽस्मिन्नेव वर्षे वर्षीयसी प्रसूरकस्माद्वायुजनितेनैवानेन विकारेण पीडिता सञ्जाता। क्षणमपि च नातिशयपीडावशात्सुखमलभत। नैतावन्मात्रमेवा-

पितु तस्या जीवनमपि सन्देहास्पदं सञ्जातम्। किन्तु किं कर्तव्यता-विमूढोऽस्मद्-प्रजो "मुँडियाबाबा" शरणगमनमेव तत्कालोचितं प्रतीकारं मन्यमानस्तर्जयत्यपि सवर्षणगर्जनेन पर्जन्ये जनैस्तां तत्स्थानमगमयत्। प्रथमेऽह्नि तु तामुत्थाप्य परिक्रमा कारिता भस्म च तच्छरीरे व्यलेपि। किन्तु समाकर्ण्य चैतत्कदाचिज्जना न मनाग्विस्मेराः स्युर्यदन्येद्युः शोथस्तच्छरीरस्य पीडापगमपूर्वकमेवं दशामभजत् यत्साऽऽत्मनैव 'मुँडियाबाबा' महाराजस्य परिक्रमां कृतवती। द्वित्रेष्वेवाहस्सु एवं परिवर्तनं च शरीरे सञ्जातं यद्गंलनगरात्तत्र तद्दर्शनार्थं गतोऽहं जात्वप्येवं निश्चेतुं नाशकं यत्तस्याः शरीरं तथा भूतां दशां प्राप्तं भवेत्। आम्, तानवतनिम्ना तु नैसर्गिकत्वेन कोऽपि तस्यास्तद्दशादुःखमनुमातुं शक्नुयात्, किन्तु वायु-विकार-जन्य-मन्यन्न किमपि चिह्नञ्चक्षुर्गोचरतामायात्।

रहस्यस्यास्या लीलाया ज्ञाने तु समर्थ एव प्रभुः किन्त्वेकस्य अकिञ्चनस्य सनातन-धर्मणो मे तत्स्थानविषये एतावच्छ्रद्धाविष्करणं कदाचिदत्युक्तिपूर्णं न भवेद्यदपूर्वं तत्किमपि रहस्यपूर्णं स्थानमित्यत्र न विचिकित्सालेशोऽपि। 'मुँडियाबाबा' महा-राजस्य भावनामात्रेणैवाहं येषु येषु कठिनेष्वपि कार्येष्वतर्कितसाफल्यमवापं तेषा-मिहोट्टङ्कनं कदाचित्तन्माहात्म्यस्याधःकरणमेवस्यादित्यलं व्यर्थायासेन।

---

## कर्मणां संस्कारजनकत्वम्

ले० वे० र० बालकृष्णशास्त्री शुक्ल श्री होत्र—त्र्यम्बक निवासी

अयि महाशयाः! आधुनिकैः आंग्लशिक्षामण्डितैः पण्डितैः इतरश्चाप्रबुद्धैस्तदनुया-यिभिः भारतीयैरेवं संजल्प्यते सर्वत्र, यत् खलु प्राचीनधर्मशास्त्रप्रणेतृभिः अतीव कठिनतरं आचारापरनाम कर्मजालं वैदिकधर्मानुयायिनाम् अवश्यमनुष्ठेयम्। तदकरणे च शास्त्रोक्तः प्रत्यवायोऽनुष्ठातव्य इत्युम्। परं च जागतिक संघर्षण जनके ऽस्मिन् काले विविधधर्मीयैर्नानादेशीयैश्च समुपस्थिते घनिष्ठसंबंधे कथं प्राचीना-चारपरम्परा सुस्थिरा स्यात्? अवश्यमेव प्राचीनाचारपरम्परा संकोचविकासभा-वेन वैविध्यं सेवेत। परिवर्तिते च तस्याः स्वरूपे को दोषः समुपस्थितो भवेत् इति न जानीमः।

अत्रोच्यते—अयि चिकित्सकबंधवः श्रूयतां वैदिकानां सैद्धान्तिक आशयः आचारापरपर्यायं शास्त्रीयं कर्म जीवानां आशयसंस्कारकं विद्यते तथा चोक्तम्ः—

वर्णाश्रमादि शास्त्रेण प्रेरितोऽकरणे भयम्।
पश्यन् करोति यत् कर्म तत्संस्कारकमुच्यते ॥ १ ॥

यत् वर्णाश्रममुद्दिश्य विहितं कर्म तत् कर्म कर्तुः चित्तस्य संस्कारकं भवति; यथा जगत्यस्मिन् वर्तमानानां द्विविधपदार्थानां चेतनाचेतनसंज्ञितानां कर्मणा संस्कारो जायते तथैव शास्त्रीयकर्मभिरपि अनुष्ठातृचित्तमवश्यं संस्क्रियते क्वचित् भोग्यपदार्थश्च। नहि एतावता अलं किन्तु प्रत्येकं वस्तुमात्रं न च कर्म संस्कारं विना व्यवहारार्हं भवितुमर्हति, इति च प्रायो नियम एव वर्तते, तत्रादौ जडपदार्थो विचार्यते। यथा लोहं रौप्यं मृत्तिका सुवर्णं काष्ठादिकं च, तत्र लोहं लोहकारकर्मणा संस्कृतं कार्योपयोगि भवति सुवर्णरौप्यादि सुवर्णकारकर्मभिः परिष्क्रियमाणमलंकारादिरूपेण परिणमते। कुलालव्यापारेण मृत्स्ना घटेष्टादिस्वरूपं धारयति। तक्षा नैजशस्त्रव्यापारेण काष्ठानि गृह-निर्माणोपयोगीनि करोति, यदि उक्तपदार्थास्तत्कर्मणा असंस्कृताः स्युः तदा ते स्वकार्योपयोगिनो न भवेयुः इति तु सर्वानुभवसिद्धम्।

तथैव चेतनपशुपक्ष्यादीनां बालबालिकानां स्त्रीपुरुषादीनां च सर्वेषां विना कर्मसंस्कारं कार्याक्षमत्वं दरीदृश्यते। यथा वा शुकसारिकादीनो वाक्पटुत्वम् इतिवृत्तकथनादिकं च शिक्षारूपक्रिययैव संपाद्यते, अश्वादीनामपि शिक्षणरूपकर्मणैव स्वकार्योपयोगित्वं निर्वर्त्यते।

किमधिकोक्तेन, यथा आंग्लयुरोपीयपण्डितैः आंग्लविद्याशिक्षया संस्कृताः भारतीयाः स्वराज्यशकटवहनोपयुक्ताश्चास्यां शताब्द्यां संपादिताः यदि तर्हि कथं शास्त्रीयकर्मणां न केऽपि संस्काराः भोग्यपदार्थे भोक्तुश्चेतसि न भविष्यन्ति इति मंतव्यम् कर्मणः स्वभाव एवायं पदार्थसंस्करणं नाम। तत्र सम्यक्शास्त्रीयकर्मणा संस्क्रियते एव पदार्थः। तथा च अशास्त्रीयकर्मणा विनिमयेत वस्तुजातं, केवलं आत्मा तु न संस्कार्यः न वा विकार्यः इति तु अन्यत्। यदि लौकिककर्मणा भोक्तृभोग्यजातं संस्क्रियते तर्हि धार्मिकशास्त्रीयकर्मणा भोक्तृभोग्यादि संस्क्रियत एव, तदर्थं शास्त्रीय कर्मणा न वृत्तिः, भगवता मनुना उक्तं "महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः"।

मनूक्तशास्त्रीयकर्मभिः ब्रह्मभवन-योग्येयं तनुः क्रियत इति। पुनश्च स च संस्कारः स्थूलदृष्ट्या द्विविधः। कैश्चित् कर्मभिः दोषापनयनं क्रियते तथा च अन्यश्च गुणाधानरूपसंस्कारो जायते, यथा प्रायश्चित्तादिना दोषापनयनं भवति संध्यावंदनादिकर्मणा च अथवा गर्भाधानादिपुंसवनादिकर्म गुणाधानं करोति। यथा स्नानेन मलापगमः गायत्रीजपादिना चेतसो विशुद्धिपूर्वकैकाग्र्येण देवतासाक्षात्कारयोग्यतारूपगुणाधानमेवं जगति निखिललौकिक-व्यापाराणां संस्कारोत्पादकत्वं यथा दृश्यते

तथैव शास्त्रीय धार्मिक-कर्मणां संस्कारोत्पादन-सामर्थ्यं निर्विवादं सिद्ध्यति । तत्र अयमेव विशेषः येन कर्मणा मोक्षाविरोधिपारत्रिकहिकोन्नतिः जन्यते तत् कर्म संस्कार इति जोघुष्यते । येन कर्मणा च जीवात्मनः ऐहिकामुष्मिकात्यन्तिकोत्कर्षविरोधित्वं तस्यैव कर्मणः विकारोत्पादकत्वं सर्वत्र वैदिकशास्त्रे कथ्यते । अतः वैदिकशास्त्रीय कर्मणा दृष्टादृष्टसंस्कारः जन्यते। कथं तस्य वैदिकधर्मशास्त्र प्रतिपादितकर्मणः संघर्षणात्मककालभिया त्यागो वा परिवर्तनं वा विधेयं ? ये खलु यथा यथा धर्माचारान् आचरिष्यन्ति तत्प्रमाणेन तेषामुत्कर्षोत्पादकसंस्काराः चेतस्सु स्थास्यन्ति अतएव नाचारत्यागः श्रेयोजनकः इति सुनिश्चितं ब्रूमः ।

---

## "तत्त्वं पञ्चाननो गतः"

निवन्धकाः—पं० श्रीसतीन्द्रचन्द्र भट्टाचार्याः तर्कतीर्थं न्यायाचार्याः ।
( ब्रह्मचारी वाडी संस्कृत कालेज, अहमदाबाद )

नाम्ना चाखिलकर्मणा च भुवने ख्यातः स पञ्चाननः,
कुज्ञानेभहृ - शास्त्रकानन चरत्प्रोद्दीप्त - पञ्चाननः ।
पञ्चत्पञ्चसमीरणोत्क्रमपले सञ्चिन्त्य पञ्चाननम्,
"श्रीपञ्चाननतर्करत्न" विबुधः पञ्चाननत्वं गतः ॥ १ ॥

ध्वस्तो भारत-गौरवोरुसुदृढ-स्तम्भः प्रलम्बः क्षणात्,
स्रस्तो वङ्गधरा-धराधर-वरप्रोत्तुङ्गशृङ्गान्मणिः ।
त्रस्तो धर्म इवात्र सम्प्रति निरालम्बो विलम्बोदयः,
व्यस्तः पण्डितसंचयो विधिविधेर्ग्रस्तोऽद्य तर्को रविः ॥ २ ॥

तुङ्गे ! वङ्गवसुन्धरे ! बरतरासंख्य-प्रजा-प्रस्थिते:
शोकाच्छन्न-विभग्नरुग्ण-हृदयाप्यालोक्य यं साम्प्रतम् ।
कोष्णाश्रूणि कथञ्चिदञ्चलदलैः संमार्ज्य शान्तान्तरा,
सा त्वं हन्त विपत्सु जीवसि कथं तं तर्करत्नं विना ॥ ३ ॥

येनालौकिकशक्ति-शक्तिवलतः शक्त्याख्यभाष्यं कृतम्,
ब्रह्मज्ञानखनिः, कणादमुनये वृत्तेर्विवृत्तं परम् ।
गीतासप्तशती-रहस्य-विशदं भाष्यं तथात्यद्भुतम्,
नव्यं खण्डनखण्डखाद्य-विवृतौ वैदुष्यमुद्भासितम् ॥४॥

नानादर्शनतत्त्वजातमथनाद्वाचस्पतिर्वाऽपरः,
तन्त्रे यन्त्रसुमन्त्र-संयतमतिः साक्षाच्च पञ्चाननः ।

शोभाखः कविकालिदास इव सत्काव्यं तथा नाटकम्,
नव्यं भव्यतमं लिखन्निव च तान् सञ्जीवितान् ख्यापयन् ॥५।
त्वं त्रातेव सतः कुतोऽद्य विमुखो दुःखार्तमर्त्यान्प्रति,
एकः सम्प्रति सर्वशास्त्र—विदुषामग्रेसरो भास्वरः।
धर्मशास्त्रमपीह लोकनिवहान् सन्त्यज्य धर्माध्वगान्,
निर्मोयः शिवधाम कामगमो ब्रह्मैकचिन्तापरः ॥६॥
यास्यामः क नु शास्त्रसंशयचयोच्छेदाशया हा! वयम्,
चेत्थं हन्त! दुरन्तचिन्तन समाक्रान्ताः प्रशान्तान्तराः।
एकान्ते प्ररुदन्ति सन्ततमिवोत्स्वान्तास्तु सन्तोऽधुना,
सत्स्वान्तानिह सान्त्वयिष्यति भवन्! कस्त्वामृते संप्रति? ॥ ७ ॥

अन्धकारावृताकारा कवन्धेव वसुन्धरा।
तर्करत्नविहीनोऽद्य मणिहीनो यथा फणी ॥ ८ ॥
सर्वसहाऽसहासेयं वसुहीना वसुन्धरा।
अस्थिरेव स्थिरा भूरि विपरीतमिवाखिलम् ॥ ९ ॥
विहाय स्वतिथिं पञ्चाननो यद्धरिवासरे।
गतो हरिहरादेस्तु न भिदेति व्यधादिव ॥१०॥
विजयादशमी-तिथौ यता वतदेव्या मनुजैर्विसर्जनम्।
स गतोऽनुचितं विचारयन्नतु पञ्चानन एव तच्छुचा ॥११॥

दुर्गे व्यधायि किमिदं तव रक्तभक्तम्।
नीत्वा स्वकीयभवनं भुवनादतुत्वाम् ॥
कः शिक्षयत्यह तवार्चनमम्ब लोकान्।
पञ्चाननं गुरुमृते न विचारितं तत्? ॥१२॥
पञ्चप्राणेषु पञ्चत्वं प्रसिद्धमिति बुद्धितः।
आननेऽपि नु तद्भावीत्यभिमानैरगुश्च ते ॥१३॥
कुतार्किकाज्ञानतमश्छन्न-सत्तर्क भासकम्।
रत्नं दैववलाल्लब्धं दैवेनादैवतो हृतम् ॥१४॥
"तर्करत्नं" विनातर्क-तत्त्वं सन्तमसावृतम्।
दुर्निरीक्ष्यं कथं वीक्ष्यं हतस्तर्को हता वयम् ॥ १५ ॥
अस्तं गतोऽभ्युदेत्यर्कस्तर्क भासयति स्वतः।
सकृदस्तं गतो नायं तर्करत्नोऽभ्युदेष्यति ॥ १६ ॥

"तर्करत्ने"—तत्पुरुषे कर्मधारय एव वा।
बहुव्रीहौ द्वन्द्वपरा द्वन्द्वं द्वन्द्वेऽपि कुर्वते ॥ १७ ॥
कलिव्यास इति ख्यातः पुराणगणमन्थनात्।
व्यासस्य चिरजीवित्व-ख्यापनायैव यो भुवि ॥ १८ ॥
अभाललोचनः पञ्चानन एकाननोऽपि सन्।
काश्यां पञ्चत्वमापन्नः स पञ्चाननतां गतः ॥ १९ ॥
यो मूर्त्तिमान् सदाचारो यश्च मूर्त्तो मतो मुनिः।
मूर्त्तो धर्मः कर्म मूर्त्तं सन्मूर्त्तः स गतः कुतः ॥ २० ॥
सिद्धान्त भूषण प्राण प्राणहीनोऽप्यहो भवान्।
मृत्युञ्जयत्वसंपत्त्या स्वयैवाद्यापि जीवति ॥ २१ ॥
किं भूषणविहीनं भोः सिद्धान्तं वीक्ष्य दुःखतः।
सिद्धान्त-भूषणं बन्धुं सन्धातुं वा गतस्ततः ॥ २२ ॥
यथोचिते कर्मणि धर्मभीरू राजाधिराजादपि वीतभीतिः।
ब्रह्मण्यतेजोजितजातिजातो जातो जगन्मान्यतमस्त्वमेव ॥ २३ ॥
काणस्य नो "कमललोचन"—नाम तुल्यम्
पञ्चाननेत्यतुल—नाम तवाऽप्यमूल्यम्।
चित्रं विचित्रमिह धर्म्यमनेक-कर्म
त्वां स्मारयत्यनुदिनं बुधराट्स्वकीयम् ॥ २४ ॥
मायामयं कायममायकोजहच्छुभ्रं वपुर्बिभ्रदद्भ्रमभ्रमः।
स्वस्थानमास्थायचिरायनोऽस्त्वये कार्येऽविचार्यैव भवान् सहायकः ॥ २५ ॥
शोकैरधीरहृदया वयमद्य सद्यो
भूलुण्ठनैः प्रलपनैः किमु कर्त्तुमीशाः।
किं शोक-संसदि फलं रुदिमो यदीत्थम्
रक्ष स्मृतिं समनुसृत्य चरित्रमस्य ॥ २६ ॥
नो दृश्यते पुनरसौ शतशोऽरिशोकैः
शोकोऽपि नोचिततमः शिवतां गतस्य।
दीनान् समीक्ष्य सकलान् शुभशान्तिदाता।
पुत्रादिकान् झटिति सान्त्वयताद्विधाता ॥ २७ ॥
चिरायास्तं गतः शास्त्रसूर्यः, "सूर्योदयः" कथम्।
धार्मिकैर्दृश्यते धर्मकर्मण्यग्रे जगद्धतम् !!! ॥ २८ ॥

# कर्म्मणा वर्णव्यवस्थायाः प्रत्यालोचना ।

( डाक्टर भगवान् दासीय-सिद्धान्तस्य प्रतिवादः )

निबन्धा—श्रीदीनानाथशर्म्मा शास्त्रि सारस्वतः
( सनातनधर्म कालेजोपाध्यायः, मुल्तानसिटी )

( क्रमागता )

यदि डाक्टर महाशय आग्रहग्रहिलतया अत्र ऐहिककर्म्माण्येव स्वीकुर्यात्; तर्हि तदीयैवाऽत्र बोधत्रुटिः स्पष्टा; यतो हि वर्णानां ब्रह्मकर्तृकसर्जनसमये कुतस्तदीयाना-मैहिककर्म्मणां गन्धोऽपि ? किं जन्मसमकालमेव बालस्तत्तद्वर्णयोग्यकर्म्माणि प्रारभते, यैः स जन्मनैव ब्राह्मणादिरुच्यते ?। यदि आम्-इति; तर्हि तु प्रत्यक्षमप-लपन् डाक्टरमहाशयो धन्यः। यदि च जन्म समकाले ऐहिककर्म्मणामसम्भवः; तथैव वर्णानां ब्रह्मकर्तृकसर्जन-( जन्म ) समयेऽपि तदीयानाम् ऐहिकजन्मकर्मणाम् असम्भवः तदा च स्वतः एव प्राक्तनजन्मन एव कर्म्मकारणाद् वर्णभेदोऽवश्य-म्भावी, इति सनातनधर्म्मसिद्धान्तस्यैव, जन्मना वर्णव्यवस्थात्मकस्य मण्डनं जातम्। एवं प्रधानमल्लनिवर्हणन्यायेन अन्यानि अत्र लिखितानि डाक्टरमहाशयस्य प्रमाणानि प्रत्युक्तानि ( दत्तोत्तराणि ) ।

सत्त्वयुगस्य कृते 'वर्णाश्रमव्यवस्थाश्च न तदासन् न सङ्करः' इति वायुपुराणस्य श्लोकार्धमुद्धृत्य एतेन न जाने डाक्टरमहाशयेन कया दिशा स्वपक्षः सिषाध-यिषितः ?। प्रत्युत अनेन तु तत्पक्षखण्डनमेव जायते; यतो यदा, तदा वर्णाश्रमव्यवस्था एव नासन्; तदापि ब्राह्मणक्षत्रियवैश्या आसन् नो वा ?। यदि आसन्; तदा जन्मनैव ते सिद्धाः। यदि नासन्, तदा किं जना ऽकान्यपि कर्माणि न कुर्वन्ति स्म ? यदि कुर्वन्ति स्म, तथापि यदि ते कमपि वर्णं न प्राप्नुवन्ति स्म; तदा कर्म्मणा वर्णव्यवस्था निराकृता। अस्मिन् श्लोके सङ्कराऽभावनिदर्शनेन स्पष्टं प्रतीयते यत्—तदा पूर्वजन्मकर्मवशाज्जाता वर्णा आसन्, परं वर्णानां पारस्परिकसङ्करः, कर्मसङ्करो, विवाहादिसङ्करश्च नासीत्; अन्यथा वर्णाऽभावेऽपि सति सङ्करनिषेधज्ञापकम् इदं वचनं व्याहतं स्यात्। अस्मिन् श्लोके सङ्करो निन्दितः, परमन्तर्वर्णविवाह-पक्षपाती डाक्टर महोदयस्तं प्रशंसति ; तदा किमयमपि श्लोको न प्रक्षिप्तस्तन्मते ?। किं स पुराणेषु प्रक्षेपं न मन्यते यत् तद्-वचनानि अर्पयितुमुद्यतः ?।

यत् खलु भविष्यपुराणं कर्म्मणा वर्णव्यवस्थापकं सङ्क्रेतयते; तदपि डाक्टर-

महाशयस्य साहसमात्रम् । तदीयोत्तरं 'सूर्योदये' ११।९-१०-११ अङ्केषु मम लेखे स पश्यतु । किं स डाक्टरमहाशयोऽपि कर्म्म-वर्णव्यवस्थाप्रवर्त्तक स्वा० दयानन्दवत् पुराणानि विषसम्पृक्ताऽन्नवद् न मन्यते ? । प्रत्युत तत्पुराणे तु कर्मणा वर्णस्य खण्डनं कृतम्, तथा च 'तस्माद् देहात्मके नैतद् ब्राह्मण्यं, नापि कर्मजम्' भाव० ब्राह्म० ४१।५७। तत्र सिद्धान्तपक्षस्तु जन्मकर्मसमुच्चयस्यैव निर्दिष्टः । तथा च—'संसिद्धिं यान्ति मनुजा जातिकर्म्मसमुच्चयात्' भविष्य पु० ब्राह्म० ४५।२ 'सिद्धिं गच्छेद् यथा कार्यं दैव-कर्मसमुच्चयात् । एवं संसिद्धिमायाति पुरुषो जातिकर्मणोः' ४५।३। यदि कस्मिंश्चित् पुराणे स्मृतिविरुद्धता भवेदपि; तथापि तत्र 'द्वयोर्द्वैधे स्मृतिर्वरा' व्यास-स्मृतौ १।४ इति स्मृतिविरुद्धतया तत् प्रमाणं माननीयं न भवति; अत एव अन्ततस्तत् कर्म्मप्रशंसामात्रपर्यवसायि एव भवति; न तथा वर्णव्यवस्था । लोकव्यवहारस्य धर्मशास्त्रायत्तत्वात्; अत उक्तं न्यायदर्शने—'लोकव्यवहारव्यवस्थापनं धर्मशास्त्रस्य विषयः' ४।१।६२ पुराणेतिहासस्य तु तत्रैव 'लोकवृत्तम् इतिहास पुराणस्य' ४।१।६२ इति लोकवृत्तमात्रप्रतिपादनं मुख्यविषयो मतः । पुराणानां धर्मशास्त्राणाञ्च तत्र स्वस्वविषये एव अधिकप्रामाण्यमुक्तम्, न स्वभिन्नविषये, अतस्तत्रैवोक्तम्—'यथा-विषयमेतानि प्रमाणानि इन्द्रियादिवद्' न्याय० ४।१।६२ ।

'वर्णपरिवर्तनके लिये स्वयं मनुमें तथा आपस्तंब आदिमें वचन हैं (इदं डाक्टरकथनं स्वच्छाऽसत्यम्) पर उनकी व्याख्यामें लोग विवाद करते हैं। जैसे—वकील लोग अपने पक्षके अनुकूल ही कानूनके शब्दोंका लापन और प्रतिकूलका अपलापन करते हैं, जिससे भी अवान्तर रूपसे यही सिद्ध होता है कि—शास्त्रका अर्थ व्याख्याताकी बुद्धि है' । एतद् डाक्टर महाशयवाक्यं सनातन-धर्मिषु वस्तुतस्तथा न घटते यथा तदादिकेषु भवत्सु । 'तोड़ मरोड़ता' भवदादि-कानामेव प्रसिद्धा । मनो × कोपि तादृशः श्लोको डाक्टरमहोदयेन दत्त एव न; यत्र च तदाभासः; तत्र तेन अस्मदीयो वर्णव्यवस्थाविषयको लेखः 'सूर्योदय' गताङ्केषु द्रष्टव्यः, यत्र तदुत्तरमस्माभिर्दत्तम् ।

आपस्तम्बस्यापि 'चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः; तेषां पूर्वः पूर्वो जन्मतः श्रेयान्' आपस्तम्बधर्मसूत्रे १।१।४-५ इति जन्मनैव वर्णव्यवस्था सम्मता । तर्हि कथं स कर्म्मणा वर्णव्यवस्थापकः सङ्केत्यते ? । कदाचिद् 'धर्मचर्यया जघन्यो जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ । अधर्मचर्यया पूर्वः पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्ता, इति स्वा० दयानन्दोद्धृतम् आपस्तम्ब-धर्मसूत्रमेव विवक्षितं भवेद् डाक्टरमहोदयस्य; परं तस्य अत्रापि भ्रम एव । यथा

स्वा० दयानन्देन सत्यार्थप्रकाशस्य ५३ पृष्ठे 'जातिपरिवृत्तौ' इति उक्त सूत्रस्थपदस्य अर्थमपलप्य * स्वकीयमतस्य निर्मूलता निराधारता वा पिशुनिता; तथा डाक्टर-महोदयेनाऽपि तत्र पदे अनवधाय स्वकीयपक्षशैथिल्यं पिशुनितमेव । 'जातिपरिवृत्तौ' इत्यस्य अर्थः—'जातेः—जन्मनो मनुष्यत्वजातेरित्यर्थः'—( 'समानप्रसवात्मिका जातिः' न्यायदर्शने २।२।७० ) परिवृत्तौ—परिवर्तने । जन्मपरिवृत्तिश्च मरणे एव भवति । मरणे सुकर्मणा जघन्यस्य उत्तमवर्णप्राप्तौ, कुकर्मणा उत्तमस्य जघन्यवर्ण-प्राप्तौ वयं न विप्रतिपद्यामहे । विप्रतिपत्तिस्तु ऐहिककर्म्मभिर्वर्णपरिवर्त्तने । एतत्सा-धकमेव छान्दोग्यवचनमिदं प्रसिद्धम्—'यथा हि रमणीय-चरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन्, ब्राह्मणयोनिं वा, क्षत्रिययोनिं वा, वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत् ते कपूयां योनिमापद्येरन्, श्वयोनिं वा, सूकर-योनिं वा, चाण्डालयोनिं वा, ५।१०।७, किं कदाचिद् डाक्टरमहोदयेन कपूयाचरण-वतो जनस्य श्वसूकरादियोनिजन्म इह जन्मनि दृष्टम् ? । यदि जन्मान्तरे एव; तर्हि ब्राह्मणादिवर्णपरिवर्त्तनमपि एतदादिकवचनैर्जन्मान्तरे सिद्धम्, न खलु ऐहिक-जन्मनि । विश्वामित्रवाल्मीक्यादि विषये मनोः श्लोकान्तरविषये च डाक्टरमहो-दयेन 'सूर्योदये' मामकीनो वर्णव्यवस्थानिबन्ध एव द्रष्टव्यो येन लेशतोऽपि संशीतिर्विलीयेत ।

अन्ते डाक्टरमहोदय आचष्टे—इन्हीं की देखादेखी वैश्य और शूद्र भी स्वस्व प्रवृत्त्युचित काम-दाम-आरामका न्यायानुसार बंटवारा नहीं करना चाहते; सब वस्तुओंके लोलुप सभी हो रहे हैं । शिक्षक तो वंचक, रक्षक तो भक्षक, पोषक तो शोषक, हो गया है, और सेवक भी अब धर्षक हुआ जाता है' । अत्र डाक्टर महा-शयेन इदं ज्ञेयं यत्—इयं कृपा ब्राह्मणानां नास्ति, प्रत्युत भवादृशानां सुधारकनाम-धारिणामेव । यतो भवद्भिः 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' गी० १८।४५ 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्' ३।३५ 'सहजं कर्म्म कौन्तेय ! सदोषमपि न त्यजेत् । सर्वारम्भा हि दोषेण धूमेनाऽग्निरिवावृताः' १८।४८ एतदादिक-श्लोकान् विस्मार्य, उन्नतिबाधकान् वा प्रसाध्य 'सर्वे एव उन्नतिं कुरुत । इत्येवमा-दिश्य कर्म्मस्वातन्त्र्यं प्रचालितम् तदा स्वयमेव कर्म्मसङ्करो भावी । अत्र ब्राह्मणानां को दोषः ? ब्राह्मणानामेव कर्म्माणि वृत्तिं वा सर्वे छिन्दन्ति । ब्राह्मणा ˜ पुनरपि पठनपाठने यजनयाजने, दानप्रतिग्रहादिके स्वकर्म्मणि लग्ना एव; परं क्षत्रियादय एव स्वयुद्धादिकर्म्म ब्राह्मणादीनां रक्षणादि कर्म्म च त्यक्त्वा ब्राह्मणानामेव कर्म्म उप-

* अपलप्य—निह्नुत्य ।

देशादिकम् अध्यापनादिकं प्रतिग्रहादिकं च आचरन्ति। ततस्ते ब्राह्मणानामपि हानिप्रदाः सिध्यन्ति, आत्मनोऽपि च। ततस्ते एव 'इतो भ्रष्टास्ततो नष्टाः' भूत्वा यदि ब्राह्मणानेव अपभाषेरन्; तर्हि ब्राह्मणानामत्र को दोषः?

'यह सब 'जन्मनैव वर्णः' का विलसित विक्रीडित है, एतद् डाक्टरमहाशयस्य कथनं निर्मूलमेव। वस्तुतो भवदादिप्रवर्तितकर्म्मस्वातन्त्र्यस्यैव फलमिदम्। सनातनधर्म्मस्तत्तद्वर्णानां कर्म्माणि आचष्टे, न तु कर्म्मभिर्वर्णान्। परन्तु भवन्त एतं सिद्धान्तं विपर्यस्य स्वयमेव उक्तपूर्वां हानिं कुर्वन्ति। अथ च सनातनधर्म्मो जन्मना वर्णं स्वीकृत्याऽपि, तेषां तेषां कृते क्वापि कर्म्मनिषेधं नाचष्टे; प्रत्युत स्वकर्म्माणि त्यक्तवतां जन्मान्तरे भूयिष्ठां दुर्दशामाचष्टे। तर्हि कथं तस्मिन् अनृतदोषापातप्रसङ्गः?

प्रत्यालोचनेयं द्राघिमाणमवोढ। परमत्र वैयर्थ्यमूलको + द्राघिमा नाऽऽहृतः। अत्यन्तविस्तरभियैव अन्यदत्र नोपन्यस्यते। यदि जिज्ञासुः स्याद् डाक्टरमहोदयस्तर्हि 'सूर्योदय' प्रकाशितमामकीन 'वर्णव्यवस्था' निबन्धं कार्त्स्न्येन पश्यतु। तदा तदीया या विचिकित्सा ^× प्रादुष्युः; स तन्निर्देशं करोतु। अहमपि यथाशास्त्रं तत्समाधौ प्रयतिष्ये। परं तेन एतद् अवश्यं ध्येयं यद्—'निर्दुग्धाऽपि च गौः पूज्या नहि दुग्धवती खरी' 'दुःशीलोपि द्विजः पूज्यो न तु शूद्रो जितेन्द्रियः। कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम्' पराशरस्मृतौ ८।३३ एतदादिक्रमवलम्ब्य यदि शास्त्रकारैः क्वचित् कर्म्महीनोपि ब्राह्मणः प्रशंसितः; तत्र कारणं वास्तविकतैव; न किल कर्म्मत्यागप्रोत्साहना। कर्म्महीनत्वे शास्त्रकारेण अग्रिमजन्मनि तेषां तेषां दुर्दशा पिशुनितैव, मनु० १२।७०–७१—७२ एतदादिपद्यैः।

ऐहिककर्म्महीनस्यापि ब्राह्मणस्य या प्रशंसा शास्त्रकारैराम्नायते, सा गतजन्मसुकर्म्ममूलिकैव। ऐहिककर्म्महीनतायाश्च दुर्दशा अग्रिमजन्मनि यदा शास्त्रकृद्भिः पिशुनिता; तदा तत्र गतजन्म सु-कर्म्मवतां प्रशंसापरकाः श्लोकाः कथं प्रक्षिप्ता मन्येरन्? अस्माकमिदं शरीरं गतजन्मकर्म्ममूलकम्। एतज्जन्मकर्ममूलकं शरीरं तु अग्रिमजन्मनि भवेत्। तेन पूर्वजन्म सु-कर्म्मत एव तद्वर्णकपितृद्वारा उत्पन्नस्य ब्राह्मणस्य इदानीं कर्म्महीनत्वेऽपि यदि प्रशंसापरपर्याया पूजनीयता न मन्येत; यदि च पूर्व-जन्म-कुकर्म्मत एव तद्वर्णपितृद्वारा निकृष्टवर्णे उत्पन्नस्य, इदानीं सुकर्म्मरतस्यापि अपूजनीयता न मन्येत; तर्हि स्पष्टं स्याद् यद् एतदादिका जनाः पूर्व-जन्म-पुनर्जन्मवादं न मन्यन्ते। अत एव दृष्टचन्द्रमन्तार इमे नास्तिका वा, प्रच्छन्नबौद्धा वा,

---

+ द्राघिमा नाहृतः। इमनिजन्तः पुंसि। × प्रादुःष्युः, अत्र 'उपसर्गप्रादुर्भ्यामिति' अस्तेः षत्वम्।

स्वैरवृत्तयो वा, शास्त्रोल्लङ्घनपरा वा। ते एतदेव वर्तमानं जन्म तत्कर्म च मन्यन्ते; पूर्वापरे जन्मनी, तत्कर्म्माणि च न मन्यन्ते। परं यदि ते पूर्वजन्म पुनर्जन्मवादं मन्यन्ते, तर्हि पूर्वजन्म-कर्म्मानुसारमेव जातेन अनेन जन्मनैव वर्णव्यवस्था मन्तव्या स्यात् तैः। अन्यथा गतजन्म-कर्म्मणां वैयर्थ्यमापद्येत। अथ च तेषां मतानुसारम् एतज्जन्म कर्म्मणाम् × इहैव फलप्राप्त्या अग्रिमजन्मन एव असम्भवः स्याद्; एतज्जन्मन ˇ प्राक्तन-जन्मकर्म्ममूलकत्वात्।

एषा तु वर्त्तते शास्त्रव्यवस्था। अवशिष्टो वर्त्तते * लोकसम्मानः; स तु गुण-कर्म्मणा श्रेष्ठस्य नीचजातीयस्यापि भवति। सनातनधर्म्माण एव कबीरसदृशं चर्मकारमपि सन्मन्यन्ते, ए० सी० वुल्नर सदृशं भिन्नधर्म्माणमपि सभापतित्वप्रदानादिना सममानयन्, डा० भगवान्दास सदृशं वैश्यमपि 'श्रद्धेयं' मन्वते, 'गान्धि' सदृशं वैश्यमपि 'महात्मानं' ब्रुवते। त एव सनातनधर्म्माणो 'रावण' सदृशं ब्राह्मणमपि प्रतिवर्षम् अपमन्यन्ते एव। परमेतेन ते वर्णव्यवस्थायां परिवर्त्तनं नेच्छन्ति। ते रावणमपि ब्राह्मणमाचक्षते, धर्मव्याधमपि शूद्रम्। वर्णव्यवस्था जन्मनैव स्थापिता सती विविधहानिभ्यस्त्रात्री † निष्पद्येत, इतश्च तथाभिधायि शास्त्रमपि नाऽतिक्रान्तं स्यात्।

आशासे वयोवृद्धः श्रीडाक्टर भगवान्दास एम्० ए० महोदयो युवकस्यैकस्य जन्म ब्राह्मणस्य (यस्य एकादशे दिने जन्मनैव, न किल गुणकर्मणा, मन्वनुसारं 'शर्मा' इति ब्राह्मणत्वसूचकं पदं जातम्) वचनं निष्पक्षपातं परमैकाग्र्येण विचार्य्य एतद्विषयं निर्णयेत्; न खलु प्रक्षिप्ततायपदेशेन शास्त्रवचनानि तिरस्कुर्यात्। मया अग्रे 'सूर्योदये' 'वर्णव्यवस्थागतभ्रान्तिनिरासः' इति विषयोपि समर्पणीयोऽस्ति, यस्मिन् वादिगणोपस्थाप्यमान-पुराणेतिहास-सम्बन्धिसन्दिग्ध-वचनानां स्पष्टं सत्यं च समाधानं प्रदर्शितं स्यात्।

मया एतदादिकं सर्वं द्विशतविषयसंवलिते द्विसहस्रतोऽपि अधिकपृष्ठवति च स्वप्रणीते 'श्रीसनातनधर्म्मालोक' नामकग्रन्थे समाहितम्। यदि सनातनधर्म्माणो वा, एतदादिक-विवादास्पदविषयवृन्दस्थनिर्णयेच्छुका जना वा अस्मभ्यं साहाय्यं प्रदाय उक्तग्रन्थप्रकाशने दक्षिणहस्ताः स्युः; तर्हि एतेन साधारणजनानां वादिजनप्रसारित-हृदय-तमसो दूरीकरणमधिकांशे आशास्यते—इति निवेद्य च पुनरग्रे अधिकविस्तरभिया इहैव विरम्यते। शम्।

———o———

× कर्मणाम्। अत्र दीर्घप्राप्तिर्न। * सम्मानः पुंसि, घञन्तत्वात्। † त्रात्री—रक्षिका।

# 'सीतापती रावणः'

(ले० पं० आद्या प्रसाद चतुर्वेदी बालकविः।)

[समस्यापूर्त्त्यर्थः]

वैवर्ण्यं वदनं गतस्मिति गतं, याते नतिं लोचने,
वैदेहं प्रखर-प्रवात-कदली-साम्यम्प्रयातं वपुः।
यावद् दुर्दमचन्द्रशेखरधनुः पार्श्वं समासादयन्;
स्प्रष्टुं वाञ्छति भञ्जनाय भवितुं 'सीतापती, रावणः' ॥ १ ॥
हा हा देवि विदेहराजतनये, हा तात, हा लक्ष्मणे-
त्यश्मद्रावि वचो निशम्य विषमं सम्प्रेषिते लक्ष्मणे।
वाञ्छन्त्या मृगयां गतस्य कुशलं पत्युः सुताया भुवः
सम्प्राप्तः पुरतः प्रवञ्चितसती 'सीतापती रावणः' ॥ २ ॥
आलापैर्मधुरैरनुक्षणमिमां सम्भावयन्त्यः सतीं,
तिष्ठन्तीं कथयन्त्यशोकविपिने रक्षःस्त्रियो जानकीम्।
'रक्षोमानवयक्षनिर्जरततिं पश्य स्वपादानता—
मुखायैव सक्तन्मुखेन मधुरं 'सीतापती रावणः ॥ ३ ॥
शुद्धान्ते न गतिं कलासु सकलास्वव्याहतां ना गतिं;
पौरस्त्यां त्रिदिवाङ्गनासु न रतिं धत्ते कथञ्चिद् धृतिम्।
पार-प्राप्त-कपीन्द्र-भल्लुकगणैराकीर्णलङ्कापथः-
क्रोधान्धीकृत-सानुयायिपरिषत् 'सीतापती रावणः' ॥ ४ ॥
आकर्ण्यानुनयं रतेरतितमां प्रत्यर्प्य दग्धं वपुः-
स्वाङ्गस्थापित-मन्मथेव कलिता कामारि-देहद्वयी।
भाति स्म द्रुत-सङ्गरश्रमक्षरत् स्वेदाम्बु सन्दोहवत्-
प्रत्यङ्गप्रतिबिम्बित प्रतिलस'त्सीतापती रावणः' ॥ ५ ॥
विद्युद्विक्रमबाहुदण्डविलसत्कोदण्ड-दण्डोच्चल—
च्चण्डाजिह्मग-खण्डितप्रतिभटप्रोत्कम्पिगात्रव्रजौ
युद्धे सिद्धजनैर्विमानगतिभिः साश्चर्यमालोकितौ
द्वावेतावुपमानहीनपुरुषौ 'सीतापती रावणः' ॥ ६ ॥

—o—

# अखिल-भारतीय-देवभाषा-परिषदो

द्वादशाधिवेशने–

सभापतीनां विद्यावारिधि पण्डित हाराणचन्द्र भट्टाचार्याणां ( कलिकातास्थ राजकीय महाविद्यालयाध्यापकानाम् )

## अभिभाषणम् ।

परमेश्वरस्य परमकरुणयाऽस्या "देवभाषापरिषदो" द्वादशं महाधिवेशनमद्य समुपस्थितम् । ये खलु पूर्वेषु महाधिवेशनेषु सभापतिपदमलमकुर्वन् विश्वविस्तीर्ण-कीर्ति-महामान्यवर-श्रीमदनमोहनमालवीय महोदय-प्रभृतयस्तेभ्यः सर्वथा ममापकर्षे सत्यपि मामत्र साभापत्ये नियुञ्जाना भवन्तो मयि महान्तमनुग्रहं प्रादर्शयन्नित्यत्र नास्ति कश्चन संशयलेशः, परन्तु मादृशेऽयोग्ये यादृशो महान् भारो भवद्भिः समारोपितस्तत्र स्वकीयामयोग्यतामनुभवन् संकुचितचेता भवत एवाभ्यर्थयेऽत्र साहाय-कमाचरितुम्—यथा भवद्भिरारब्धं कर्मैतद् निर्विघ्नं परिसमाप्तं स्यात् तथा विधेयं भवद्भिरिति ।

अस्मिन्नप्रतिमे सङ्कटकाले देवभाषापरिषद इदमधिवेशनं भवतां सुमहत उत्साहस्य परिचायकतया भाविन्या उद्देश्यसिद्धेः सूचकमिति मां प्रतिभाति । यद्यप्यस्माकं प्रधानमुद्देश्यं साम्प्रतमेवाचिरात् सिद्धिमेष्यतीति नास्ति प्रत्याशा, तथापि प्रतिनियत-मकैतवमाचरितैरुपायैः सुदुर्बलैरपि कालेन फलसिद्धिर्विधीयत इति लोकव्यवहारसिद्धं सत्यमिदमस्माकं मनसि धैर्यमुत्साहं च सर्वदा सम्पादयद् नैराश्यान्धकारं निरुणद्धि ।

देवभाषेतिप्रसिद्धा संस्कृतभाषैव भारतीया राष्ट्रभाषा भवितुमर्हतीति परिषदोऽस्याः सिद्धान्तः । सिद्धान्तेऽस्मिन् यद्यपि श्वेतद्वीप-( Britain ) निवासिन उक्षतीर्थ-( Oxford ) विश्वविद्यालयसंस्कृताध्यापकचरस्य श्रीयुक्त-टमास् ( Tomas ) महोदयस्य वैदेशिकस्य, मैसूर-( Mysore ) राज्यप्रधानामात्यस्य सार् मिर्जामहम्मदइस्माईलमहाशयस्य माहम्मदस्य, हिन्दुसभानेतृवरस्य डाक्टरमुञ्जेमहोदयस्य, काशीहिन्दुविश्वविद्यालयोपाध्यक्षचरस्य ( Ex-pro-vice chancellor of Benares Hindu University ) आचार्य-ध्रुव ( A. B. Dhruva ) महोदयस्य, वाराणसेय-राजकीयसंस्कृत-महाविद्यालयाध्यक्षचरस्य महामहोपाध्याय-श्रीयुक्त-गोपीनाथ-कविराजमहाशयस्यान्येषां च केषांचन प्रथितयशसां बुद्धिमतां विपश्चितां सम्मतिर्वर्त्तते तथापि केचनाद्यत्वे स्वमतिपरिकल्पितयुक्तिजालैरन्यादृशीं सिद्धान्त-सरणिमप्यातिष्ठमाना दरीदृश्यन्त एव ।

तत्र केचन स्वयूथ्यभूयस्त्वबलबलिता रोमन्लिपिमाद्रियमाणा रोमन्लिप्या (Roman character) लिखितां 'हिन्दुस्तानीभाषां' भारतीयराष्ट्रभाषायाः पदवीमधिरोपयितुमुत्सहन्ते । रोमन्लिपेरक्षरश्रेणी न सर्वाङ्गसम्पूर्णेति न रोमन्लिपिसाहाय्येन सर्वेषां शब्दानामाञ्जस्येन लेखनं सम्भवति, न च सा भारतीया लिपिः, किन्तु वैदेशिकी । ये खलु स्वदेशभक्तिमात्मनः प्रख्यापयन्तः प्रभूतं क्लेशमप्यापतितं तृणाय मन्यन्ते, सत्यामपि स्वदेशीयायां परिपूर्णावयवायां लिप्यां कथं ते रोमन्लिपिं भारतीय-राष्ट्रभाषायाः परिच्छदं कर्तुमिच्छन्ति, तदेतद् बहुशो विमृशन्तोऽपि वयं नाववोद्धुं पारयामः । 'हिन्दुस्तानी' भाषाया भारतीयराष्ट्रभाषात्वं कथमपि युक्तिपथं नाधिरोहति । पञ्चनदप्रदेशे युक्तप्रदेशे च केचन यद्यपि 'हिन्दुस्तानी' भाषया व्यवहरन्ति, तथापि तयोः प्रदेशयोः सर्वत्र सर्वैरेव व्यावहारिके 'हिन्दुस्तानी' भाषया व्यवह्रियत इति न वक्तुं शक्यते । पञ्चनदप्रदेशे 'गुरुमुखी' भाषयाऽपि व्यवहर्त्तारो भूयांसो मनुष्याः सन्ति; युक्तप्रदेशे च बहव एव 'हिन्दी' भाषाभाषिणो विद्यन्ते । बङ्गदेशे मध्यभारते मध्यप्रदेशे महाराष्ट्रे मद्रास्प्रदेशे च 'हिन्दुस्तानी' भाषाया लेशतोऽपि प्रचारो न दृश्यते । तस्माद् यत्किञ्चित्-स्थानव्यापिनीयं 'हिन्दुस्तानी' भाषा सर्वभारतीया न भवतीत्येतस्या भारतीयराष्ट्रभाषायोग्यतैव नास्ति ।

अपरे च केचन इंलिश्भाषाया भारतीय-सर्वप्रदेशेषु बहुलप्रचारमालक्ष्य तस्या एव राष्ट्रभाषात्वमिच्छन्ति । तदेतदपि न विचारचारु प्रतिभाति । इङ्गलिशभाषा यद्यपि राजपुरुषाणां प्रभावेण भारते सर्वप्रदेशेष्वधुना प्रचलिता, तथापि तस्यां वर्त्तते सुमहती न्यूनता । तत्र कुत्रचित्पदेषु केषांचिद् वर्णानामुच्चारणमेव न भवति, केवलं लेखनसमये तानि पत्रारूढानि विधीयन्ते । एकस्यैवाक्षरस्य क्वचित् पदे यादृशमुच्चारणं भवति, अपरत्र न तादृशमुच्चारणं दृश्यते, किन्तु तदेव वर्णपदान्तरेऽन्यथवोच्चार्यते । एतादृशानां व्यतिक्रमाणां सर्वत्र समनुगता काचिद् व्यवस्थाऽपि न प्रणीताऽद्यावधि तद्भाषापण्डितैर्यया व्यवस्थया सर्वेषां जनानां तया भाषया व्यवहारः सुकरः स्यात् । तस्माद् राजपुरुषप्रभावेण प्रचलिताऽपि न्यूनतापरिकलिता वैदेशिकी सा भाषा न भारतीय-राष्ट्रभाषापदवीमधिरोढुं योग्या ।

भारते वर्षे प्रचलितासु स्वदेशीयभाषासु 'हिन्दी' भाषाया यद्यपि सर्वाधिकः प्रचारः परिलक्ष्यते, तथापि सा भाषा मद्रास्प्रदेशे वङ्गप्रदेशे महाराष्ट्रे च न प्रचरति । एतेषु प्रदेशेषु निवासिनो जनाः प्रायेण हिन्दीभाषां नावगच्छन्ति । मद्रास्प्रदेशे 'हिन्दी' भाषाप्रचाराय यद्यपि कांग्रेस्पक्षीयैस्तदानीन्तनराज्यशासकैः सुमहान् आग्रहः प्रदर्शितस्तथापि तत्प्रदेशीया बहवो जनास्तत्रातीव विप्रतिपन्ना आसन्निति नाविदितं

वृत्तान्तपत्रपाठकानाम्। तस्मात् सर्वभारतीयतया 'हिन्दी' भाषा भारतीय-राष्ट्रभाषाया आसनं नाधिगन्तुमर्हति।

कतिचन बङ्गीया बङ्गभाषाया राष्ट्रभाषात्वमिच्छन्तस्तत्र युक्तिमिमामुद्भावयन्ति—भारतीयासु प्रचलितासु भाषासु बङ्गभाषायाः साहित्यं सुसमृद्धं वर्त्तते; बङ्गभाषा चेयं संस्कृतपदबहुलत्वात् सर्वभारतीयानां सुबोधेति सैव राष्ट्रभाषा भवितुं योग्येति।

परन्तु 'गुजराती' भाषा 'महाराष्ट्र'भाषा चेति भाषाद्वयमनया युक्त्या राष्ट्रभाषापदमधिरोढुं कथं नार्हतीति वक्तव्यम्। यदि प्रदेशविशेष-वासिनामेव तद् भाषाद्वयं प्रदेशान्तरेऽपरिज्ञातत्वान्न राष्ट्रभाषात्वमधिगन्तुमर्हतीत्युच्येत तदा स दोषो बंगभाषायामपि समान इति कथं तत्पक्षपातः समुचितः स्यादिति विभावनीयम्। इत्थं पूर्वोक्तानां पक्षाणां दूषणगणग्रस्ततयाऽनादेयत्वे सिद्धे संस्कृतभाषैव भारतीय-राष्ट्रभाषा भवितुमर्हतीत्यस्माकं परिषदः सिद्धान्त एव समीचीनतया समुदेति। भारतवर्षस्यैतादृशो नास्ति कश्चन प्रदेशो यत्र संस्कृत-भाषाया ज्ञातारो व्यवहर्त्तारो वा न सन्ति। तथा च सर्व-प्रदेशव्यापित्वात् संस्कृतभाषैव भारतीय-राष्ट्रभाषापदमर्हति।

महाविप्लवकरी पाश्चात्यानां सभ्यता पाश्चात्यशिक्षाद्वारेण भारतीयानामस्माकमन्तः प्रविश्य भारतीयां पुरातनीं संस्कृतिं सर्वथा ग्रसितुं साम्प्रतमुद्यता वर्त्तते। पाश्चात्यसभ्यता खलु धनिकानां सभ्यता; तस्याश्च बाह्यं रूपसौष्ठवं परमलोभनीयमिति सर्वैरेवास्मदीयैः सा समादातुमुपक्रान्ता। सेयमतिमात्रव्ययबहुला विलासलालसामयी सभ्यता यदि भारतवासिनो हृतसर्वस्वान् दरिद्रान् स्ववशे कुर्याच्चदा भारतीयानामधोगतिरवश्यंभाविनी। दरिद्राः खलु विलाससम्भारसंग्रहाय प्रयतमाना न्याय्येन मार्गेण तान् सम्पादयितुमसमर्था विलासलोभपरतन्त्रा अन्याय्येन मार्गेण तान् सम्पादयितुं समुत्सहेरन्। अनया पद्धत्या ते पापाचरणे प्रवृत्ताः स्युः। इत्थं नयमार्गात् प्रच्याव्यानयवर्त्मन्येव प्रवर्त्तिताः स्युर्दरिद्राश्चेत् धनिकोचितविलाससंभारसंग्रहाय व्यापृता भवेयुः। यद्यपि पाश्चात्याः स्वात्मानं क्रैस्तवमतमनुवर्तमानं व्यपदिशन्ति वाङ्मात्रेण, तथापि न ते किमपि धर्म्ममतं वस्तुगत्याऽनुवर्त्तन्ते। वर्त्तमाने यूरोपीयमहासंग्रामे तेषामाचरणे न काचन धर्म्मबुद्धिः परिलक्ष्यते। धनलोभेन प्रभुत्वलिप्सया च बहूनां निरपराधानां जनानां स्त्रीबालवृद्धातुरनिर्विशेषं व्यर्थमेव हिंसनमत्र बलावलेपमाश्रित्य विधीयते। न खल्वेतादृशं जुगुप्सितमाचरणं क्रैस्तवधर्म्मप्रवर्त्तकस्य क्राइष्ट-नामधेयस्य सम्मतम्। क्षमाप्रधान एव धर्म्मस्तेनोपदिष्ट

आसीत्। आस्तां तावत् क्रैस्तवधर्म्मवार्ता। क्वापि सभ्यजनोचिते मार्गे स्त्रीबाल-वृद्धातुराणां निरपराधानां मुधैव हिंसनं कस्यापि सत्पुरुषस्य बहुमतमिति केनचि-च्छ्रुतपूर्वम्। तस्माद् बाह्यरूपसौष्ठवमात्रेण मनुष्यान् मोहयन्ती मदिरेवोन्मादकरी दानवीया पाश्चात्त्यसभ्यता मनुष्याणां दानवत्वसम्पादनायैवाऽलं न तु कल्याणायेति व्यक्तमवृत्वे सर्वेषाम्।

गंगायमुना-प्रवाह-पवित्रिते शमप्रधानैर्ऋषिभिः परिशीलिते भारते वर्षे तस्या एतस्याः सभ्यताया बहुलप्रसारो महानर्थहेतुतया सर्वथाऽनाकाङ्क्षणीय एव दूरदर्शि-नाम्। भारतीय-पुरातनसंस्कृतेरुज्जीवनमेव भारते पाश्चात्त्यसभ्यतायाः प्रसारस्य सुमहत् प्रतिरोधकमित्यत्र नास्ति कश्चन सन्देहलेशावसरः।

सा चेयं भारतीया पावनी पुरातनी संस्कृतिः स्वकीयाकरभूतेषु संस्कृतभाषा-निबद्धेषु शास्त्रेषु निहिता संस्कृतज्ञानामेवावगमपथमवतरति। संस्कृतभाषायाः सार्व-जनीने प्रसारे सम्पादिते भारतीया चिरन्तनी संस्कृतिरपि तद्द्वारेण सर्वजनेषु विदिता भवेत्। यद्यप्यस्मद्देशे मध्ययुगे सर्वेषां संस्कृतज्ञता नासीत्, तथापि पुराणशास्त्रकथा-नुष्ठानेन कीर्त्तनादिव्यापारविधानेन च पूर्वतनैः सा संस्कृतिर्बहुधा प्रचारिताऽऽसीत्। साम्प्रतं पाश्चात्त्यभावग्रसिता भारतभूमिः स्वानर्थाय सन्नद्धा पुरातनीः परमहित-साधनीः पद्धतीरुत्सृजन्ती कथानुष्ठानादिकमपि शनैर्विसृजन्ती स्वात्मविलोपं प्रतीक्ष-माणा परिदृश्यते। तस्यामेतस्यां दारुणायामवस्थायां संस्कृतभाषायाः सार्वजनीनः प्रसारोऽमृतसेवक इव परमोपकारको भविष्यति भारतीयचिरन्तनसंस्कृतेरुज्जीवना-येति संस्कृतभाषाया राष्ट्रभाषात्वमावश्यकम्।

भारतीयानामस्माकं पूर्वपुरुषैरुपार्जितानि धनरत्नानि चिरकालादारभ्य बहुभिरु-पायैर्वैदेशिकैर्निःशेषं लुण्ठितानि; महाप्रयासैर्भूयसा कालेन निर्मितानि प्रासादमन्दिरा-दीन्यपि विजेतॄणां पादप्रहारैः निश्चिहं विलयमुपयातानि। प्राचीनभारतीयसभ्यताया निदर्शनभूतमेकमेवाधुना कलयाऽवशिष्टं शास्त्रग्रन्थजातम्। यद्यपि बहवः प्राचीन-शास्त्रग्रन्था वैदेशिकानां कोपाग्नौ पुरा शलभायिता अभूवन्, तथापि ये तावदधुना-ऽवशिष्टास्तेषामेव भावगाम्भीर्येण भारतीयसभ्यताया लेशतोऽपि परिचयमवगत्य पाश्चात्त्यदेशवासिनो भरतीयानस्मान् सभ्यजातिसन्तानान् मन्यमाना मानयन्त्यस्म-दीयपूर्वजानस्मांश्च तदन्वयसम्भवान्। हृतसर्वस्वानां भारतीयानां शास्त्रमेवैकं धन-मधुनाऽवशिष्यते। तच्च शास्त्रजातं संस्कृतभाषयोपनिबद्धमिति संस्कृतभाषाज्ञानमन्तरा तदीयरहस्याधिगमो न सम्भवति। संस्कृतभाषाया अज्ञानेनास्मदीया जनता शास्त्र-महत्त्वानवबोधेन यादृशी महती श्रद्धा शास्त्रे कर्त्तव्या तादृशीं श्रद्धां न पुष्णाति, न च

पूर्वजानां महीयसीमुदात्ततामवबुध्यते। संस्कृतभाषा चेत् प्रचुरप्रचारा स्यात्तदा भारतीयाः पूर्वजानामपि महत्तां सम्यगवबोद्धुं शक्नुयुः।

ये 'हिन्दुस्थान' निवासिनस्ते सर्वे एव 'हिन्दु'नामधेया भवितुमर्हन्ति। "हिन्दु" इति नाम न धर्म्मविशेषसम्बन्धप्रयुक्तं भवितुं युक्तम्, किन्तु देशविशेषनिवासनिबन्धनमेव। अद्यत्वे वैदिकधर्म्मावलम्बिनः स्वात्मानं हिन्दुत्वेन व्यपदिशन्तीति सुव्यक्तं सर्वेषाम्; तेषामेव पूर्वपुरुषपरम्परयैतद्देशवासित्वमेवात्र कारणमिति वक्तुं शक्यम्। परन्तु बौद्धा जैनाश्च भारतवर्षीया हिन्दुमध्ये परिगण्यन्ते, माहम्मदाः क्रैस्तवाश्च यद्यपि हिन्दुव्यपदेशं न कुर्वन्ति स्वात्मनः, साम्प्रतिका माहम्मदाश्च केचन "हिन्दु" शब्देनोद्वेगमिव भजन्ते, तथापि सर्वे ते 'हिन्दुस्थान'नामधेयाया भारतभूमेरपत्यतयाऽस्मद्भ्रातर एव भवन्ति न चैतेषां सर्वेषां पूर्वजा देशान्तरनिवासिन एवासन्निति केनापि निर्धार्य वक्तुं पार्यते; मूलपुरुषाणां देशान्तरवासित्वे स्वीकृतेऽपि सम्प्रतितनानामेषामेतद्देशवासित्वमेतद्देशप्रसूतत्वं चापलपितुं नैव शक्येते; तथैतेषां बहुपुरुषपरम्परैतद्देशीया एवेत्यत्रापि नास्ति कश्चन संशयः। एवंस्थिते भारतभूमेर्यत् किञ्चिद् गौरवं तस्याप्येतेऽस्माभिः समानभागभागिनः। भारतवर्षस्यैकमेव गौरवस्थानमधुना यदवशिष्टं सा संस्कृतभाषैव। पूर्वं "भूपाल" प्रभृतिदेशाधिपतयो माहम्मदा अपि राजानः संस्कृतपण्डितानां वृत्तिसम्पादनेन प्रभूतसम्मानप्रदर्शनेन च संस्कृतभाषायां स्वकीयां श्रद्धां प्रकटयन्ति स्म। अधुना पाश्चात्यदेशीयाः केचन क्रैस्तवपण्डिताः संस्कृतभाषां सम्यगाद्रियमाणाः संस्कृतशास्त्रसिद्धान्ताधिगमाय शास्त्राण्यालोचयन्ति। सुधारसप्रस्यन्दिनीयं संस्कृतभाषा सर्वेषामेव समादरणीया केषांचनापि नाहिताय प्रकल्पते। तस्मात्संस्कृतभाषायाः प्रचुरः प्रचारो नैतेषां प्रतिकूल इति तस्या राष्ट्रभाषात्वं सर्वथा समीचीनतामेवोपैति। यद्यपि केचन माहम्मदाः केनचित् कारणेनाधुना प्रतिकूलभावं भजन्ते तथापि तेऽस्माकं भारतभूमेः सन्ततित्वादस्मदीया एवेति कदाचिदवश्यमेव प्रतिनिवर्त्तिष्यन्त इति सुदृढमाशास्यते।

संस्कृतभाषायाः संरक्षणसम्यक्प्रचारादिकमभिलषद्भिः सर्वाग्रे संस्कृतपण्डितानां संस्कृतविद्यार्थिनां च संरक्षणाय यतनीयम्; त एवाद्यत्वेऽस्यां भूमौ संस्कृतभाषाया आधारभूतास्तेषां रक्षणेनैव संस्कृतभाषाया रक्षा सम्भाव्यते; रक्षायां सत्यामेव प्रचुरप्रचारो भवितुमर्हति नान्यथा। संस्कृतपण्डितानां परम्परायां विच्छिन्नायां निराश्रया संस्कृतभाषा कथं वा जीविष्यति कथं वा सर्वेषु भारतप्रदेशेष्वाबालांगनं प्रचरिष्यति? तस्मात् संस्कृतभाषाकल्याणकामैः संस्कृतपण्डितानां संस्कृतच्छात्राणां चाभिवृद्धेरुपायोऽवश्यमेव चिन्तनीयोऽनुष्ठेयश्च।

देवभाषापरिषदः समुन्नतये संस्कृतभाषायाश्च प्रचुरप्रचाराय ये साम्प्रतं प्रयस्यन्ति ते सर्वेऽपि कृतज्ञताभाजनानि धन्यवादार्हाश्चेति निष्कपटं निवेद्यते। अस्याः परिषदो ये प्रथमप्रवर्त्तका आसन्, तेषां मध्येऽद्यत्वे श्रीयुक्तसुरेशचन्द्रशर्ममजुमदारमहोदया ब्रह्मचारिश्रीमत्सत्यव्रतमहाशयाश्च जीविता वर्त्तन्ते। श्रीयुतसुरेशचन्द्रशर्ममहोदयाश्च बंगभाषायां कतिचनोपन्यासनामधेयान् प्रबन्धान् रचितवन्तः। यदि ते देवभाषापरिषदः सेवां विहाय बंगभाषासेवामेवाधिक्येन विदध्युस्तर्हि तत्र परममुत्कर्षमासादयेयुरित्यत्र नास्ति कश्चन सन्देहः। परन्तु तेषां देवभाषापरिषदर्थः श्रमः शिथिलायेतेति परिषदोऽशुभायैव सा कल्पेत। संस्कृतभाषायाः संरक्षणाय त्यागव्रतमूरीकुर्वाणा ब्रह्मचारिसत्यव्रतमहाशयाश्च संस्कृतपाठशालादीनां संस्थापनेन संस्कृतपण्डितानां संस्कृतच्छात्राणां च जीवनोपायसम्पादनेन च संस्कृतभाषाप्रचाराय यादृशं प्रयतन्ते तत्र दृष्टान्तभूतास्त एवेत्युक्तिर्नात्युक्तिदोषमावहतीति सर्वे एव तदीयचरितज्ञा विज्ञा विजानन्ति।

अस्मिन्नवसरे निर्वाणपदवीमधिरूढानाम् आर्. एस्. नारायणस्वामिमहाशयानां सरला सौम्यमूर्त्तिः स्मृतिपथमधिरुह्यास्मान् विषादयति। तेषां चारित्रौदार्यं देशप्रेमा संस्कृतभाषायां देवभाषापरिषदि चानुरागातिरेकः सर्वानस्मानद्यापि विनम्रयन्ति श्रद्धातिशयेन तान् प्रतीति शम्।

"सर्वेऽपि सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥"

---

## शुभाभिनन्दनम्।

सं० १९९७ वैक्रमाब्दे पौष शुक्लाष्टम्यां रविवासरेऽपराह्ने वादनत्रये विद्वज्जनानां संस्कृत-विद्यार्थिनां सन्यासिप्रवराणां मान्यनागरिकाणाञ्च द्वारवङ्गेश्वर्य्याः श्रीलक्ष्मीवतीदेव्याः प्रसिद्धे बाँसफाटकस्थराममन्दिरे श्रीमतां म० म० श्रीचिन्नस्वामिशास्त्रिमहोदयानां मीमांसाकेशरिणां शुभाभिनन्दनार्थम् महती सभा सञ्जाता। तत्र काशीस्थप्रसिद्धा ज्यौतिषविद्यामहार्णवा, श्रीमन्तः पं० गेनालालचतुर्धुरीणमहोदयाः सभापतिपदम् समलङ्कर्वन् । सर्वप्रथमं श्रीरामशङ्करद्विवेदिना कृते वैदिकमङ्गलारम्भे पण्डितप्रवराः श्री पं० सभापति उपाध्यायमहोदयाः, पं० तारादत्तपन्त, महोदयाः, श्रीमन्तो देवीनारायण एडवोकेट् विद्यासागरमहोदयाः, श्रीबलदेवमिश्रा ज्योतिर्विन्महोदयाः, राजपण्डिताः पं० श्रीव्रजविहारीझामहोदया प्रासङ्गिकं विषय-

मधिकृत्य व्याख्यानं दत्तवन्तः। तदनन्तरम् श्रीकाशीपण्डितसभायाः प्रधानमन्त्रिणः महामहोपाध्यायाः श्रीमन्तः पं० श्रीगोपालशास्त्रिणो दर्शनकेशरिणोऽधोलिखितं प्रस्तावमुपस्थापितवन्तः, यश्च सर्वैर्विद्वद्व्याख्यातृभिरनुमोदितः सर्वसम्मत्या स्वीकृतः। अद्यास्यां सर्वजनसम्भृतायां विराट् काशीस्थनागरिकसभायाम् संयुक्त-प्रान्तीय-संस्कृताध्यापकमण्डलेन मैथिलविद्वन्मण्डल्या, श्रीभारतधर्ममहामण्डलेन, काशीस्थनागरिक समाजेन च सार्द्धमियं सुप्रसिद्धा श्रीकाशीपण्डितसभा सर्वतन्त्र-स्वतन्त्रेभ्यो महामहोपाध्यायेभ्यो मीमांसकशिरोमणिभ्यः श्रीमद्भ्यः श्रीचिन्नस्वामी-शास्त्रिवर्य्येभ्यो हिन्दुविश्वविद्यालयीय प्राच्यधर्मविज्ञानविभागाध्यक्षमहोदयेभ्यो भारतसम्राजा एतदीयविद्यावैभवसमर्हणबुद्ध्या सर्वविद्वन्मान्य'महामहोपाध्याय' पदवीप्रदानेन भृशं प्रमुदितान्तरङ्गा सर्वथैतेषां शुभाभिनन्दनं विदधती श्रीकाशी विश्वनाथमभ्यर्थयते यन्मीमांसासाम्राज्येऽद्वितीयविदुष इमान् शास्त्रिवर्य्या-नेवमेवाभ्युदयभाजो विदधच्छास्त्रितवर्य्याणो श्रीवृद्धिं यशोवृद्धिमायुर्वृद्धिञ्च विदध्या-दिति शिवम्।

—०—

## अखिलभारतीय देवभाषापरिषदः द्वादशमहाधिवेशनम्।

वरहजबाजार, गोरखपुरम्। पौषमासस्य कृष्णपक्षे दशम्यामेकादश्याञ्च [२४-२५ दिसम्बर ४०] कलकत्ता संस्कृतमहाविद्यालयाध्यापकानां पण्डितप्रकाण्डानां श्रीयुक्त हाराणचन्द्रशास्त्रिमहाभागानामाधिपत्ये देवभाषापरिषदो द्वादशाधिवेशनं महता समारोहेण सह सम्पन्नतामगात्। दूरदूरागताः संस्कृतविद्वांसः सोत्साहं समभिलन्नस्यां परिषदि। नवम्यां तिथौ सायंकाले धूमशकटीतोऽवतरणावसरे स्वागताध्यक्षैः श्रीसत्यव्रतब्रह्मचारिमहोदयैः स्वागतकारिणी समितिसदस्यैश्च पुष्पमालाप्रदानादिभिः, परमहंसानन्तसंस्कृतकालेजस्य विद्यार्थिभिर्वैदिक स्वस्तिपाठैः, साधारणसंस्कृतानुरागिभिर्जनैर्जयजयघोषैश्च सभाजिताः सभापतिमहोदयाः। ततो नानाविधपल्लव-पुष्पमालाशतसमलङ्कृते मृत्तर-(मोटर) याने समारूढाः सभापतयो वाद्यादिभिः पताकाभिर्गजैर्यानान्तरैः समधिक-संस्कृतानुरागिजनताभिश्चानुगताः सुसज्जिते सभास्थले समागच्छन् ततो निवासस्थाने। रात्रौ च कार्यसमितेरधिवेशने जाते प्रथमदिनस्य कार्यकलापं समाप्तिमगात्। द्वितीयदिने स्वस्तिपाठ-मङ्गलगीतादिभिः सह समारब्धे सभाकार्ये, प्रस्तावाद्यनन्तरमासनाधिरूढेषु सभापतिषु, स्वागतगानेऽभिनन्दनपत्रप्रदाने च सम्पन्ने स्वकीयं मुद्रितं पुस्तिकारूपं

भाषणमपठन् सभापतयो यस्य परिषदः प्रधानमन्त्रिणः श्रीभैरवगिरिमहोदया हिन्दी-भाषयाऽनुवादं व्यदधुः । तदनन्तरं वार्षिकं कार्यविवरणं मन्त्रिमहोदयैः श्रावितं श्रीरामलग्नपाण्डेयेन परिषद इतिहासश्च । अनन्तरं कतिपयभाषणेषु जातेषु कार्य-समाप्तिरभूत् । मध्ये-मध्ये प० अ० संस्कृतकालेजाध्यापकेन व्याकरणाचार्येण श्रीनन्द-कुमारपाण्डेयेन भारतप्रसिद्ध श्रीभगवत्किशोर "व्याकुलेन" च सुमधुरसंस्कृत-हिन्दी-गीतादिभिः सातिशयं समनुरञ्जितानि सामाजिकमनांसि । सायंकाले सभा-कृत्येऽवसिते रात्रौ विषयनिरुक्ति समितिरभूत् । तृतीयदिने पुनरपि मध्याह्नकाले मङ्गलाचरणेन सह समारम्भोऽभूत् । अथ निम्नाङ्किताशयाः प्रस्तावा विद्वद्भिः सभा-पतिमहोदयैश्च प्रस्ताविता गृहीताश्च सर्वसम्मत्या ।

१—शोकप्रस्तावः सभापति द्वारेण, निम्नाङ्कितनाम विदुषां कृते—

१—विद्यावाचस्पति श्रीमधुसूदनझामहाभागाः जयपुरम् । २—म० म० श्री पञ्चाननतर्करत्नभट्टाचार्यमहोदयाः काशी । ३—विद्यावाचस्पति श्रीशाल-ग्रामशास्त्रिणः लक्ष्मणपुरम् । ४—ज्यौतिषाचार्य श्री रामयत्न ओझामहोदयाः काशी । ५—म० म० श्री हृषीकेशोपाध्यायाः काशी । ६—ज्यौतिषाचार्य श्रीचन्द्रशेखरझामहोदयाः काशी ।

२—इयं देवभाषापरिषद् दृढतया सम्मनुते यत् भारतस्य राष्ट्रभाषां संस्कृतं त्वरित विधातुं सर्वेषां भारतीयमानामिदमावश्यकं कर्तव्यं यत् ते दैनिके व्यवहारे यथासामर्थ्यं संस्कृतभाषाया व्यवहारं कुर्युः ।

३—प्रत्येकभारतीयः संस्कृतभाषामनिवार्यरूपेण पठेत् ।

४—हिन्दुस्तानीति नाम्ना सम्प्रति प्रचार्यमाणा भाषा भारतीय—संस्कृति विरो-धिनीति हेतोः विहारप्रदेशे भारतेऽन्यत्र च क्रियमाणो राजकीयः सकलो व्ययो भारतीयानामनभीप्सितः । तस्मात् हिन्दुस्तानी समितिं विनाश्य शिक्षाकार्यान्तरे विनियोजनीयः ।

५—इयं परिषद् जनसंख्यागणनावसरे "हिन्दी" भाषायाः स्थाने 'हिन्दुस्तानी'ति नाम्नः प्रयोगं गणनापुस्तके बलाल्लेखितं कारितं च सर्वथा विरुणद्धि ।

६—अस्याः परिषदः सम्मत्या "सन्थाल परगना"—वास्तव्यानां सन्थालादीनां लिपिः देवनागरी एव समुचिता ।

७—वर्धायोजनायां संस्कृतस्य स्थानमावश्यकं मनुते परिषदियम् ।

८—भारतीयविश्वविद्यालयैः संस्कृतभाषायाः शिक्षणे कृतं क्रियमाणं च विरोधं सहेलमाक्षिपन्ती परिषदियं प्रारम्भिकशिक्षायाः शिक्षा समाप्तिं यावत् सर्वासु

शिक्षणसंस्थासु संस्कृतभाषाया अनिवार्यरूपेण शिक्षणं परमावश्यकं मनुते।

९-सर्वत्र देवभाषापरिषदः शाखासभासंस्थापनमावश्यकम्।

१०-परिषदियं संस्कृतपरीक्षापाठ्यविषयेषु राजनीति-भूगोलेतिहासादिविषयाणामध्यापनमावश्यकं मन्यते तदर्थं च संस्कृते भूगोलेतिहासादिग्रन्थानां प्रणयनमपि।

प्रस्तावग्रहणानन्तरमागामिवर्षस्य ३१ सदस्याः निर्वाचिता येषु—

सभापतिः—श्रीहाराण चन्द्रभट्टाचार्यः, उपसभापतयः—म० म० श्रीचिन्नस्वामिशास्त्रिणः काशी। श्रीसत्यव्रतब्रह्मचारिणः वरहज गोरखपुर। पं० श्रीयमुनाप्रसाद त्रिपाठिनः मुजफ्फरपुरम्। पं० कपिलदेवशर्माणः छपरा।

प्र० मन्त्रिणः—गोस्वामि भैरवगिरिमहोदयाः आयुर्वेदाचार्य्याः काव्यसांख्यतीर्थ पदवीकाः सं० कालेज, मुजफ्फरपुरम्।

एतदतिरिक्ताश्चत्वारो मन्त्रिणः, विभिन्न प्रान्तवासिनः सदस्याश्च निर्वाचिताः श्राविताश्च। अथान्ते सभापतिमहोदयानां भाषणेन सह परिषत्समाप्तिरभवत्।

निवेदकः—श्रीवासुदेवशर्मा द्विवेदः साहित्याचार्य्यो मन्त्री।

---

## श्रीमहामण्डलतो धर्मप्रचारः।

काशीस्थ—श्रीभारतधर्ममहामण्डलस्य प्रचारविभागतः सम्प्रेषितमेकं धर्मप्रचारकमण्डलं निम्नलिखितस्थानेषु महता समारोहेण धर्मप्रचारं विदधद्ग्रहणमासस्य द्वितीयसप्ताहे वाराणसीमागच्छत्। तथा हि—

आश्विन मासस्याद्ये सप्ताहे दिनद्वयं छपरानगरस्य नागरिकभवने (टाउनहाले) विद्वद्वर—श्रीमहावीरप्रसादमिश्रस्य सुप्रबन्धेन सनातनधर्मसभाया विराडायोजनमभवत्। तत्र श्रीमहामण्डलस्य महामहोपदेशकैः शास्त्राचार्यः श्रीपण्डित गङ्गाविष्णुशास्त्रिमहोदयैर्देशभक्तिमीश्वरभक्ति वेदपुराणयोरैक्यं च विषयमवलम्ब्य नितान्तं रोचकं प्रभावशालि सामयिकं मार्मिकं च व्याख्यानं प्रदत्तम्। तच्च जनतायाः सम्यग् हृदयग्राहि समजनि। प्रतिदिनं परःसहस्रा जनता समुपस्थिताऽभूत्। ततः श्रीशास्त्रिमहोदयैर्विन्दकीनगरे दानापुरे, सेहडाराजधान्यां, वैद्यनाथधाम्नि विहारप्रान्तीय हरिकीर्त्तनसम्मेलने, पूज्यपादैः श्रीत्रिदण्डिस्वामिमहोदयैर्विश्वमंगलार्थमनुष्ठिते विष्णुयागे बहुआराग्रामे (बलिया प्रान्ते) च सनातनधर्मस्य विविधविषयेषु सारगर्भितं सामयिकं परमं मनोहरं नितान्तमोजस्वि भाषणं व्यधायि। भाषणं श्रावं श्रावं सर्वत्रैव सर्वेऽपि जनाः सनातनधर्मं प्रति श्रद्धधाना नितरामानन्दरसमनुभवन्तो जयकारध्वनिभिराकाशमण्डलं गुञ्जितवन्तः।

कार्त्तिके प्रथमसप्ताहे विहारप्रान्ते प्रशस्तायां बेतियाराजधान्यां ललनद्विवेदि-

प्रभृतिमहोदयानां सुचारु प्रबन्धैः दिनद्वयं श्रीसनातनधर्मसभायाः सरयूपारीणब्राह्मणसभायाश्च विराड् महाधिवेशनं महता समारोहेण सम्पन्नम्। तत्रापि श्रीभारतधर्ममहामण्डलेन सम्प्रेषिताः महामहोपदेशका वाग्मिवर श्रीगङ्गाविष्णुशास्त्रिमहोदयाः स्वकीयैरपूर्वोपदेशैर्लोकोत्तरं धार्मिकरसं जनतायामुत्पादितवन्तः। अत्र वेतियाराज्यस्य विहारप्रान्तीयशासकस्य च सर्वेऽपि सम्भ्रान्ताः उच्चकर्मचारिण गण्यमान्याः प्रतिष्ठिता निखिला नागरिका ग्रामीणाश्च पञ्चसहस्रतोऽप्यधिका जनाः परमोत्साहैः समभिलन्। व्याख्यानावसरे सर्वेऽपि चित्रलिखिता इव निस्तब्धा विमुग्धाश्चासन्। तत्र महोत्सवे महामहाध्यापका दर्शनकेसरिणः पण्डितश्रीगोपालशास्त्रिमहोदयाः, व्याकरणाचार्यो रणवीरपाठशालाप्रधानाध्यापकाः पण्डितवरश्रीरामदेवद्विवेदिमहाशयाः, श्रीलक्ष्मीनारायणगायकाश्च सम्मिलिता अभूवन्। एतेषां पण्डितप्रकाण्डानामपि विद्वत्तापूर्णमभूद् भाषणं गायकस्य मनोहरं सङ्गीतमपि समजनि। अनेके समयोपगिनः प्रस्तावाः सर्वसम्मत्या स्वीकृताः।

ततो यावत् कार्त्तिकमाघमधोविन्यस्तेषु नगरग्रामेषु श्रीमतां गङ्गाविष्णुशास्त्रिणां सर्वत्रैव सर्वैरपि प्रशंसिता आदरणीया उपदेशा अजनिषतः—

झरिया मानभूमजिलाहरिकीर्त्तनसम्मेलने पहाडपुर (चम्पारण्ये) ग्रामे रामविवाहमेलायाम्, पाटलिपुत्रे स० ध० सभामहोत्सवे विक्रमपण्यवीथिकायाम्।

× × × ×

दिसम्बर-(१९४० ई०) मासस्य १३, १४, १५ तारिकासु चम्पारण्य योगच्छेमान्तर्गते लौरियाग्रामे वकुलहरमठाधीश—पूज्यपाद श्रीमहन्त हरिहरगिरिमहोदयस्य सभापतित्वे श्रीसनातनधर्मस्य विराट् सम्मेलनमभवत्। तत्र काशीस्थ श्रीभारतधर्ममहामण्डलेन सम्प्रेषितस्तत आहूतो महामहोपदेशकः शास्त्राचार्यः साहित्यनिधिः काव्यतीर्थो वेदरत्नं श्रीमान् पं० गङ्गाविष्णुशास्त्री गतः। तेन सार्द्धं पण्डित श्रीगोपालचन्द्रवेदान्तशास्त्रिमहोदयोऽपि गतवान्। वैदिक साहित्यमर्मज्ञः सुधीवरः श्रीमान् पं० अखिलानन्दकविरत्नमहाशयोऽपि तस्मिन् सम्मेलने समभिलत्। एतेषां विद्वद्वराणां सनातनधर्मस्य नैकान् विषयानवलम्ब्य प्रभावोत्पादकमपूर्वमेव भाषणं समजनि। जनतायां सनातनधर्मं प्रति नितान्तमेव श्रद्धा समेधते स्म। प्रतिदिनमुत्तरोत्तरमेधमाना दशसहस्रतोऽप्यधिका जनता सम्मिलिताऽभूत्। सनातनधर्ममण्डपे समागत्य शास्त्रार्थं कर्त्तुं प्रतिजानन्तोऽपि घण्टात्रयमस्माभिः सभामण्डपे प्रतीक्ष्यमाणाश्चार्यसमाजीया विद्वांसः सभामण्डपे नागत्य पलायिताः। तेषां पराजयो जातः।

निवेदकः—जगन्नाथ प्रसाद शास्त्री स्वागताध्यक्षः।

# सूर्योदय ।

## त्रैभाषिको विशेषाङ्कः ।

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जड़वाद-कैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

षोडशे वर्षे १६ — फाल्गुनपूर्णिमायाः १९९७, मार्च १९४१ । — ९ संख्या

## श्रीसनातनधर्मस्तदीयोदारता च ।

यं पृथग् धर्मचरणाः पृथग्धर्मफलैषिणः ।
पृथग्धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः ॥
धर्मं यो बाधते धर्मो न स धर्मः कुधर्मतत् ।
अविरोधी तु यो धर्मः स धर्मो मुनिपुङ्गव ! ॥

सनातन-धर्मावलम्बिनः सनातनधर्मं मानवीयं न मन्यन्ते । विश्वस्मिन् विश्वमण्डले सनातनधर्मव्यतिरिक्ता अन्ये यावन्तो धर्ममार्गाः प्रवर्त्तमानाः परिदृश्यन्ते ते सर्वेऽपि धर्मास्तत्प्रवर्त्तकानां नामभिरेवाभिधीयन्ते, सनातनधर्मस्तु केवलं धर्मनाम्नैवाऽऽख्यायते । या शक्तिरीश्वरीया परमाणुमारभ्य विश्वब्रह्माण्डं यावद् बिभर्त्ति सैव धर्मपदवाच्यतामुपैति । सनातनधर्मीया आर्यजातिरङ्गीकरोति यत्, सनातनधर्मः सर्वव्यापको निखिलजीवहितकरः सर्वजनीनः पृथिव्यां प्रचलितानामखिलानामेव धर्ममार्गाणां नितरां सहायकोऽपि वरीवर्त्ति । तस्मादेव कारणात् सनातनधर्मावलम्बिनो न कैश्चित् सह विरुन्धन्ति । तथापि, सनातनधर्माणो विशेषधर्ममपि स्वीकुर्वन्ति । सनातनधर्मीयो विशेषधर्मं एकादशविभागेषु विभक्तुं शक्यते । निम्नगा एकादश विषयाः सनातनधर्मसिद्धान्ते दृढमाम्नायन्ते । तथाहि—

(१) वेदेषु तत्सम्मतस्मृतिपुराणादिशास्त्रेषु च हार्दिको विश्वासो विधेयः ।

(२) दैव्यां जगत्यां देवपदप्रतिष्ठितेषु च पूर्णा प्रतीतिः ।
(३) कर्मकलापे संस्कारसमूहे च सुतरां विश्वासः ।
(४) जन्मान्तरवादे प्रेतश्राद्धकृत्ये च पूर्णप्रत्ययः ।
(५) अवतारसिद्धान्तस्वीकारो विभूतितत्त्वाङ्गीकारश्च ।
(६) उपासनायां योगक्रियायां च विश्वासः ।
(७) मूर्त्तिपूजने पीठरहस्ये च स्वाभाविकी श्रद्धा ।
(८) शुद्ध्यशुद्धिविचारे स्पर्शास्पर्शविवेके च नितरां विश्वासः ।
(९) यज्ञे महायज्ञे च विश्वासः ।
(१०) निर्गुण-सगुणेश्वरतत्त्वाङ्गीकारो मुक्तिविज्ञानस्वीकारश्च ।
(११) वर्णाश्रमव्यवस्थानुगे सामाजिके विज्ञाने नितान्तमाग्रहश्च ।

अयमन्तिमो वर्णाश्रमधर्म आध्यात्मिकोन्नतिशीलाया आर्यजातेः सुदृढं मूलमास्ते। यद्यपि पृथिव्यामन्यास्वपि सभ्यजातिषु सामाजिकशृङ्खला ( सोसियालोजी ) यथा कथञ्चिदुपलभ्यत एव, किञ्च सनातनधर्मीयाऽऽर्यजातिस्तु सामाजिकव्यवस्थाया धर्ममूलकत्वात् तत्सम्बन्धो दैवेन राज्येन सार्द्धमभिमन्यते। इदं त्रिलोकपावनं सामाजिकव्यवस्थाविधानमभितो महोन्नतैरभेद्यैश्चतुर्भिर्विशालदुर्गैः सुरक्षितमास्ते। तत्र प्रथमो दुर्ग आर्यमहिलानां नितान्तं पवित्रः सतीत्वधर्मः, द्वितीयो रजोवीर्यशुद्धिमूलको वर्णधर्मः, तृतीयः शरीरान्तःकरणशुद्धिविधायक आचारविचारात्मको धर्मः, तुरीयश्च दुर्ग आध्यात्मिकोन्नतिमूलभूत आश्रमधर्मो वर्त्तते। एभिर्दृढतमैश्चतुर्भिर्दुर्गैर्दुर्गैः सुरक्षिता वर्णाश्रमधर्मव्यवस्थैव सनातनधर्मावलम्बिनीमार्यजातिं चिरकालमजीवयत्। कियन्मात्रमपि वर्णाश्रमधर्माणः पतितादपि पतिततमा भवेयुर्नाम किन्त्वलौकिकवर्णाश्रमधर्मस्यैव महता महिम्ना विविधविधां विपत्तिं सहमानाऽपि तदीया सनातनधर्मं मन्यमानेयमार्यजातिरद्यावधि स्वस्वरूपमवतिष्ठमानाऽक्षिगोचरतामापद्यते। समाजविज्ञानमनुसन्दधानाः पाश्चात्यपण्डिता अपि स्वीकुर्वन्ति यत्, वर्णाश्रमव्यवस्था बहुदूरदर्शित्वेन सम्बध्यत इति।

सनातनधर्मे सत्यपि जातिभेदे आचारविचारभेदे स्पर्शास्पर्शादिविवेकबाहुल्ये च तदीयोदारता परां काष्ठामभ्युपैति स्म। किञ्च, सनातनधर्मणां साधारणो धर्मः पृथिव्यां सर्वेषामेव मनुष्याणां समानं हितं करोति, तथापि तद्विशेषधर्मे तु बाहुल्येनाधिकारभेदाः प्रवर्त्तन्ते। तदीयधर्माचार्यैरेवमादिश्यते यथा भूमण्डलस्य सर्वा अपि क्षुद्रा वृहत्यो वा नद्यो नानादेशेषु प्रवहन्त्यः समुद्रमेवाभिविशन्ति तथैव पृथगृधर्माचरणैः पृथक् फलकाङ्क्षिणो धार्मिकास्तमेव सर्वव्यापकं शाश्वतधर्ममाश्रित्य

कल्याणं भजन्त इति। इत्थमपि धर्माचार्यैराज्ञाप्यते यो धर्मः कञ्चिदन्यधर्मं बाधते स सद्धर्मो नास्ति, यो धर्मस्तु अविरोधी स एव सद्धर्म्म उच्यते। द्वितीयत एतावति जात्यधिकारभेदसत्त्वेऽपि सनातनधर्मणां नृयज्ञव्यवस्थाविमर्शपर्यालोचनया सर्वेषामवश्यमेवैतन्माननीयं स्यात्, यन्मनुष्यसमाजे भ्रातृप्रेमप्रतिष्ठां कर्त्तुं कारयितुं च सनातनधर्मीया आर्यजातिः सर्वतोऽग्रगण्या वर्त्तते। प्रत्येकं सनातनधर्म्मणो गृहस्थस्य यान्यवश्यं विधेयानि पञ्च नित्यकर्माणि सन्ति, ते पञ्च महायज्ञा आख्यायन्ते। ज्ञानप्रवर्त्तकान् देवनिभान् नित्यर्षीन् संवर्द्धयितुं यो यज्ञोऽनुष्ठीयते स ब्रह्मयज्ञो निगद्यते, कर्मनियामकानां देवानां संवर्द्धनाय यो यज्ञो विधीयते स देवयज्ञ आस्ते, स्थूलशरीरसंरक्षकान् देवकल्पान् नित्यपितॄन् सन्तर्पयितुं यो यज्ञः प्रवर्त्तते, स पितृयज्ञ उच्यते, चतुर्विधभूतसंघकल्याणकामनया यो यज्ञः क्रियते स भूतयज्ञो ज्ञेयः, यश्च यज्ञो मनुष्यमात्रसेवासङ्कल्पेन तत्पूजाविचारणया वा सम्पाद्यते स नृयज्ञ आम्नायते। एते नित्यकर्त्तव्यात्मकाः पञ्च महायज्ञाः कियन्तं महिमानमवधारयन्ति, सनातनधर्मीयार्यजातेः कियद्वा गौरवं प्रमाणयन्ति, तद्विवेकिनः पुरुषाः स्वत एवावगन्तुमर्हन्ति। अतिथीनां सत्कारैर्नृयज्ञः साध्यते। गृहमागता अतिथयो भगवत्स्वरूपबुद्ध्या पूजनीया इति नृयज्ञसाधनसिद्धान्तः। गृहमागतोऽतिथिर्हिन्दुर्यवनः खिष्टीयोऽन्यो वा किञ्चिद्धर्मावलम्बी भवेत्, अथवा ब्राह्मणः, शूद्रः अस्पृश्यजातीयः, असभ्यजातीयो वा मानवः स्यात्, तं जलभोजनासनैः सूनृतैः सम्मानसूचकैर्वचोभिश्च सत्कुर्यात्। निखिलवेदशास्त्रैर्दृढमादिश्यते यत्, गृहमागता अतिथयो भगवद्बुद्ध्या यैर्नाद्रियन्ते तेषां सर्वेऽपि पुरातनपुण्यराशयो नश्यन्ति। मनुष्यमात्रे भ्रातृभावमुत्पादयितुं तत्पवित्रभावनां स्वीयाचारव्यवहारे परिणमयितुं च हिन्दुजातौ प्रचलितान्नृयज्ञादन्यत् किमधिकमुदारताबोधकं प्रमाणं भवितुमर्हति?। किञ्च, जीवमात्रस्याभ्युदयनिःश्रेयससाधिका भगवतो नित्या शक्तिरेव धर्मः, पृथिव्यां प्रचलिताः सर्वेऽपि धर्ममार्गाः तस्या एव धर्ममहाशक्तेरङ्गभूता विद्यन्ते, इति सिद्धान्तस्वीकारः, मनुष्यमात्रे पूज्यबुद्धिः, तथा तत्रादरप्रदानञ्चेत्यादिविषयाः सनातनधर्मस्य महत्त्वं तदीयोदारतां च सम्यक् प्रतिपादयन्ति। यश्चैवंविधं धर्ममाश्रयते तं सत्पुरुषं स्वत एवार्थकाममोक्षाः प्राप्नुवन्ति। यथोक्तं भगवता व्यासदेवेन—

ऊर्द्ध्ववाहुर्विरौम्येष नहि कश्चिच्छृणोति मे
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते।"

# संस्कृतभाषा आर्य्यसंस्कृतिश्च ।

संस्कृतभाषा हि अनादिभाषा विद्यते । सर्वासामपि भाषाणाम् आदिजननीयं देववाणीति कथ्यते । सर्वविधस्यापि ज्ञानस्यागारीभूतेयं संस्कृतभाषा सर्वासामपि संस्कृतीनामाधारभूता विद्यते ।

वेद-शास्त्र-पुराणादिभिर्योगविज्ञानज्ञानशास्त्रादिभिश्चेदमविवादं निर्णीतं विद्यते यत् सृष्टेरादौ सर्वप्रथमं केवलं प्रणवस्योङ्कारस्यैव आविर्भावो जायते । तदाधारेणैवान्याः सर्वा अपि सृष्टयः समेधन्ते । दार्शनिकञ्चेदं रहस्यं विद्यते यत्सृष्टिप्रलयवेलायाम् पृथ्वी जले प्रलीयते, जलञ्च तेजसि, तेजश्च वायौ, वायुश्चाकाशे, आकाशश्च प्रणवे, प्रणवस्तु ब्रह्मप्रकृतौ प्रकृतिश्च परमपुरुषे परमात्मनि प्रलीयते । सृष्टेः प्रारम्भ-दशायाञ्च ब्रह्मप्रकृतेः प्राथमिकात्तरङ्गहिल्लोलात् प्रणवोत्पत्तिः प्रजायते तदनन्तरम् आकाश आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी । ततश्च ब्रह्माण्डगोलकस्योद्भवो जायते । येयं प्राकृतिकी सृष्टिर्निगद्यते । तदनन्तरमेव ब्राह्मी सृष्टिः प्राजापत्यसृष्टिर्वैजी सृष्टिश्चेत्येवं क्रमेण चतुर्दशस्वपि भुवनेषु विविधाः सृष्टयः प्रजायन्ते । तदानीमेव ब्राह्मस्वर्गात् प्रणवावलम्बनेन सर्वज्ञाननिधिर्हि वेदराशिरिह मृत्युलोके ऋषीणामन्तःकरणे घोषात्मकतया श्रूयते, ततश्च बहिर्जगति प्रादुरेति । प्रतिसृष्टि यावन्तो वेदराशय आविर्भवन्ति ते हि ब्राह्मे स्वर्गे चिरस्थायिनो भूत्वा तिष्ठन्ति । प्रतिकृतयुगम् प्रारम्भावस्थायां ते मृत्युलोके पुनर्निजपूर्णं विकाशमातन्वते । प्रतिकलियुगञ्चेह मृत्युलोके निजं तिरोभावमासादयन्ति । इत्येवं ते वेदराशयः प्रतिकृतयुगमिह मृत्युलोके ऋषिसङ्घं द्वारीकृत्य प्रादुर्भवन्ति प्रतिकलियुगञ्च प्रलीयन्त इत्याविर्भावतिरोभावचक्रं तेषां सदैव परिवर्तते । वेदभाषा हि संस्कृतभाषैव विद्यतेऽतश्च संस्कृतभाषायाः पूर्णता, तस्याश्च नित्यता तस्या माहात्म्यमपि सर्वोपरि लोकातिगमवर्णनीयं विद्यते इति सर्वैरपि नतमस्तकैरङ्गीकरणीयमेव ।

यदा हि सृष्टेरादावेव वेदराशयः प्रादुर्भवन्ति । तदनन्तरञ्च महर्षयो वैदिकानभिप्रायान् जगतां कल्याणकामनया संस्कृतभाषायामेव शास्त्रादिप्रणयनप्रकारेण प्रकाशयन्ति । तदा तु सर्वैः स्वीकरणीयमेव यदियं संस्कृतभाषैव सर्वादिमा भाषा विद्यत इति । संस्कृतभाषैवेह पृथिव्यां सर्वभाषाजननी इति साम्प्रतिका लौकिक-भौतिक-विज्ञान-वेचारो विद्वांसोऽपि सर्वथैकमत्येनाङ्गीकुर्वन्ति । योगिनामनुभवेन पुराणादिशास्त्रनिचयेन चेदमेव सिध्यति यत्स्वर्गाद्युच्चलोकेषु संस्कृतभाषैव सर्वसाधारणगम्यतया प्रचलिता व्यवहृता च वर्तत इति ।

यदा हि सृष्टेरादौ प्रतिकल्पं ज्ञानराशयोऽमरवाग्वेदनिधीनेव द्वारीकृत्य प्रकाशीभवन्ति तदा संस्कृतभाषा सर्वज्ञाननिधिर्विद्यत इत्यत्र कः सन्देहावसरः।

वर्तमानकालेऽपि दृश्यते यत् पदार्थविद्यायाः ( आधिभौतिकविज्ञानस्य ) शिल्पकलायास्तु कथैव दूरे तिष्ठतु, किन्तु सर्वेषामेव दार्शनिक ज्ञानानामाध्यात्मिक-ज्ञानानां योगस्याधिदैवरहस्यस्य च यादृश्युपलब्धिः संस्कृतभाषायामासाद्यते न तादृशी परत्र काप्युपलभ्यत इति। केवलमध्यात्मैकलक्ष्याया यज्ञमयजीवनायाः प्राणतोऽपि प्रियतरस्य स्वधर्मस्य रक्षणे सर्वदा सर्वथा बद्धपरिकरायाः शुद्धाशुद्धविवेकेन च पवित्राया आचार-विचार-सतीत्व-वर्णाश्रमधर्म्मात्मकश्चतुर्भिर्दुर्भेद्यैः सुदृढदुर्गैः सुरक्षितायाः आर्य्यजातेः स्वकीयार्य्यसंस्कृतिः केवलं संस्कृतभाषायामेव तु सुरक्षिता तिष्ठतीति सर्वेऽपि पौरस्त्याः पाश्चात्याश्च विद्वांस ऐकमत्येनाङ्गीकुर्वन्ति।

एवं सर्वतोऽपि स्वोन्नतिनिदानीभूताया भाषाया जीवितत्वे एवार्य्यजातिर्जीवितुमर्हति तथा ईदृश्या भाषाया अधिकाधिकप्रचारसत्त्वे एवार्य्यजातिर्न विलुप्ता स्याद् इत्येतद्रहस्यं बीजमन्त्रवद् ब्राह्मणैः सर्वथा संरक्ष्यम् स्मरणीयं सुगोप्यम् सर्वैरन्यैश्च बुधजनैः स्वदेशधर्महितेच्छुभिः स्वसंस्कृतिमानरक्षकैः सर्वदैव स्व-ध्येयं विधातव्यमिति दिक्।

---

## गायत्रीमन्त्ररहस्यम्।

यो हि गायत्रीमन्त्रन्न जानाति स स्वात्मानं ब्राह्मणत्वेनाभिधातुमेव नार्हति। गायत्रीविरहितो हि द्विजः सर्वस्मादेव द्विजकर्मणो बहिष्कृतः शूद्रत्वमेवच्छति इति डिण्डिमनादं घोषयति समाजशास्त्रमर्मज्ञो मनुः। तथाहि—

न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्
स शूद्रवद्बहिष्कार्य्यः सर्वस्माद्द्विजकर्मणः। इति।

अतश्च द्विजानां कृते याथार्थ्येन गायत्रीमन्त्रस्यार्थज्ञानं तद्भावार्थज्ञानञ्च सर्वदा व्याख्यातव्यम् तथा सर्वथा तत्प्रचारे प्रयतनीयञ्चेति नैव विस्मरणीयम्। अत्र च प्रसङ्गप्राप्तं गायत्रीमन्त्ररहस्यं किञ्चिद् विवियते तद्यथा—तदीयः सरलार्थः—

'ॐ' शब्दवाच्यं निर्गुणं परब्रह्मैव 'भूर्भुवःस्वः'स्वरूपो विराट् पुरुषोऽथवा सगुणः परमेश्वरो निगद्यते। तस्यैव स्वयम्प्रकाशस्य परब्रह्मणोऽर्हणीयं ज्योतिर्वयं धीमहि तद्ध्यानं कुर्मः स हि अस्माकीनां धियं शुभे कर्मणि प्रेरयेदिति।

### मन्त्रभाष्यम्।

'ॐकारः प्रणवमन्त्र आस्ते ब्रह्मणः प्रधानं नाम चोच्यते। एतदेवाक्षरं ब्रह्मणः

स्वाभाविकं नाम निगद्यते 'तस्य वाचकः प्रणवः' इति प्रथमपादीयं पातञ्जलसूत्रमप्येतदेवाभिव्यनक्ति। यतो हि सृष्टेरारम्भे ब्रह्मप्रकृतेः सकाशात् 'ॐ' इत्येवाक्षरं सर्वप्रथमं प्रादुर्भूतम्। तथाचोक्तम्—

"ॐ शब्दश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" इति।

ततश्च शब्दसृष्टिस्तदनन्तरमन्याः सृष्टयः सम्भवन्ति। सृष्टेरादिकारणतयैतस्यैवोङ्कारस्यावलम्बनेन गुणातीतं ब्रह्मपदमधिगम्यते। ॐकारस्य जपेन तदर्थभावनेन चेश्वरसाक्षात्कारोऽपि भवतीति पतञ्जलिराख्याति 'तज्जपस्तदर्थभावनम्' इति सूत्रेण।

'भूर्भुवः स्वः'—अयं हि सगुणब्रह्मस्वरूपस्य विराट्पुरुषस्य निर्देशको मन्त्रो विद्यते। इदं विराड् ब्रह्माण्डमेव भगवतः स्थूलमूर्त्तिरभिधीयते। अत एव तदीया भक्तास्तदीयविराण्मूर्तेः ब्रह्माण्डे तद्व्यापकसत्तामनुभवन्तस्तदीयामर्चां विदधति। भगवतो यद्यपि चतुर्दशभुवनान्येव विराड्देहतयोच्यन्ते तथापि तत्र 'भूर्भुवः स्वः' इति लोकत्रयस्यैव प्राधान्यं निगद्यते। चतुर्दशस्वपि भुवनेषु अतल-वितल-सुतल-तलातल-रसातल-महातल-पातालाख्याः सप्त आसुरा इन्द्रियसुखारामा अधोलोकाः सन्ति। नेमे लोका आर्य्याणामभीष्टाः। यतो हि नार्य्या आसुरमिन्द्रियसुखं कामयन्ते। तर्हि सुतरां त्याज्या इमे लोकाः सन्ति। उपरितनेषु च भूर्भुवःस्वर्महर्जनतपःसत्यलोकेषु सप्तसु जनमहस्तपःसत्यलोकाश्चत्वारोऽत्युन्नता इन्द्रियसुखभोगातीताः सन्ति। एषु चतुर्ष्वपि लोकेषु क्रमेणेन्द्रियसुखोपभोगविरता मानवा जनलोके, मानसिकराज्योपरि स्वाधिपत्यं कुर्वाणा नरा महर्लोके, बुद्धिराज्ये स्वस्वामित्वं विदधानास्तपोलोके, प्रकृतिराज्ये स्वाधिकारमधितिष्ठन्तः सत्यलोके, विचरन्ति। इमे चत्वारोऽपि लोका एवम्भूतानामेव चतुर्णां महात्मनां सेवनीया विद्यन्ते। साधारणमानवानान्तु बुद्धिधारणातोऽपि बहिर्भूता इमे लोकाः सन्ति। अतश्च चतुर्दशस्वपि लोकेषु अधस्तनाः सप्त लोका आसुरा उपरितनाश्च चत्वारो महात्मनां लोका विद्यन्ते। अवशिष्टास्तु त्रयो लोका 'भूर्भुवः स्वः' इत्याख्या ब्रह्माण्डव्यवस्थायां सर्वप्राधान्यमाश्रिता इति निर्विवादम्।

इत्थञ्च 'भूर्भुवः स्वः' इति लोकत्रयस्य धारणयैव विराट्पुरुषस्य धारणा चरितार्था भवति। भूर्लोके हि अस्मदीयं भारतवर्षं मृत्युलोकात्मकं समस्तपृथिव्या बोधकं विद्यते। एतस्मिन्नेव भूर्लोके पाप-पुण्यनियामकस्य वैवस्वतस्य यमदेवस्य राजधानी विद्यते। एतदतिरिक्ताश्च पितृलोको दण्डकारागारात्मको नरकलोकोऽन्ये चानेके दिव्यलोका अस्मिन्नेव भूर्लोके विद्यन्ते।

भूलोक—भुवर्लोकयोर्मध्ये सूर्य्याचन्द्रमसौ ग्रहोपग्रहास्तारागणाश्च तिष्ठन्ति। भुवर्लोकस्यान्तिमसीम्नि ध्रुवलोको विद्यते। इतः परं स्वर्लोको विद्यते यत्र देवराजस्येन्द्रस्य राजधानी अमरावती विद्यते, इन्द्रियसुखविरहिता आध्यात्मिकोन्नतिशीलाश्चत्वारो लोकास्तु इतोऽप्युपरिगा विद्यन्ते। इमे त्रयो लोका एव सर्वासां दैवीनां शृङ्खलानां सर्वेषां दैवानुशासनानाञ्च स्थानतया पूजनीयास्तथा सगुणब्रह्मस्वरूपाश्च सन्तीति। अत एवेमे त्रयो भूर्भुवः स्वर्लोकाः साधारणतया विराट् पुरुषरूपेणोपासनीयाः सन्ति।

'तत्' = 'स' इति शब्दोऽयं निर्गुणस्य ब्रह्मणः सगुणस्येश्वरस्य चैकत्वबोधको मन्त्रो विद्यते।

'देवस्य सवितुः' = द्योतनात्मकस्य परब्रह्मणः इति। परमात्मा हि स्वयम्प्रकाशो विद्यते स हि सर्वेषामेव प्रकाशशालिनां पदार्थानां प्रकाशकः सर्वस्य च ज्ञानस्य मूलाधारः। सूर्य्यदेवस्यापि प्रकाशस्तस्य स्वयम्प्रकाशस्य परमात्मनः स्थूलप्रतीकमात्र एव विद्यते। इत्यस्मादेव हेतोरिह मन्त्रे 'सवितुः' इति पदस्य प्रयोगो दृश्यते।

'वरेण्यं भर्गः'—पूजनीयं ज्योतिः इति। भगवतो ज्ञानप्रकाशकस्यैव ज्योतिषः सर्वत्र समर्चा भवति। स्थूलजगति अवताराणां गुरूणां राज्ञां मातॄणां पितॄणाम् परेषाञ्चाभ्यर्हितानामुपासनाः सूक्ष्मजगति च देवानां देवीनाञ्चोपासनाः सर्वा अप्येताः समुपासना ब्रह्मज्योतिष एवोपासनाः कथ्यन्ते। यः कोऽपि यस्य कस्यापि समुपासनां करोति स सर्वोऽपि तस्यैव ब्रह्मज्योतिषः कलाया अंशस्यापि वा समुपासनां करोतीति निर्विवादसिद्धम्। अतश्च तदेव ब्रह्मज्योतिः साधकानां कृते वरेण्यमुपासनीयञ्चास्ति इति।

'धीमहि'—तद्ध्यानं कुर्मः इति। यत्र हि ध्याता ध्यानं ध्येयमिति त्रिपुटी एव तिष्ठति नान्यत् किञ्चन चित्तभूमौ स्थानं लभते। सैव चित्तावस्था ध्यानशब्दवाच्या भवति। अनया हि क्रियया ध्यानस्यावश्यकता समुद्घोषिता दृश्यते।

'यः नः धियः प्रचोदयात्'—तदेव ज्योतिःस्वरूपं परब्रह्म अस्माकं धियः बुद्धीः प्रचोदयात् शुभे कर्मणि प्रवर्तयेत् इति। सर्वस्यापि प्राणिनः बुद्धितत्त्वमेव चिन्मयस्य ब्रह्मणः साक्षाद् विभूतिस्थानीयं विद्यते। सैव बुद्धिरेकतः परमात्मस्वरूपमुपलम्भयति अपरतश्च सैव धर्मार्थकाममोक्षाख्यानां चतुर्णामपि पुरुषार्थानां साधिका भवति इत्यत एव सा बुद्धिः सर्वशक्तिमता परमेश्वरेण प्रेरिता भवेदित्येवं प्रार्थनास्मिन्मन्त्रे कृता विद्यते।

'ॐ'कारशब्दश्च पुनरन्तेऽस्मिन् गायत्रीमन्त्रे विनियुक्तो भवति, तस्यायमभिप्रायोऽस्ति यत् प्रणवो हि सर्वमन्त्राणां सेतुस्वरूपः। सेतुर्यथा मार्गं विपद्विहीनं सुगमञ्च करोति तथैवायं प्रणवोऽपि भक्तानां मनोभावं स्वेष्टदेवसमीपोपस्थानक्षमं

विदधत् परमं साहाय्यमातनोति। ॐकारात्मके हि प्रणवे असाधारणी क्रियाशक्तिः दैवी शक्तिश्च विद्यतेऽतश्च सर्वथा मन्त्रादौ मन्त्रान्ते चास्य विनियोगः शास्त्रादौ वर्णितः। तथाहि—

पूर्वप्रणवहीनो हि मन्त्रो भवत्यसंस्कृतः
अन्त्यप्रणवहीनश्च क्षरत्येव बलं निजम्
तस्मान्मन्त्रप्रयोक्तारो ह्याद्यन्ते च सर्वदा
प्रणवं समुदीर्य्यैव कुर्य्युर्मन्त्रजपं बुधाः।

---

## निवेदनम्।

स्वजातीयैक्यसम्पादनार्थं सामाजिक-सङ्घटनार्थं 'सङ्घे शक्तिः कलौ युगे' इति सङ्घशक्तिसम्पादनार्थमित्येवमादिविविधाभ्युदयसम्पादननिमित्तमेवास्याङ्कस्य नवीना आयोजनेयं कृता विद्यते। अतश्च यथायथमस्य प्रचारवृद्धिर्भविष्यति तथा तथा हिन्दुजातेः (आर्य्यजातेः) सर्वाङ्गीणं मङ्गलं भविष्यति। इति विचारैरेवास्माभिः सानुनयं सविनयं सानुरोधं साग्रहं सर्वेऽपि सूर्य्योदयपाठका ग्राहका अनुग्राहकाः पृष्ठपोषकाः देशसमाजजात्यभ्युदयाभिलाषिणः सज्जना विनिवेद्यन्ते समभ्यर्थ्यन्ते च यत् यदि ते स्वकर्तव्यबुद्धया देशकल्याणकामनया धर्मसंरक्षणसमीहया च श्रीभारतधर्ममहामण्डलस्य स्वयं सदस्या भवन्तोऽन्यानपि द्वित्रान् स्वसुहृदः स्वानुगान् वा सदस्यान् विदध्युश्चेत्तदा सनातनधर्मस्य सनातनधर्मसङ्घटनस्यार्य्यजातेर्भारतीयसंस्कृतेश्च महानुपकारः स्यादिति। सनातनधर्मावलम्बिनां सङ्घटनमप्यनायासमेव सुसम्पन्नं स्यादिति।

एतस्य सदस्यताप्रकारोऽपि स्वल्पव्ययसाध्योऽनायाससम्पाद्यो विद्यते। केवलम् एकरूप्यकमेव वार्षिकशुल्कं सर्वेभ्यो गृह्यते। यद्धि अस्य महतोऽभ्युदयकरकार्य्यस्य कृते नगण्यं विद्यते। केवलमेकरूप्यकमेव दत्त्वा सदस्यमहोदयाः त्रैमासिकं त्रैभाषिकञ्चेमं सूर्य्योदयन्तु ग्रहीष्यन्त्येव तेनैव सह तेऽन्यानपि लाभान् लप्स्यन्ते। श्रीमहामण्डलसदस्यताञ्चाधिगत्य स्वजातीयसङ्घटनात्मिकां शक्तिञ्च समेधयिष्यन्ति। इत्यादयोऽगणिता लाभा भविष्यन्ति। पश्यन्तु संस्कृतज्ञा विद्वांसो विद्यार्थिनश्च सूर्य्योदयस्यास्य विशेषाङ्कस्याध्ययनेन साम्प्रतिकान् पाश्चात्यशिक्षया विकृतमस्तिष्कान् स्वमार्गे समानेतुं समर्था भवन्तो भविष्यन्ति। सद्य एव चास्याध्ययनेनेदं फलं विद्यते यद् एकभाषाभिज्ञोऽपि भाषात्रयस्य ज्ञाता भविष्यति। सर्वदा नियमतोऽधीयानः कस्यां भाषायां कीदृशी पद्धतिर्विद्यते इत्यादि भाषात्रयपरिशीलनपटुर्भविष्यतीति विरम्यते विस्तरात्।

---

षोडशे वर्षे १६ ] चैत्र-वैशाख पूर्णिमयोः १९९८ अप्रैल-मई १९४१ [ १०-११ संख्ये




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces, Bombay Presidency and Sind for use in Schools and Colleges.

सम्पादकः—

अवधेशप्रसादशर्मा द्विवेदः

उद्गम—स्थानम्—

श्रीभारतधर्ममहामण्डलम्, जगत्गंज, काशी।

—:०:—

वार्षिकं मूल्यं मुद्रात्रयम्।

संरक्षकेभ्यः ५) बहिर्भारतम् ६) छात्रेभ्यः १)

# विषय-सूची ।



—०—

# सूर्योदयः ।


| | | |
|---|---|---|
| षोडशे वर्षे १६ | चैत्र-वैशाखपूर्णिमयोः १९९८, अप्रैल मई १९४१ । | १०—११ संख्ये |


## नवमं महाधिवेशनम् ।

अखिलभारतवर्षीय-सनातनधर्मप्रतिनिधिभूतस्य श्रीभारतधर्ममहामण्डलस्य महाधिवेशनं समये समये भवत्येव। अस्मिन्नपि वर्षे येनोद्देशेन स्वजातीयधर्ममहासम्मेलनस्य नवममिदमधिवेशनमभूत्, तस्य कृते ततः पूर्वमेव "अखिलभारतवर्षीय-श्रीसनातनधर्ममहासम्मेलनस्यानुष्ठानपत्रम्" इतिशीर्षकमेकं महत् विज्ञापनपत्रं मुद्राप्य सर्वत्र प्रान्तेषु महानगरेषु प्रतिमण्डलम्, प्रतिधर्मसभम् प्रति सार्वजनिकसभम्, प्रतिविशिष्टव्यक्ति प्रति-महामण्डलसंरक्षक-पृष्ठपोषक-सहायकसाधारणसदस्यम् वितरितमासीत्।

सनातनधर्मणां दैवे जगति परमो विश्वासो विद्यत इति दैवकृपाप्राप्तये संसारेऽस्मिन् शुभशान्तिसमधिगमाय च श्रीमहामण्डलीय-यज्ञमण्डपे चैत्रशुक्लप्रतिपदात आरभ्य नवमीपर्य्यन्तं श्रीसहस्रचण्डीयागसम्मिलित-महाशक्तियागस्यानुष्ठानम् एकचत्वारिंशता ब्राह्मणर्त्विग्भिः सम्पन्नम्।

### तत्राधिवेशनकृत्यविवरणम् ।

प्रथमदिवसे श्रीवेदभगवतः शोभायात्रा महता जनौघेन सह दशाश्वमेधघट्टत आरभ्य नगराङ्गणं (टाउनहाल) यावत् दर्शनीया सम्पन्ना। मध्येमार्गं पुष्पवृष्टिभिः जनताया उत्साहोल्लासेन रामनगरमहाराजस्य च गजाश्वरथपदातिप्रभृतिभिः विविधवाद्यविशेषैश्चाधिका शोभायात्रा विवृद्धा सञ्जाता। नगराङ्गणे समुपस्थिते वेदभगवतो रथयाने महाधिवेशनीयप्रथमदिवसस्य सभापतयः श्रीभारतधर्ममहामण्डलस्य प्रधानसभापतिपदाधीना श्रीद्वारवङ्ग (दरभङ्गा) नरेश्वरा ब्राह्मणकुलकमलदिवाकराःमिथिलाधिपतयः महाराजाधिराजाः श्रीमन्तः सर कामेश्वरसिंहशर्माणः के० सी० आई० ई० एल्० एल्०, डी० डी० लिट् महोदयाः सभापतिपदमलङ्कृतवन्तः।

तत्र स्वागत-समित्या आयोजिते कार्य्यकलापे सर्वप्रथमं श्रीमदार्य्यमहिलामहाविद्यालयीय-कुमारिकाछात्राभिः स्वागतगानमनुष्ठितम्। ततश्च स्वागतसमितिप्रधानसञ्चालकानामभिभाषणमतिदीर्घं श्रीमता महामहोपदेशकेन पण्डितधर्मदत्तशास्त्रिणा पठितम्। ततश्च मिथिलाधिपतीनां तद्दिवसीयमहाधिवेशनसभापतीनां संक्षिप्तमभिभाषणम् राजपण्डितैः महामहाध्यापकैः श्रीवलदेवमिश्रमहोदयैः पठितम्। तदनन्तरम् ज्योतिर्मठ-पुनरुद्धारविषयकः प्रस्तावोऽन्ये च बहवो देशकालोपयोगिनः प्रस्तावा महाधिवेशने समुपस्थापिताः स्वीकृताश्च सञ्जाताः।

## द्वितीय-दिवसीयं कार्य्यविवरणम्।

अस्मिन्नहनि क्षत्रियकुल-भूषणदेवासराज्याधिपतयो हिजहाइनेस भारतधर्मरत्नविद्याभूषणादिविविध-विरुदावलीविराजमानाः श्रीमन्तो महाराजाः श्रीसदाशिवराव पवारमहोदयाः सभापतिपदं सुशोभितवन्तः। तत्र सर्वप्रथमं वेदघोषस्वागतगानानन्तरं श्रीमहामण्डलीय-स्वागतमन्त्रिसभया स्वागतभाषणे सञ्जाते सभापतिमहोदयैः अतिगम्भीरं विद्वद्वृन्दानुमोदनीयं ओजस्वि प्रभावोत्पादकं मुद्रितं स्वकीयमभिभाषणम् स्वयमेवातिदीप्तेन स्वरेण पठितम्। ततश्च बहवः प्रस्तावाः समुपस्थापिताः सर्वसम्मत्या स्वीकृताश्च। अस्मिन्नेव दिने श्रीज्योतिर्मठाधीश्वराः जगद्गुरवः पूज्यपादाः श्रीशङ्कराचार्य्याः श्रीब्रह्मानन्दसरस्वतीमहोदयाः सभामण्डपे समुपस्थिताः। तदानीं श्रीदेवासराज्याधिपतयस्तद्दिवसीय-सभापतयः स्वासनादुत्थाय श्रीशङ्कराचार्य्याणां यथोक्तविधिना स्वागतस्तुत्यादिकं कृत्वा स्वासनमधिष्ठितवन्तः सभाजनौघेन च जयघोषादिभिर्जगद्गुरुपादाः श्रीशङ्कराचार्यवर्य्याः सभाजिताः। इत्येवं द्वितीयदिवसीयं महाधिवेशन-कृत्यमवसितम्।

## तृतीय-दिवसीयं कार्य्यविवरणम्।

महाधिवेशनेऽस्मिन् तृतीये दिने वैश्यकुलभूषणं श्रीमान् श्रेष्ठिवर्य्यः श्रीरामकृष्णडालमियामहोदयः सभापतिपदं सुशोभयामास। तदानीं श्रीअन्नपूर्णाब्रह्मचर्य्याश्रमब्रह्मचारिभिर्वेदघोषे विहिते महाधिवेशनकार्य्यक्रमः प्रारब्धः। सर्वप्रथमं स्वागतसमितिमन्त्रिमण्डलतः स्वागतभाषणे जाते डालमियामहोदयैः स्वीयं मुद्रितं विविधभावोपोद्बलितं भाषणम् स्वयमेव तारस्वरेण महता समुत्साहेन पठितम्। ततश्च महामण्डलप्रधानमन्त्रिभिः विद्यारत्न पं० रमेशदत्तपाण्डेय बी० ए०एस०सी० महोदयैः विविधदेशविदेशतः समागतानां सहानुभूतिसूचकविद्युत्पत्रादीनामत्याधिक्येन नामावलीमात्रं केवलं पठितमासीत्। ततश्च हिजहाइनेस धार्मिकप्रवरधौलपुरनरेश-

महोदयानां मुद्रितं सन्देशपत्रं तेषामेव प्रतिनिधिना ततः प्रेषितेन पठितम्, यच्च सभासद्भ्यैर्हृदयेनाभ्यनुज्ञातम् शिरसाभिनन्दितम्, धौलपुरनरेशमहोदयानां धार्मिकभावस्य संसदि महती प्रशंसा समजनि। तदनन्तरम् बह्वः प्रस्तावाः प्रस्ताविताः सर्वसम्मत्या च स्वीकृता अभूवन्। बहूनां बहिः स्थानां काशीस्थानाञ्च विदुषां महाधिवेशने समुपस्थितिः प्रतिदिनं आसीत्। विविधानि च धार्मिक-राजनीतिक-सामाजिकसाहित्यिकानि भावपूर्णानि भजनोपदेशव्याख्यानान्यभूवन्।

प्रतिदिनञ्च महाधिवेशने समागतानां सभापतीनां श्रीभारतधर्ममहामण्डल-सञ्चालक-पूज्यपाद-स्वामिमहाराजस्य दर्शनं विधायाशीर्वादलाभाय समागमनं भवतिस्म। तदानीमेव च तैः श्रीमदार्य्यमहिला-महाविद्यालयस्य धर्मसेविका-विद्यापीठस्य च निरीक्षणं कर्तुं, यज्ञमण्डपे ऋत्विग्महोदयानां दर्शनेनात्मानं समादरेण पावयितुं समागमो विहित इतीत्थं सर्वमपि महाधिवेशनकृत्यं निर्विघ्नं सानन्दं सुसम्पन्नम्।

## ज्योतिर्मठस्य पुनरुद्धारघोषणा।

श्रीभारतधर्ममहामण्डलसञ्चालकमहानुभावैः ज्योतिर्मठस्य पुनरुद्धारयोजनायाम् महान् प्रयासो बहुभिर्वर्षैः क्रियमाण आसीत्। स च व्यतीतेऽस्मिन्नखिल-भारतवर्षीय-श्रीभारतधर्म्ममहामण्डलमहाधिवेशने सफलितः समजनि। अत्र विषये गोवर्द्धन-पीठाधीश्वराणां श्रीशङ्कराचार्य्यपादानां श्रीब्रह्मीभूत स्वामिमधुसूदनतीर्थ-महाराजमहोदयानां, प्रातःस्मरणीय पूज्यपादश्रीशृङ्गेरीपीठाधीश्वराणां ब्रह्मीभूत-श्रीस्वामि नृसिंहभारती महाराजमहोदयानां तथा पूज्यपाद प्रातःस्मरणीय श्रीशारदा-पीठाधीशानां ब्रह्मीभूत-श्रीस्वामिमाधवतीर्थमहाराजमहोदयानामपि महती शुभेच्छा आसीद् यत् यथाकथमपि ज्योतिर्मठस्य पुनरुद्धारः श्रीभारतधर्ममहामण्डल-सञ्चालकैः सुविहितः स्यादिति।

चिरकाल प्रयत्नपरम्पराया अद्य साफल्यं विलोक्य सर्वेऽपि सनातनधर्माभ्युदया-भिलाषुकाः सानन्दाः सञ्जाताः। तत्र हर्षातिरेकस्येदं महत् कारणमुपस्थितं विद्यते यत् पीठोद्धारेण सह महती भूमिरपि पीठाधीना सम्पादिता विद्यते। अन्यच्चेदमति-रमणीयं जातम् यथेदं पवित्रपीठमुत्तरखण्डीयं बहुदिवसाद् विच्छिन्नमासीत् यतः कोऽपि सुयोग्यः पीठाधीश्वरः पीठमिदं सनाथीकर्तुं न लभ्यतेस्म तथैव सम्प्रति सनातनधर्म्माभ्युदयाभिकामनातत्परैः सुयोग्यं पीठाधीश्वरमन्वेषमाणैः श्रीभारतधर्म-सञ्चालकैस्तादृशोऽद्वितीयो विद्वान् सुयोग्यतरो ब्रह्मनिष्ठः सदाचारपरायणः सर्वधर्म-रहस्यमर्मज्ञ आबालब्रह्मचारी सनातनमर्य्यादाप्रतिष्ठापक एवान्वेषितो यथा पीठस्य

प्रतिष्ठया सह तेषामपि प्रयत्नस्य विवेकस्य च प्रशंसा सनातनधर्मजगति सर्वत्रैव जेगीयते।

तत्र पीठे श्रीशङ्कराचार्य्यपदे प्रतिष्ठापिताः श्रीमन्तः सुगृहीतनामधेयाः सर्वतन्त्र-स्वतन्त्रा योगिवर्य्याः श्री १०८ पूज्यपादाः श्रीस्वामिब्रह्मानन्दसरस्वतीमहाराजाः सन्ति। येषां शिष्याः श्रीस्वामिकरपात्रीजीमहाराजसन्निभाः विद्यन्ते। ते हि आचार्य्य-महोदयाः सम्प्रति वाराणस्यामेव चातुर्मास्यव्रतविधानकामनया विराजन्ते। चातुर्मास्यव्रतानुष्ठानानन्तरं धर्मप्रचारकामनया बहिःप्रस्थानमाचरिष्यन्तीति शुभ-सन्देशं वयं सनातनधर्म प्रजाभ्यः श्रावयामः।

---

## अखिल भारतवर्षीय सं० विश्वविद्यालयीयपरीक्षा।

अस्मिन्नब्दे अप्रैलमासे संस्कृत-विश्वविद्यालयीया परीक्षा सुसम्पन्ना। तत्र प्राचीन-केन्द्राणां नवीन-केन्द्राणाञ्च सम्मेल्य परःसहस्राश्छात्राः परीक्षायां समवेता बभूवुः। सर्वत्र द्रुतवेगेन संस्कृतविश्वविद्यालयीयपरीक्षायाः प्रचारो विवर्द्धते इति परमहर्षा-स्पदमस्माकम्।

इयं हि परीक्षा भारतीयार्य्यमर्य्यादायाः संरक्षणार्थं भारतीयसंस्कृतिसमेधनार्थं सनातनधर्मरक्षार्थं च प्रतिष्ठापिता विद्यते। वयमभिलषामो यदियं परीक्षा सर्वत्र वङ्गविहारगुर्जरमहाराष्ट्रमध्यप्रदेशपञ्जालादि-वृटिशशासनाधिष्ठितप्रान्तेषु, उदयपुर, जयपुर, पटियाला, बड़ोदा, नयपालादिषु स्वतन्त्रनरपतिप्रान्तेषु च शीघ्रमेव समा-दृता स्यादिति। तेषु तेषु प्रान्तेषु श्रीभारतधर्म्ममहामण्डलस्य प्रतिनिधयः प्रार्थ्यन्ते साग्रहमनुरुध्यन्ते यदार्य्यमर्य्यादायाः संरक्षणाभिवर्द्धनप्रचारबुद्ध्या अस्याः परीक्षायाः केन्द्रप्रतिष्ठापने एतदीय-पाठ्य-पद्धत्यनुसारेण स्वीयच्छात्राणां शिक्षणे बद्धपरिकराः संवर्द्धितोत्साहा भवन्तो भवन्तु इति। एतत्प्रचारसंलग्नानां विदुषां "आम्राश्च सिक्ताः पितरश्च तृप्ताः" इति रीत्या ऐहलौकिकं पारलौकिकमुभयमेव श्रेयः संसाधितं स्यादिति। परीक्षाया अस्याः प्रचारेण भारतीयार्य्य-मर्य्यादा संरक्षिता स्याद्यया तेषामेव सन्ता-नानां भारतीयसंस्कृतेः संस्कृतविद्यायाश्च संरक्षणेन सर्वत्र समादरणं स्यात्। तेषाञ्च विदुषां स्वविद्यार्थिनां परीक्षायामुत्तीर्णतया यशोऽभिवृद्ध्या सह महामण्डलतः सम्मानपत्रस्य समुचितस्य पुरस्कारस्य चाधिगमः स्यादिति।

संस्कृतच्छात्राश्च यदि सम्प्रति एव परीक्षाया अस्या ग्रन्थानामभ्यासे कृतप्रयत्ना भविष्यन्ति तर्हि परीक्षोत्तरणे प्रयासो न स्यात्। सर्वतोऽपि अस्यां परीक्षायां हिन्दु-

संस्कृति—(भारतीयार्य्यमर्य्यादा) प्रतिपालकानां तत्परिवर्द्धकानां दुर्गासप्तशती महिम्न-स्तोत्राध्यात्मरामायण-भगवद्गीता-हिन्दुधर्मोपदेशिका-धर्मविज्ञान प्रभृति-धर्मग्रन्थानामभ्यासेन विद्यार्थिनां धर्मज्ञानं विवृद्धं भवति। धर्मव्याख्यानशीलता च परिस्फुटा भवति। येन सर्वत्र हिन्दुजनतासमक्षे ते स्वीयप्रतिभां प्रकटयितुं प्रभवन्ति। स्वदेश-मर्य्यादासंरक्षणेन सह स्वजीविकोपार्जनमपि अनायासेनैव विधातुं समर्था जायन्ते। उक्तञ्च परमनीतिज्ञेन श्रीमता चाणक्येन—

"व्यवस्थितार्य्यमर्य्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो देशः प्रसीदति न सीदति।"

इति संस्कृतविश्वविद्यालयीयपरीक्षोत्तीर्णाः छात्राः भारतीयार्य्यमर्य्यादापरिचिताः तस्या व्यवस्थापने कृतप्रयत्ना भविष्यन्ति। वैज्ञानिकपद्धत्या च वर्णाश्रमधर्मरहस्य-प्रतिपादनपरा भूत्वा सम्प्रति संवर्द्धमानमनीश्वरवादात्मकं समाजवादं समूलमुन्मूल-यन्तोऽवश्यं स्वश्रेयो विधास्यन्ति, इति सर्वेऽपि संस्कृतिप्रेमजुषः संस्कृतज्ञाः सादरं सानुनयं साग्रहमनुरुध्यन्ते यदखिलभारतीय-संस्कृत-विश्वविद्यालयीयपरीक्षाप्रचारे तदीय-केन्द्रस्थापने सम्वर्द्धितोत्साहा बद्धपरिकरा भूत्वा प्रधानकार्य्यालयादस्मात् परीक्षाया आवेदनपत्राणि केन्द्रावेदनपत्राणि च शीघ्रं गृह्णन्तु इति।

---

## श्रीमहामण्डलतो धर्मप्रचारः।

१९५१ खिष्टाब्दे मईमासस्य २० तारिकातो दिनद्वयं यावत् पाटलिपुत्रे महेन्द्रू-घट्टे श्रीहरिकीर्त्तनसम्मेलनमहोत्सवे श्रीभारतधर्ममहामण्डतः सम्प्रेषितानां महा-महोपदेशकानां साहित्यनिधि-शास्त्राचार्य-शास्त्रार्थमहारथि-काव्यतीर्थ-वेदरत्नप्रभृति-विविधोपाधिविभूषितानां श्रीमतां विद्वद्वराणां पं० गङ्गाविष्णुशास्त्रिमहोदयानां भगव-न्नामकीर्त्तनमाहात्म्यमवलम्ब्य श्रुतिस्मृतिपुराणेतिहासप्रमाणपुञ्जोर्जितं वैज्ञानिकं प्रभा-वोत्पादकं सुमधुरं व्याख्यानमभूत्। व्याख्यानतो नितान्तं श्रोतारो विमुग्धा जाताः।

ततोऽस्यैव मासस्य २८ तारिकातो दिनत्रयं यावत् छपरानगरे न्यायालयनिकट-वर्त्तिनि महति विशाले भूभागे सुसज्जिते वैद्युतिकप्रकाशचमत्कृते ध्वजापताकापुष्प-मालादिभिर्नितरामलङ्कृते स्वनिर्मितपटमण्डपे स्वर्गीयलक्ष्मीनारायणमिश्रस्य सुयोग्य-पुत्राणां स्वदेशसेवकानां विज्ञवराणां श्रीभरतमिश्र श्रीजगन्नाथमिश्रादीनां प्रबलैः प्रयासै-रन्येषां च धर्मप्राणनागरिकाणां पूर्णसहयोगैर्विपुलधनसाहाय्यप्रदानैश्च महता समा-रोहेण श्रीसनातनधर्मसभाया महोत्सवः सानन्दं समजनि। तत्र जयपुरतो महाराज-

संस्कृतमहाविद्यालयस्य प्रधानाध्यापका महामहोपाध्यायपदभाजो व्याकरणन्यायाचार्याः पण्डित प्रकाण्डाः श्रीमन्तः पण्डित गिरिधरशर्मचतुर्वेदाः, अनूपशहरतो वैदिकसाहित्यमर्मज्ञा महामहोपदेशका विद्वद्वराः श्रीमदखिलानन्दशर्मकविरत्नमहोदयाः, श्रीभारतधर्ममहामण्डलस्य महामहोपदेशकाः साहित्यनिधयः शास्त्राचार्या व्याख्यानवागीशाः सुधीधौरेयाः श्रीमन्तो गङ्गाविष्णुशास्त्रिमहोदयास्तथा संगीतसम्राजो वाद्यकलाकोविदाः श्रीमन्तो भगवत्किशोर व्याकुलमहाशयाः सम्मिलिता अभवन्। एतेषां विद्वद्वराणां श्रीसनातनधर्मस्य विविधविषयेषु सार्वजनीनं सर्वप्रियं सामयिकं नितान्तं रोचकं सारगर्भितं प्रभावोत्पादकं प्रत्येकं व्याख्यानमभूत्। तत्रापि श्रीगिरिधरशर्मणां वैज्ञानिकं श्राद्धविषयकं व्याख्यानं श्रीगङ्गाविष्णुशास्त्रिणां सनातनधर्मानुकूलं सयुक्तिकं स्वदेशसेवाविषयकं भाषणं त्वतीवजनतामनोमोहकं सुतरामपूर्वमेवाभूत्। कविरत्नमहोदयानां हिन्दुसंघटने चमत्कारकः सदुपदेशः समजनि। व्याकुलमहाशयानां संगीतानन्दस्तु नितरामवर्णनीय एवासीत्। स्वर्गीयलक्ष्मीनारायणमिश्रस्मारकत्वे श्रीसनातनधर्मभवननिर्माणनिमित्तमपि सभायां घोषणा जाता, तदर्थं तत्क्षणमेव सार्द्धसहस्ररूप्यकवचनमपि समुपलब्धम्। धन्यवादपुरस्सरं सभाकार्यं श्रीभगवतोऽनुकम्पया सानन्दं समाप्तिमगात्।

इत एवामन्त्रिताः चम्पारण्यमण्डलान्तर्गतढाकानगरे श्रीमहामण्डलेन सम्प्रेषिताः श्रीमन्तो गङ्गाविष्णु शास्त्रिमहोदयाः श्रीसनातनधर्ममहोत्सवे सममिलन्, एतैः सार्द्धं श्रीभगवत् किशोरव्याकुलोऽपि गतवान्। अयं महोत्सवो महता प्रयासेन श्रीमद्भिर्विज्ञवरै रिझनपाण्डेयमहोदयैर्व्यधायि। अत्रापि ३१-५-४१ ई० तो दिनद्वयं श्रीशास्त्रि महोदयानां सनातनधर्मस्य नैकविषयान् समालम्ब्य सातिशयं प्रभावोत्पादकं चित्ताकर्षकं सुमधुरं व्याख्यानं श्रावं श्रावं जनता प्रमोदप्राचुर्यमन्वभवत्। व्याकुलमहोदयस्य सुमधुरसङ्गीतस्तु जनान् व्याकुलान् विदधानो नितान्तमानन्दसमुद्रे न्यमज्जयत्। किं बहुना, तत्र श्रीमहामण्डलस्य सर्वतो यशोराशिर्वितन्यतेस्म। सभायां नैकसहस्रसङ्ख्यका जनाः प्रतिदिनमुपस्थिता अभूवन्।

जूनमासस्य ९ तारिकातो दिनद्वयं यावत् सारनजिलान्तर्गतकटसाग्रामे कुम्हैलामठीय-श्रीसनातनधर्मसभायाः प्रधानमन्त्रिणां श्रीमतां पण्डितसियारामदासमहोदयानां वैष्णावानां सुप्रबन्धैः श्रीसनातनधर्मस्य महोत्सवो महता समारोहेण सम्पन्नः। तत्र श्रीभारतधर्ममहामण्डलस्य महोपदेशकाः श्रीमन्तो गङ्गाविष्णुशास्त्रिणो गतवन्तः। एषां विद्वद्वराणां श्रीसनातनधर्मविषयकं व्याख्यानद्वयमपूर्वमेवाभवत्। तत्रत्याः सर्वेऽपि जनाः कथयन्ति-नैतादृशं व्याख्यानमस्माभिरद्यावधि श्रुतम्। धन्या

वयम्। अस्माभिः श्रीमहामण्डलाय अनेकशो धन्यवादा दीयन्ते। सर्वत्रैव व्याख्यानत आनन्दवर्षा जाता। ततश्च शास्त्रिमहोदयाः काश्यां श्रीमहामण्डलप्रधानकार्यालयमागच्छन्।

---

## स्वर्गस्थाः पं० पद्मनाभशास्त्रिणः!

गत फाल्गुनमासे सर्वतन्त्रस्वतन्त्राः काशीस्था मान्या भारत प्रसिद्धा पं० पद्मनाभ शास्त्रिणो नश्वरमिदं कलेवरं विहाय कैलासवासमाश्रिताः। तेषां शाश्वतिकेनानेन वियोगेन काशीस्था विद्वन्मण्डली अत्यन्त-शोकसन्तप्ता हार्दिकं दुःखमनुभवति। सनातनधर्मस्य च महती हानिः सञ्जाता। स्वर्गीयाः स्वनामधन्याः शास्त्रिमहोदयाः सनातनधर्मस्य स्वप्रकृत्यैव समुपासका दृढभक्ताश्चासन्। तेषां प्रयत्नेनैव वर्णाश्रमस्वराज्यसंघस्य कार्य्यं निर्विघ्नमुत्तरोत्तरं वर्द्धमानमासीत्। ते हि धर्मप्रचारे शैथिल्यं विलोक्य स्वयं स्वतन्त्ररूपेण गुर्जरादिप्रान्तेषु पर्य्यटन्तो धर्मप्रचारमामृत्यु कुर्वन्त आसन्। शास्त्रिपादा विचारे स्वतन्त्राः कर्तव्ये निर्भीकाः शास्त्रार्थेऽप्रतिभटाः सभायामतिपटवः दार्शनिकगहनतर-विषयाणां सर्वजनसमक्षोपस्थापने सिद्धहस्ता आसन्। तेषामभावश्चिरं सनातनधर्म्मिणः समुद्वेजयिष्यति इति सम्प्रति स्वल्पेनैव तेषाम्परलोकस्थानामन्तिके श्रद्धाञ्जलिं समर्प्य विस्ताराद्विरमामः। पुनः कदाचित्तेषां विस्तीर्णं जीवनवृत्तान्तं सूर्य्योदयपाठकानां पुरतो निवेदयिष्यामः।

---

## स्वर्गस्थाश्चण्डीप्रसादशुक्लाः!

गतचैत्रमासे श्रीगोयनकामहाविद्यालयस्य प्रधानाध्यापकाः पं० चण्डीप्रसादशुक्लमहोदयाः परलोकं प्रस्थिता इति आकस्मिकीमिमां घटनां निशम्य निःस्तब्धा श्रीकाशीपण्डितमण्डली शोकसमुद्रे निमग्ना। शुक्लमहोदयाः प्राचीनवैयाकरणा अपि वेदान्तशास्त्रनिष्णाता आसन्। प्राचीनपण्डितेषु इमे गण्या विद्वांस आसन्। एषां जन्म छपरामण्डले पण्डितपुरग्रामे समजनि। स्वाध्यवसायेन पाण्डित्यप्रकर्षमुपेत्य प्रथमं खुर्जानगरे ततश्चेह काश्यां शिष्यानध्यापयन्त एवेमे महोदयाः स्वसमयस्य सदुपयोगं कृतवन्तः। एतेषां खादिखण्डनेऽपि हिन्दीभाषामयी टीका मुद्रिता विद्यते। इमे प्राचीनपद्धतेरनुयायिनः, उदार प्रकृतयश्च आसन्। एतेषां निधनेन संस्कृतसमाजस्य सनातनधर्मस्य च महती अपूरणीया क्षतिः सञ्जाता। एतेषां वियोगेन भृशं दुःखिता वयं तेषां कुटुम्बिभिः सह समवेदनां प्रकटयामः।

---

## "संस्कृतभाषा प्रचारसमितिः" ।

अवगतमेवात्र भवतां सिन्धुतीरमस्माकं पूर्वजानां संस्कृतसाहित्यनिर्माणभूमिरासीत् इति । सा च दुर्दैवात् यवनहतकानां हस्तं गता गतवैभवा जाता । किं पुनर्यत्र संस्कृतेरुत्थानमप्यसंभवमेवासीत् ।

तत्र भगवतः आनन्दकन्दस्य परमात्मनः प्रसादात्साम्प्रतं वृद्धापीयं गीर्वाणवाङ्माता स्वीयैः प्रभावैः जनानां मनांसि समाकर्षति । आंगलभाषानिष्णाता अपि सानुरागमवेक्षन्ते । अत्र तु पूर्वं राष्ट्रभाषाया एवानुग्रहं मंस्यामहे । या पुरतश्चलन्ती मातरं पन्थानं दर्शयति । यया च संस्कृतभाषायाः प्रचारः सौकर्येण कर्तुं शक्यते ।

एतदुद्दिश्य तथा च चिरात्प्रवृद्धं "मृतभाषेति" कौलीनं व्यपोहितुमस्माभिः "संस्कृतभाषाप्रचारसमितिः" गिदुमलसंस्कृतपाठशालायां हैदराबाद नगरे, उद्घाटिता । यत्र सर्वं कार्यजातं गीर्वाणभाषायामेव भविता । येन छात्राणां वाक्शक्तिः वृद्धिं गच्छेत् । अतः प्रार्थ्यते यत्र संस्कृतभाषायाः प्रचारोऽस्ति नो वा तत्र कायेन वाचा मनसेन्द्रियैः कर्तुं प्रयतिष्यन्ते महान्तो विद्वांसः ।

यदि कश्चिदपि सदस्यो भवितुं इच्छति सोऽधोलिखितस्थाने पत्रव्यवहारं कुर्यात् ततो नियमादिकं प्रेषयिष्यते ।

निवेदक—मंत्री, काव्यतीर्थ कक्षास्थ विद्यार्थी श्रीरामदवे
संस्कृतभाषाप्रचारसमिति हैदराबाद (सिन्ध)

—o—

## कुंभकोणमहासभा ।

[ १९४१ मार्चमासस्य ९. 9-3-1941 ) विक्रमसंवत्सरकुंभमास २६ तारिकायां सूर्यवासरे कुंभकोणं KUMBAKONAM एकादशी उपन्यासस्रभायाः वार्षिकमहोत्सवः श्रीकाञ्ची कामकोटि पीठाधिपाभिमानेन नाच्चियार् कोयिल् लक्ष्मीमन्दिरं NATCHARKOIL. LAKSMIMANDIRAM. श्रीमदुभयवेदान्तभाष्याचार्यसिंहासनाधिपतिः, विद्वान्, अभिनवसरस्वती, वाङ्मुखरत्नकोशः, विद्वच्छिरोमणिः, पण्डितराजः, गुरुवर्यः, श्रीनडादूर् स्वामीकृष्णमहाचार्यमहोदयः तस्याध्यक्षतायामभूत् ।

—

## कुसुम-युगलम्।

ले० पण्डित रामनाथपाठकः 'प्रणयी' व्याकरणाचार्यः, स० सम्पादक 'भारतश्रीः' काशी।

कोऽयमम्बरतोऽवतीर्णः ?

नील-नील-कराल-गात्रः
कर-निहित-कङ्काल-मात्रः
पश्य, घूर्णतेऽस्य नेत्रे केशसमवायश्च कीर्णः
कोऽयमम्बरतोऽवतीर्णः ?

नवल-रुधिर-स्फीतवसनः
भृत-भयङ्कर-धार-दशनः
क्रोधशोधीकरणलक्ष्यः, को न यं स्मृत्वा विदीर्णः
कोऽयमम्बरतोऽवतीर्णः ?

नूतमेव विभाति कालः
रचित-विप्लव-लीन-तालः
अद्य वा श्वो निश्चितं स्थाताऽस्ति संसारो न जीर्णः
कोऽयमम्बरतोऽवतीर्णः ?

× × ×

शृणुत, का क्रन्दति कुटीरे !

अहह ! नवलोद्वाहितायाः
रण-रमण-मरणाऽहितायाः
अद्य कस्याश्चित्प्रियस्यासीच्चिता ज्वलिताम्बुतीरे
शृणुत, का क्रन्दति कुटीरे !

किन्तु, सा तु तदा लसन्ती
ह्रपयति स्म विधिं हसन्ती
देवताः नभतः प्रसूनान्यवकिरन् तस्याः शरीरे
शृणुत, का क्रन्दति कुटीरे ?

नूनमेवास्याः रहस्यम्,
भाति वैभव-वैमनस्यम्,
क्षुत्-तृषोर्लहरीहतेयं काऽपि नृत्यति रे ! समीरे
शृणुत, का क्रन्दति कुटीरे ?

( राष्ट्र-वाणीतः )

# पञ्चमहायज्ञनिरूपणम्।

लेखकः पं० श्रीवेणीरामशर्मा गौड़ः वेदालङ्कारः काशी।

कर्म त्रिविधं भवति—नित्यं नैमित्तिकं काम्यं च। येषां कर्मणामकरणे प्रत्यवायः करणे च फलविशेषो नास्ति तानि कर्माणि नित्यान्यभिधीयन्ते। तानि च त्रिकाल-सन्ध्या पञ्चमहायज्ञादीनि। अत्रेदं बोध्यम्—यथा पञ्चमहायज्ञानुष्ठानस्य आत्मो-न्नत्यादि-फलान्तरसत्वेऽपि पञ्चसूनादोषनिवृत्तये सर्वैर्गृहस्थैः 'पञ्चमहायज्ञा अहरहः कर्त्तव्या' इति शास्त्राज्ञा। अतश्च पञ्चमहायज्ञानुष्ठाने पुण्यं नास्ति अकरणे प्रत्यवायः। अस्माभिः स्वजीवनोद्योगाय सहस्रं प्राणिनः प्रतिदिनं हन्यन्ते। भोजन-समये प्रति-ग्रासे गमनागमने प्रतिश्वासे प्रश्वासे च जीवहिंसा भवति। एतादृशपापमन्तरा अस्माकं जीवनमेव न सम्भवति, अतस्तेषां पापानामपनोदाय पञ्चमहायज्ञाः शास्त्रे-पूपदिष्टाः। यथाऽऽह मनुः—

पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्॥
तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः।
पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्॥

(३। ६८, ६९)

अत्र 'सूना' शब्देन प्राणिवधस्थानमुच्यते। सूदयन्ति प्राणिनः प्राणैर्वियोजय-न्तीति सूना इति व्युत्पत्तेः। उपस्करः गृहोपकरणं सम्मार्जनी भाण्डदण्डादि। बाध्यते यास्तु वाहयन् याः सूनाः वाहयन् प्रवर्त्तयन् बाध्यते हिंसाजन्यदुरितेनेत्यर्थः।

हारीतोऽपि—अथ सूना व्याख्यास्यामो जङ्गमस्थावरादीन् प्राणिनः सूदयन्तीति सूनास्ताः पञ्चविधा भवन्ति—

१—'द्रुतावतरणावगाहनविक्षोभणविक्षेपणापूतग्रहणयानादिभिराद्यां कुर्वन्ति।'

'द्रुतावरणं शीघ्रं जलप्रवेशः। विक्षोभणमालोडनं जलस्य। विक्षेपणमितस्ततो जलप्रवेशः। अपूतग्रहणं वस्त्रादिना कृमिकीटादिनिवारणमकृत्वा जलग्रहणम्। यानं प्रसिद्धमेव। एतैराद्यां प्रथमां सूनां कुर्वन्ति।' २—अवेलाऽविस्पष्टद्रुतगमाक्रमणादि-भिर्द्वितीयाम्। 'अवेलायामन्धकारादौ गमनम्, अविस्पष्टे उन्मार्गादौ गमनम्, द्रुतं शीघ्रं गमनम्, आक्रमणं पादादिना कृम्यादेः। एतैर्द्वितीया सूना क्रियते।' ३—आह-ननग्रहणबन्धनकुट्टनोत्पाटनादिभिस्तृतीयाम्। 'आहननं कुठारादिना वृक्षादेः। ग्रहणं पुष्पादेः बन्धनं गवादेः। कुट्टनं व्रीह्यादेः। उत्पाटनं कुशादेः। एभिस्तृतीया सूना

भवति।' ४—आक्रमणघर्षण-पेषणादिभिश्चतुर्थीम्। 'अत्राक्रमणं वृषादिना सस्यादीनाम्।' ५—आदीपनतापनस्वेदनभर्जनपचनादिभिः पञ्चमीम्। 'आदीपनं काष्ठादेः। स्वेदनं धान्यादेः। तापनं जलादेः। भर्जनं यवादेः। पचनं तण्डुलादेः।

यज्ञेन सह ईश्वरस्य सृष्टेश्च सम्बन्धः श्रीमद्भगवद्गीतायां प्रतिपादितः। यथा—

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्म-समुद्भवः॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥
(३।१४, १५)

नारायणोपनिषद्यपि—

यज्ञेन हि देवा दिवं गता
यज्ञेनासुरानपानुदन्तः।
यज्ञेन द्विषन्तो मित्रा † भवन्ति
यज्ञे सर्वं प्रतिष्ठितं तस्माद्यज्ञं परमं वदन्ति॥

अतोऽप्येषामनुष्ठानं कर्त्तव्यम्।

यज्ञमहायज्ञयोर्विशेषो महर्षिणा भारद्वाजेन दर्शितः। "यज्ञः कर्मसु कौशलं समष्टिसम्बन्धान्महायज्ञः।"

† मित्रा मित्राणीत्यर्थः।

सुकौशलं पूर्णं कर्म यज्ञः स एव समष्टिसम्बन्धान्महायज्ञ इत्युच्यते। अर्थात् यज्ञस्य फलमात्मोन्नतिः आत्मकल्याणम्, तत्र व्यष्टिसम्बन्धस्य प्राधान्यात्स्वार्थता। महायज्ञस्य समष्टिसम्बन्धप्राधान्येन जगत्कल्याणं फलम्। अतो महायज्ञे निःस्वार्थता। एतदेव महायज्ञानां महत्त्वम्।

अत्रेदं रहस्यम्। अविद्याग्रसितं जीवभावं परित्यज्य ब्रह्मभावोपलब्धिरेव मनुष्यजन्मनो लक्ष्यम्। जीवात्मपरमात्मनोर्भेदश्च विद्यते एव। जीवोऽल्पज्ञः ईश्वरः सर्वज्ञः। जीवो देशकालादिना परिच्छिन्नः, ईश्वरस्त्वपरिच्छिन्नः। जीवोऽविद्याधीनः, ईश्वरः मायाया अधीश्वरः।

येनानुष्ठानेन जीवस्य क्षुद्रता अल्पज्ञत्वादिर्नश्यति परमात्मना सहैक्यं च गच्छति तस्यानुष्ठानस्य सर्वतो महत्त्वं महत्तरत्वं महत्तमत्वं वा अस्तीत्यत्र नास्ति सन्देहः। अयं महायज्ञोऽपि तादृश एवेत्यतोऽस्यापि महायज्ञत्वम्। अयमेवार्थो महर्षिणा अङ्गिरसाऽप्युक्तः—'यज्ञमहायज्ञौ व्यष्टिसमष्टिसम्बन्धात्।' एतैः पञ्चमहायज्ञैः सकलं भूतजातं तृप्यतीति मनुस्मृतावुक्तम्—

ऋषयः पितरो देवा भूतान्यतिथयस्तथा।
आशासते कुटुम्बिभ्यस्तेभ्यः कार्यं विजानता॥
स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान्यथाविधि।
पितॄन्श्राद्धेन नॄनन्नैर्भूतानि बलिकर्मणा॥

(३।८०, ८१)

स्वाध्याये नित्ययुक्तः स्याद्दैवे चैवेह कर्मणि।
दैवकर्मणि युक्तो हि बिभर्तीदं चराचरम्॥

(३।७५)

ते पञ्चमहायज्ञाश्छन्दोगपरिशिष्टे कात्यायनेनोक्ताः—

देवभूतपितृब्रह्म-मनुष्याणामनुक्रमात्।
महासत्राणि जानीयात्त एव हि महामखाः॥

याज्ञवल्क्यस्मृतावपि—

बलिकर्म स्वधा-होमस्वाध्यायातिथिसत्क्रियाः।
भूतपित्रपरब्रह्म-मनुष्याणां महामखाः॥

तथा च मनुस्मृतौ—

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥

आश्वलायनसूत्रेऽपि—

अथातः पञ्चमहायज्ञा देवयज्ञो भूतयज्ञः पितृयज्ञो ब्रह्मयज्ञो मनुष्ययज्ञ इति।

## (१) ब्रह्मयज्ञः।

वेदानां तदङ्गानाञ्च अध्यापनमध्ययनं वा ब्रह्मयज्ञः। तत्राध्यापनं ब्रह्मयज्ञ इति मनूक्तेरध्यापनं ब्रह्मयज्ञः।

गुरावध्ययनं कुर्वन् शुश्रूष्यादि समाचरेत्।
स सर्वो ब्रह्मयज्ञः स्यात्तत्तपः परमुच्यते॥

इति कुल्लूक-भट्ट-भाष्य-धृतवचनादध्ययनमपि ब्रह्मयज्ञः।

श्रुतौ कर्मकाण्डे उपासनाकाण्डे ज्ञानकाण्डे च ज्ञानस्यैव प्राधान्यं तस्य परमावश्यकत्वं च प्रतिपादितम्। जीवान्तरापेक्षया मनुष्यदेहस्योत्कर्षताऽपि ज्ञानेनैव प्रतिपादिता। शास्त्रोक्तसदाचारवान् धर्मानुष्ठानेऽभिरतो मनुष्यो मनुष्यत्वमावहति। तदनन्तरं कर्मकाण्डद्वारा अन्तःकरणशुद्धिं विधाय उपासनाकाण्डेऽधिक्रियते।

ततो भगवत्कृपाकटाक्षलेशेन ज्ञानमवाप्य मुक्तो भवति। अयं मनुष्याणां साधारणोन्नतिक्रमः, अतः ज्ञानयज्ञरूपः स्वाध्यायः सदाऽध्येतव्यः।

क्रमोन्नतौ ज्ञानस्य प्राधान्यात् सर्वास्वप्यवस्थासु ज्ञानस्यावश्यकत्वमस्ति। यतः प्रथमावस्थायामपि ज्ञानमन्तरा असदाचरणपरित्यागो धर्मानुष्ठाने प्रवृत्तिश्च न सम्भवति। 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' इत्युपदेशेन बलवत इन्द्रियग्रामस्य तत्र प्रतिबन्धकत्वात्। इन्द्रियग्रामश्च स्वस्वव्यापारे एव प्रथमावस्थायां मनुष्यं प्रवर्त्तयति न धर्मानुष्ठानादौ। तस्मिन्समये मातापितरौ गुरुश्च धर्मज्ञानोपदेशेन असत्कर्मभ्यो निवारयन्ति सन्मार्गे च व्यापारयन्ति। तस्मात्सर्वास्वस्थासु ज्ञानस्य प्राधान्यात् ज्ञानयज्ञरूपः स्वाध्यायोऽध्येयः। तथा च श्रुतिः—'स्वाध्यायोऽध्येतव्यः' इति। अधीयते इत्यध्यायो वेदः स्वस्याध्यायः स्वाध्यायः स्वपरम्परागता शाखा इत्यर्थः। एवञ्च यत्किञ्चिच्छाखाध्ययने विधेश्चारितार्थ्यं नास्ति किन्तु स्वशाखाध्ययने एव।

पारम्पर्यगतां मुक्त्वा स्वां समाख्यानिबन्धिनीम्।
शाखां शाखान्तरं युक्तं नाध्येतुं सदृशे श्रमे॥

तेन प्रतिदिनं ब्रह्मयज्ञे अध्ययनादौ प्रथमं स्वशाखामधीत्य शाखान्तराणि पठेदित्यायाति। अशक्तौ तु गायत्रीजपमात्रं कुर्यात्—

ब्रह्म-यज्ञप्रसिद्ध्यर्थं गायत्र्येकां जपेत्ततः।
तेन प्रीतिं परां याति देवदेवो जनार्दनः॥

इति वचनात्। ब्रह्मयज्ञे पुराणादीनामध्ययनमुक्तं मन्वादिभिः—

बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान्॥

याज्ञवल्क्यः—

वेदाथर्वपुराणानि सेतिहासानि शक्तितः।
जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत्॥

अन्यत्रापि—

धर्मशास्त्रं तु विज्ञेयं शब्दशास्त्रं तथैव च।
पुराणानीतिहासांश्च तथाऽऽख्यानानि यानि च॥
महत्सतां च चरितं श्रोतव्यं नित्यमेव च। इति।

याज्ञवल्क्यः—

वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम्।
न स्पृशन्तीह पापानि महापातकजान्यपि॥

अत्र महायज्ञानां यत्फलश्रवणं तत्पावनत्वख्यापनार्थं न काम्यत्वप्रतिपादनाय, एषां नित्यत्वात् । तस्मादहरहः एषामनुष्ठानं कार्यम् ।

ब्रह्मयज्ञेन ब्रह्मयज्ञकर्त्तॄणां ज्ञानं वर्द्धते भूयो भूयोऽभ्यासेन तद् दृढं भवति । तथा चाङ्गिराः—"ब्रह्मयज्ञादिभिः प्रोर्जिता ऋषयः तथाविधा ज्ञानस्य वर्द्धकाः ।" अत्र ज्ञानस्य सकल-सांसारिकसुखस्य मुक्तेश्च मूलभूतत्वात्तादृश-ज्ञानपदस्य महर्षिगणस्य आनृण्यार्थं ब्रह्मयज्ञानुष्ठानं स्वस्य कृतज्ञताप्रदर्शनार्थं चेति सिद्धम् ।

## ( २ ) देवयज्ञः

आत्मनः इष्टदेवोपासनार्थं परमात्मानमुद्दिश्य अग्नौ होमो देवयज्ञः । अयं पञ्चसु महायज्ञेसु द्वितीयः ।

यत्करोषि यदश्नासि यज्जुहोसि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

इत्यादि भगवद्वचनात्परमात्मा भगवानेव सर्वेषां यज्ञानामाश्रयः । अतो ब्रह्मयज्ञे ऋषिगणं, पितृयज्ञे अर्यमादि नित्यपितृगणं परलोकगामिनं नैमित्तिकं पितृगणं च, भूतयज्ञे नानाप्राणिनः देवरूपान्विज्ञाय 'यद्यद्विभूतिमत्सत्त्वम्' इत्युक्तप्रकारेण ।ईश्वरविभूति-धारिभ्यो देवेभ्यो बलिदानं सर्वव्यापकस्यान्तर्यामिणः परमात्मनः सपर्याया अभ्यासार्थमेव । यज्ञोऽयं देवानां सन्तुष्ट्यभिवृद्धये आत्मनः शक्ति-सुखाद्यभिवृद्धये चानुष्ठेयः । तथा चाहाङ्गिराः—'यज्ञादिभिर्देवाः शक्तिसुखादीनाम्' यज्ञादिभिर्देवाः सम्बर्द्धन्ते, ते च सम्बर्द्धिताः सकलां शक्तिं सुखसम्पत्तिं च प्रयच्छन्ति । देवताश्च नित्यनैमित्तिकभेदेन द्विविधाः । तत्र रुद्रगणो वसुगणः इन्द्रादयश्च नित्याः, ग्रामदेवता वनदेवता गृहदेवतादयोऽनित्याः । उभय-विधा अपि देवता अनेन तृप्यन्ति । यासां देवतानां कृपया जड़भावापन्नेन विनश्वरेण कर्मणा फलमुत्पद्यते, यत्कृपया यावत्सुखं शान्तिश्चावाप्यते, यत्कृपया भोग्यवस्तूनि प्राप्यन्ते, यत्कृपया संसारस्य सकलोऽपि क्रियाकलापः सुसम्पद्यते संरक्ष्यते तेषां देवानामानृण्यायायं देवयज्ञोऽनुष्ठेयः ।

## ( ३ ) भूतयज्ञः

कृमिकीट-पतङ्ग-पक्षि-पश्वादीनां सेवारूपो यज्ञो भूतयज्ञः ।

'देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत्' इति याज्ञवल्क्यवचनाद्देवयज्ञावशिष्टान्नस्य तत्तज्जीवाधिष्ठातृभ्यो देवेभ्यः तत्तज्जीवेभ्यश्च भूमौ निक्षेपः कार्यः, तच्चान्नं पशुपक्षिगवादिभ्योऽर्पणीयम् ।

मनुः—

शुनां च पतितानाञ्च श्वपचां पापरोगिणाम्।
वायसानां कृमीणाञ्च सनकैर्निक्षिपेद्भुवि॥
एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति।
स गच्छति परं स्थानं तेजोमूर्तिपथर्जुना॥

(३।९२, ९३)

अयं च सर्वेषां मुख्यो धर्मः। यतः सृष्टेः कस्याप्यङ्गस्यानुपेक्षणीयतया एकस्याप्यङ्गस्य साहाय्येन सकलाङ्गस्य साहाय्यमभिमन्यते अतो भूतयज्ञोऽपि परमो धर्मः। तस्माज्जीवमात्रस्य परिचरणं मनुष्यैः कर्त्तव्यमिति शास्त्राज्ञा। किञ्च सर्वोऽपि जनः स्वसुखार्थमनेकान् जीवान्प्रत्यहं क्लेशयति मुहूर्त्तमात्रमपि भूतैर्विना शरीरयात्रा दुस्साध्या भवति। यतो मनुष्यमात्रस्य प्रतिनिःश्वासे प्रतिप्रश्वासे च परःसहस्रा जीवा आत्मबलिं कुर्वन्ति। पिपासानिवृत्त्यर्थमुदकपाने जलान्तर्गताः कियन्तो जीवाः प्राणै र्वियुज्यन्ते इति केन वक्तुं शक्यते। निरामिषभोक्तुरपि जनस्य भोजनसमये कतिपयानां जीवानां प्राणवियोगो भवत्येव। सामिषभोजिनान्तु का कथा? अतो भूतानामक्लेशेन मनुष्याणां सुखसम्पत्ति र्जीवनं वा कथमपि न सम्भवति, तस्माद्भूतानामानृण्याय भूतयज्ञः कार्यः। अनेन भूतयज्ञेन तत्तद्देवताधीनानां पशुपक्ष्यादीनां तृप्तिः सञ्जायते।

## (४) पितृयज्ञः

अर्यमादीनां नित्यपितॄणां परलोकगामिनां नैमित्तिकपितॄणाञ्च पिण्डप्रदानादिना सेवारूपो पितृयज्ञः।

'पितृयज्ञादिभिः पितरः स्वास्थ्यवीर्यादीनाम्' इति महर्षिणा अङ्गिरसा स्वसूत्रोक्तेः पितृयज्ञेन पितॄणामभिवृद्धिर्भवति, ते च स्वास्थ्यस्य वीर्यादेश्चास्माकं वर्द्धयितारो भवन्ति इत्यनेकविधा फलप्राप्ति र्बोध्यते। यथा ब्रह्मयज्ञेन परितुष्टा ऋषयोऽस्माकं ज्ञानं वितन्वन्ति अतस्तेषामानृण्याय ब्रह्मयज्ञोऽनुष्ठीयते एवं पितृगणस्यानृण्याय पितृयज्ञोऽस्माभिः सदाऽनुष्ठेयः।

सन्मार्गप्रवर्त्तकयोर्मातापित्रोः कृपयैव असदाचरण-निवृत्तो जनः ज्ञानमवाप्य उपयुक्तं मुमुक्षुत्वं प्राप्नोति। तत्पूर्वं सकलान् भोगान् धर्मार्थकामादींश्चाप्नोति। एतादृशानां दयालूनां पितॄणां तृप्तये सम्मानाय स्वकृतज्ञताप्रदर्शनाय च पितृयज्ञस्यानुष्ठानम् विधेयम्। पितृयज्ञेन सकलो लोकस्तृप्यतीति शास्त्रे समुपदिष्टम्।

आब्रह्मभुवनाल्लोका देवर्षिपितृ-मानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥

हारीतेन प्रत्येकस्य फलमुक्तम्—

यद्देवेभ्यो जुहोति देवलोकं तेनाभिजयति यत् पितृभ्यः पितृलोकं तेन, यत्स्वाध्यायमधीते ऋषिलोकं तेन, यद्भूतेभ्यो बलिं हरति भूतलोकं तेन, इति ।

## ( ५ ) मनुष्ययज्ञः

अतिक्षुधया पीडितस्य गृहागतस्य विप्रस्य अन्यस्य वा मनुष्यस्य पाद-क्षालन-संवाहनशय्यासनभोजनादिना सेवारूपो मनुष्ययज्ञः ।

यथा देहे एकस्मिन्नप्यङ्गे विकलतां प्राप्ते सति सकलस्याप्यङ्गस्य वैकल्यं जायते, यथा च शरीरे नैरुज्यार्थं तैलमर्दन-स्नान-भोजन-शयन-विहारादिभिः प्रत्यङ्गमुपचर्यते, यथा वा शरीरस्य यस्मिन्कस्मिन्नप्यङ्गे रोगोत्पत्तौ सकलदेहस्य अशान्तिर्जायते, यथा च शरीरस्य प्रत्येकमप्यवयवः 'अहम्' शब्दवाच्यस्तथैवोक्तसमष्टि-व्यष्टिरूपेण मनुष्यमात्रस्य मनुष्यमात्रेण सह सम्बन्धो निर्विवाद एव । तस्मात्सर्वसाधारणै गृहस्थैर्मनुष्यत्वधर्मप्राप्तये अतिथिसेवारूपो मनुष्ययज्ञः कर्त्तव्यः । अतिथौ गृहे समागते पाद्यार्घ्यादिभिस्तं विधिवत्सम्पूज्य तस्मै अन्नादिकं देयम् । तथा च मनुः—

सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके ।
अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम् ॥
शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः ।
सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन् ॥
तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ।
एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥

(३।९९-१०२)

आसनावसथौ शय्यामनुव्रज्यामुपासनाम् ।
उत्तमेषूत्तमे कुर्याद्धीने हीनं समे समम् ॥

(३।१०७)

यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत्।
भुक्तवत्सु च विप्रेषु कामं तमपि भोजयेत्॥
वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ।
भोजयेत्सह विप्रैस्तावानृशंस्यं प्रयोजनम्॥
(३। १११, ११२)

एतेनेदं सिद्ध्यति—यत्पृथिव्यां सर्वैरपि सामाजिकैः अतिथिसेवारूपो धर्मः समाश्रयणीयः। गृहस्थो दरिद्रोऽतिदरिद्रो वा स्यात्तथाप्यतिथिसत्कारान्न विरक्तो भवेत्।

अतिथिर्यस्य भग्नाशो गृहात्प्रति निवर्त्तते।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति॥

अतिथिर्यावन्नाश्नीयात्तावत्स्वयमपि न भुञ्जीत। अतिथौ प्रसन्ने गृहिणां धनायुर्यशःस्वर्गादीनां प्राप्तिर्भवति। अतिथिं देवतां मत्वा आसनं गृहं शयनं भोजनादिकं तस्मै देयम्। यथाह मनुः—

अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना।
प्राप्ते काले त्वकाले वा नास्यानश्नन्गृहे वसेत्॥
न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत्।
धन्यं यशस्यमायुष्यं स्वर्ग्यं वाऽतिथिपूजनम्॥
(३। १०५, १०६)

प्रथमावस्थायां मनुष्यः स्वशरीरमात्रसुखेनैवात्मानं सुखिनं मन्वते। तत्पश्चात् क्रमोन्नतौ स्वकीयपुत्रकलत्रमित्रादिकं सुखिनं दृष्ट्वा सुखी भवति। ततः स्वदेशहितैषिणः स्वदेशवासिनः सुखिनो दृष्ट्वा सुखी भवति। तत उन्नतात्मा पूर्णज्ञानवान् जगति वर्त्तमानं सकलं मनुष्यगणं सुखिनं दृष्ट्वा सुखी भवति। परन्तु वर्त्तमानसमये एकेन मनुष्येण सकलो मनुष्यगणः सेवितुमशक्यः, अतो देशविशेषात् कालविशेषात् परिच्छिन्नस्य मनुष्यस्य पूजा मनुष्ययज्ञः। अर्थात् भोजनसमयं यावत् यस्यां कस्यांचिज्जातौ वर्त्तमानो यस्मिन्कस्मिन्वा धर्मे वर्त्तमानो मनुष्यः समागच्छेत्स पूज्यः। तदुक्तम्—

स्वाध्यायगोत्रचरणमपृष्ट्वा च तथा कुलम्।
हिरण्यगर्भबुद्ध्या तं मन्येताभ्यागतं गृही॥
प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा।
प्राप्तस्तु वैश्वदेवान्ते सोऽतिथिः स्वर्गसङ्क्रमः॥ इति॥



---

## दशशोकाश्रुविन्दवः।

नित्यानन्दतनूजनुर्दृढतनुः प्रख्यातविद्यामनुः,
नित्यानन्दवनान्तरक्षिततनुर्भानुप्रदीप्तोऽतनुः।
नित्यानन्दवनान्तचारिसुमना नित्यं शिवार्चागत-
नित्यानन्दधनो विचारनिपुणो विज्ञातमन्युः क्षणात् ॥१॥

सद्धर्मप्रतिवादि-कुञ्जरघटा - कुम्भोत्कटद्रावको
हर्यक्षः कृतिदक्ष-रक्षित-महाशिक्षानिधिः सद्विधिः।
श्रीपञ्चाननसङ्गसिद्धवशको विद्वद्गणाभ्यर्हितः
काशीशं समगादगाधधिषणः श्रीपद्मनाभः सुधीः ॥ ॥

अनन्तशयनत्वं ते पद्मनाभ ! श्रुतौ श्रुतम्।
वि-शोकायैव यत्साक्षात्कारो ज्ञानवतामपि ॥३॥

यद्दर्शनाद् भवेद् भद्रमभद्रं तस्य दर्शनात्
विपर्यस्तावनावद्य विपरीतमिवाखिलम् ॥४॥

अनन्त-शयनं पद्मनाभत्वं च लयानुगम्
विना पञ्चाननं न स्यात् तमन्वेष्टुं गतस्ततः ? ॥५॥

पद्मनाभो निजक्षेत्रे मरणान्मित्रसंगमः
न स्यादिति धिया पञ्चाननस्थानस्थितोऽभवत् ॥६॥

वर्णाश्रमोचिताचारविचारश्रमतत्परः
त्वत्परस्तत्परः सारः कोऽपरो गोचरीभवेत् ॥७॥

प्राचीनतोन्नतमहासनतो न जातु
प्रावातरन्नवयुगोत्पथके स धीमान्।
अर्वाग् जनाधुनिकदुष्टमतं विखण्ड्य
प्राच्यं मतं बहुमतं सममण्डयच्च ॥८॥

अनन्तशयनेऽनन्त श्रान्त्या विश्रान्तिकान्तया।
स्वस्थाने प्रस्थितो लक्ष्म्या युतो विश्वं नवं सृज ॥९॥

हा ! पण्डितसभा काश्या विधवा कृतबान्धवा
न जीवेद् भृशशोकार्त्ता, का गतिः स्यादिति स्मर ॥१०॥

—श्रीयतीन्द्रचन्द्रभट्टाचार्याणां तर्कतीर्थ न्यायाचार्याणाम्
( ब्रह्मचारीवाडी संस्कृतकालेज, अहमदाबाद )

## शोकप्रकाशः ।

( ले०—महामहाध्यापक पं० नत्थीलालदेव शास्त्री )

यः प्रज्ञाप्रतिभाप्रभावमहितो विद्वद्वरैरानतो
धर्म्याचार-विचार-धूतकलुषः श्रौतीः क्रिया आचरन् ॥
धाम्ना शैवमयेन दीपिततनु र्हा हन्त ! पञ्चाननः
किं कैलासमगादुताद्य स इतो द्यां वा सुरामन्त्रितः ॥ १ ॥
तर्कैः कर्कशमानसोऽपि विदुषां सम्माननप्रोत्सुक–
श्चौदार्यार्जवसाधुताजितमदस्वान्तो नितान्तं शमी ॥
यो भूद्भास्वरभूसुरान्वयजनिः पञ्चाननो विज्ञराट्
हित्वा भौतिकदेहमेनमधुना दिव्यां तनुं संश्रितः ॥ २ ॥
विद्वत्संसदरण्यके वुधवरः सत्तर्कपाण्युद्भवै
र्भीतं वैवुधधूर्तकं स विदधत् काश्यां चिरं यो वसन् ॥
हा ! पञ्चाननसंनिभः सुहृदयं दुर्दैवतः साम्प्रतम्
श्रीपञ्चाननतर्करत्न इह नो हित्वा गतः पञ्चताम् ॥ ३ ॥

[ विलम्बेन प्राप्तोऽयं तथापि लेखकसम्मानरक्षार्थं प्रकाश्यते—सं० ]

---

## अभिभाषणम् ।

विहार प्रान्तीय-सरयूपारीणसभाया वेतियानगरे सञ्जातस्य अधिवेशनस्य सभापतिपदमधितिष्ठतां चिकित्सकचूड़ामणीनामायुर्वेदाचार्य्याणां कवीन्द्रवैद्यरत्नमहोदयानां पं० श्रीचन्द्रशेखरधरशर्म्मणां लिखितभाषणस्य संक्षिप्तम् ।

श्रिय इह करुणाया मूर्तयो विप्रबुद्धौ जगति गिर उदाराः सिद्धयो द्राग् वसन्तु ।
अपरसकलवर्णाः शुद्धमानन्दभावं हरिहरकृपयाथो सद्य एते व्रजन्तु ॥

अयि महानुभावाः सभासदः ! श्रीमन्तो यन्मामद्येह सरयूपारीणसभामण्डपे सभापतिपदे प्रतिष्ठापितवन्तस्तदर्थं श्रीमद्भ्यः आशीर्वादं धन्यवादं ददद् भवतामभिज्ञतामभिनन्दामि ।

सम्प्रति मदीया वयोऽवस्था द्व्यशीतितममब्दमतिक्रामति । एतस्याः सरयूपारीणमहासभायाः कार्य्यं कुर्वतो मम षष्टिः वर्षाणि व्यत्यगुः । एतद्विषये यथामदीयोऽनुभवो विद्यते तादृक्तु कदाचिदेव कस्यचिदन्यस्य स्यात् । चत्वारिंशदुत्तरोनविंशतितमे वैक्रमेऽब्दे ज्येष्ठशुक्लदशम्यां ममैव प्रवलप्रयासेन गोरक्षपुरे प्रथमं प्रतिष्ठिताऽभूत् । तत आरभ्य वलुआ, बस्ती गोरखपुर प्रयाग-काशी आगरा-अयोध्या प्रभृति

प्रसिद्ध नगरेषु पर्य्यटन्तीयं सभा प्रख्यातिमभिवृद्धिञ्च साधु सञ्जगाम । ततश्च षट्-चत्वारिंशदुत्तरोनविंशतितमे वैक्रमेऽब्देऽहं गोरक्षपुरतो रत्नमालामागतवान् इहैवास्याः सभायाः स्थिराणि वृद्धिकराणि कार्य्याणि सञ्जातानि । यथा—रत्नमालायां श्रीचन्द्रोदयौषधालयनाम्नः शिक्षासदनस्य प्रतिष्ठापनमस्या एव सभायाः प्रतिष्ठापनस्य परिणामः । सम्प्रति सैव संस्था आयुर्वेदीयानुसन्धानस्य प्रधानकेन्द्रमिह विहार-प्रान्ते विद्यते । तत एवोदुम्बरसारनामकस्य नवीनौषधविज्ञानस्याविष्कारः समजनि । सम्प्रति मया तस्याः संस्थायाः कृते सर्वा अपि निजसम्पत्तयः 'वक्' नाम्ना समर्पिताः । इहोपस्थितानां स्वामिहरिहरगिरिमहोदयानां पूर्वाश्रमे सरयूपारीणवंशविभूषकाणां साहाय्येनाधुनावश्यमियं सभा परिपोषमेष्यति । अस्मिन् प्रान्ते यदा यदेयं सभा समजनि तदा तदा नरईपुरग्रामाधीश्वराणां पं० रामेश्वर-प्रसादमिश्रमहोदयानां सर्वथा साहाय्यमासीत् ।

## अधुनातनं कर्तव्यम् ।

सम्प्रति वैतनिकोपदेशका अस्याः सभाया धर्मप्रचारका भवेयुस्ते हि प्रतिग्रामं गत्वा सरयूपारीणमण्डलेषु शिक्षाप्रचारं बालानां बालिकानां वयस्कस्त्रीणाञ्च धर्म-शिक्षायाः स्वास्थ्यशिक्षायाः प्रबन्धकरणमित्यादिकं तेषां कर्तव्यं स्यात् । स्त्रीषु अद्यत्वे वैदेशिकभावानां विशेषतः प्रचारो दृश्यते । तेषां सर्वतो निरोधस्य प्रयोजनं विद्यते । तत्र स्त्रीणां कृते भारतीय-संस्कृतिसमेधिकैव शिक्षाऽपेक्षितास्ति, यथा रामायणस्य महाभारतस्य हिन्दीभाषायाञ्च तुलसीदासीयरामायणस्य हिन्दू-धर्मोपदेशिकाया भ.रतभारतीप्रभृति पुस्तकानाञ्चाध्यापनमावश्यकं विद्यते । स्वास्थ्यशिक्षार्थञ्च आरोग्यप्रकाशगूलरगुणविकासप्रभृति पुस्तकानामध्यापनमावश्यकम् । गोधूमपेषणं व्रीहिकण्डनादिकञ्चावश्यकं गृहकृत्यकरणाभ्यासोऽपि स्त्रीभिः पुनरधुना कारयितव्यः । इयं हि भारतीया प्रथाऽत्यावश्यकी सम्प्रति सर्वाभिरेव नूतनशिक्षादीक्षिताभि र्बालिकाभिस्त्यक्ता विद्यते । येन च तासां स्वास्थ्यं समुचितव्यायामाभावात् दैनन्दिनं विनष्टमेवोत्तरोत्तरं भवति । स्वगृहपार्श्वे क्षेत्रादिषु व्यंजनार्थं शाकादीनां मूलकालूकवास्तुकालाबूकुष्माण्डवृन्ताकादीनां रोपणं तदर्थं जलसेचादिकरणं वृहतामपि वृक्षाणाम् आम्रोदुम्बरजम्बीरवञ्जवीजपन-सादीनां गृहाभ्यासक्षेत्रादिषु रोपणं बालकबालिकानां शिक्षणं नगरग्रामादीनां सर्वथा परिष्करणं सर्वमिदं कृत्यं स्त्रिय एव कुर्य्युरित्येतदर्थं धर्मोपदेशकद्वारा प्रतिनगरग्रामं प्रचारणमित्येतदपि सरयूपारीणसभायाः साम्प्रतिकं कर्तव्यम् विद्यते । गोरखुल-पपीताकर्पासप्रभृति-महोपकारि-क्षुपाणामपि रोपणं स्त्रीणामेवाधीनं कर्तव्यम् ।

सर्वोपरि सम्प्रति स्त्रीणां प्रधानं कृत्यं तर्कुयन्त्रचालनन्तु सर्वथोच्छिन्नमेवोत्तरोत्तरं प्रयाति। तस्य प्रतिगृहं पुनः प्रतिष्ठापनं सरयूपारीणसभायाः प्रधानकृत्यं विद्यते। पूर्वकाले इह स्त्रीभिरेव कर्तितैः सूत्रै यज्ञोपवीतनिर्माणं भवतिस्म। वेदेऽप्यस्याः कलायाः स्त्रीणां कृते एव विधानमावश्यकं दृश्यते। एतस्याः कलाया उपयोगः आवश्यकः हिन्दुसमाजस्य कृते सुलभ आर्थिकलाभप्रदो धर्मसमेधकश्च विद्यते। अत एव च वेदेऽस्य प्रथमं विधानं मानव-समाजस्य कृतेऽत्यावश्यकं दृश्यते। तथाहि—

"या अकृन्तन्नवयन् याश्च तन्तूनभितो ततन्थ। तास्त्वा देवी जरसे संव्ययिष्ट प्रायुष्मतीदं परिधत्स्व वासः" इत्यादयो मन्त्राः सन्ति। इयं वैदिकी कला बहुकाला-देव भारतीयाभिर्नारीभिः समादृता विद्यते। सम्प्रति गान्धी महात्मापि इमां कलां भारतीयानां कृते साधीयसीं मन्यमानः सर्वानेव प्रेरयति चालयितुमिदं यन्त्रम्। केवलं चालयितुमेव नादिशति अपितु भारतीय-स्वाराज्यस्येदं प्रधानं साधनं विधाय स्वजीवनस्य स्वासहयोगसत्याग्रह-शस्त्रस्येदमेव बीजमन्त्रं मन्यते। मयैव निर्मित-हिन्दीपद्यमेतस्य कृते विद्यते। यथा—द्रुतविलम्बितच्छन्दसा—

"सकल ही कल ही गुण मान है।
महित ही हित ही गुण-मान है।
कर चला स्वललामकरी कला।
सच रखा चरखा जगका भला।

किं बहुना सर्वप्रथमं साक्षादीश्वरेण वेदे इयं कलोपदिष्टा सर्वदा सर्वथा मानव-कुलस्यार्थंकरोति ईश्वरादेशमेव गान्धी महात्मा प्रचारयति.न किञ्चित्स्वकल्पितं जल्पति। यत्र सौकर्यं स्यात् तत्र स्त्रियः पुरुषाश्च मिलित्वा तर्कुयन्त्र-चालनं कृत्वा सूत्राणां कर्तनं ततो वस्त्रवयनं सौचिक - कलाभ्यासादि सर्वमपि मानवोपयोगि कृत्यं कार-यन्तु स्वयञ्च कुर्वन्तु। सरयूपारीण-सभोपदेशकाश्च तत्र सर्वान् प्रवर्तयन्तु इति।

शृणुत सावधाना वैदिकीं शुभाशीर्धारां शार्दूलविक्रीडितच्छन्दसा—श्रुत्वा चेत्थ-मेव सर्वे ब्रुवन्तु—

कामं लब्धमनोरथाः प्रतिदिनं याचन्तु मामर्थिनः।
स्वन्नं नः प्रभवेद् धनञ्च विपुलं याचिष्म नो कञ्चन।
वर्द्धन्तामनिशं महेशकृपया धर्माश्च गोत्राणि नः
श्रद्धा सन्ततयश्च आशिष इमाः सत्याः सदा सन्तु नः।

इत्येवमेव सरयूपारीण-सभा-धर्मोपदेशकाः सर्वत्र नगरे ग्रामे च गत्वा सभोद्देशं प्रचारयन्तु इत्येव मामकाशीराशयः सन्तु।

——०——

## शोक—प्रकाशः

सारस्वतं मानवरूप - धारि
प्राभाद्धि साक्षादिव दिव्यतेजः।
यच्चारु पञ्चानन - नामधेयं
विहाय हा! गां क्व गतं तदद्य ॥ १ ॥

अशक्तभावं भजतां जनानां
नास्तिक्यतो घोरतमे युगेऽत्र।
आविष्कृतं येन शिवं विधातुं
श्री-शक्ति-भाष्याभिध-शक्ति-जातम् ॥ २ ॥

निषेव्य तत् सर्वमशक्तभावं
हित्वा तथान्यानपि हापयित्वा।
यान्तो मुदा भक्तिपथेऽतिदुर्गे
विश्वेश्वरीं पश्यत शीघ्रमेव ॥ ३ ॥

पदस्य लाभे परमस्य शङ्का
नैतादृशानां सुकृते रतानाम्।
तथापि नः प्रार्थितमस्ति युक्तं
भव्या गतिः स्यादिति लोकरीत्या ॥ ४ ॥

—राजकुमारगुरु ज्यौतिषालंकार
दैवज्ञभूषण तारादत्त राज ज्यौतिषि ज्योतिर्भूषणस्य
( रियासत जुब्बल ज़िला शिमला )

---

## मानवधर्म्मसारः।

समालोचकः—श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः।

( स० ध० कालेजोपाध्यायः, मुलतान सिटी )

अस्मत्पार्श्वे १२।९।४० तिथौ डाक्टर श्रीभगवान्दास M. A. महोदयेन (यदीयस्य कर्म्मणा वर्ण्ण-व्यवस्था-सिद्धान्तस्य 'सूर्य्योदये' गताङ्केषु प्रत्यालोचना विहिताऽस्माभिः) स्वप्रणीतो 'मानवधर्मसारः' प्रहित आसीत्। अस्मिन्नमुना महाशयेन पथ्यावक्त्रच्छन्दोभिः स्वसिद्धान्ता निर्द्दिष्टाः। अयमस्माभिः समयाऽभावान्नियमपूर्व्वकं न दृष्टः। आपाततोऽदसीयाः केचिदंशा दृष्टाः। अस्मिन् वेदानाम्, उपनिषदां, स्मृतीनाम्, दर्शनानाम्, प्रायश इतिहास-पुराणानाम्, गृह्यसूत्राणाम् एवमन्यग्रन्थानाम् अंशाः स्वक्रमानुसारमुपनिबद्धाः। अत्र तेन गुणकर्म्मणा वर्णव्यवस्थाम्, एवमन्यान्यस्वसिद्धान्ताँश्च साधयितुं चेष्टितम्। यद्यपि अस्मन्मतानुसारं तत्र तेन साफल्यं न लब्धम्। तदीयस्य कर्म्मणा वर्ण्णव्यवस्थाविषयस्य प्रायशः प्रत्याख्यानं पाठकैः 'सूर्य्योदय' स्य चतुर्दश-पञ्चदशषोडशवर्षीयासु संख्यासु मन्निबन्धे दृष्टं स्यात्।

पादोन-शतत्रितय-पृष्ठात्मकस्याऽस्य पुस्तकस्य समीक्षा एतल्लेखे न भवितुमर्हति। एतत्समीक्षणकृते इतोऽपि द्विगुणपृष्ठवतो ग्रन्थस्यैकस्य आवश्यकता। परं न तथा समयोऽस्मत्सन्निधौ। आम्—अवकाशमासाद्य अदसीयानामंशानां यदा कदाचित् समीक्षां संस्कृतपत्त्रेषु कर्त्तास्मः।

परमेतत्-पुस्तकविषये किञ्चिन्निवेदनं कर्त्तुं बाध्याः स्मः; तदिदं यद्—डाक्टर-महाशयेन पुस्तकस्याऽस्य 'मानव-धर्म-सारः' इति नाम लिखितम्। एतेन सर्व्वसाधारण-जनानां भ्रमो भवेद् यदत्र मानवधर्मशास्त्रस्य ( मनुस्मृतेः ) सारो भवेत्। अस्या भ्रान्तेरन्या पुष्टिरुक्तपुस्तकादेव उपक्रमेणापि जायते। तत्र आदौ 'मनुं प्रति महर्षीणां प्रश्नः' इति लिखित्वा ततो 'मनुमेकाग्रमासीनम्' इत्यादयो मनुस्मृतेरारम्भिकश्लोका अपि लिखिताः। इतश्च पुस्तकस्य मुखपृष्ठे 'उदारधीर-गम्भीर-वाचां भगवतो मनोः। कैश्चिद् भगवतो दासैः अयं सारः प्रसार्यते' इति श्लोकोपि लिखितः। इतश्चाऽत्र श्लोके 'डाक्टर भगवानदासेन' इति न लिखित्वा 'कैश्चिद्

* पथ्यावक्त्रच्छन्दोभिः। समासे तुक्।

भगवतो दासैः' इति सामान्यनामदर्शनेन अन्यापि तद्भ्रान्तिपुष्टिर्भवेत् । एतत्फलस्वरूपे सुदीर्घभविष्यत्काले केचिदिदमपि मनोः पुस्तकं मन्यन्ताम् । तदा साधारणा विशेष्मीयेरन् यद्—मनुसमयेपि किमार्यसमाजिकविचारा आसन्निति । अस्मन्मते नैतद् युक्तम् । एतेन केषाञ्चिद् मुग्धजनानां हानिर्भवेद् यत् ते अस्मिन् पुस्तके लिखितान् सिद्धान्तान् मनुस्मृतेरवगत्य मार्गभ्रमं प्राप्नुयुः । परं वस्तुत एवं नास्ति । अत्र ग्रन्थकर्त्तुर्नाम स्पष्टतया लेख्यमासीद् येन जनानां प्रतीतं भवेद् यदत्र कीदृशाः सिद्धान्ताः सम्मृता इति ।

एतत् पुस्तकं लिखित्वा डाक्टर महाशय एतदादिकस्वसिद्धान्तप्रचारमिच्छति—इति तदीयोऽभिलाषो * दृश्यते । परं तथात्वे तेन इदं पुस्तकं पद्यबद्धं न कृत्वा गद्यबद्धं विधेयमासीत् । यतः पद्यबद्धतायां कृतायामत्र अत्यन्तसङ्क्षेपो जातः, इतश्चात्र डाक्टरमहोदयाभिमताः साङ्केतिक-सिद्धान्ता विना-एतद्विषयप्रवीणं, सर्वसाधारणेन न ज्ञातुं शक्याः । संस्कृतभाषायां तु एतत्पुस्तकनिर्म्माणं वयं रोचयामहे; परमत्र पद्यापेक्षया यदि गद्योपयोगः कृतोऽभविष्यत्; तदा डाक्टरमहाशयस्याभिलषितं किञ्चिदसेत्स्यत् । अस्तु ।

तथापि आर्यसमाजिकानां सुधारकम्मन्यानां वा कृते इदं पुस्तकमुपयुक्तं सिध्येत् । सौविध्यायाऽत्र सन्धयोपि विच्छिद्य स्थापिताः प्रणेत्रा । पुस्तकस्याऽस्य मूल्यम्—अष्टौ आणकाः । विंशत्यधिकपुस्तकानां यौगपद्येन क्रेतारः सप्ताणकमूल्येन प्राप्तुं शक्नुयुः । अदसीयं प्राप्तिस्थानम्—डा० भगवानदास M. A. बनारस कैण्ट, अथवा 'काशी विद्यापीठ बनारस कैण्ट' ।

---

## "सपत्नी"

### ( मनोरञ्जिका गाथा )

**मुलतानस्थः 'श्रीकुमार' शास्त्री ( M. S. L. C. ) सारस्वतः ।**

"न भवेत्कस्याश्चिदपि विवाहो मृतपत्नीकेन मनुजेन साकम्" इति बाल्यकाल एव रजन्या स्वसखीमुखतः श्रुतम्, परं केवलं श्रुतमेव—न चिन्तितमस्य तात्पर्य्यं कदापि हि तया ।

बाबुनवलकिशोरस्य द्वितीयविवाहो जातः । तस्य स्त्री 'रजनी' पूर्वस्त्री 'उषे' व परमरमणीया सर्वगृहकर्मदक्षाऽऽसीत् । यद्यपि नवलकिशोरः पञ्चचत्वारिंशद्-

* अभिलाषः । घञ्न्तत्वात् पुंसि ।

द्-वयस्कः क्षीणाननो गर्तावर्तकपोलः सङ्कुचितनेत्रश्च, तथापि रजन्याः स्वपतिना सह प्रगाढप्रेमाऽऽसीत्।

रजनीपतिर्बाबुनवलकिशोर एकस्मिन् कार्य्यालये (दफ्तरे) पञ्चाशीतिवेतनको लेखकः (क्लर्क) आसीत्। अतिरिक्तमेतस्मात्तस्याऽधिकारे महती पैतृकसम्पत्तिरपि विद्यते स्म। एकस्मिन् सुरम्ये हर्म्ये स्वपत्न्या, विधवाभगिन्या च सह सुखेन कालं व्यतियापयति स्म।

रजनी सदेदमिच्छति स्म यत्सत्वरमेव पतिहृदये पूर्णाऽधिकारो भवेन्मम, परं सा नेदमवगच्छति स्म, यद् मम पत्युः प्रेम द्विभागेषु विभक्तमस्ति, तस्मिँश्च मम मृतसपत्न्या उषाया अपि भागो वरीवर्ति। प्रतीतमिदमभवत्तया यदस्मिन् गृहवातावरणेऽधुनाऽपि तस्या अधिकारो विद्यते। इत्येव ज्ञात्वा सा सर्वदा चिन्तासन्ताननितान्ततान्ता समयं गमयति स्म। सर्वतः कष्टप्रदमासीत्तस्यै तस्यास्सम्मुख एव ननान्दृद्वारा उषायाः प्रशंसनम्। सर्वदैव सा विधवा तस्याः सम्मुखे हि उषां प्रशंसति स्म। सपत्न्याः प्रशंसा स्वभावतः एव हृदयदाहिका। का स्त्री सपत्नीस्तुतिं सोढुं समर्था? परं सुस्वभावा पत्यनुकूलवर्तिनी, तत्सर्ववृत्तानुसारिणी रजनी प्रत्येक-परिस्थितिं विचारस्पृशा दृशा सुपरीक्ष्य कार्यक्षेत्रेऽवतरति स्म। पत्या सह कदाचित्कश्चित्कलहो न भवेत्, इत्यवधार्य सदा सावधानाऽवर्तत। अत एव स्वसम्मुखेऽपि पतिमुखात् तद्भगिनी-मुखाद् वा मृतायास्स्तुतिं श्रावं श्रावमपि मनस्येव दग्धा भवति स्म, परं पतिरोषभयाद् दाहस्य धूमं बहिर्न प्रकटयति स्म।

......धैर्यस्यापि सीमया भवितव्यम्, कथं सर्वं सह्यं भवेत्। अन्ततः एकस्मिन् दिने साऽऽत्मनस्संयमनेऽसमर्था बभूव। विवशतया तया एकदा एकान्ते स्वपतिसम्मुखे रुदत्या स्वसर्वं उद्गारा उद्गीर्णाः। "........स्वामिन्!........असह्यमिदं निवसनम्,........प्रत्येकक्षणेऽत्र........तस्या मृताया एव........प्रशंसा श्रूयते। ........न जाने कस्यां निकृष्टघट्यां ममागमनं जातं गृहेऽस्मिन्, यस्मिन् मृता-गृहिणी जीवितेव................" न जानेऽग्रे किं कथनमासीत्, परमश्रुभिरवरुद्धः कण्ठः, अत एव सा जोषमाप। उषाप्रेमपरः पाषाणहृदयो नवलकिशोरोऽनया वार्तया रुष्टोऽभूत्, तथा च तस्मिन् दिनेऽनशनो हि कार्य्यालये (दफ्तरे) जगाम। तत एव पतिपत्न्योः परस्परं सम्भाषणं समाप्तिमगात्। वराकी रजनी मर्दितकमलिनीव सर्वदा खिन्नमनस्का उदासीना, विचारमग्ना दिनानि वर्षाणीव व्यतिगमयति स्म।

इत्थमेव द्वित्राः सप्ताहा व्यतीताः।

× × × ×

"स्वामिनि! एकः सज्जनो द्वारि तिष्ठति भवद्मेलनाभिलाषी" सहसा सेवकोऽवदत् रजनीम्। एकान्ते एकस्मिन् प्रकोष्ठे स्थिता विमनस्का चिन्तापरा रजनी नेच्छति स्म केनचिदपि सह सम्मेलनं सम्भाषणञ्च। परं 'न जाने कोऽयं जनः? किमिच्छति? का चाऽस्य वार्ता?' इतीव ज्ञातुं सकुतूहलचेतस्का सा बहिराजगाम। अपश्यच्च समीपस्थवृक्षशाखाऽवलम्बिनं, त्रिंशद्वर्षवयस्कं, सुन्दरगात्रं युवानमेकम्। वहिर्निस्सरन्तीमिमामवलोक्य सहसाऽब्रवीत्सः "दिदृक्षुरहं बाबुनवलकिशोरस्य पत्नीम्"। "अहमेव" इत्युत्तरितवती सलज्जा अवगुण्ठनवती रजनी। चकितचकितः स भूयो भूयस्तस्या अवगुण्ठनावशिष्टाऽऽननं विलोक्य "......कथं ......भवती ..........? उषा नामाऽऽसीत्......भवत्या भिन्नाकृतिः" ससंभ्रममुवाच सः। "वर्षद्वयं व्यतीतम्.........मृता सा, अहन्तु............द्वितीया" इति जगाद रजनी। आगन्तुको विचारमग्नो जातः। पुनः पप्रच्छ रजनी, "किं भवान् जानाति मम सपत्नीम्" "आम्" सस्मितेन तेनोक्तम् "न केवलं तया सह मम परिचयमात्रमेव, अपितु आवयोः परस्परप्रगाढ़प्रेमाऽऽसीत्" पुनश्च गर्वेण विहस्याब्रवीत् "श्रीमति! सा मम प्रेमिकाऽऽसीत्, इति विश्वसनीयम्"।

रजनी यद्यपि स्वसपत्न्या नामापि श्रोतुं न वाञ्छति स्म, परं तथापि तस्या उपरि कलङ्कारोपमपि सोढुं न शशाक। कुपिता सशब्दं साऽवोचत् "न भवान् लज्जते एतादृश्या निर्दोषाऽबलाया उपरि मिथ्यादोषाऽऽरोपणे, या स्वशुद्धाऽऽचारं दर्शयितुमिह संसारेऽविद्यमाना? असाम्प्रतमिदं भवते" "मिथ्यादोषाऽऽरोपोऽयम्? नहि मिथ्या—तस्या हस्तलिखितपत्राण्येवाऽत्र प्रमाणानि। तस्या लेखमभिजानाति भवती?" पृष्टं तेन सावेगम्। "आम्, सम्भवत अभिज्ञास्यामि" उत्तरितवती रजनी। "पश्यतु पत्रमिदम्" इत्युक्त्वा स स्वहस्तधृतकर्गलसमूहादेकं पत्रं निष्कास्य तस्यै ददौ अकथयच्च "मदनो ममैव नाम, पठतु पत्रमेतद्"। रजनी पत्रं पपाठ, सर्वं स्पष्टतया व्यक्तं जातम्, यद् उषा स्वपतिभावेऽपि परपुरुषस्य मदननामकस्य प्रेमिका। "सर्वाणीमानीदृशानि, अहं तस्याः पार्श्वे आनयम्, परं सा नाऽस्ति संसारेऽधुना......" निःश्वसितेन तेन गदितम्। "किं निमित्तं पत्राणामानयनस्य?" पप्रच्छ रजनी। किञ्चिद्विचिन्त्य पुनः निःश्वस्योवाच सः "निराजीविकोऽहं चिराद् बहुपरिवारश्च। दारिद्र्यत्वादतीव दुःखी। अत एव मया चिन्तितं यदिमानि गोपनीयानि पत्राणि उषां दर्शयित्वा तस्या भर्त्सनां विधास्यामि रहस्योद्घाटनस्य भयं दर्शयिष्यामि च। लोकापवादभयाद् दास्यत्यसौ यदहं याचिष्यामि, परं......... हन्त!......अधुना......सा......" (किञ्चिद्विचार्य)......आम्......चिन्तितम्......"

अधुना पत्राणीमानि नवलकिशोरस्य सम्मुखे नेष्यामि, तमपि च लोके रहस्योद्घाटनं तेन च तस्य प्रतिष्ठाक्षतिं दर्शयित्वा यत् किञ्चिदिच्छामि प्राप्स्यामि। यदि न दास्यत्यसौ तर्हि जनतायां पत्राणां प्रसिद्धिं विधाय रहस्योद्घाटनं करिष्यामि, येन तस्य प्रतिष्ठायां पर्याप्ताऽऽघातो भविष्यति"। इति श्रुत्वा व्यचिन्तयद् रजनी, "मम पत्युः स्वस्मृतपत्नीमुषां प्रति असीमश्रद्धा। साऽधुनाऽपि पूज्यते देवीव। मम पतिमहोदयस्यान्तःपरमपूतप्रेमाऽस्ति। इमानि पत्राण्यवलोक्याऽतीव दुःखी भविष्यत्यसौ, तस्य विश्वस्तहृदये कुठाराघातो भविष्यति, मर्मवेदना च भविष्यति, सम्भवीदं यत्सा वेदना तत्र भवतेऽसह्या भवेत्, यतः साऽतीव विश्वासपात्र्यासीत्तत्रभवतः, विश्वस्तस्य ईदृशं विश्वासघातककर्म नूनमतीव दुःखप्रदम्। इतीव विचिन्त्य पतिदुःखदुःखिता रजनी पुनरपप्रच्छ—"किम् भगवान् मम स्वामिनमवश्यं दर्शयिष्यति पत्राणि ?" "विवशोऽहं दारिद्र्यत्वात्" उक्तं तेन। रजनी भूयो व्यचिन्तयत्, "भवतु, दर्शयतु कामं पत्राणीमानि मम स्वामिनं प्रति। किमहं कुर्याम्, नाऽत्र मम सम्बन्धः कश्चित्। अतो मम हस्ताक्षेपो न युक्तोऽस्मिन् विषये। मम पतिमहोदयोऽपि प्रतिदिनं मां तिरस्कृत्य तामेव प्रशंसति, अद्य ज्ञास्यति यत्सत्येयं रजनी असत्या सा उषा। उषायै एव तत्रभवतः प्रतिष्ठा नश्यतु स्थिरी भवतु वा, नास्ति किञ्चिन्मात्रमपि प्रयोजनम्।"......परन्तु तत्क्षण एव एष विचारो विलीनो बभूव। पत्युः प्रेममयी मूर्तिर्नयनयोरग्रे नृत्तवती दरीदृश्यते स्म, व्यचिन्तयच्च पुनः "अस्मिन् विषये ममोदासीनता न युक्ता। पत्राणि विलोक्य व्यथितो भविष्यति मे स्वामी। यः पूर्वं प्रतिक्षणे मम सम्मुखे तां शंसति स्म, अधुना आत्मग्लानिवशाद् मम पार्श्वे आगमनेऽपि त्रपामनुभविष्यति, इति न युक्तम्। मया स्वकर्तव्यपालनं विधेयम्। स मम स्वामी, ईश्वरः, प्रभुश्चाऽस्ति तस्याऽसह्यदुःखं मयाऽपि सोढुमशक्यम्। इतीव मनसि विचिन्त्य तं पप्रच्छ—"कियतीर्मुद्रा इच्छन्ति भवन्तः ?" "षष्टिः" इति उत्तरं दत्तं तेन। रजन्याः पार्श्वे मुद्राणान्त्वभाव एवाऽऽसीत्, परं तस्या—मनोहरकलेवरं सुवर्णालङ्कारैरलङ्कृतमासीत्। तस्याःकण्ठे सुवर्णसुवर्णमाला शोभते स्म, या षष्टितोऽप्यधिकमूल्यवती, तदेव तस्मै ददौ रजनी। मदनः सुवर्णमालां नीत्वा विस्मितःसन् जगाद "अदृष्टपूर्वेतादृशी पतिव्रता स्त्री, या सपत्न्या रहस्योद्घाटनभयात् स्वशृङ्गारस्य वस्तुनोऽपि बलिं दद्यात्। गृह्णातु पत्रसमूहम् अपूर्व-देवि ! धन्या त्वम्, तुभ्यं मम नतिःस्यात्"। मदनो वव्राज।

मदने गते सति रजनी भूयो व्यचारयत्, यदि स्वामिमहोदय आगच्छेत्, तर्हि सवगुप्तरहस्यस्योद्घाटनं भविष्यति। यद्यपि लोकनिन्दातस्तु रक्षा जाता, परमिमां

वार्तां ज्ञात्वा तस्य हृदये कुठाराघातो भविष्यति"। इत्येव विचार्य त्वरं तानि पत्त्राणि दग्धुं पाकशालामधावत् ।

× × × ×

अद्य बाबू-नवलकिशोरोऽपि कार्ये आसक्त्यभावादुदासीनत्वाच्च मनस्येव वेदनामनुभवतिः स्म। अद्य तस्योपरि रजन्या अप्रसन्नताया विशेषप्रभावो जातः। मनस्तस्य पश्चात्तापतापे दग्धं बोभूयते स्म। चेतस्तं धिक्करोति स्म यत् "तवैव दोषोऽत्र न रजन्याः। उषा गता, तस्याः प्रेम रजनीप्रेम्णो बाधकं भवितुं न शक्यते।। रजन्य अपि त्वयि पूर्णोऽधिकारः, स्वामीश्वरवत् सेवते सा। तव दुःखे दुःखिनीं, तव सुखे सुखिनीं तां रुष्टीकृत्य महानर्थो विहितस्त्वया।" इति पश्चात्तापे समयो यातः। "अहमद्यैवाऽधुनैव गृहं प्राप्य तां प्रति क्षमां प्रार्थयिष्ये" इतीव विचारेषु निमज्जन् सत्वरमेव गेहमाययौ। तत्क्षण एव रजनीदिदृक्षुः स्वप्रकोष्ठेऽनागत्य तस्या एव प्रकोष्ठं प्रति चचाल। वर्त्मन्येव विधवाभगिनीमपश्यत्, अपृच्छच्च, "क्वास्ते रजनी?"

बाबू नवलकिशोरस्य विधवाभगिनी परच्छिद्राऽन्वेषिणी, अत्यन्तदुस्स्वभावा, कुटिलमतिः क्रूरा चाऽऽसीत्। परनिन्दैव तस्या दैनिककार्यम्। पराऽहिताऽवहितमनस्का परापकारपरा यदेव चिन्तयति परेषां पीडनायैव। उषाया मृत्योरनन्तरं सा गृहस्वामिनी बभूव। रजन्या आगमनेन तस्याः स्वामित्वे प्रहारोऽभूत्। अत एव रजनीं प्रति सा ईर्ष्यालुः। अधुना "क्वास्ते रजनी?" इति नवलकिशोरेण पृष्टे सति सर्वतो विलोक्याऽब्रवीत् सा "अहं त्वां किञ्चिद् वक्तुमीहे, अतो मामनुसर" इत्युक्त्वा निर्जन एकस्मिन् प्रकोष्ठे गता। बाबूनवलकिशोरो। व्याकुलोऽभूत्, यत्कदाचित् मत्तो विमनस्कया रजन्या किञ्चिद् भयानकं कार्यन्तु न विहितम्। किमात्महत्या विहिता, गृहोत्सर्जनं, व्यभिचरणं वा किं कृतं तया। इतीव चिन्तयन् "शीघ्रं ब्रूहि—का वार्ता?" इत्यपृच्छत् भगिन्यवोचत्, "महादुःखप्रदवार्तेयम्, यत् तव रजनी दुश्चरित्रा तथा, अपतिव्रताऽस्ति। परपुरुषेण सह तस्याः सम्मेलनम्। स रजनीकामुको युवकोऽद्यात्राऽऽगतवान्, मया दृष्टश्च। तस्य रजनीजारस्य पार्श्वे रजन्या हस्तलिखितानि पत्त्राण्यप्यासन्। स रजनीमभत्सयत्, यत् स एतत् पत्त्राणि भवन्तं दर्शयित्वा रहस्योद्घाटनं विधास्यति, नो चेत् षष्टिमुद्रा देयाः। अत एव रजन्या भवद्-भयात् सुवर्णमाला तस्मै दत्ता, पत्त्राणि च प्रतिनीतानि, इति सर्वं मया स्वनेत्राभ्यां दृष्टम् तथा च स्वश्रोत्रयोः श्रुतं मयैतद् यद् रजनी भयविह्वला तं कथयति स्म "किमवश्यमेव दर्शयिष्यति पत्त्राणि स्वामिनम्?" तेनोक्तम् "एवम्" तदा सा

तस्मै स्वसुवर्णमालां समर्पयत् स तां नीत्वा पत्राणि च दत्त्वा जगाम। ततऽपश्चाद् तानि दग्धुं रजनी पाकशालां गता।

नवलकिशोरःकिंकर्तव्यविमूढ इव बभूव। तस्य शिरः चकम्पे, एतादृशो विश्वासघातः। कार्यालयागमनमार्गे एकस्तादृशो युवकस्तेन दृष्ट आसीत्, अत एव भगिनी शब्देषु पूर्णविश्वासो लक्षितो बभूव। धावन्नेव पाकशालामाप। मुखञ्च विवर्णतां जातम्। पाकशालाद्वारत एव व्यलोकयत्सः, यद् रजनी ज्वलतोऽग्नेः सम्मुखे स्थिता कर्गलसमूहं दहतिस्म। स शब्दं चीत्कारेणाऽब्रवीत्किशोरः "रजनि !" ससम्भ्रमा रजनी भीता, तस्या नेत्रे दोषयुक्ते प्रतीयेते स्म, "किमिदं क्रियते त्वया" "एवमेव व्यर्थकर्गलानि दग्धुमत्रागताऽहम्" अति कठिनतया तयोत्तरितम्। "इमान्येव तानि पत्राणि यानि लिखितानि त्वया स्वजारस्य पार्श्वे" स्पष्टशब्दैरब्रवीत्सः।

एतच्छ्रुत्वा रजन्यां वज्राघातोऽभवत्। तयेदं तु चिन्तितमपि नाऽऽसीत् यदित्थं मयि दोषारोपोऽपि भविष्यति, तदा किमुत्तरं दास्यामि। उपायश्चिन्तितस्तयाऽपायो न चिन्तितः। किं कर्तव्यविमूढा साऽधुना किमुत्तरं दद्यात्।

रजन्या मौनं घृतवत्तस्य क्रोधाग्निं प्रजज्वाल। 'मौनं स्वीकृते लक्षण'मिति विचार्य क्रोधाभिभूतः जगाद सः "किं सत्येयं वार्ता रजनी नाऽब्रवीत्। क्रोधाग्निदग्धऽ पुनरवोचत् सशब्दं "विश्वासघातिनि ! पापिनि ! दुराचारिणि ! मया त्वयि विश्वासो विहितः, तस्याऽयं परिणामः। मया तुभ्यं स्वहृदयं समर्पितं, तस्याऽयं प्रतिकारः। आ··· कुलकलङ्किनि ! त्वया किं विहितम्" यद्यपि नवलकिशोरः गम्भीरव्यक्तिरासीत्तथापि मर्माघातत्वात् तस्य मनऽ पुनः पुनः तस्या जीवनलीलां समाप्तुं प्रेरयति स्म। परं विचारः कोपमजयत्। मनः साक्षीभूय कथयतीव स्म, यदसत्येयं वार्ता। अतः स गन्तुमैहत। परं तस्मिन्नेव समये तस्य दृष्टिरेकस्मिन्नर्धदग्धकर्गले पपात, यदन्येभ्यऽ पृथग् ज्वलति स्म। शीघ्रमेव स तमुदस्थापयत्। "इमं नोत्थापयतु भवान्" इत्युक्त्वा रजनी पतिहस्तात्कर्गलं नेतुमयतत्। परं नवलकिशोरोऽभर्त्सयत् ताम्। रजनी दुःखिताऽभूत्। यद् यद्रहस्यं स्वश्रृङ्गारवस्त्वपि दत्त्वा महायत्नेनारक्षत्। तदधुना प्रकटयिष्यते।

बाबूनवलकिशोरस्तत्पत्रं सावधानतया व्यलोकयत् व्यचिन्तयच्च, "उषाया लेखोऽयमिति प्रतीयते हस्ताक्षरमपि तस्या एव किमत्र रहस्यं भविता" इति नावागच्छन् पठितुमारेभे। यत्किञ्चिद् ज्वलनावशिष्टमासीत्, तेन सर्वं ज्ञानं बभूव। जगाद सः "उषायाऽपत्रमिदं प्रतीयते" "बाढम्" इत्युवाच रजनी। विस्मयाऽऽविष्टचित्तो नवलकिशोरोऽचकथत् रजनीम् "रजनि ! किमत्र रहस्यम्, स्पष्टी

करणीयम्" रजनी व्यचारयत्, यदधुना रहस्यगोपनं नोचितम्। अत एव सा सर्वमादितोऽन्तपर्यन्तं वृत्तं यद्देवाऽऽसीत् प्राकटयत्।

बाबूनवलकिशोरः सस्मार, बहुसमयो व्यतीतः, अस्यामेव वीथ्यां मदननामक युवकः कलरवकण्ठः सङ्गीतविद्यानिपुणः प्रतिवसति स्म। रजनीं पप्रच्छ सः "कथं त्वया स्व-सुवर्णमाला दत्ता। रजनी जगाद "मदनो यदावागच्छत् यदुषा मृता तदा स इमानि पत्राणि भवन्तं दर्शयित्वा लोकापवादभर्त्सनां दत्त्वा भवतः किञ्चित् प्राप्तुमैच्छत्। मया चिन्तितम्, यद् भवान् देवीवद्मन्यमानाया उषाया विषये इत्थं श्रुत्वाऽतीव मर्मवेदनार्तो भविष्यति। अतो भवत्क्लेशं स्वक्लेशं मन्यमाना व्याकुलाऽभवम्; तथा च भवत्पार्श्वे गमनात्प्रागेव स्वसुवर्णमालां दत्त्वा पत्राणि गृहीतवती।

अतिप्रसन्नतयोत्फुल्ललोचनस्तस्या असीमपतिभक्तिं दृष्ट्वा श्रद्धया गद्गद-कण्ठोऽब्रवीन्नवलकिशोरः "धन्या त्वं देवि! तव प्रशंसाविधाने न समर्थोऽहमिति मन्ये। कया जिह्वया त्वां प्रशंसामि। यद्यपि तव प्रशंसायै मम हृदये नास्ति भावानामभावः, परं वर्तते भावं प्रकटी कर्तुं जिह्वाशक्त्यभावः शब्दानामभावश्च। अधुना मया संज्ञा लब्धा। पूर्वन्तु त्वयाहं संज्ञाशून्यो विहितः। किमभवत्तव, यदीदृशं मौनमालम्बितवती यथा निखिलदोषस्त्वयैव विहितः। यदि निःसंज्ञोऽहं किञ्चित्तवानिष्टमकरिष्यम्, तदा किमभविष्यत्। न युक्ताभिनयो विहितस्त्वया" "स्वामिन्! क्षमाप्रार्थिन्यहम्" इत्युक्तवत्याः तस्या ओष्ठयोर्मन्दहास्यं ननर्त।

बाबुनवलकिशोरो मन्दहास्ये मुग्धो बभूव "नाऽयं तव दोषः प्रिये! ममैव" इत्युक्त्वा प्रफुल्लितवदनो विकसितनयनो विकचहृदयकलिकोऽसीमप्रसन्नतया प्रसन्नां पतिव्रतां तां रजनीं बाहुपाशे बद्ध्वा दृढमालिलिङ्ग।

---

## "सहसा विदधीत न क्रियाम्। अविवेकः परमापदाम्पदम्॥"

अस्मिँल्लोके ये मानवाः विचारं विना कार्य्यं कुर्वन्ति ते गर्त्ते पतन्ति। ये सम्यग् विचार्य्य कार्य्यं कुर्वन्ति त एव निजकार्य्ये सफलमनोरथाः भवन्ति। कठिनतममपि कार्य्यं तैस्सुसाध्यम्। सर्वप्रत्यक्षमिदम् प्रमाणं यत् ये सहसा कार्य्यं कर्त्तुमुद्यता भवन्ति तेऽवश्यमेव असफलतां यान्ति। तथा तेषाङ्कार्य्याणामुत्तरकालोऽपि कुत्सित एव भवति। लोके प्रथिताः लोकमान्यतिलकः, महात्मा गोखले, लाला लाजपतरायः, वीर सावरकर महामान्य मालवीयादयो महान्तः सर्वे सम्यग्विचार्य्य सुचारुरूपेण कार्य्यं कृतवन्तः तस्य फलमिदं सञ्जातं यत् समाजः विनाशात् रक्षितः।

त एतादृशं विलक्षणं कार्य्यं कृतवन्तः, यद् दृष्ट्वा विदेशीयजनाः ज्ञानवन्तोऽभूवन्, इमे वस्तुत एव विद्वज्जनाः वीराश्च सन्ति इति। तथा ते तेषां मान्यजनानां विलक्षणङ्कार्य्यं दृष्ट्वा आश्चर्य्यान्वितास्संजाताः, न केवलञ्चकिता एव अपि तु ते तान् द्रष्टुम् अत्युत्सुकास्सञ्जाताः, तथा भारते इहागत्य तेषां दर्शनान्यपि कृतवन्तः, ते मान्यजनाः एतादृशाः प्रभावशालिनः आसन् सन्तिच यत् तेषामभूतपूर्वकार्य्यं चमत्कारेण ते वैदेशिकाः स्वयमेव वशीभूताः अभवन्।

इदानीन्तना जनास्त्विच्छन्ति यत् सर्वे अस्मान् नेतॄन्नेव कथयन्तु, प्रधानान् गणयन्तु अस्माकं नेतृत्वे सभादिकं कुर्व्वन्तु। किन्तु ते स्वयं दृढप्रतिज्ञा न भवन्ति सुशोच्य कार्य्यंन्न कुर्वन्ति, आवेशे अविचार्य्य कार्य्यं कर्त्तुमुद्यता भवन्ति, पुनर्यदा असफलतामधिगच्छन्ति तदा निरुत्साहा भवन्ति, दैवोपरि दोषान् ददति। इदमेव कारणमस्ति यत् देशस्यास्याधोगतिः सम्भूता, धर्मो नष्टप्राय एव संजातः। ते यत्र गच्छन्ति, अनादृता भवन्ति तथा सर्वेषां पादप्रहारं सहन्ते। निजधर्म्मस्य, जातेस्समाजस्य च गौरवरक्षार्थं किमपि न कुर्व्वन्ति। तेऽस्माकम् पूर्वजास्तु दृढप्रतिज्ञाः आसन्, त उपदिष्टवन्तः यत् "भो मानवाः प्रत्यूषमधुना; निशापतिः भास्करभयात् पश्चिमार्णवेऽस्तं गतः। पक्षिगणा आहारस्य कृते निजनीडान्निर्गतवन्तः। यूयमपि उत्तिष्ठत जाग्रत। युद्धं कुरुत, निजजीवनस्य देशजातिसमाजधर्म्माणामुपरि त्यागं कुरुत। कदा पर्य्यन्तम् निद्रादेव्याः क्रोडे स्वप्स्यथ।"

तस्मिन्काले देशोत्थानस्य किं कारणमासीत्? यतस्ते सहसावेशे आगत्य कार्य्यं न कृतवन्तः, ते धैर्य्यशालिन आसन्, तथा ते सुविचार्य्य सुचारुरूपेण कार्य्यं सम्पादितवन्तः। ते गम्भीरा आसन्, तेषान्धीरपि गम्भीराऽसीत्। भारतीय एव नराधमः, नरपिशाचो दर्पोन्मत्तः, दुष्टदुर्योधनोऽपि अविचार्य्य निजमूर्खतया द्रौपद्याः केशाकर्षणं कृतवान्, न विचारितवान्तस्यायतिम्। अतएव राज्यं नष्टम्, स्वयमपि महाबलिना भीमेन हतः।

प्रार्थयेऽहं जगदाधारभूत-श्रीमन्नारायणसविधे यत् परमकारुणिकोऽसौ अस्माकम् अज्ञानतिमिरं विनाशयन् सुबुद्धि प्रदानं कुर्य्यात् यद्वयम् सततमेव सुविचार्य्य कार्यं कुर्वाणाः सुमहतीं सफलतां लभेमहि।

---

## महोपाध्याय-सनातनधर्ममार्तण्ड-धर्म-शास्त्राचार्य-विद्यावागीशानां पं० श्रीरेवाशङ्कर शास्त्रिणां मोहमयीस्थानां बहुमान-सुवर्ण-चन्द्रक प्रदान—महोत्सवः।

स्व० शेठ देवीदास लल्लुभाई संस्कृत-पाठशालाऽध्यापकानां सुप्रसिद्ध-धार्मिक लेखक महोदयानां पं० श्री रेवाशंकर मेघजी पुरोहितानां सम्मानप्रदानं महता समारोहेणेदानीमेव मोहमय्यां संवृत्तम्। पं० श्री रेवाशंकर शास्त्रिभिः सनातनधर्मरक्षार्थै लेखनसंभाषणादिप्रकारेण धार्मिकग्रन्थप्रकाशनेन च बहुविधा सेवा कृता। इदानीमेव तैः सौराष्ट्रान्तर्गतगुप्तप्रयागादितीर्थमाहात्म्यात्मको ग्रन्थो व्यरचि। एतत्सर्वमुपलक्ष्य ता० ३०-३-४१ दिने सायं ४-३० हीराबागाभिधे रमणीये स्थाने सुप्रसिद्धदैनिक "जन्मभूमि" पत्रस्य तंत्रिमहोदयानां श्री अमृतलाल दलपतभाई शेठ—इत्येतेषामध्यक्षत्वे सभैका संमिलिता। प्रेक्षकाणामुपस्थित्या सभास्थानं संकुलं समभवत्। नन्दलाल बालगन्धर्वाणां संगीत मंगलेन सभाकार्यारंभे सति श्री मनुभाई पंड्या सॉलिसिटर महोदयैरादौ पं० श्री रेवाशंकर शास्त्रिणां जीवनपरिचयः कारितः। ततोऽन्यान्यसंस्थाभ्यो देशान्तरस्थिताभ्योऽनेक व्यक्तिभ्यश्चागतानां विद्युत्संदेशानां पत्रसंदेशानां च वाचने जाते ततः कांग्रेस सभामंत्रिणां श्रीअम्बालाल ज्ञानीमहोदयानां श्री लिमलशंकर शास्त्रिणां नैकेषांच वक्तॄणां व्याख्यानानि समजायन्त।

ततः पं० श्रीरेवाशंकर शास्त्रिभ्यो राजते—"कास्केटा" ख्ये सन्निहितस्य सम्मान पत्रस्य, सुवर्णचन्द्रकस्य बहुमानपुरःसरं बहुसंख्यकसंस्थाव्यक्तिद्वारा पुष्पहारादीनां समर्पणमभूत्। एवंविध बहुसम्मानप्रदानस्योत्तरे श्रीरेवाशंकर शास्त्रिभिरभिहितं यदेतत्सर्वं भवतां गुणरुचितैव। सेवकानांत्विदं कर्तव्यमेव।

अद्यत्वे धर्मव्याजेन यच्छलमभ्युपगम्यते तत्स्थाने सत्यधर्मस्य प्रतिष्ठा तत्प्रचारश्च कथं भवेत्। इत्यनुसंधानायैव सदा प्रयत्यते मया। भारतीया संस्कृतिरेव सर्वेषामभ्युदयहेतुः। संहत्यैव साध्या प्रगतिः सर्वैरिति। ततोऽध्यक्षमहोदयैः शास्त्रिमहोदयानां कार्ये साफल्यमभिकांक्ष्य धार्मिकास्विव राष्ट्रीयास्वपि सेवासु प्रदेयमवधानमित्याग्रहीतम्। उपकृति स्वीकृतेरनन्तरं "बन्दे मातरम्"। इति प्रसिद्धमातृभूमिवन्दनस्यमधुरसंगीतध्वनिभिः साकं सभाविसर्जनं समभवत्।

प्रेषकः पं० देवकृष्ण दवे। ( साहित्यरत्नम् )

---

# सूर्योदयः ।

## त्रैभाषिको विशेषाङ्कः ।

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जड़वाद-कैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

षोडशे वर्षे १६ | ज्येष्ठ-पूर्णिमायाः १९९८, जून १९४१ । | १२ द्वादशी संख्या

### मंगलाचरणम्

नमोनमस्तेऽस्त्वृषभाय सात्वतां
विदूरकाष्ठाय मुहुः कुयोगिनाम् ।
निरस्तसाम्यातिशयेन राधसा
स्वधामनि ब्रह्मणि रंस्यते नमः ॥

——❃——

## सनातनधर्मणां संस्कृतिः ।

सनातनधर्मावलम्बिनां मानवानां धर्मो यथाऽतिव्यापको विश्वजनीनश्च विद्यते, यथा च तेषां सामाजिकी सुव्यवस्था सुदृढा पृथिवीस्थ-सर्वमानवसमुदायानां सामाजिकव्यवस्थया वैज्ञानिकी श्रेष्ठतरा विलक्षणा विशिष्टा च विद्यते, तथैव तेषां विविधविषयेषु वैशिष्ट्यमप्यस्ति । सनातनधर्मिणामाध्यात्मिकाधिदैविकाधिभौतिक-सत्तायां विश्वासस्तथा तेषामनादिसिद्धा संस्कृतिरनादिरेषा धर्मभित्तिस्था सभ्यता च स्वीयमतिविशिष्टं सर्वमान्यं महिमानं बिभर्ति ।

यद्यपि धर्मार्थकाममोक्षाख्ये चतुर्वर्गे पूर्वाचार्य्याणां पृथक् पृथक् परिशीलनीय-प्रतिभाप्रकर्षप्रदर्शको विमर्शो विद्यते, तथापि एषु चतुर्ष्वपि धर्मस्यैव प्राधान्य-मित्यार्य्यजातेः सुदृढो विश्वासः सुव्यवस्थिता च धारणा हृदयनिहिता सञ्जातास्ति ।

सा हि आर्य्यजाति धर्मद्वारैवार्थकाममोक्षाणामधिगतिरिति सर्वथा सर्वतः सर्वदा स्वशास्त्रप्रमाणतः सिद्धान्तयति। उक्तञ्च सर्वशास्त्ररहस्यविदा भगवता वादरायणेन श्रीमद्भागवते—तथाहि—

धर्मस्य ह्यपवर्गस्य नार्थोऽर्थायोपकल्पते
नार्थस्य धर्म्मैकान्तस्य कामो लाभाय हि स्मृतः॥
कामस्य नेन्द्रियप्रीति र्लाभो जीवेत यावता
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः॥ इति।

इत्थं सनातनधर्मावलम्बिनां सदैवात्मतत्त्वे लक्ष्यं तिष्ठति, इत्यत एवास्य लक्ष्यस्योर्ध्वगतिपरकस्य पूर्त्तये सनातनधर्मे मस्तकोपरि शिखाधारणस्य कृते सुदृढा आज्ञा विद्यते। शिखा हि सनातनधर्म्मानुयायिभि र्देवमन्दिरत्वेन मन्यते। तत्र धारणाद्वारा ते देवनिवासपीठमामनन्ति। भगवताऽपि श्रीमद्भगवद्गीतायामुक्तम् यत् सदैव मनः स्ववशे कृत्वा उर्ध्वं निनीषेत् नास्मै कदापि निम्नमार्गे गन्तुं प्रसरं दद्यादिति। सनातनधर्मसिद्धान्ते इदं सुनिश्चितं विद्यते, यद् आत्मोन्नतिप्रवृत्तिकृन्मानवो दैवसम्पन्निविष्टो भवति। इन्द्रियभोगासक्तो हि आसुरसम्पन्निविष्टो भवतीति। दैवसम्पत्परिवर्द्धनेच्छयैव सनातनधर्मावलम्बिनां मानवानां जीवनं यज्ञमयं भवति। एतस्यैव यज्ञमयस्य जीवनस्य साफल्यकामनया सनातनधर्मावलम्बिनो द्विजगणा यज्ञसूत्रं सदा स्वस्कन्धे बिभ्रति। यद्धि धर्मकृत्यम्, आह्निकं स्वकर्तव्यञ्च जीवनोपयोगि (स्वीयव्यवहारकृत्यमिति यावत्) श्रीमतो लोकनियामकस्य परमेशितुः प्रसन्नतायै भवति। यस्य च फलं दैवे जगति उपस्थाय उच्चपदस्थानां देवानां सम्बर्द्धनकारणतामुपयाति, तदेव धार्मिकं स्वीयं कृत्यं यज्ञशब्दभाग्भवति। सनातनधर्मावलम्बिनां सर्वमेव कृत्यं यज्ञमयं भवतीत्येवादर्शो भारतीयार्याणाम्।

सनातनधर्मणामार्य्याणां देव्य आर्य्यमहिलापदभाजो विशेषतश्चोच्चकुलाभिमानिन्यो मनस्यपि परपुरुषचिन्तनं पापाधायकं मन्यन्ते, तासु हि सतीत्वधर्मस्य बीजं सदैव सुरक्षितं तिष्ठति। इत्यत एव हेतोः सनातनधर्म्मावलम्बिसमुदाये विधवायाः पुनरुद्वाहो निषिद्धः। पतिप्राणा सतीत्वव्रतपरायणा आर्य्यमहिला त्रिलोकपावनी भवतीत्यपि सनातनधर्मशास्त्रसिद्धान्तो विद्यते। इत्यत एव साक्षाज्जगज्जनन्या दुर्गायाः स्वरूपम्मत्वा सनातनधर्मसमुदाये कुमारीणां पूजनं क्रियते। सौभाग्यवती गृहिणी (आर्य्यमहिलेति यावत्) न केवलं दुर्गापीठस्थानीयेत्युच्यते अपि तु विशेषवस्त्राभरणा सौभाग्यवती विशिष्टदेवीस्वरूपेति तां दृष्ट्वा मनसा प्रणमेदित्यपि सनातनधर्मशास्त्रे तासां देवीस्वरूपत्वमेवोपदिष्टं विद्यते।

विधवा आर्य्यमहिला तु संन्यासिवदभ्यर्चनीया समादरणीया चोपदिष्टाऽस्ति। अत एव विवाहादिप्रवृत्तिमार्गकार्य्ये यथा संन्यासिनां प्रवृत्ति निषिद्धा तथैव विधवानामपि विवाहादौ प्रवृत्तिमार्गपरके कृत्ये गमनं निषिद्धं दृश्यते। ता हि निवृत्तिमार्गप्रवृत्ताः संन्यासिवदेव प्रवृत्तिमार्गकृत्येषु संन्यासधर्मभाजो विगणिताः। यद्यपि सम्प्रति अन्यत्रापि सभ्यजातिषु क्वापि रजोवीर्य्य-शुद्धिसमादरणं दृश्यते, किन्तु आध्यात्मिकोन्नतिशीलास्वार्य्यजातिषु तु तां रजोवीर्य्यशुद्धिं वर्णधर्ममर्य्यादया विवाहपद्धतिविमर्शतो गृहस्थाचारविचारविवेकेन च परां काष्ठां प्रापयितुं प्रयत्नो विहितोऽवलोक्यते।

पृथिव्याम् अन्यासां विविधसभ्यजातीनामुपासनापद्धतौ लौकिकखाद्यादिभोग-पदार्थानामधिगमाय प्रार्थना कृता दृश्यते। परन्तु सनातनधर्मावलम्बिनामार्य्याणा-मुपासनासु बुद्धितत्त्वस्योपलब्धये प्रार्थनाऽवलोक्यते। तत्र सर्वाभ्यर्हिताया उपासनायाः प्रथमसोपानस्वरूपा गायत्रीमन्त्रोपासनैव प्रमाणम्।

शुद्धाशुद्धविवेकस्यापि सनातनधर्म्मावलम्बिन्यामार्य्यजातौ परा काष्ठा दृश्यते। सनातनधर्मिसमुदायः स्वशरीरे एव एतावन्तं शुद्धाशुद्धविवेकं करोति, यत् येनाङ्ग-प्रोक्षण-वस्त्रेण नाभेरधोभागस्य आर्य्याणामङ्गस्य मार्जनं जातं तेनैव वस्त्रेण नाभेरुपरि-भागस्थस्याङ्गस्य प्रोक्षणं तावन्न भवितुमर्हति यावज्जलादिना प्रक्षाल्य तद्वस्त्रस्य पूर्णा शुद्धिर्न जायेत। इत्यत एव द्विजगणः सर्वदा त्रिगुणात्मकं यज्ञोपवीतसूत्रं स्वस्कन्धे परि-दधाति यतश्चाध्यात्माधिदैवाधिभौतशुद्धिः सर्वदैव स्मृतिपथं समारूढा स्यादिति। देश-सेवाया बीजारोपणं रजोवीर्य्यशुद्धिद्वारा प्रतिगृहं निहितं विद्यते। कालसेवाया बीजारोपणञ्च त्रिकालसन्ध्यायाः सुदृढनियमद्वारा प्रतिद्विजातिजनं निहितं विद्यत इति सनातनधर्मावलम्बिन्या आर्य्यजातेः संस्कृति-रहस्यपर्य्यालोचकानां मनीषिणामेव ज्ञातं स्यान्नान्येषाम्।

सनातनधर्म्मावलम्बिसमुदायानां सदाचारपरम्परायाम् ज्ञानवृद्धास्तपोवृद्धाः पर्य्यायवृद्धाः शीलवृद्धा वयोवृद्धा इत्यादयो बहवो वृद्धाः परिगणिताः सन्ति। तत्र यथा ज्ञानवृद्धानां सर्वाभ्यर्हितमासनं प्रदत्तम् विद्यते। यथा च मातापितॄणां गुरुपादानां पूजा-पद्धतिर्निर्दिष्टास्ति, तानि सर्वाण्यपि कृत्यानि पृथिव्यामन्यासां सभ्यजातीनां कृते आश्चर्य्यचमत्कारजनकतया विस्मयमेवादधति।

सनातनधर्मावलम्बिन्या आर्यजातेः धर्ममूलिकेयमार्य्यसंस्कृतिः शत्रुणा सह युद्धे प्रवृत्तस्यापि पुंसः कीदृशो व्यवहारो भवितुमर्हतीति विषये सुदृढं नियमयति। यां युद्धव्यवहारपद्धतिं साम्प्रतिक्यः सभ्यम्मन्या जातयस्तु स्वप्नेऽप्यवगन्तुं न समर्था

किमुत व्यवहरणे। अत्रैकं पौराणिकमुपाख्यानमुदाहरणतया समुपहरामः। तथाहि वीरपुङ्गवोऽर्जुनो यदा खाण्डववनं ददाह, तदानीं तत्र वनेऽसुरराजो मयनामको दानवोऽपि दह्यमान आसीत्। स च करुणस्वनं चीत्कुर्वन्, त्रातारमाकारयामास। तदीयमार्त्तनादं श्रुत्वा करुणावरुणालयो भगवान्देवकीनन्दनोऽर्जुनमसुरराजस्य प्राणरक्षार्थं वरुणास्त्रप्रयोगमादिदेश। इत्थञ्च प्रसिद्धतरस्य शिल्पशास्त्रदक्षस्य मायामयविद्याविदुषो मयस्य प्राणरक्षायां जातायां तेनार्जुनोऽभ्यर्थितोऽभूद् यन्मत्पार्श्वे बहूनि एवंविधानि अस्त्राणि शस्त्राणि च सन्ति येषां प्रयोगज्ञानेन आकाशे गुप्तचराः सैनिकाः स्वशत्रून् हन्तुमर्हन्ति। जले प्रच्छन्नाः सन्तो जलोपरि स्थितान् समूलं विनाशयितुं शक्नुवन्ति। दुर्गस्थितानपि शत्रून् दूरत एव समूलघातं हन्तुमर्हन्ति। स्वयं प्रच्छन्नाः सैनिकाः पलायमानान् शत्रून् निहन्तुमर्हन्ति यथेदानीं पाश्चात्यदेशे युद्धेषु परस्परं प्रयुञ्जन्ति योद्धारः। एतस्योत्तरं यदर्जुनेन दत्तं विद्यते तद्धि भारतीयशासकानां शिरः सर्वथा सर्वदा समुन्नयति। तदेव हि भारतीयार्य्यमर्य्यादायाः प्रतीकं ज्ञेयम्। मयदानवस्य वाक्यं श्रुत्वा विहस्यार्जुनेनाभिहितम्। अयि प्रत्युपकारिन्! भवदभिमतं कर्तुमहं सर्वथाऽसमर्थोऽस्मि। यतो हि वयमार्य्या न वयं प्रच्छन्नयोधिनो नापि पलायमानान् शत्रून् पृष्ठतो निहन्मः, नैव चास्माकं नये दूरे स्थिताः कार्य्यान्तरव्यापृता योद्धारोऽपि शरव्या उद्दिष्टा इत्यतो भवतोऽस्त्राणां शस्त्राणाञ्चोपयोगो न मया कर्तुं पार्य्यते इति।

इदं हि एकमेवोपाख्यानमार्य्यजातीनां धार्मिकायाः युद्धनीतेर्विशदनिदर्शनं विद्यते। साम्प्रतिकानां पाश्चात्ययुद्धविज्ञानवेदिनां युद्धप्रणालीं पश्यतां मानवानां पुरतो भारतीयार्य्यमर्यादायाः स्फुटमेव ज्ञानं भवतीति किमत्र बहूनोक्तेन।

इत्थञ्चार्याणां शिक्षापद्धतिरपि अन्यादृशी विद्यते। तथाहि भारतीयार्य्यसंस्कृतौ स्त्रियो हि भूमिरूपिण्यः पुरुषाश्च बीजस्वरूपाः सम्मताः। अतश्चोभयोः शिक्षाप्रणाली, धर्माः (कर्तव्याणि) अधिकाराश्च विभिन्ना एवानुमताः। अतो हि या शिक्षा पुरुषाणामुपयोगिनी सैव स्त्रीणामपि उपयोगिनी कदापि नैव भवितुमर्हति। अत एव मन्वादिभिः स्त्रीणामादर्शस्वरूपा शिक्षा पुरुषतोऽन्यादृश्येवोपदिष्टेत्यपि भारतीयार्य्यमर्य्यादाया वैशिष्ट्यम्।

आर्य्याणां वेदाः धर्मशास्त्राणि च वैदिकसप्तदर्शनविज्ञानमूलकान्येव प्रमाणवन्ति सुरक्षितानि च भवन्ति। आर्य्याणां सप्तापि दार्शनिकविज्ञानानि सप्तज्ञानभूम्यनुसारेणैव सुदृढ़ानि सुमहिमशालीनि च सन्ति। यथा बहिर्जगतोऽवलोकनाय वाह्येन्द्रियस्य चक्षुरादेः प्रयोजनं भवति तथैवाऽभ्यन्तरजगतोऽवलोकनाय किं बहुना सूक्ष्मा-

तिसूक्ष्मतत्त्वस्य परमेशितुरपि साक्षात्कारं कर्तुं दार्शनिकनेत्राण्येव सामर्थ्यवन्ति। सनातनार्य्यमर्यादायां बलधनविद्याधर्मादिशक्तीनां प्राप्तिः, धर्मार्थकाममोक्षेति चतुर्वर्गस्येच्छापि तु परमात्मनः प्राप्तिनिमित्तैवेति आबालवृद्धं प्रसिद्धिः। इतीत्थं भारतीयार्य्यमर्य्यादाया गरिम्णो महिम्नो नास्ति शक्तिः कस्यापि वर्णयितुमिति विरम्यते विस्तरात्।

---

## दैवी व्यवस्था।

वेदेषु शास्त्रेषु च दैव्याः शृङ्खलाया देवपदाधिकारिणाम् दैवस्य च जगतो विस्तृतं वर्णनमुपलभ्यते। विना दैवस्य जगतो ज्ञानं सनातनधर्मरहस्यज्ञानं नैव सम्भवतीति सुनिश्चितम्। अतश्च दैवस्य जगतो व्यवस्थाज्ञानं सर्वस्यापि विदुषो मनीषिणोऽवश्यकर्तव्यम्। वेदेषु पुराणादिशास्त्रेषु च इदं ब्रह्माण्डं चतुर्दशसु बृहत्सु भागेषु विभक्तं परिगण्यते। ते च चतुर्दशलोकाः कथ्यन्ते। तेषां चतुर्दशानां लोकानां मध्येऽपि बह्वोलघवो लोकाः सन्ति। शास्त्रेषु वर्णनमुपलभ्यते यद् यथा मनुष्यपिण्डेषु गात्रविन्यासो विद्यते तथैव ब्रह्माण्डस्यापि रचना विद्यते। मानवा यथा पादाधारेण तिष्ठन्ति तथैव ब्रह्माण्डमपि पादपर्वताधारेण तिष्ठति। पादपर्वतो हि वैद्युतिकशक्तिमत्याः कस्याश्चिद्दवशक्त्याः पुञ्जात्मकः पर्वतो विद्यते। यथाऽयं पादपर्वतोऽस्ति तथैव लोकालोकाचलोऽपि ब्रह्माण्डस्य हस्तद्वयरूपेण इतस्ततो ब्रह्माण्डम् समन्वयन् वर्तते। इतोऽन्य एको वैद्युतिकशक्तिमयोऽचलो ब्रह्माण्डस्य मध्ये वर्तते यस्य सुमेरुरिति नाम पुराणादिषु पठ्यते। यथा हि मानवशरीरे मेरुदण्डो विद्यते (बैक् बोन Back bone) तथैव ब्रह्माण्डस्य मेरुदण्डोऽयं सुमेरुपर्वतः सर्वथा ब्रह्माण्डं गोपायति। एतस्यैव सुमेरुपर्वतस्य चतुर्ष्वपि दिक्षु चतुर्दशानां भुवनानां सर्वेऽपि लोकाः सुनियन्त्रितास्तिष्ठन्ति। अधस्तनाः तलातलवितलसुतलादयः सप्त लोकाः सन्ति। यत्र विविधश्रेणिगा असुरा निवसन्ति। तेषामपि राज्यप्रधाननगरी विद्यते। तेषां राजानोऽपि पृथगेव भवन्ति। उपरितनाश्च भूलोकभुवर्लोक-स्वर्लोक-महर्लोकादयः सप्त लोकाः सन्ति। यत्र नानाश्रेणिनिबद्धा देवा निवसन्ति। देवलोकानां राज्यप्रधाननगरी उपरितने तृतीयलोके स्वर्लोके विद्यते। अधस्तनेषु सप्तस्वपि लोकेषु आसुरमिन्द्रियसुखमेवोपलभ्यते। उपरितनेषु त्रिष्वपि लोकेषु फलतो भूर्भुवःस्वर्लोकेषु दैवमिन्द्रियसुखमुपलभ्यते। ततोऽप्युपरितने चतुर्थलोके (महर्लोके इत्यर्थः।) इन्द्रियसुखविरक्ता इन्द्रियसुखत्यागिन इन्द्रियोपरि स्वाधिपत्यं कुर्वाणा महात्मानो निवसन्ति। ततोऽप्युपरितने पञ्चमलोके जनलोके इन्द्रियमनसो

रुभयोरुपरि स्वाधिपत्यं कुर्वाणास्तिष्ठन्ति। ततोऽप्युपरितने षष्ठे लोके तपोलोके इन्द्रिय-मनोबुद्धीनामुपरि स्वाधिपत्यं कुर्वाणा ज्ञानिनो निवसन्ति । ततोऽप्युपरितने सर्वान्तिमे सप्तमे लोके सत्याख्ये इन्द्रियमनोबुद्धितः प्रकृतिपर्य्यन्तस्योपरि स्वाधिपत्यं कुर्वाणाः तिष्ठन्ति। तत्र गताः ते न ततः पुनरावर्तन्ते।

उत्तरस्यां दिशि देवलोको विद्यते। उत्तरस्थो हि ध्रुवलोको यो हि रात्रौ तारा-रूपेणोत्तरस्यां दिशि ध्रुवो निश्चलो दृश्यते। स हि भूलोकस्योपरि भुवर्लोकस्वर्लोकयो-र्मध्ये वर्तते। तत उपरि उत्तरस्यां दिशि अवशिष्टाः पञ्च ऊर्ध्वगा लोकाः सन्ति।

भूलोके भुवर्लोके च सूर्यस्य परितः भ्रमन्तो ग्रहा उपग्रहाश्च सन्ति। भूलोके हि अस्माकं पृथ्वीग्रहस्य दक्षिणस्यां दिशि यमनाम्नो धर्मराजस्य राज्यप्रधाननगरी विद्यते या हि पितृलोकः सामान्यतः स्वर्गलोकश्चोच्यते। यथा इहापराधिनां दण्डभोगाय कारागृहं विद्यते, तथैव नारकिणां दुःखभोगाय नरकलोकोऽपि तस्यैव पार्श्वे विद्यते। एतदतिरिक्तः प्रेतलोकोऽप्येकोऽस्ति यश्चास्माकं मृत्युलोकस्य पार्श्वे वास्ति। भगवतो यमाख्यधर्मराजस्याधिकारः साक्षाद्रूपेण तु प्रेतलोके पितृलोके नरकलोके परोक्ष-रूपेण तु मर्त्यलोकेऽपि विद्यते। भगवतो यमधर्मराजस्य द्वे स्वरूपेऽङ्गीकृते स्तः। यदा जीवा मृत्युमुपेत्य तत्र यमलोके गच्छन्ति तदा ये पापिनो भवन्ति तेषां यमरूपेण, ये धर्मात्मानो भवन्ति तेषां धर्मराजरूपेण तस्य दर्शनं भवति। तस्य प्रधानमन्त्रिणावपि द्वौ स्तः। एको हि चित्रगुप्तो द्वितीयश्च विचित्रगुप्तः कथ्यते। चित्रगुप्तो हि जीवानां पुण्यकर्मणां संस्कारस्य सङ्कलनं करोति। विचित्रगुप्तश्च पापिनां पापकर्म्मसंस्कारस्य सङ्कलनं विदधाति। जीवकर्मणां संस्कारा बीजरूपेण तेषां चित्ताकाश-चिदाकाशात्मकब्रह्माण्डाकाशेऽङ्कितास्तिष्ठन्ति। तदनुसारेणैवेमौ मन्त्रिणौ स्वकीयजीवकर्मसंस्काराङ्कनपुस्तिकायां उभयोरुभयात्मकान् संस्कारानङ्कयन्ति। तदनुसारेणैव च चित्रगुप्तः पुण्यकर्मणां जीवानां पुण्यभोगाय तदीय-पुण्यात्मक-संस्कारानुरूपान् नानाविधान् पुण्यलोकस्वरूपान् स्वर्गलोकान् तान् जीवान्प्रेषयितुं विचित्रगुप्तश्च पापिनो जीवान् तदीय-पापकर्मसंस्कारानुरूपान् विविधान् दुःख-बहुलान् नरकलोकान् प्रेतलोकादीन्वा दुःखभोगाय प्रेषयितुं भगवतो यमस्याज्ञां गृहीत्वा व्यवस्थां कुरुतः। यमदेवो हि मानवधर्मशास्त्रानुसारतो जीवानां पुण्यपापकर्म्मव्यवस्थां विदधत् परलोकेषु तदीयकर्मफलानुरूपान्नानाविधान् भोगानुच्चावचान् प्रापयितुं प्रेषयति। फलतः पापिनां दुःखभोगाय दण्डव्यवस्थां करोति। पुण्यात्मनाञ्च पुण्यभोगार्थं विविधेषु पुण्यभोगलोकेषु प्रापणव्यवस्थां करोति।

यदा जीवाः स्वर्गलोकेषु पुण्यफलं भुक्त्वा नरकलोकेषु प्रेतलोकेषु वा पापफलं भुक्त्वा आहोस्विदुभयविधमेव कर्म्मफलं तत्र तत्र स्वस्वकर्मानुसारं भुक्त्वा "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति श्रुतिबलादिह मृत्युलोके मातृगर्भप्रवेशार्थमायान्ति तदा तदधिकारिणो देवास्तान् तत्कर्मानुसारं तत्कर्मविपाकरूपान् जात्यायुर्भोगान् भोक्तुं मातृगर्भे प्रापयन्ति। तत्र च अर्य्यमादि-पितृगणा ये हि देवकोटौ गणिताः सन्ति, ते च जीव-शरीराणि तत्तत्कर्मानुरूपं सुन्दरसुदृढवज्र-संहनन-शतायुःसदाचारित्वादिसद्गुणोपेतान् एतद्विरोधिदुर्गुणोपेतान् वा विधातुं सर्वथा सर्वतः साहाय्यमाचरन्ति। ते च यथाकर्म यथाश्रुतम् सुन्दरान् कुरूपान् विकलाङ्गान् पूर्णाङ्गान् उत्तमानधमान् स्थूलान् कृशान् वा देहान् निर्मातुं प्रयतन्ते। इदं सर्वमपि कृत्यं दैवसाहाय्येनैव सम्पाद्यते। इह जगति यत् किमपि कार्य्यं दैवं वा आसुरं वा सम्पद्यते, तत्सर्वमपि देवलोकपदाधिकारिभिरसुरलोकपदाधिकारिभिरेव सम्पाद्यते। अस्य मृत्युलोकस्य सुव्यवस्थायां दैवं साहाय्यं नूनमपेक्ष्यते। फलतो दैवराज्यसञ्चालका देवा इह मृत्युलोकेऽपि सुव्यवस्थां कुर्वन्ति। किं बहुना जातिविशेषे मनुष्याणां देशेषु च तत्रत्य-जीवानां समष्टि-शुभकर्मानुसारेण येऽपि सुवृष्टिसमर्घतासमृद्धताप्रभृतयो गुणा जायन्ते, ये च तेषां जीवानां समष्टि-कुकर्मानुरूपतोऽतिवृष्ट्यनावृष्टिमहामारीभूमिकम्पप्रभृतय उपद्रवा जायन्ते, तानि सर्वाणि देवानामेव व्यवस्थया भवन्ति, इति सनातनधर्म्मणां मानवानां विश्वासः।

कर्मणो हि जडत्वात् तत्र चेतनानां देवानां साहाय्यमावश्यकं स्वाभाविकमिति-देवपदाधिकारिण एव पूर्वकर्मानुसारेण जीवानां सुखदुःखभोगोपयोगि कर्मफलं भोक्तुं तत्सौकर्य्यप्रबन्धं विदधति। अत एव हि प्रत्येककर्मणा सह दैवसम्बन्धो विद्यत एवेति सर्वशास्त्रसिद्धान्तः। दैवसम्बन्धशब्दस्याप्ययमेव रहस्यसारः।

हिन्दुधर्मशास्त्राणामिदं सिद्धान्ततत्त्वं विद्यते यदिह प्रत्येकब्रह्माण्डं प्राधान्यपदासीनास्त्रयो देवाः सन्ति। तथाहि सृष्टिकर्ता देवो भगवान् ब्रह्मा विश्रूयते। स्थितिकृद्देवो भगवान् विष्णुर्निगद्यते। प्रलये जगत्संहर्ता देवो भगवान् शिवः समाख्यायते। त्रयोऽपीमे ईश्वरस्वरूपाः सन्ति।

देवलोके दैव्या व्यवस्थायाः सामञ्जस्यसम्पादनाय श्रेणित्रयभाजो देवपदाधिकारिणः सन्ति। देवगणा हि कर्म-सञ्चालका निगद्यन्ते। महर्षिगणा ज्ञान-सञ्चालकाः कथ्यन्ते। नित्यपितृगणास्तु स्थूलभूतसमूहव्यवस्थापका व्यवह्रियन्ते। इमे हि त्रयो देव-संघ-महर्षिसंघ-पितृसंघ-शब्दैरभिधीयन्ते। तत्र देवसंघे शङ्करप्रभृतय एकादश

रुद्राः पावकादयोऽष्टौ वसवः, विष्णुदेवप्रभृतयो द्वादशादित्याः, 'वासव' शब्दाभिधेयो देवराज इन्द्रः, मनुः यमो धर्मराजः स्कन्ददेवश्चेत्येवमादयो महान्तो देव-पदाधिकारिण उदाह्रियन्ते। ऋषिसंघे च भृगुर्नारदो व्यासः सप्तर्षयश्चेत्येवमादयो महर्षि-पदाधिकारिणो गण्यन्ते। पितृसंघे तु अर्य्यमादयो नित्यपितृपदासीना विद्यन्ते। इमानि नामानि श्रीमद्भगवद्गीताप्रभृतिशास्त्रेषु यथास्थानमुपलभ्यन्ते। तथाहि—

'रुद्राणां शङ्करश्चास्मि।' 'देवानामस्मि वासवः'।
'महर्षीणां भृगुरहं'। 'देवर्षीणां च नारदः।'
'मुनीनामप्यहं व्यासः।' 'कवीनामुशना कविः।'
'पितॄणामर्य्यमा चास्मि'। 'यमः संयमतामहम्'। इत्यादि।

देवसंघ-महर्षिसंघ-पितृसंघातिरिक्ता अन्येऽपि अतिलघुपदाधिकारिणो देवपदाधिकारिणोऽनेके सन्ति ये चोपरिस्थेषु सप्तसु लोकेषु तिष्ठन्ति। सनातनधर्मशास्त्रानुसारमिदं निश्चितं विद्यते यदस्माकं मृत्युलोक-सम्बन्धि किमपि कार्य्यं विना दैवं साहाय्यं सुसम्पन्नमेव न जायते। देवपदधारिणामेतावान् विस्तारो विद्यते यत् प्रतिवृक्षश्रेणि प्रतिकीटश्रेणि प्रत्यण्डजश्रेणि प्रतिजरायुजश्रेणि एकैकशो जातीनां नियत-सञ्चालका नियमतो देवा नियोजिताः सन्ति। इति नियमानुरूपमेव दिव्यविज्ञानवेदिनः सनातन-धर्माणो मानवाः पीपल-तुलसीप्रभृतीन् वृक्षराशीन् पीपिलिकाप्रभृतीन् कीटवर्गान् गोजातिप्रभृतींश्च पशुविशेषान् महतादरेण सदा समर्चयन्ति सनातनधर्मणां सिद्धान्ते प्रतिमहातीर्थं प्रतिजाग्रद्देवमन्दिरम् तदभिमानिनः पृथक्-पृथक् देवाः तदधिष्ठातृत्वेन सम्बद्धा इत्येवं दैवस्य जगतो महिमा अचिन्त्यो गहनश्च विद्यते। तदीया व्यवस्था चान्यन्तविस्तीर्णा विद्यत इत्यलपत एव विरम्यते।

---

## संस्कृत विश्वविद्यालयः।

अखिल-भारतवर्षीय-धार्मिकाध्यात्मिक-संस्कृत-विश्वविद्यालयस्य परीक्षा भारतद्वीपे अनेकेषु केन्द्रेषु अप्रेलमासे जाता। परीक्षाफलं जुलाईमासस्य 'सूर्योदये' प्रकाश्यते। अस्मिन् वर्षे विविधस्थानेषु परीक्षाकेन्द्राणि, स्थापितानि, विविधानि धार्मिक-पाठ्य-पुस्तकानि प्रकाशितानि। स्वधर्मरक्षापरायणैः संस्कृतभाषा-स्वदेशहितैषिभिः स्वस्वनगरे परीक्षाकेन्द्रं संस्थाप्य स्वबालक-बालिकयोः धर्म-शिक्षणप्रबन्धो नूनं कर्तव्यः।

## सूर्योदय नियमाः।

---

( १ ) सूर्योदयः प्रतिपूर्णिमं प्रकाशितो भवति। ये पञ्चरूप्यकात्मकं ५) वार्षिकं साहाय्यं करिष्यन्ति ते संरक्षका भवितुमर्हन्ति। वार्षिकं मूल्यं भारते मुद्रात्रयम् ३) बहिर्भारतञ्च मुद्राषट्कम् ६) भारते विद्यार्थिभ्यः १) रूप्यकेणैकेनेदं पत्रं प्रदीयते। सर्वत्रैव अग्रिमं मूल्यं गृह्येत।

---

२—धनादेशपत्र—( मनिआर्डर ) द्वारैव मूल्यप्रेषणं साधीयः। वी० पी० द्वारा प्रेषणे मूल्यादधिकम् आणकषट्कं ।=) पत्रग्राहकाणां लगिष्यति।

( ३ ) ग्राहकैः प्राचीनैः स्वीया ग्राहकसंख्या, नवीनैश्च 'नवीनोऽहम्' इति लेख्यमेव। अन्यथा पत्रप्रेषणे तथाऽन्यव्यवस्थाविधाने च महान् विलम्बो भवेत्। येषां समीपे समुचितसमये सूर्योदयो न गच्छेत् तैः पत्रालये ( पोस्ट आफिस ) अन्वेषणानन्तरं शीघ्रं सूचना देया। धनादेश–( मनिआर्डर ) द्वारा स्वपूर्णसंकेतं सुस्पष्टं विलिख्य सूर्योदय-मूल्यं प्रेषणीयम्। अत्र विज्ञापनदाने महीयसो लाभस्य सम्भावना। विज्ञापननियमाः पत्रं प्रेष्य ज्ञेयाः। सूर्योदये मुद्रापणीयानि निबन्धादीनि तत्सम्बन्धिलिपिः, कार्यालय-व्यवस्थाविषयकलिपिश्च "कार्याध्यक्ष सूर्योदय-कार्यालय जगत्गञ्ज, बनारसकैण्ट" इति संकेतेन प्रेषणीया।

---

## लेखका विनिवेद्यन्ते।

१—त एव लेखा इह प्रकाश्यन्ते ये सुस्पष्टाक्षरा विरलपङ्क्तिकाः सरल-सरला भावपूर्णाश्छात्रोपयोगिनो भवन्ति। साहित्यिका धार्मिकाः सामाजिका ऐतिहासिका गवेषणासम्बन्धिनश्च प्रसादगुणगुम्फिता लेखाः प्रकाशने प्राथम्यमाश्रयन्ति। अतश्च लेखकैः लेखस्य भावसौष्ठवे मनोहरत्वे च ध्यानं देयं न तु शब्दकाठिन्यादिषु।

२—कविताश्च स्वल्पसंख्यका भावपूर्णा अपेक्ष्यन्ते न तु विंशत्यधिकाः।

३—असम्पूर्णलेखः 'क्रमशः' इति कृत्वा, लेखकमहोदयैर्न प्रेषणीयः, किन्तु पूर्ण एव।

---

---

## विद्यार्थिग्राहकेभ्यो निवेदनम्।

असमर्थेभ्यो विद्यार्थि-ग्राहकेभ्यः सूर्योदयो वर्षं यावत् एकेनैव रूप्येकेण दीयते। सूर्योदयमुद्रणे प्रेषणे च कियान् व्ययो जायते, इति विवेचकाः पाठका जानन्त्येव। तथापि एकरूप्यकमेव नाममात्रं वार्षिकं गृह्यते। अतश्च विद्यार्थिभिः सत्वरमहमहमिकया ग्राहकैर्भवितव्यम्, यैरधुनापि वार्षिकं मूल्यं न प्रेषितं, तैः स्वकीयं देयं मासाभ्यन्तर एव नूनं प्रेषणीयम्। अन्यथा मन्त्रिसभया निश्चितमिदं यत्-येषां वार्षिकं अग्रिमं नागमिष्यति तेषां पार्श्वे सूर्योदयो न प्रेषयिष्यते।

निवेदकः—कार्याध्यक्षः सूर्योदयकार्यालय, जगतगंज, बनारस।

Printed at the Shri Lakshmi Narayan Press, Jatanbar, Benares, and Published by the Bharatdharma Mahamandal, Jagatganj, Benares Cantt by Pt. A. P. Sharma.

